YOGATANTRA-GRANTHAMĀLĀ
[Vol. 12]

# AṢṬAPRAKARAṆAM

EDITED BY
PT. ŚRĪ VRAJAVALLABHA DVIVEDĪ
Śāstracūḍāmaṇi-Ācārya
Ex-Head of 'Sāṃkhya-yoga-Tantra & Āgama' Deptt.
Sampurnananda Sanskrit University
Varanasi



VARANASI
1988

योगतन्त्र-ग्रन्थमाला
[द्वादशं पुष्पम्]

# अष्टप्रकरणम्

[ तत्त्वप्रकाश-तत्त्वसंग्रह-तत्त्वत्रयनिर्णय-रत्नत्रय-भोगकारिका-
नादकारिका-मोक्षकारिका-परमोक्षनिरासकारिकाख्य-
सिद्धान्तशैवीयाष्टग्रन्थानां सटीकानां समाहारः ]

सम्पादकः
**पण्डितश्रीव्रजवल्लभद्विवेदः**

शास्त्रचूडामणिविद्वान्
सांख्ययोगतन्त्रागमविभागाध्यक्षचरः, आचार्यश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य



**वाराणस्याम्**

२०४५ तमे **वैक्रमाब्दे** १९१० **तमे शकाब्दे** १९८८ **तमे खैस्ताब्दे**

अनुसन्धानप्रकाशनपर्यवेक्षकः,
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

□

प्रकाशकः—
**डॉ० हरिश्चन्द्र मणि त्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२

□

प्राप्तिस्थानम्—
**विक्रयविभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२

□

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्, ८०.०० रूप्यकाणि

□

मुद्रकः—
**रत्ना प्रिंटिंग वर्क्स,**
बी० २१/४२ ए., कमच्छा, वाराणसी–२२१०१०

## उपोद्घातः

अथ समुपाह्रियतेऽष्टप्रकरणाख्यया ख्यापितोऽयं ग्रन्थः सिद्धान्तागमरुचीनां विदुषां पुरतः । नेदं कस्यचन ग्रन्थस्य नाम, किन्तु अष्टानां सिद्धान्तागमीयप्रकरणानां सव्याख्यानानां समाहारस्येयं संज्ञा [1]पूर्वसंस्करणप्रकाशकैः ख्यापितेति तां तथैवाङ्गीकृत्य तेनैव नाम्नाऽस्य पुनः प्रकाशनं विधीयते यथामति संशोधनादिपुरस्सरम् । अष्टप्रकरणेषु पूर्वं तत्त्वप्रकाशिकानाम्ना प्रकाशितं प्रथमं प्रकरणं तत्त्वप्रकाशाख्यं कुमारदेवकृतया तात्पर्यदीपिकाख्यया विस्तृतया व्याख्यया सह [2]अनन्तशयनसंस्कृतग्रन्थावल्यामिदम्प्रथमतया १९२० ई. वर्षे प्रसिद्धमभूत्, पुनरपि च व्याख्याद्वयसहितं [3]वाराणसीतः १९७६ ई. वर्षे प्रकाशितमिति तत्रत्या तात्पर्यदीपिकाऽप्यत्र संगृहीतेति प्रकरणाष्टकस्य नवव्याख्यानसहितस्य समावेशोऽत्र वर्तत इति विदाङ्कुर्वन्तु तत्रभवन्तो विद्वांसः ।

### प्रस्तुतं संस्करणम्

अस्माकं सुहृत्प्रवरो डॉ. एन. एच. चन्द्रशेखरस्वामी कर्णाटकराज्यीय-बेलगांव-जनपदस्य निपाणीग्रामवासी लब्धपट्टाभिषेकः साम्प्रतं शिवसायुज्यमापन्नो गुरुवर्याणां श्रीश्रीगोपीनाथकविराजमहोदयानां स्मृतौ संस्थामेकां स्थापयित्वा कांश्चन ग्रन्थान् प्रकाशयितुकाम आसीत् । तेन संकल्पितयोर्द्वयोर्ग्रन्थयोः प्रथमस्तन्त्रयात्राख्यः १९८२ ई. वर्षे उत्तरप्रदेश-संस्कृत-अकादम्या आर्थिकेन साहाय्येन प्रकाशितः । अन्यश्च अष्टप्रकरणाख्योऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पूर्वकुलपतीनां डॉ. गौरीनाथशास्त्रिमहोदयानां कृपाभरितेन निर्णयेन साम्प्रतं प्रकाशतामानीयते । अष्टप्रकरणस्य भागद्वये प्रकाशितस्य स्वकीयो ग्रन्थो डॉ. चन्द्रशेखरस्वामिना प्रत्त आसीत् पुनर्मुद्रणाय, टीकाद्वयसहितस्य तत्त्वप्रकाशस्य प्रकाशने चास्माभिः डॉ. कामेश्वरनाथमिश्रसम्पादितं संस्करणमुपयुक्तम् । अत्र तात्पर्यदीपिकायां यत्र क्वचन संजातानि स्खलितानि त्रिवेन्द्रम्संस्करणसाहाय्येन पूरितानीति मुद्रिता एषा ग्रन्थत्रयी वर्तते प्रधानमवलम्बनमस्य संस्करणस्य । उत्तरे भारते सिद्धान्तशैवग्रन्थाः प्रायो नोपलभ्यन्त इति जानन्त्येव विद्वांसः । पाण्डिचेरीनगरं गत्वा, यद्धि साम्प्रतं सिद्धान्त-

---

१. श्रीकृष्णशास्त्रिणामन्तेवासिना शिवागमसंघविदुषा श्रीमता ना. कृष्णशास्त्रिणा सम्पादितस्य देवशालपुरीशिवागमसिद्धान्तपरिपालनसंघाध्यक्षैरस्य ग्रन्थस्य श्रीरङ्गे वाणीविलास-मुद्रणालयतः प्रथमो भागः १९२३ ई. वर्षे, द्वितीयश्च १९२५ ई. वर्षे प्रकाशितः ।

२. अनन्तशयनसंस्कृतग्रन्थावल्यां ६८ ग्रन्थाङ्कत्वेन म. म. त. गणपतिशास्त्रिणा प्रख्यापितोऽयं ग्रन्थ इदम्प्रथमतया ।

३. तात्पर्यदीपिकया व्याख्यया अघोरशिवकृतया वृत्त्या च सहित एष ग्रन्थो डॉ. कामेश्वरनाथ-मिश्रेण सम्पादितो भूमिकापरिशिष्टादिभिः संयोजितश्च चौखम्बाप्राच्यविद्याग्रन्थावल्यां काशीतः १९७६ ई. वर्षे पुनः प्रकाशितः ।

शैवागमग्रन्थानां प्रकाशनस्य प्रधानं केन्द्रम्, अष्टप्रकरणीयग्रन्थानां मातृकाभिस्तत्रत्याः पाठाः संशोधनीया इत्यासीन्मनीषा । मैसूर-पर्यन्तं गत्वापि ततोऽग्रे गन्तुं नापार्यत इत्यधुना यत्र क्वचन संजातास्त्रुटीः परिमार्ज्य, उद्धरणानि च स्थलनिर्देशप्रसङ्गेन संशोध्य विविधपरिशिष्टसंयोजनमुखेन संस्कृतोऽयं ग्रन्थः । लब्धेऽवसरे शिष्टास्त्रुटयोऽपि परिमार्जिताः स्युरिति संभावयामः ।

"मुण्डे मुण्डे मतिर्भिन्ना" इति न्यायेनात्र ग्रन्थकाराणां व्याख्याकाराणां च भेदात् केषाञ्चन शब्दानां विभिन्ना व्याख्याः समुपलभ्यन्ते । उपोद्घाते तासां प्रदर्शने महती कायवृद्धिः स्यादिति संक्षेपेण तेषां मतानामुपन्यासार्थमन्तेऽत्र विशेषशब्दार्थसूचिका संयोजिता । सावधानं तामवलोकयन्तु गवेषणारुचयो विद्वांसः । अत्र च केचन शब्दा विषया वा स्थालीपुलाकन्यायेन, स्थूणानिखननन्यायेन च परीक्ष्यन्ते ।

## ग्रन्थकृतस्तेषां ग्रन्थाश्च

अत्र तत्त्वप्रकाशो भोजदेवविरचितः, रत्नत्रयपरीक्षा श्रीकण्ठसूरिणा निबद्धा, नादकारिका च नारायणकण्ठसुतरामकण्ठेन कृता । शिष्टानि पञ्च प्रकरणानि सन्ति सद्योज्योतिश्शिवाचार्येण ग्रथितानि ।

### सद्योज्योतिः शिवाचार्यः

अत्रत्येषु चतुर्षु ग्रन्थकारेषु सद्योज्योतिः शिवाचार्यः प्राचीनतमः । अस्य देशकालग्रन्थादिविषये श्रीमता पण्डितप्रवरेण एन. आर. भट्टमहोदयेन मतङ्गपारमेश्वरीयविद्यापादस्य [1]संस्करणे यदुक्तम्, यच्चास्माभिर्लुप्तागमसंग्रहस्य द्वितीयभागस्य उपोद्घाते[2] प्रदर्शितम्, ततोऽधिकं न किमपि ज्ञायते । इदं त्ववधेयम् —खेटकनन्दन-खेटपाल-सद्योज्योतिः-सिद्धगुरुप्रभृतिनामभिरेष एवाचार्यः स्मर्यते । मतङ्गपारमेश्वरव्याख्याने च रामकण्ठेन [3]खेटकबाल इति नाम्ना स्मृतः । उग्रज्योतिषः शिष्यः सद्योज्योतिरयं सिद्धान्तशैवागमानां प्रथमो व्याख्याता पद्धतिकारश्च । [4]शिवदृष्टौ सोमानन्देन नवमशतकीयेन स्मृतोऽयं तस्मात् प्राचीन इत्यत्र नास्ति विसंवादः । अतोऽस्य नामसमयादिविषये [5]यदन्यत्रेतोऽन्यथा प्रोच्यते, तत्सर्वमसमञ्जसप्रायमेव ।

---

१. फ्रेंच-इस्टीस्ट्यूट-पाण्डिचेरी-संस्करणम्, १९७७ ई. वर्षे प्रकाशितम्, उपोद्घातीये ४१-४२ पृष्ठे द्रष्टव्ये ।

२. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः १९८३ ई. वर्षे प्रकाशितस्य उपोद्घातीयानि ३२, ६४, ७३, ७६ पृष्ठानि द्रष्टव्यानि ।

३. लुप्ता. उपोद्घातीया ३२ पृष्ठस्था टिप्पणी द्रष्टव्या ।

४. "तथा चाह खेटपालः''''स्वायम्भुवस्य टीकायाम्" (३।१३-१४), "तदैक्यं खेटपालोऽपि प्राह" (३।६४) ।

५. तत्त्वप्रकाशस्य काशीसंस्करणस्य भूमिका (पृ. २१, ४४) द्रष्टव्या ।

**आंग्लभाषामाध्यमेन हिन्दीभाषामाध्यमेन च लिखितेषु केषुचनाधुनिकेषु ग्रन्थेषु संस्कृतभाषामाध्यमेनास्माभिः कानिचन संशोधनानि प्रस्तुतानि। तान्यधीयते विदेशीया विद्वांसः, न च पठन्ति भारतीयाः सुधिय इत्यहो दैवी विचित्रा गतिः।**

**श्रीकण्ठः**

रत्नत्रयपरीक्षाकारं श्रीकण्ठं नारायणकण्ठसुतो रामकण्ठो मातङ्गविद्यापादवृत्तौ[1] (पृ. ६१०) स्मरतीति श्रीकण्ठो रामकण्ठात् प्राचीनः। श्रीकण्ठसूरिणा च रामकण्ठशिष्येण तस्य सद्वृत्तिमनुकुर्वता रत्नत्रयपरीक्षा कृतेति स एव प्रकरणान्ते[2] भणति। श्रीमन्त एन. आर. भट्टमहोदयाः श्रीकण्ठस्य परिचयमेवं ददति—'सोऽयं भट्टनारायणः श्रीविद्याकण्ठपुत्रत्वेन श्रीशङ्करकण्ठप्रपौत्रत्वेन[3] चात्मानम्, स्वपितरं श्रीविद्याकण्ठं श्रीरामकण्ठशिष्यत्वेन च निर्दिशति मृगेन्द्रवृत्तिप्रारम्भे तदीये श्लोके, विद्यापादीयान्तिमश्लोकें च। सोऽयं विद्याकण्ठगुरुः प्रथमः श्रीरामकण्ठः श्रीकण्ठनाथ इव महान् शैवाचार्य आसीदिति नारायणकण्ठस्तस्मिन्नेव श्लोके प्रतिपादयति। अनेन रामकण्ठेन रचिता काचन सद्वृत्तिः, तामनुसृत्य तच्छिष्येण श्रीकण्ठेन रत्नत्रयाख्यं प्रकरणं रचितमिति तत्प्रकरणोपसंहारश्लोकेन[4] ज्ञायते। स्यादियं सद्वृत्तिः कस्यचिदागमस्य वृत्तिः। यतस्तत्त्वसंग्रहाख्यं प्रकरणं शैवागमस्य [5]सुवृत्तिमनुसृत्य, तथा तत्त्वत्रयनिर्णयाख्यं प्रकरणं स्वायम्भुवागमस्य[6] वृत्तिमनुसृत्य निर्मितमिति तत्कर्त्रा सद्योज्योतिषा तत्प्रकरणोपसंहारश्लोकेषु निर्दिश्यते। अयं परं विशेषः—रौरवागमसुवृत्तेस्तदनुसारितत्त्वसंग्रहस्य, तथा स्वायम्भुवागमवृत्तेस्तदाधृततत्त्वत्रयनिर्णयस्य च कर्ता सद्योज्योतिरेव। अत्र सद्वृत्तेः कर्ता गुरुः श्रीरामकण्ठः, तदनुसारिरत्नत्रयप्रकरणस्य च कर्ता तच्छिष्यवर्यः श्रीकण्ठः"[7] इति। इतः परं नास्माकं किमपि वक्तव्यमवशिष्यते।

---

१. अनुबन्धे उद्धरणमेतदुपलभ्यते।

२. श्रीरामकण्ठसद्वृत्तिं मयैवमनुकुर्वता।
रत्नत्रयपरीक्षार्थः संक्षेपेण प्रकाशितः॥ (पृ. २०२)

३ शाङ्करकण्ठश्रीमद्विद्याकण्ठादनुग्रहं लब्ध्वा।
नारायणकण्ठ इमां तत्पुत्रो व्यरचयद् वृत्तिम्॥ (पृ. ३६३)
इति हि तत्रत्यः पाठः। तेन पौत्रत्वेनेति पाठेन भाव्यम्। मुद्रणजन्यैषा त्रुटिः स्यात्।

४. रामकण्ठकृतालोकनिर्मलीकृतचेतसा।
रत्नत्रयपरीक्षेयं कृता श्रीकण्ठसूरिणा॥ (पृ. २०२)

५. इत्यवदत् तत्त्वानि तु सद्योज्योतिः सुवृत्तिकृत्। (पृ. १३५)

६. उक्तः समासतोऽयं तत्त्वत्रयनिर्णयश्च वृत्तिकृता।
स्वायम्भुवस्य जडतामपनेतुमनादिकां पुंभ्यः॥ (पृ. १४५)

७. पूर्वोक्तो मतङ्गपारमेश्वरीयविद्यापादसंस्करणीय उपोद्घातो (पृ. ३९-४०) द्रष्टव्यः।

**रामकण्ठभोज देवौ**

नारायणकण्ठसुतरामकण्ठ-भोजदेवयोः कः प्राचीन इति नास्माभिर्निश्चेतुं पार्यते। नारायणकण्ठः [1]क्षेमराजेन स्मर्यत इति निश्चप्रचम्। स रामकण्ठमपि स्मरतीत्यस्माभिरुक्तमासीत्,[2] किन्तु नेत्रतन्त्रोद्योते (१।४३,२१।१८) वारद्वयं स्मृतः "एकः शिवोऽविकारी" इति श्लोकः सद्योज्योतिषा कृते तत्त्वसंग्रहे (श्लो. ४४-४५) समुपलभ्यते। नादकारिकायां तु—"अविकार्यत्रात्मोक्तः" (श्लो. १९) इति पाठो वर्तते। अपि च, स्वच्छन्दोद्योते (११।५७) "यत् श्रीसद्योज्योतिषा उक्तम्" इत्युक्त्वैव स कारिकामेनामुद्धरति। तेन नानया कारिकया रामकण्ठस्य क्षेमराजपूर्ववर्तित्वं ख्यापयितुं शक्यते। तत्पितुर्नारायणकण्ठस्य क्षेमराजेन स्पष्टं स्मरणात् क्षेमराजरामकण्ठयोः समकालीनत्वं तु बाढं सिद्ध्यति। क्षेमराजभोजदेवयोः समयविषये इतिहासज्ञाः सहमता यदनयोः स्थितिरेकादशशताब्द्याः पूर्वार्धे निश्चितमासीदिति। कालिकदृष्ट्या भवतु कोऽपि पूर्वतनः परतनो वा, सम्प्रदायपरम्परा तु सद्योज्योतिः-श्रीकण्ठ-रामकण्ठानामेका, भोजदेवस्य चापरेति जानीमो वयम्। तदग्रे स्पष्टीभविष्यति।

यद्यपि—"निश्शेषशास्त्रसदनं किल मध्यदेशः" (तन्त्रा. ३७।३८) इत्याद्यभिनवगुप्तवचनात् काश्मीरीया परम्पराऽपि मध्यदेशत एव प्रसृता, तथापि देशकालादिकृतो विचारभेदस्तत्र दृश्यत एव। द्वैत-द्वैताद्वैत-अद्वैतशैवागमानां प्रवृत्तिविषयोऽस्माभिः [3]"आगममीमांसा" इत्याख्ये लघुग्रन्थे सूचितः। द्वैतवादप्रचारकामर्दकतपोवनविनिर्गतः सदाशिवाचार्यो [4]लाटदेशकृतवसतिरिति तत्र सप्तमशतकीयशिलालेखप्रामाण्येन सूचितम्। सप्तमशताब्दीतो द्वादशशताब्दीपर्यन्तं वर्तमानानां शैवाचार्याणां [5]शिवान्त-

---

१. "मृगेन्द्रवाक्यटीकायाम्"···यद्भट्टनारायणकण्ठेनोक्तम्" (४।२०८) इत्येवं स्वच्छन्दोद्योते स नारायणकण्ठं स्मरति।

२. अस्मदीयस्य पूर्वोक्तस्य उपोद्घातस्य ६३, २१९ पृष्ठे द्रष्टव्ये।

३. श्रीलालबहादुरशास्त्रि-केन्द्रीयसंस्कृतविद्यापीठदिल्लीतः १९८२ ई. वर्षे प्रकाशितस्य अस्य ग्रन्थस्य ३६-३७ पृष्ठे द्रष्टव्ये सटिप्पणीके। आमर्दकादितपोवनीयानां शैवाचार्याणां परिचयो डॉ. कृष्णकान्तहाण्डीकीविरचिते "यशस्तिलक एण्ड इण्डियन कल्चर" इत्याख्ये आधुनिकशैलीग्रन्थेषु विशिष्टतमे (पृ. ३३७-३४२) सविशेषं द्रष्टुं शक्यते।

४. आचार्याणामुत्तममध्यमाधमविभागे लाटदेशीया आचार्या ईशानशिवगुरुदेवपद्धत्यामुत्तमेषु परिगणिता योगशिवपद्धतिप्रामाण्येन। तद्यथा—

मध्यदेशे कुरुक्षेत्रलाटोज्जयिनिसंभवाः।
अन्तर्वेदिप्रतिष्ठाना आवन्त्याश्च गुरूत्तमाः॥ (भा. ३, पृ. ९६)

सप्तमशताब्द्याः पूर्वार्धीये शिवगुप्तबालार्जुनस्य सेनकपाटशिलालेखे आमर्दकतपोवनविनिर्गतस्यास्याचार्यस्योल्लेखो वर्तते। लाटदेशीयेन नृपतिनाऽऽहूतस्तत्र जगाम सः।

५. केचनात्र ब्रह्मशम्भु-सोमशम्भुप्रभृतयः शम्भुनामान्ता अपि शैवाचार्याः सन्ति। नैतादृशानि नामानि केवलं छन्दोऽनुरोधात् संजातानि, अत्र ब्रह्मशम्भुः, अत्र सोमशम्भुरित्यादिषु गद्यभागेष्वपि गुरुदेवपद्धतितृतीयभागे बहुशः शम्भुनामान्तामेव नाम्नां प्रयोगदर्शनात्। इदं

नाम्नां प्रथमं मध्यदेश-मालव-गुर्जरादिदेशेषु, तदनु च दक्षिणभारते प्रचारः समभूदित्यपि तत्र[1] निदर्शितम्। भोजदेवस्य गुरोर्विषयेऽघोरशिवाचार्येण स्वपद्धत्यामुट्टङ्कितं श्लोकद्वयमेतदुपलभ्यते—

> ततोऽभूल्लाट उत्तुङ्गशिवो विन्ध्ये [2]यतीश्वरः।
> कल्याणनगरीवासी गुरुः पद्धतिकृत् सुधीः॥
> सर्वविद्याधिपो यस्य कनीयानार्यदेशजः।
> सर्वागमार्थनिर्णेतुः श्रीभोजनृपतेर्गुरुः॥

अत्राघोरशिवेन लाटदेशीय उत्तुङ्गशिवो यतीश्वरो विन्ध्यप्रदेशीयकल्याणनगरीनिवासी पद्धतिकृत्त्वेन स्मर्यते। आर्यदेशजन्मा तस्यानुजः श्रीभोजदेवनृपतेर्गुरुरिति स कथयति, नाम तु तस्य नात्र समुपलभ्यते। अघोरशिवस्य पद्धतिरियं न विद्यतेऽस्माकं पुरतः। अतोऽस्या विषये न किमपि वक्तुं क्षमाः, किन्तु द्वैतशैववादप्रचारकामर्दकतपोवनविनिर्गतस्य सदाशिवाचार्यस्य लाटदेशकृतवसतेरुल्लेखोऽधुनैवास्माभिः साभिप्रायं कृत इत्येष उत्तुङ्गशिवाचार्योऽपि तस्यामेव परम्परायां स्यात्। लाटदेशप्रादुर्भूतेन लकुलीशपाशुपतमतेन सह सिद्धान्तशैवानामासीत् कीदृशः सम्बन्ध इति नाधुना ज्ञायते, किन्तु शैवमतानुयायिनां कृते तदासीत् पवित्रतमं स्थानम्। मध्यदेशतस्तत्राचार्या गताः स्युस्ततश्च पुनरागताः स्युरिति संभाव्यते। तादृश एव स्याद् उत्तुङ्गशिवोऽपि। उत्तुङ्गशिवो न धाराधिपतेर्भोजदेवस्य गुरुः, अपि तु तस्य कनीयान् भ्रातेति [3]डॉ. कान्तिचन्द्रपाण्डेयमहोदयोऽपि वदति, किन्तु तैः कल्याणनगरी लाटदेशस्थेति प्रदर्श्यते। "विन्ध्ये यतीश्वरः" इत्युत्तुङ्गशिवस्य विशेषणम्, "आर्यदेशजः" इति तत्कनिष्ठभ्रातुर्विशेषणं च दृष्ट्वा कल्याणनगरी विन्ध्यप्रदेश एव क्वचन स्वीकर्तव्येति संभावना समुदेति। हिमवद्विन्ध्यमध्यवर्ती प्रदेश एव आर्यावर्तत्वेन ख्यात इति [4]मनुस्मृतिरत्र प्रमाणम्। एवं चार्यदेशजस्य विन्ध्यप्रदेशीयकल्याणनगरीनिवासिनो यतीश्वरस्योत्तुङ्गशिवस्य लाटदेशतः पुनरत्रागतस्य कनीयान् भ्राता भोजदेवस्य गुरुरासीदिति रामकण्ठपरम्परातो भिन्ना परम्परा भोजदेवस्येति नात्र कश्चन विवादावसरः।

---

त्ववधेयम्—कर्मकाण्डक्रमावलीसमाप्तिपद्येषु सोमशिव इति, सोमशम्भुरित्युभयविधमपि नाम दृश्यते। पुष्पिकावाक्ये च सोमशम्भुरिति।

१. आगममीमांसायाः ३६-३७ पृष्ठे द्रष्टव्ये सटिप्पणीके।

२. अष्टप्रकरणप्रथमसंस्करणविज्ञप्त्यां तत्त्वप्रकाशद्वितीयसंस्करणभूमिकायां च व्रतीश्वर इति पाठः। अस्य श्लोकद्वयस्यार्थविषये काशीसंस्करणमष्टप्रकरणसंस्करणमनुकरोति।

३. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः १९६८ ई. वर्षे प्रकाशिते शैवदर्शनबिन्दुनाम्नि ग्रन्थे (पृ. ११-१२) द्रष्टव्यम्।

४. हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥ (२।२१)

**ग्रन्थानां संक्षिप्तः परिचयः**

अष्टप्रकरणानां यो हि क्रमः प्रथमसंस्करणसम्पादकैरङ्गीकृतः, स स्वेच्छाकृत उत तथैव हस्तलेखेषु विद्यत इति न जानीयो वयम्। अविचार्यैव सर्वमेतत् तत्रत्यः क्रम एव द्वितीयेऽस्मिन् संस्करणेऽपि स्वीकृतः।

अत्र भोजदेवस्य तत्त्वप्रकाश एव प्रथमो ग्रन्थः। एष ग्रन्थः प्रथमे संस्करणे तत्त्वप्रकाशिकानाम्ना प्रकाशितः, किन्तु कुमारदेवटीकायां तत्त्वप्रकाशनाम्नो दर्शनात्, ईशानशिवगुरुदेवपद्धत्यां सायणमाधवीये सर्वदर्शनसंग्रहे च तन्नाम्नैवास्य स्मरणात् तदेव नामात्र स्थापितम्। अत्रत्योऽन्तिमः श्लोकः कुमारदेवेन रचित इति ज्ञायते, किन्त्वघोरशिवाचार्येण स मूलग्रन्थप्रतीकत्वेनोपन्यस्तः। एवमेव पञ्चानामप्येषामिति कारिका प्रक्षिप्तेत्यघोरशिवो भणति, तात्पर्यदीपिकाकारस्तु तां मूलग्रन्थत्वेन व्याख्याति। न वयमत्र किमप्यनौचित्यमुत्पश्यामः, तत्त्वं वस्तुत एकमित्यग्रिमश्लोकेन तस्य सामञ्जस्यदर्शनात्। भोजदेवपरम्परया कुमारदेवः सम्बद्धः, नाघोरशिव इत्यग्रे स्फुटीभविष्यति।

तत्त्वसंग्रहोऽत्र द्वितीयः, तृतीयश्च ग्रन्थो वर्तते तत्त्वत्रयनिर्णयाख्यः। सद्योज्योतिषा शिवाचार्येण रौरवागमस्य स्वकीयां [1]सुवृत्तिमनुसृत्य तत्त्वसंग्रहो व्यरचि। अत्र—"व्युत्क्रमेणोपनेयोऽसौ शिवाय गमनं प्रति" इति स्वायम्भुवश्रुतिमनुसरन्, संहारक्रमेण दीक्षायां शुद्धिर्विधीयत इति च सूचयन् ग्रन्थकारः संहारक्रमेण षट्त्रिंशत्तत्त्वानि निरूपयामास। तत्त्वत्रयनिर्णये स्वायम्भुवस्य वृत्तिकृता तेन [2]स्वायम्भुवागममनुसरता शम्भु-पुरुष-मायाख्यानि त्रीणि तत्त्वानि विवृतानि। पञ्चमः सप्तमाष्टमौ चेति त्रयो ग्रन्था अपि तेनैव रचिता इति चतुर्थषष्ठौ विहाय प्रथमं तेषामेव परिचय उपस्थाप्यते। तत्र भोगकारिका मोक्षकारिका च तेन नामानुगुणं [3]रुरुसिद्धान्तसिद्धयोर्भोगमोक्षयोः स्वरूपपरिचयाय रचिते। मोक्षकारिकाया अन्ते स भणति यत् शिवात्[4] परम्पराप्राप्तयोर्भोगमोक्षयोः स्वरूपमत्र विवेचितमिति। एतौ हि ससाधनौ भोगमोक्षौ मुनीन्द्रेण रुरुणा आत्रेयाय सम्प्रकाशितौ। भोगमोक्षयोस्तदेव स्वरूपं मयाऽत्र स्वगुरुणा उग्रज्योतिषोपदिष्टं मन्द-

१. तदाहाऽघोरशिवः—"इत्यवदत् तत्त्वानि तु सद्योज्योतिः सुवृत्तिकृदिति, श्रीमद्रौरववृत्तेरेव सुवृत्तित्वेन ग्रहणात्" (पृ. १३७) इति।

२. स एवाह—"अत्र ह्याचार्यः श्रीमद्रौरवसिद्धमर्थसद्भावं तत्त्वसंग्रहेण संक्षेपात् प्रकाश्य श्रीमत्स्वायम्भुवसिद्धमनेन प्रकाशयति" (पृ. १३७) इति।

३. रुरुसिद्धान्तसंसिद्धौ भोगमोक्षौ ससाधनौ।<br>वच्मि साधकबोधाय लेशतो युक्तिसंगतौ॥ (भो. का. २)

४. शिवात् परम्परायातौ भोगमोक्षौ ससाधनौ।<br>आत्रेयाय मुनीन्द्रेण रुरुणा सम्प्रकाशितौ॥....<br>सद्योज्योतिस्तु संक्षेपात् तावेतौ परिबद्धवान्।....<br>उग्रज्योतिर्गुरुः श्रीमान् सर्वविद्यासरित्पतिः॥ (पृ. २७७)

मतीनां प्रबोधाय करुणाविष्टेन चेतसा संक्षेपात् परिनिबद्धमिति । अष्टमी परमोक्षनिरासकारिका च सद्योज्योतिषा रौरवसूत्रस्य सार्धद्वयश्लोकव्याख्यानमुखेन निबद्धा । तत्त्वसंग्रहलघुटीकायामघोरशिवोऽस्य ग्रन्थस्य कांश्चन श्लोकानुद्धृत्य—"इत्यादिभिः कारिकाभिः श्रीमद्रौरववृत्तौ विस्तरेण साधित:"(पृ. १३४) इत्येवं वदति । तेन ज्ञायते ग्रन्थोऽयं तद्रचिताया रौरववृत्तेरंशभूत इति । किं भोगकारिका, अथ च मोक्षकारिकाऽपि तथैव ? परमोक्षनिरासकारिकायां नामानुगुणं रौरवसूत्रेषु पूर्वपक्षतयोपक्षिप्तेषु परमतेषु यद्धि मोक्षस्य स्वरूपमङ्गीकृतम्, प्रौढ्या तन्निरस्य सिद्धान्तवादस्थापने महनीयं यश उपार्जितं सद्योज्योतिषा । अत्रत्याः सिद्धान्ताः केचन श्लोकाश्च आनुपूर्व्या [1]नारदीये महापुराणे संगृहीता इत्यनेनैवास्याचार्यस्य वैशिष्ट्यमवगन्तुं शक्यते । सत्यमाह [2]क्षेमराजः—प्रायश्च सिद्धान्तप्रियो लोक इति ।

चतुर्थो ग्रन्थो विद्यते रत्नत्रयाख्यो रत्नत्रयपरीक्षेति नाम्नाऽत्र स्थापितः । पूर्वं रत्नत्रयमिति नाम्नैव स प्रकाशित आसीत्, किन्तु ग्रन्थान्ते रत्नत्रयपरीक्षेयं कृतेति ग्रन्थकारवचनं समीक्ष्य तदेव नामात्र स्थापितम् । अधुना तु मतङ्गपारमेश्वरविद्यापादानुबन्धे—"तदुक्तं रत्नत्रये" (पृ. ६१०) इति प्रयोगदर्शनात्, ईशानशिवगुरुदेवपद्धतौ (भा. ३, पृ. १० इत्यादिषु) रत्नत्रयनाम्नैवास्योद्धृतत्वाच्च रत्नत्रयमित्येव ग्रन्थस्य नामेति वक्तुं शक्यते । ग्रन्थकर्त्रा श्रीकण्ठसूरिणा स्वगुरो रामकण्ठस्य सद्वृत्तिमाश्रित्य सोऽयं ग्रन्थो रचित इति स एव [3]ग्रन्थान्ते लिखति । कमागमं रामकण्ठः सद्वृत्त्या भूषयामासेति तु न ज्ञायते, किन्तु तत्रैका विचारणा प्रादुर्भवति—"सद्योज्योतिः सुवृत्तिकृत्" (त. सं. ५७) इत्यत्र "सुवृत्तिः सद्वृत्तिरिति रौरववृत्तेर्नाम" (पृ. १३६) इत्येवं सुवृत्तिशब्दं व्याख्याति सद्वृत्तित्वेनाघोरशिवः । किं द्वाभ्यां विशिष्टाभ्यां ग्रन्थकर्तृभ्यां स्वस्ववृत्तये एकमेव नाम निर्धारितमिति वर्तते विचारणाया विषयः । सद्योज्योतिषा सुवृत्तिशब्दः प्रयुक्तः, श्रीकण्ठेन च सद्वृत्तिरिति भिन्ने एते नामनी अस्माभिरङ्गीकर्तव्ये, नात्राघोरशिवस्य व्याख्याने किमपि विनिगमकं वयमुत्पश्यामः ।

षष्ठो ग्रन्थो विद्यते नादकारिकानामा । नारायणकण्ठसुतो रामकण्ठस्तमेनं ग्रन्थं वृत्तपञ्चविंशत्या जग्रन्थेति [4]ग्रन्थान्ते स वदति । अत्र सन्ति २७ आर्यावृत्तानि । प्रथमे संस्करणे पञ्चदशे वृत्ते श्लोकद्वयं व्याख्यायां स्थापितमिति रामकण्ठकृतसार्धत्रिशतिककालोत्तरवृत्तितोऽवगम्यते । तत्र हि नादाख्यमिति (१।५) श्लोकव्याख्यायां नादकारिकायाः सर्वे श्लोका अन्तिमं विहाय आनुपूर्व्या समुपलभ्यन्ते । उमापतिशिवाचार्येण च

---

१. नारदीयमहापुराणस्य पूर्वभागे ६३ तमोऽध्यायो द्रष्टव्यः । अत्रत्याः केचन श्लोका भोगकारिकादिषु समुपलभ्यन्ते ।

२. "प्रायश्च सिद्धान्तप्रियो लोकः सिद्धान्तक्रममाश्रितः" (२।२५) इति हि स्वच्छन्दोद्योते क्षेमराजवचनम् । अत एव सिद्धान्तक्रमोऽयं पुराणादिषु यथावदङ्गीक्रियते ।

३. पूर्वतनी ३ पृष्ठस्था, २ टिप्पणी द्रष्टव्या ।

४. इति नादसिद्धिमेनामकरोत् श्रीभट्टरामकण्ठोऽत्र ।
नारायणकण्ठसुतः काश्मीरे वृत्तपञ्चविंशत्या ॥ (पृ. २४४)

शतरत्नसंग्रहस्य स्वीयायामुल्लेखिन्यां टीकायाम् (पृ ४०) अत्रत्यः सार्धकः श्लोको नाद-कारिकावचनत्वेनोद्धृत इति संस्करणेऽस्मिन् . श्लोकद्वयमेतन्मूलवचनत्वेनैव स्थापितम् । २४ संख्याकः श्लोको रामकण्ठवृत्तौ नास्तीति तत्र वर्तते सम्पादकीया टिप्पणी । एवं चान्तिमस्य चास्य च श्लोकस्य परिहारे वृत्तपञ्चविंशतिरत्र परिपूर्णा भवति ।

## व्याख्याकृतस्तत्कृता व्याख्याश्च

तत्त्वप्रकाशस्य तात्पर्यदीपिकाख्या व्याख्या कुमारदेवेन विरचिता, आद्यानां षट्-प्रकरणानां वृत्तयश्च विरचिता अघोरशिवाचार्येण । शिष्टयोर्द्वयोः प्रकरणयोर्व्याख्याता वर्तते नारायणकण्ठसुतो रामकण्ठो नादकारिकाकर्ता ।

**रामकण्ठः**

व्याख्याकारेषु रामकण्ठः प्राचीनः । अष्टप्रकरणेषु नादकारिका तेनैव रचिते-त्यनुपदमेवोक्तम् । रामकण्ठस्य तद्रचितानां शिष्टानां ग्रन्थानां च परिचयो भट्टमहोदयस्य मतङ्गपारमेश्वरविद्यापादीये उपोद्घाते (पृ. ४०-४१) द्रष्टव्यः । लुप्तागमसंग्रहद्वितीय-भाग-उपोद्घातादिष्वस्माभिश्च रामकण्ठानां[1] तद्रचितग्रन्थानां च परिचयः प्रदत्त इति नात्र पुनरुक्तिभिया पुनस्तत्प्रतन्यते ।

**कुमारदेवः**

तात्पर्यदीपिकाकर्ता कुमारदेवो भारद्वाजगोत्रः शङ्करसूनुः सोमयाजी शिवभक्त-श्चावर्ततेति ग्रन्थसमाप्तिस्थपुष्पिकावाक्यादवगम्यते । लघुस्तुतिव्याख्याया लघुबृंहण्या उद्धरणमत्र विद्यते, सा च परमेश्वराचार्यकृतिरिति ततोऽर्वाचीन एष कुमार इति श्रीमन्तो गणपतिशास्त्रिणो वदन्ति । परमेश्वरकृताया लघुबृंहण्या (लघुस्तवटीकायाः) मातृका केरलविश्वविद्यालयपुस्तकालये विद्यते । अत्र चोद्धृता बृंहणी लघुबृंहणीतोऽभिन्नैव स्यादिति तद्दृष्ट्वैव शास्त्रिमहोदयैरेवमुक्तं भवेत् । परमेश्वराचार्यस्य समयस्तु तत्र तैर्नैव सूचितः ।

ईशानशिवगुरुदेवपद्धत्यां कुमारस्य वचनानि प्रचुरतया स्मृतानीति कथनं न याथार्थ्यं धत्ते । वस्तुतः कुमारेणैवास्याः पद्धतेः परश्शतं श्लोका[2] गुरुदेवनाम्ना गुरुदेव-पद्धतिनाम्ना वा स्मृता इति परिशिष्टसाहाय्येन ज्ञातुं शक्यते । कुमारशिवः कश्चन गुर्जर-देशाधिपतेर्मूलराजस्य गुरुरासोदिति गुरुदेवपद्धतेर्द्वितीयभागस्य प्राक्कथने श्रीमद्भिर्गणपति-

---

१. आगममीमांसायामस्माभिः — "सद्वृत्तिकारो रामकण्ठः प्रथमो विद्याकण्ठगुरुरथवा नारा-यणकण्ठस्य पुत्रो नानाशास्त्रव्याख्याता द्वितीयो रामकण्ठ इति साम्प्रतं परीक्षणीयं वर्तते" (पृ. ३७) इत्युक्तमासीत् । अनुबन्धधृतमतङ्गपारमेश्वरीयविद्यापादरामकण्ठवृत्तौ रत्नत्रयस्य स्मरणात्, ईशानशिवगुरुदेवपद्धतौ रत्नत्रयश्लोकानामुद्धृतत्वाच्च सद्वृत्तिर्विद्याकण्ठगुरुणा रामकण्ठेन रचितेति सिद्धयति । एकस्याः समस्यायाः समाधाने सत्यप्यपरेयं समुदेति यत् स्पन्दकारिकाव्याख्याता श्रीरामः सद्वृत्तिकारश्च रामकण्ठो भिन्न उताभिन्न इति ।

२ अत्रत्यानि १७-२०, १११, ११३ पृष्ठानि द्रष्टव्यानि ।

शास्त्रिभिः श्रीमतां हरप्रसादशास्त्रिमहोदयानामभिप्रायः प्रकाशितः। किमेष कुमारशिवः कुमारदेवादभिन्न इति परीक्षणीयमेतत्। सोमशम्भुशिवाचार्यो गुरुदेवपद्धत्यां स्मर्यते, गुरुदेवपद्धतिं च कुमारदेव उद्धरति। तत्र सोमशम्भुः स्वग्रन्थं ११३० वैक्रमे वत्सरे (१०७३ ई.) जग्रन्थेति ग्रन्थसमाप्तिस्थतद्वचनत एव ज्ञायते। कुमारशिवशिष्येण वाराणसीवास्तव्येन केनचित् प्रतिष्ठाविषयकग्रन्थकारेण १०९० ई वर्षे लिखितो ग्रन्थो[1] वंगीय-एशियाटिक-सोसाइटी-ग्रन्थालये सुरक्षितस्तिष्ठति। तत्र कुमारशिवो मूलराजस्य गुरुरिति निदर्श्यते। गुर्जरदेशाधिपतिना मूलराजेन रुद्रमहालयप्रतिष्ठार्थमुदीचीतः सहस्र-संख्याका विप्रा अस्माकं पूर्वजा आहूता आसन्। तेषां वंशजाः साम्प्रतं सहस्रौदीच्य-संज्ञया प्रसिद्ध्यन्ति। एष्वेव कुमारशिवोऽपि स्यात्। तात्पर्यदीपिकायामीशानशिवेनेत्य-नुक्त्वा "गुरुदेवेन, गुरुदेवपद्धतौ" इत्यादिप्रयोगदर्शनादीशानशिवः कुमारदेवस्य साक्षाद् गुरुः स्यादिति, कुमारदेवश्च कुमारशिवतोऽभिन्नः स्यादिति संभावयितुं शक्यते। अष्टप्रक-रणप्रथमसंस्करणविज्ञप्त्याम् "स च कुमारदेवस्तत्र तत्र शिवागमसंग्रहभूतासु पद्धतिषु तदुक्तं कुमारदेवेनेति प्रामाणिकत्वेन परिगृहीतः" (पृ.४) इति दर्शनात् स पद्धतिकारोऽपि वर्तते। ग्रन्थानामेषामुपलब्ध्यनन्तरमेव इदमित्थन्तया किमपि वक्तुं पार्यते। ईशान-शिवस्य कुमारस्य वा केरलदेशाभिजनत्वकल्पना[2] तु आमर्दकमठीयपरम्परानभिज्ञान-मूलैव। आमर्दकप्रभृतीनां मठानां स्थितिर्मध्यभारते श्रीमता हरप्रसादशास्त्रिणा पूर्वो-द्धृतटिप्पण्यामेव साधिता। [3]डॉ० वासुदेवमिराशीमहोदया उज्जयिनीमेव आमर्दकत्वेन ख्यापयन्ति। आमर्दकतपोवनस्य भौगोलिकस्थितिविषयकः प्रश्नोऽद्यापि समाधानमपेक्षत इत्यस्माकं प्रतिभाति।

**अघोरशिवः**

अत्र षड्ग्रन्थानां व्याख्याताऽघोरशिवाचार्यश्चोलदेशीयकुण्डिनकुलमलङ्कुर्वाणः स्वीयां पद्धतिम् अष्टपञ्चाशदधिकैकादशशततमे ईशवीयवत्सरे (११५८ ई.) समापितवा-निति पद्धतिसमाप्तिवचनतो ज्ञायते। अस्य विषयेऽष्टप्रकरणप्रथमसंस्करणविज्ञप्त्याम्, शैवदर्शनबिन्दौ, तत्त्वप्रकाशकाशीसंस्करणभूमिकायां च तद्व्याख्यानोद्धृतवचनप्रामाण्येन, आफ्रेख्टबृहत्सूचीप्रामाण्येन च तस्य तद्ग्रन्थानां च विषये बहूक्तमिति नात्र प्रतन्यते। एष सर्वात्मशिवस्य शिष्यो [4]लक्षद्वयाध्यापकश्चासीत्। अत्र प्रकाशितासु तद्वृत्तिषु

१. "शैव कल्ट इन नार्दर्न इण्डिया" इति ग्रन्थोऽपि (पृ. ३८-३९) द्रष्टव्यः।

२. ईशानशिवगुरुदेवपद्धतिद्वितीयसंस्करणसम्पादकेन केरलविश्वविद्यालयसंस्कृतविभागाध्यक्षेण श्रीमता डॉ. एन. पी. उण्णीमहोदयेन लिखिते उपोद्घाते (भा. १, पृ. १५-१७) द्रष्टव्यमेतत्।

३. प्राच्यविद्यानिबन्धावल्याश्चतुर्थे खण्डे संगृहीते "पतंगशंभु का ग्वालियर संग्रहालय शिला-लेख" इति शीर्षके निबन्धे (पृ. १७५) द्रष्टव्यम्।

४ "न्यू कैटलागस् कैटलागरम्" (भा. १, पृ. ५८) इत्यत्र मद्रासविश्वविद्यालयग्रन्थमालायां प्रकाशितस्य बृहतीग्रन्थस्य आंग्लभाषामये उपोद्घाते (पृ. ६) लक्षद्वयाध्यापक इत्यस्य मीमांसाध्यापक इत्यर्थः कृत इति सूच्यते। तन्न, "द्वैते लक्षद्वयाधीतिश्चाद्वैते लक्षपारगः"

तद्विषये विशेषतोऽवधेयानि वचनीमानि सन्ति—"तेनाघोरशिवेन शैवतिलकैः सम्प्रार्थितेनादरात् संक्षेपेण गुरूत्तमेन विवृतस्तत्त्वप्रकाशः स्फुटम् ॥ इति लक्षद्वयाध्यापकश्रीमदघोरशिवाचार्य...." (पृ. ११४), "तत्त्वज्ञानबुभुत्सुभिर्बुधवरैः सम्प्रार्थितेनादरात् तत्त्वानामतिसंग्रहस्य विवृतिर्लघ्वी स्फुटं निर्मिता" (पृ. १३६), [1]"श्रीमद्घोरशिवाह्वयेन गुरुणा श्रीजन्यया व्याख्यया लोकेऽपि प्रथितेन कुण्डिनकुलं चोलेष्वलङ्कुर्वता । श्रीसर्वात्मशिवाङ्घ्रिपद्मरजसामाराधकेनामला श्रीतत्त्वत्रयनिर्णयस्य विवृतिर्लशादियं निर्मिता ॥" (पृ. १४६), "येनाकारि कवीश्वरेण रसवानाश्चर्यसाराह्वयः पाषण्डापजयश्च काव्यतिलको भक्तप्रकाशस्तथा । नाट्येष्वभ्युदयश्च सुन्दरगिरा शैवेषु सद्वृत्तयस्तेनाघोरशिवेन साधु रचिता रत्नत्रयोल्लेखिनी ॥" (पृ. २०२)। आफ्रेक्टबृहत्सूच्याम्, न्यू कैटलागस् कैटलागरम् (भा. १, पृ. ५८-५९) इत्यत्र चाघोरशिवविषये यदुक्तं तत् सुपरीक्ष्यैव ग्राह्यमिति वर्ततेऽस्मदीयो विचारः। विद्याकण्ठ-रामकण्ठ-नारायणकण्ठ-उत्पलभट्टप्रभृतिभिर्हि काश्मीरिकैर्विद्वद्भिश्चोलदेशीयस्याघोरशिवस्य न वर्तते साक्षात् सम्बन्धः। ईदृशेषु सूचीषु हि यथाऽन्यत्र दृश्यते, तत्तथैव मक्षिकास्थाने मक्षिकेति न्यायेन सर्वमपरीक्ष्यैव स्थाप्यते ।

अत्र प्रकाशितेष्वष्टप्रकरणेषु तेषां नवसु व्याख्यानग्रन्थेषु च तात्पर्यदीपिकायाः कुमारदेवकृताया भिन्नैव सरणिर्दृश्यत इति तस्यैव विवरणमत्र प्रथमं दीयते । विविधानि दार्शनिकतत्त्वानि विस्तरेण प्रौढ्या चात्र निर्दिष्टानीति विषयसूचीदर्शनेन ग्रन्थग्रन्थकारमतमतान्तरनामावल्यनुशीलनेन च स्फुटं स्यात् । अस्य व्याख्यानस्य कानिचिद् वैशिष्ट्यान्यत्र संक्षेपेण समुपस्थाप्यन्ते ।

**तात्पर्यदीपिका**

तत्त्वप्रकाशव्याख्यानारम्भेऽघोरशिवो वक्ति—"अद्वैतवासनाविष्टैः सिद्धान्तज्ञानवर्जितैः । व्याख्यातोऽत्रान्यथाऽन्यैर्यत् स ततोऽस्माकमुद्यमः ॥" (पृ. ६) इति । अत्र तस्य कुमार एवाभीप्सितः स्यादित्यन्येऽपि कल्पयन्ति । यद्यपि—"अपरे पुनर्माया च वस्तुरूपेत्येतद्वाक्यमन्यथा व्याचचक्षिरे" (पृ. ४३) इति कुमारवचनात् तत्त्वप्रकाशेऽन्यापि काचन व्याख्याऽवर्तत, किन्तु तदनुपलम्भादस्माभिस्तस्याः स्वरूपं न ज्ञायते । सिद्धान्तशैवीयान् नैकान् सिद्धान्तान् कुमारो नाङ्गीकरोतीति तु निश्चप्रचम् । कुमारो वेद-स्मृति-पुराण-इतिहास-तन्त्रागमग्रन्थान् सर्वानेव समभावेन स्मरति । विष्णुपुराणमप्यत्र प्रमाणीक्रियते । भगवद्गीता च भगवता विष्णुना रचितेति स वक्ति । स वेदानपौरुषेयानङ्गीकुरुते, नेश्वरकर्तृकान्. यथा हि सद्योज्योतिःप्रभृतयः[2] शैवाचार्याः प्रतिपादयन्ति ।

---

इति तत्रत्यवचनस्य श्लोकप्रमाणसूचकत्वेन सम्पादकैर्योजितत्वात् । अतो लक्षद्वयाध्यापक इत्यस्य द्वैतवादिनः सिद्धान्तशैवागमस्याध्यापक इत्यर्थः करणीयः ।

१. छन्दोऽनुरोधादत्र घोरशिव इति नाम स्थापितम् । वस्तुतोऽघोरशिव इत्येव ग्रन्थकारस्य नाम ।

२. यदाह रामकण्ठो न ताभिरित्यादिमोक्षकारिकाव्याख्यानावसरे—"वेदादीनामपि रचना कर्तारं न व्यभिचरति । हिरण्यगर्भप्रभृतयश्च कर्तारोऽभियुक्तैः स्मर्यन्ते । गीतासु च—

"अन्यथाख्यामुपाश्रित्य सांख्यवच्छिवशासनम्" इति [1]भूतशुद्धितन्त्रवचनं प्रमाणयन् स शैवा दर्शनविषयेऽन्यथाख्यातिवादिनां नैयायिकानां मतमनुकुर्वन्तीति भाषते। यद्यप्यत्र सांख्यशब्दः प्रयुक्तो न नैयायिकशब्दः, तथापि नैयायिका एवान्यथाख्यातिवादिनः, सांख्यास्तु सत्कार्यवादिन इति जानीमो वयम्। अथवा शैवपरमार्थसारव्याख्याता योगराजः—"परमार्थसारनाम्ना आधारकारिकेत्यपराभिधानग्रन्थेन सांख्यनयोक्तोपदेशानुसारेण" (पृ. ६-७) इति वदन् वैष्णवपरमार्थसारं सांख्यमतनिदर्शकं मनुते। परमार्थसारे प्रतिपादितमद्वैतवादं भास्कर-श्रीकण्ठ-श्रीपतिपण्डिताराध्य-अप्पय्यदीक्षितप्रभृतिभिर्वर्णितं द्वैताद्वैतवादं वा कुमारोऽनुसरतीति सत्यं स सिद्धान्तशैवीयं द्वैतवादं नाङ्गीकरोति। "तत्त्वं वस्तुत एकं शिवसंज्ञम्" (श्लो. ३३) इति वदन् भोजराजोऽपि तत्रानुगुण इव प्रतीयते। अत एव इतः पूर्वतनीना "पञ्चानामप्येषाम्" (श्लो. ३२) इति कारिका प्रक्षिप्तेत्यघोरशिवो घोषयति, शुद्धाध्वनि शुद्धकालसद्भावं चाङ्गीकरोति। भूतानां देवीदेवात्मकत्वम् (पृ. ९), अलिङ्गं तत्त्वम् (पृ. १०), शक्तिशक्तिमतोरभेदो वास्तविको भेदस्त्वौपाधिकः (पृ० १०, ४९), शिवोऽप्यप्रच्युतशिवस्वभावस्त्रैविध्यं पतिपशुपाशात्मकमनुभवति (पृ. १३) इत्यादीनि तस्य वचांसि सत्यमद्वयवादस्यैव पोषकाणि सन्ति। [2]साधनचतुष्टयसम्पत्तिं स्मरन् स शाङ्कराद्वैतवादं प्रमाणयतीव।

वस्तुतो मध्यदेशीया द्वैतवादिनः शैवाचार्याः प्रपञ्चसारसरण्या स्मार्तीं दृष्टिमाश्रयन्त आसन्। शिवप्रधानां पञ्चायतनपूजां तेऽङ्गीकुर्वन्ति स्म। पाशुपतागमाः श्रौताः, अष्टाविंशतिशैवागमाश्च स्वतन्त्रा इति शिवपुराणे [3]वायवीयसंहितायां वर्ण्यते। आमर्दकतपोवनविनिर्गता लाटदेशीया आचार्याः प्राधान्येन श्रौतीं सरणिमेवाश्रयन्तः स्युः। अत्र शतरुद्रीय(पृ. १५)-नीलरुद्रसूक्त(पृ. २,१५)-रौद्रसूक्त(पृ. १५)-त्रैयम्बकाध्यायादीनां (पृ. २) वैदिकप्रकरणानां वर्तते सविशेषं माहात्म्यम्। एतत्सर्वं तात्पर्यदीपिकादर्शनेन श्रीकण्ठभाष्य-ईश्वरगीतादिभिश्च स्पष्टीभवति। कुमारपरवर्तिनः शैवविशिष्टाद्वैतप्रतिपादकाः श्रीकण्ठप्रभृतयः शैवाचार्यास्तत्क्षुण्णां पद्धतिमेवानुसरन्तीति नैकेषामुद्धरणवचनानां सर्वेषु तत्परवर्तिग्रन्थेषु दर्शनान्निश्चीयते। एवं च सद्योज्योति-

---

वेदान्तकृद् वेदविदेव चाहमिति।''''तदर्थस्य परमेश्वरसमवेतस्य सम्यग्ज्ञानादेर्गुणस्य नित्यत्वान्नित्यत्वम्" (पृ २७६-२७७) इति। नरेश्वरपरीक्षायामपि सद्योज्योतिषा —"ईशोक्तत्वेऽपि नैवेष्टा" ( ३।१०८ ) इत्यादिना वेदानामीश्वरप्रणीतत्वेनैव प्रामाण्यं स्थापितम्।

१. लुप्त. उपो. ५२ पृष्ठं द्रष्टव्यम्।

२. नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमादिषट्कसम्पत्तिः, मुमुक्षुत्वं चेति चत्वारि साधनानि शाङ्करवेदान्तवर्णितान्यत्र साधनचतुष्टयसम्पत्तित्वेन स्मृतानि।

३. शैवागमो हि द्विविधः श्रौतोऽश्रौतश्च संस्कृतः।
श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः॥
स्वतन्त्रो दशधा पूर्वं तथाऽष्टादशधा पुनः।
कामिकादिसमाख्याभिः सिद्धः सिद्धान्तसंज्ञितः॥ (१।३२।११-१२)

शिवाचार्यप्रभृतिभी रामकण्ठपर्यन्तैः काश्मीरिकैः शैवाचार्यैः प्रवर्तितया द्वैतवादिनां शैवागमानां परम्परया भिन्नाऽवर्तत मध्यदेशीयानामामर्दकतपोवनविनिर्गतपरम्परामनुसरतां शिवशम्भुनामान्तानां शैवाचार्याणां दृष्टिः। काश्मीरीया द्वैतवादपरम्परा च कालक्रमेण दाक्षिणात्यैरघोरशिवादिभिरङ्गीकृता। अत एव केचनाघोरशिवं[१] विद्याकण्ठ-रामकण्ठादिशिष्यत्वेन परिचिन्वन्ति।

तात्पर्यदीपिकाकारो मायापदनिर्वचनप्रसङ्गेन ख्यातिवादं विवृण्वन् (पृ. ३७-४३), "कर्त्रा विना न कार्यं न तथोपादानकरणाभ्याम्" (श्लो ३७) इति कारिकांशव्याख्यानमुखेनानुमानेनेश्वरसिद्धिं कुर्वन् (पृ. ५८-६८), "भवति गुणत्रयतो धीः" (श्लो. ५२) इति बुद्धितत्त्वव्याख्यानप्रसङ्गेन प्रमाणादिलक्षणानि प्रपञ्चयन् (पृ. ८१-८९), "भोगेन कर्मपाकम्" (श्लो. ७२) इति कारिकाविवरणप्रसङ्गेन मोक्षस्वरूपं (पृ. १०७-११०) च समालोचयन् यद् वक्ति तत् केषुचिद् दार्शनिकग्रन्थेष्वपि दुर्लभदर्शनमिति स्वयमेव निभालयन्तु दर्शनानुरागिणो विपश्चितः। अत्र यथाप्रसङ्गम् आरम्भवादिनां वैशेषिक-नैयायिक-भाट्ट-प्राभाकराणाम् (पृ ७०), भट्टपादस्य (पृ. ११, ५०, ८२), कौमारिलानां च (पृ. ८३), वैशेषिकाणां (पृ. ७०, ७३, ८६) नूतनवैशेषिकाणां (पृ. ८२) वृद्धवैशेषिकाणां (पृ. ८२) च, वृद्धनैयायिकानां (पृ. ८२) भूषणकारस्य (पृ. ८२) च, प्रभाकराचार्य-(पृ. ८२)-प्राभाकर(पृ. ७०)-प्राभाकरैकदेशिनां (पृ. ४१) च, दिगम्बर (पृ. १०८-१०९)-आर्हत (पृ. ८२)-आर्हतैकदेशीय(पृ. २७, १०९)-बौद्ध(पृ. २७,३७,८२,८४,११०)-चतुर्विध-सौगतादीनां (पृ.१०९-११०) च मतानि समालोचितानीति सर्वमेतद् विशेषजिज्ञासुभिर्ग्रन्थ एवावलोकनीयम्। शैवागमेषु मुख्यमिति कारिकाव्याख्यानावसरे कुमारः शैवागमानां तन्त्रशास्त्राणां च प्रामाण्यं सम्यक् प्रतिष्ठापयति, मार्कण्डेयागस्त्यरामदधीचादींश्च तत्प्रामाण्याङ्गीकर्तृत्वेन समुपस्थापयति (पृ. १४-१६)। "यथागमप्रज्ञाश्रुतिस्मृतिविभागात्" (६।६।१६) इति शाङ्खायनगृह्यसूत्रवचनेऽपीदम्प्रथमतयाऽऽगमपदमेवोपात्तम्।

"आत्मनि गुरुषु बहुवचनविधानादस्माभिरिति बहुवचननिर्देशः" (पृ. १३) इति वदन् स शिष्टाचारमपि शिक्षयति। क्षेमराजः शिवसूत्रविमर्शिनीप्रारम्भे—"तां महतीं शिलां करस्पर्शनमात्रपरिवर्तनतः संवादीकृतस्वरूपां प्रत्यक्षीकृत्येमानि शिवोपनिषत्संग्रहरूपाणि शिवसूत्राणि ततः समाससाद" इत्येवं दैवीमुत्पत्तिं शिवसूत्राणां वर्णयति। अथ कुमारोऽपि—"शिवेन सूत्रकर्त्रा चैतन्यमात्मेत्यनेन प्रथमसूत्रेण" (पृ. २) इत्युक्त्वा शिवसूत्राणि स्मरति, न वसुगुप्तनाम्ना। शिवसूत्रवार्त्तिकस्य सार्धैकः श्लोकोऽत्रोद्धृतः (पृ. ३४) भास्करकृते शिवसूत्रवार्त्तिके सपाठभेदं दृश्यते। शिवपुराणीया वायवीयसंहिता अत्र बहुशः समुद्धृता, किन्तु शिवपुराणस्य[२] नाम कुत्रापि न दृश्यते। कूर्मपुराणम्,

१. न्यू कैटलागस् कैटलागरम्, भा. १, पृ. ५८ इत्यत्र द्रष्टव्यम्।

२. शिवपुराणे—"चैतन्यमात्मेति मुने शिवसूत्रं प्रवर्तितम्" (६।१६।४४), "इत्यादिशिवसूत्राणां वार्त्तिकं कथितं मया। ज्ञानं बन्ध इतीदं तु द्वितीयं सूत्रमीशितुः॥" (६।१६।४६), "श्रीविरूपाक्षनिर्मिते। शास्त्रे पञ्चाशिके" (६।१९।४४) इत्यादिवचनदर्शनादर्वाचीनत्वं

तत्रत्या ईश्वरगीता, लिङ्ग-लिङ्गोद्भवपुराणे एव न, विष्णुपुराणमप्यत्र प्रमाणत्वेनाङ्गीक्रियते। कूर्मपुराणस्य (पृ. ११), ईश्वरगीतायाः (पृ. ६), लिङ्गपुराणस्य (पृ. ४), मनुस्मृतेश्च (पृ. ११२) कानिचन वचनानि साम्प्रतं मुद्रितेषु तेषु नोपलभ्यन्ते। उपलब्धेषु वचनेष्वपि विशिष्टाः पाठभेदा[1] दृश्यन्ते। अत्रोद्धृता महाभारतीयाः केचन श्लोका भाण्डारकरसंस्करणे परिशिष्टादिषु स्थापिता इति तेषां पुनः परीक्षणमपेक्षितम्। महाभारतादिषु प्रदेशभेदेनापि पाठभेदा वर्तन्त इति तदाधारेण कुमारदेवसदृशानां ग्रन्थकृतां देशनिर्देशोऽपि कर्तुं शक्यते। मोक्षधर्म(पृ. ५) सनत्सुजातीय(पृ. १०)नाम्नाऽपि स महाभारतं स्मरति। चन्द्रज्ञान-शैवरहस्यसदृशानां ग्रन्थानामन्यान्यपि वचनान्यत्र समुद्धृतानि सन्तीत्यनुमीयते[2]। शैवरहस्यमेतद् मुद्रितात् शिवरहस्यतो भिन्नमभिन्नं वेत्यस्य निर्णयस्तु परीक्षणमपेक्षते। अन्ये, अपरे, परैरित्यादिसर्वनामभिः समुपस्थापितानां मतानामपि परिचयोऽतीवायासेन दातुं शक्येत।

परमार्थसारीयास्त्रयः श्लोका अत्र शतककारनाम्ना (पृ. ४३) समुद्धृताः। ते चाभिनवगुप्तकृतपरमार्थसारे समुपलभ्यन्ते, न वैष्णवीये परमार्थसारे। अभिनवगुप्तेन आधारकारिका(वैष्णवपरमार्थसार)साहाय्येनैव स्वकीयो ग्रन्थो रचित इत्यभिप्रायसाम्यं शब्दसाम्यं च तत्र तत्र द्रष्टुं शक्यत एव। का व्यक्तिरत्र आर्याकार(पृ. ३)पदेनोपात्तेति तु नाद्यावध्यस्माभिः परिज्ञातम्। सांख्यसूत्राणि न प्राचीनानीति प्रायोवादः प्रचरति पाश्चात्यपण्डितमण्डलीषु, किन्त्वत्र "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः"(१।६१) इति तत्रत्यं सूत्रमुपलभ्यते (पृ. ८०)। सांख्यकारिका तदीयानि च वचनानि बहुशोऽत्र स्मर्यन्ते। प्रयोगमञ्जरी (पृ. १७) कुमारदेवेन, मञ्जरी च गुरुदेवेन नानास्थलेषु स्मर्यते। भवत्रातपौत्रेण [3]अष्टमूर्तिपुत्रेण रविणा कृता प्रयोगमञ्जरी सटीका समुपलभ्यत इति कथयन्ति ईशानशिवगुरुदेवपद्धतिद्वितीयसंस्करणस्य सम्पादका डॉ. एन. पी. उण्णीमहोदयाः केरलविश्वविद्यालयसंस्कृतविभागाध्यक्षाः। परीक्षणीयमेतद् यत् कुमारदेवेन गुरुदेवेन च स्वस्वग्रन्थेषूद्धृतानि प्रयोगमञ्जर्या मञ्जर्या वा वचनानि ग्रन्थेऽस्मिन् तन्नाम्नि समुपलभ्यन्ते न वा ?

---

शिवपुराणस्य साधितमस्माभिः "शिवपुराणीयं दर्शनम्" इत्याख्ये तन्त्रयात्रायां प्रकाशिते निबन्धे (पृ. ५०)। अत्र श्लोकद्वयं कस्यचन वार्त्तिकस्य उद्धृतं दृश्यते। तच्च नोपलभ्यते भास्करकृते शिवसूत्रवार्त्तिके।

१. कुमारेण स्मृतेषु वाक्येषु समागताः पाठभेदाः पुराणादीनां स्वरूपावगमाय देशकालादिनिर्णयाय च महत्साहाय्यमाचरेयुरित्यस्मदीया वर्तते विचारसरणिः।

२. तत्त्वानां वर्णसंस्थानादिप्रतिपादकाः सर्वे श्लोकाश्चन्द्रज्ञानस्य, छन्दोऽनुरोधेन च आर्याछन्दसि तत्त्वस्वरूपादिप्रतिपादनपराः श्लोकाः शैवरहस्यस्येति वयमुत्पश्यामः।

३. "तान्त्रिक साहित्य" इत्याख्ये ग्रन्थेऽस्य त्रिविधा मातृका विवृता। तत्र अष्टमूर्तिपुत्ररचितस्य ग्रन्थस्याप्युल्लेखो विद्यते। प्रो. उण्णीमहोदयेन च ईशानशिवगुरुदेवपद्धतिप्रथमभागभूमिकायाम् (पृ. १७) उपर्युक्तं विवरणमदीयत।

तात्पर्यदीपिकायामुद्धृतानां ग्रन्थानां ग्रन्थकाराणां च परिचयः प्रायोऽस्माभि-र्लुप्तागमसंग्रहद्वितीयभागस्य उपोद्घात एव प्रदत्त इति नात्र पुनः प्रयत्यते। इदं त्वत्रावधेयम्—"तत्त्वानामपि तत्त्वम्" (श्लो. ७५) इत्यस्य श्लोकस्य व्याख्यानावसरे—"अत्र निवृत्तिः कलाध्वा" (पृ. ११२) इत्यादिना कृतः षडध्व-विचारोऽप्रासङ्गिक इव प्रतीयते। मन्यामहे मातृकापत्रविपर्यासाल्लेखकप्रमादाद् वा प्रसङ्ग एषोऽत्र दृश्यते। एवमेव ६०-६१ कारिकयोर्व्याख्यानावसरे शङ्कुकर्णभुवनं स्थलत्रये दृश्यते। किमत्र बीजमिति न जानीमः। अपि च, "योगलक्षणमुपरिष्टाद् वक्ष्यामः" (पृ. ८२) इति स लिखति, कृतेऽपि प्रयत्ने तल्लक्षणं तत्र नोपलब्धमस्माभिः।

तात्पर्यदीपिकाकारस्तत्त्वप्रकाशं षट्सु परिच्छेदेषु विभजतीत्यन्या विशेषताऽस्या-घोरशिवापेक्षया। तत्र १-२० श्लोकात्मकः प्रथमः परिच्छेदः पतिपशुपाशविचारात्मकः, २१-३७ श्लोकात्मको द्वितीयः शुद्धतत्त्वविचारपरः, ३८-४९ श्लोकात्मकस्तृतीयः शुद्धाशुद्धतत्त्वविचारकः, ५०-६२ श्लोकात्मकश्चतुर्थोऽशुद्धतत्त्वविचारपरः, ६३-७० श्लोकात्मकः पञ्चमः परिच्छेदः सामान्यवादनामा, अन्तिमः षष्ठश्च परिच्छेदः ७१-७५ श्लोकात्मको निवृत्त्याख्य इति तत्र न किमप्यनौचित्यं वयं पश्यामः।

**रामकण्ठवृत्ती**

मोक्षकारिका परमोक्षनिरासकारिका च रामकण्ठेन व्याख्याते। स्थले स्थले एष शास्त्रीयान् विचारान् समुपस्थापयति। स्थलेष्वीदृशेष नाघोरशिववदस्य भाषा सरला, किन्तु दार्शनिकीं गम्भीरतामुद्भावयति। अत्र मोक्षकारिकाव्याख्यानारम्भे सद्योज्योति-र्बृहस्पती गुरूणामपि वन्द्याविति निर्दिश्यते। बृहस्पतिपादः शिवतनुशास्त्रस्य, रौरव-वार्त्तिकस्य, रौरवसूत्रसंग्रहस्य च कर्तेत्यस्माभिरन्यत्र[1] प्रतिपादितम्। विद्याधिपतिः, रौरववार्त्तिकम्, रामकण्ठेनैव कृता मन्त्रवार्त्तिकटीका-सर्वागमप्रामाण्य-आगमविवेकाख्या ग्रन्थाश्चात्र स्मर्यन्ते। "तासु वर्णाश्रमाचारान्" (मो. का. १४६) इत्यत्र व्याख्यायां स्मृताः पुराणेतिहासभारत[2]सुवर्णाक्षकार्तवीर्यस्मृतिसूत्रादयो ग्रन्था [3]आनुपूर्व्याऽघोर-शिवेनाऽपि स्मर्यन्ते (पृ. १३५)। अत्र स्मृतो हृदयप्रमाणाख्यो ग्रन्थो लकुलीशशिष्येण मुसुलेन्द्रेण निबद्ध इत्यन्यत्र[4] द्रष्टव्यम्। सर्वागमप्रामाण्यमिति (पृ. २७५) न स्वतन्त्रो ग्रन्थः, अपि तु रौरववृत्तिविवेकस्यैवांशविशेष इति—"दर्शितमस्माभिः सर्वागमप्रामाण्यो-पन्यासे रौरववृत्तिविवेके" (३।२०) इत्येवं मतङ्गपारमेश्वरवृत्तिस्थेन तद्वचनेनैव ज्ञायते।

---

१. लुप्ता. उपो. ५१, ६३ पृष्ठे द्रष्टव्ये।

२. सुवर्णाक्षस्य कार्तवीर्यस्मृतेश्च विवरणं बृहत्सूचीष्वपि न दृश्यते।

३. भारतीया नैके विद्वांसः पूर्वतनस्याचार्यस्याभीष्टानि वचनानि कदाचन नामोद्धारं विनैव आनुपूर्व्या समुद्धरन्ति। सायणमाधवीये सर्वदर्शनसंग्रहेऽघोरशिवस्यापि वचनान्यानुपूर्व्या दृश्यन्ते शैवदर्शनप्रकरणे।

४. लुप्ता. उपो. ११६ पृष्ठस्था टिप्पणी द्रष्टव्या।

अत एव श्रीमता एन. आर. भट्टमहोदयेन नास्य रामकण्ठग्रन्थेषु पृथगुल्लेखः कृतः। रामकण्ठः प. मो. का. वृत्तौ "गुरुणा स्वायम्भुवादौ" (पृ. २८७) इति लिखति। स्वायम्भुवाद्यागमव्याख्यानावसर इति तदभिप्रायो ज्ञेयः।

रामकण्ठो मतङ्गपारमेश्वरविद्यापादवृत्तौ नरेश्वरपरीक्षाप्रकाशं मोक्षकारिकावृत्तिं रौरववृत्तिविवेकं च सर्वागमप्रामाण्योपन्यासपुरस्सरं स्मरति, योगपादवृत्तौ च स्वकीयां किरणवृत्तिम्। परमोक्षनिरासकारिका रौरववृत्तेरेव भागविशेष इति तद्वचनेनैव ज्ञायते। मोक्षकारिकापि तथैव, किन्तु पूर्वं तेन परमोक्षनिरासकारिका व्याख्याता, तदनु च मोक्षकारिकेति तद्वचनत एव ज्ञायते (पृ. २५०)। मोक्षकारिकावृत्तितः पूर्वं तेन मन्त्रवार्त्तिकटीका (पृ. २६८), परमोक्षनिरासकारिकातः पूर्वं च आगमविवेको (पृ. २९८) व्यरचि। नरेश्वरपरीक्षापि तेन ततः पूर्वमेव रचितेति [1]तद्वचनत एव ज्ञायते। सार्धत्रिशतिकालोत्तरवृत्तिविषये न कापि सूचनोपलभ्यते, किन्तु सम्पूर्णाया नादकारिकायास्तत्रत्यायां वृत्तौ लिखितत्वात्तस्या रचना ततः पूर्वमेव जातेति निश्चीयते। अनेन क्रमविवेकेन मतङ्गपारमेश्वरवृत्तिस्तस्य परिपक्वावस्थायां लिखिता कृतिरिति वक्तुं शक्यते।

**अघोरशिववृत्तयः**

अघोरशिवः स्ववृत्तिषु विविधाः सूचनाः प्रददाति। अनेन ईश्वरवादः, शब्दनित्यताविचारः, सत्कार्यवादः, मलविचारः, वेदानामीश्वरकर्तृकत्वम्, दीक्षाविचारः, देहात्मवादनिरासः, अद्वैतवादनिरास इत्येते विषया मृगेन्द्रवृत्तिदीपिकायां विस्तरेण विवेचिता इत्यसकृत् स वदति। अनेन तत्त्वत्रयनिर्णयवृत्तौ तत्त्वसंग्रहलघुवृत्तिः, तत्त्वसंग्रहवृत्तौ रत्नत्रयोल्लेखिनी, रत्नत्रयोल्लेखिन्यां च तत्त्वप्रकाशवृत्तिः स्मृता। रत्नत्रयोल्लेखिन्यामेव स स्वकीयां पद्धतिमपि स्मरति। नादकारिकावृत्तिं विहायात्रत्यासु सर्वास्वेव वृत्तिषु च स्मरति मृगेन्द्रवृत्तिदीपिकाम्। अनेन प्रथमं तेन मृगेन्द्रवृत्तिदीपिका पद्धतिर्वा रचिता। ततः क्रमात् तत्त्वप्रकाशलघुव्याख्याम्, रत्नत्रयोल्लेखिनीम्, तत्त्वसंग्रहलघुटीकाम्, तत्त्वत्रयनिर्णयवृत्तिं च स जग्रन्थेति निर्णेतुं शक्यते। नादकारिकाव्याख्यासमाप्तौ—"ज्ञानस्यापि दीक्षाङ्गत्वेनैव मोक्षसाधन(त्वान्न ? त्वं न) केवलस्येति वक्ष्यामः" (पृ. २४४) इत्युच्यते। अत्र वक्ष्याम इति पदेनास्माभिरुन्नीयते यदत्रत्येषु षट्सु प्रकरणेषु तेन सर्वप्रथमं नादकारिकैव व्याख्याता, अन्यासु प्रायः सर्वासु वृत्तिषु ज्ञानस्य दीक्षाङ्गत्वेनैव मोक्षसाधनत्वमिति पक्षस्य साधितत्वात्।

तत्त्वप्रकाशस्य लघ्वी व्याख्याऽनेन रचितेति तत्र काचन बृहती टीका ततः पूर्वमासीदिति ज्ञायते। तस्या नाम नात्र दृश्यते। किन्तु—

> अद्वैतवासनाविष्टैः सिद्धान्तज्ञानवर्जितैः ।
> व्याख्यातोऽत्रान्यथाऽन्यैर्यत् स ततोऽस्माकमुद्यमः ॥ (पृ. ६)

इति वचनाज्ज्ञायते कुमारदेवस्यैव बृहद्व्याख्यानमस्याभीष्टं स्यादिति, यद्यप्यन्याऽपि

१. "दर्शितमस्माभिर्विस्तरेण रौरववृत्तिविवेकपरमोक्षनिरासकारिकासु" (न. प., पृ. ९५)।

काचन टीका तत्त्वप्रकाशस्यासीदिति कुमारदेववचनत (पृ. ४३) एव ज्ञायते। तत्त्वसंग्रहेऽपि तेन लघुटीकैव निर्मिता। अत्र च—

तत्त्वसंग्रहचन्द्रस्य प्रकाशाय वितानिता।
श्रीनारायणकण्ठेन बृहट्टीका शरन्निशा॥ (पृ. ११५)

इति तस्यैव वचनान्नारायणकण्ठेन शरन्निशानाम्नी बृहट्टीका रचिताऽऽसीदिति ज्ञायते।

रत्नत्रयोल्लेखिनीलेखनप्रयोजनं स एवं वक्ति—

कैश्चिद् वेददृशाऽपरैः कुलधिया न्यायानुवृत्त्येतरै-
रन्यैश्च स्वमनीषया मलिनितं मोहेन रत्नत्रयम्। (पृ. १४७)

अनेन वचनेन चतस्रो व्याख्या अघोरशिवसमक्षमस्य ग्रन्थस्यासन्निति प्रतीयते। रत्नत्रयमीशानशिवगुरुदेवपद्धत्यामपि[१] स्मर्यते। तेन वेदानुसारिणी व्याख्या, यथा हि कुमारदेवेन तत्त्वप्रकाशस्य कृता, रत्नत्रयस्यापि मध्यदेशीयेन केनचिच्छैवाचार्येण लिखिता स्यात्। काश्मीरेषु कुलागमाननुसरता केनचिद्विदुषा तथैवास्य व्याख्यानं कृतं स्यात्, यथा हि भुल्लुकेन भैरवागममनुसरतः स्वच्छन्दतन्त्रस्य सिद्धान्तागमानुसारिणी व्याख्या कृता। अन्यस्य व्याख्यानद्वयस्य विषये लिङ्गाभावान्न किमपि कल्पयितुं पार्यते। एतेषु नैकमपि व्याख्यानमघोरशिवेनोद्धृतम्।

नादकारिकाव्याख्यानं तेन गुरूत्तमैः प्रार्थितेन कृतमित्येवं स वदति ग्रन्थान्ते—

श्रीमद्घोरशिवाचार्यजन्ययाऽपरसंज्ञया ।
व्याख्याता नादसिद्धिश्च प्रार्थितेन गुरूत्तमैः॥ (पृ. २४४)

"तन्मात्राणीह घटवत्" इति मतङ्गपारमेश्वरीयं वचनमेकत्र (पृ. १०१) मृगेन्द्रागमवचनत्वेन, अन्यत्र (पृ. ११७, २०४) च मतङ्गवचनत्वेनैव स्मर्यते। तेन ग्रन्थकृतो लिपिकारस्य वाऽयं प्रमाद इति वक्तुं शक्यते। अघोरशिवो मृगेन्द्र-मतङ्ग-कालोत्तराद्यागमवचनान्यपि श्रुतिपदेन तत्र तत्र (पृ. ७, ८, ३५ इत्यादिषु) उद्धरति; श्रूयते, रौरवादिश्रुतेरित्यादिना च स्मरति। तेनागमेषु तस्यातिशयश्रद्धालुत्वं स्पष्टीभवति। कुमारस्तु कुत्राप्येवं न करोति, प्रत्युत स आगमपदप्रयोगपुरस्सरं वदवचांसि समुद्धरति (पृ ५८, ६८, ९८), पुराणं च (पृ. ८)। "दाक्षिणात्यादेः काश्मीरादौ दृश्यमानो देशान्तरफलभोगः (पृ. २२७) इति वचनेन दाक्षिणात्या विद्वांसो ज्ञानार्जनार्थं काश्मारीन् गच्छन्ति स्मेति सूच्यते। तथा हि मधुराजयोगी श्रीमतोऽभिनवगुप्तस्य सकाशमध्ययनार्थं गत आसीदिति तत्कृतगुरुनाथपरामर्शतो ज्ञायते। अनेनाऽघोरशिवः काश्मीरपरम्परया सम्बद्ध आसीन्न तु मध्यदेशीययेत्यपि सिद्ध्यति। भोगकारिकावृत्तौ (पृ. २३१) नन्दिकेश्वरकारिका स्मर्यते। एष च ग्रन्थो [२]नन्दिकेश्वरकारिकातो भिन्नः।

---

१. तृतीयस्य भागस्य १०, ११, १६, ५९ पृष्ठानि द्रष्टव्यानि।

२. बृहत्सूचीषु नन्दिकेश्वरकारिकानाम्नाऽस्यैव ग्रन्थस्य सटीकस्य परिचयो विद्यते, नास्मदभिप्रेतग्रन्थस्य। अत्र सार्धत्रिशतिकालोत्तरीये उपोद्घाते भट्टमहोदयकृतमस्य ग्रन्थस्य विवरणं द्रष्टव्यम् (पृ. ६२)।

इतोऽधिकं नास्य विषये किमपि ज्ञायते। अपि च, तत्त्वसंग्रहवृत्तौ (पृ. १३२) स्मृता गीता भगवद्गीतेश्वरगीताभ्यां भिन्ना।

तत्त्वसंग्रहव्याख्यायाम्—"श्रीमत्कालोत्तराद्युक्तवन्मन्त्रलब्धधटारोपणेन गौरवं परीक्ष्य पश्चादुद्घातमन्त्रोच्चारणादिपूर्वं तच्छुद्धिं कृत्वा पुनर्धटारोपणे तस्य लाघवमुत्पद्यमानं दृश्यते" (पृ. १२९) इत्येवं तुलादीक्षायां महापातकयोगिनोऽप्यपेतपातकत्वं वर्णितम्। तमिमं पक्षं [1]धर्मकीर्तिः प्रमाणवार्त्तिके खण्डयति। सोऽत्र कालोत्तरोयं मतमेव खण्डयतीति वयं संभावयामः। पद्मवज्रकृतायां गुह्यसिद्धौ[2] कालोत्तरागमः स्मर्यते। बौद्धानां प्रज्ञापारमिताग्रन्थस्य यथा नैकानि संस्करणानि सन्ति, तथा कालोत्तरा-कालपादेत्यादिनामभिः काश्मीरिकैः सोमानन्द-उत्पलभट्टप्रभृतिभिः स्मृतस्यास्यागमस्य त्रयोदश संस्करणानि श्रीमता पण्डित-एन. आर. भट्टमहोदयेन स्वकीये सार्धत्रिशतिकालोत्तरागमस्य उपोद्घाते विस्तरेण विवृतानि, अनुबन्धे च त्रयोदशशतिक-षट्सहस्र-स्कन्द-कालोत्तराणां तत्र तत्रोद्धृतानि वचनानि संगृहीतानि। तेषु षट्सहस्रकालोत्तरस्य स्मरणमघोरशिवेनापि (पृ. १७३) विधीयते। तुलादीक्षाप्रसङ्गो यद्यपि मुद्रिते सार्धत्रिशतिकालोत्तरसंस्करणे न दृश्यते, तथापि षट्साहस्रे संस्करणे प्रकरणमेतद् दीक्षाप्रसङ्गेऽवश्यमेवोपलभ्येत।

कुमारदेववदघोरशिवेनापि प्रकृतिपुरुषकर्मेश्वरवादिनः (पृ. ११५), अन्ये च नानाविधा मतवादास्तत्र तत्र समालोचिता इति तस्य नानागमदर्शननिष्णातत्वं सुतरां सिद्ध्यतीति सर्वेषामत्रत्यानां मूलटीकाग्रन्थानां दार्शनिकं गरीयस्त्वं विजयतेतराम्। स्थालीपुलाकन्यायेन किञ्चिदत्रोपस्थाप्यते।

## सिद्धान्तशैवीयं दर्शनम्

शैवागमीयं दर्शनमुद्दिश्यास्माभिरागममीमांसायाम्, [3]आगमीयं दर्शनमित्याख्ये निबन्धे, लुप्ता. उपोद्घाते च प्रधानत उमापतिशिवाचार्यकृतशतरत्नोल्लेखिनीपद्धत्या, लुप्तागमसंग्रहभागद्वये संकलितानां सिद्धान्तशैवागमवचनानां च साहाय्येन किमप्युक्तम्। अधुनाऽष्टप्रकरणग्रन्थान् तद्व्याख्यानानि चाश्रित्य केचन विषया विवादास्पदा विचार्यन्ते। तत्र प्रथमं सिद्धान्तशब्दार्थविषये किमप्युच्यते।

**सिद्धान्तशब्दार्थः**

"सिद्धान्तशब्दः पङ्कजादिशब्दवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः" (पृ. १४९) इति वदन्नघोरशिवः सिद्धान्तशब्दस्य स्पष्टां व्याख्यां प्रस्तौति।

---

१. विषयेऽस्मिन् सारनाथस्थकेन्द्रीयतिब्बतीशोधसंस्थानान्तर्गतदुर्लभबौद्धग्रन्थशोधयोजनातः प्रकाशिताया 'धीः'नाम्न्याः पत्रिकायाः प्रथमेऽङ्के समावेशितोऽस्मदीयः "दीक्षाविषयक सौगत पक्ष पर क्षेमराज का दृष्टिकोण" इति शीर्षको निबन्धो द्रष्टव्यः (पृ. १०६-११२)।

२. "कालोत्तरादिसंशुद्धं नो चेन्निःश्वाससंभवम्" (८।१२)।

३. संस्कृतविमर्शः, राष्ट्रियसंस्कृतसंस्थानशोधपत्रिका, व. १४, अ. १, पृ. २१-३८, सन् १९८६

स्वतन्त्रो दशधा पूर्वं तथाऽष्टादशधा पुनः ।
कामिकादिसमाख्याभिः सिद्धः सिद्धान्तसंज्ञितः ॥

इति शिवपुराणवायवीयसंहितावचनमपि (१।३२।१२) अत्रानुगुणम् । अस्यां स्पष्टायां व्याख्यायां सत्यामपि सिद्धान्तपदमुद्दिश्य यद्वा तद्वा लिखनं वाचकदन्धनमात्रम् । "प्रायश्च सिद्धान्तप्रियो लोकः" (२।२५) इति, "शैवशब्देनानुत्तीर्णपदप्रापककैरणादि-सिद्धान्तशास्त्रमुच्यते" (११।७४) इति च स्वच्छन्दोद्योते वदन् क्षेमराजोऽप्येनमेवार्थमङ्गी-करोति । एवं च नास्यार्थस्य विषये विवादस्य कोऽप्यवसरः ।

**मतान्तरालोचनम्**

कैश्चनास्य सिद्धान्तशास्त्रस्य दक्षिणभारतीयदर्शनमित्यपि नाम ख्याप्यते । तत्तु अनालोचितरमणीयम् । यद्यपि द्वैत-द्वैताद्वैत-अद्वैतवादिनामागमानामवतारभूर्मध्यदेश इति स्वयमेवाभिनवगुप्तो भाषते, तथापि प्रत्यभिज्ञादर्शनमुत्पलोपज्ञमिति तस्य काश्मीरप्रभवत्वं वक्तुं शक्यते, किन्तु द्वैतदर्शनविषये नैतादृशं किमपि प्रमाणमुपलभामहे, येन तस्य दक्षिणप्रभवत्वं साधयितुं शक्येत । प्रत्युत सद्योज्योतिश्शिवाचार्यप्रभृतिभि-र्नारायणकण्ठसुतरामकण्ठपर्यन्तैः काश्मीरिकैराचार्यैः स्थापितां परम्परामेवाघोरशिवादयो दाक्षिणात्या आचार्या अनुसरन्तो दृश्यन्ते । [1]शैवभूषणपरिगणितेषु पद्धतिकारेषु प्रथम काश्मीराभिजनानां विदुषाम्, तदनु च मध्यदेशीयानां सोमशम्भुप्रभृतीनां नामानि दृश्यन्ते । सर्वान्ते वर्ततेऽघोरशिवस्य दाक्षिणात्यस्य नाम । अपि च, [2]डॉ. वी. एस. पाठकमहोदयेन त्रिलोचनशिवाचार्यस्य सिद्धान्तसारावलीवचनमेतदुद्ध्रियते—

राजेन्द्रचोल इत्याख्यश्चोलभूपो महीं वसन् ।
गङ्गास्नानार्थमागत्य दृष्ट्वा शैवान् वरांस्तदा ॥
स्नात्वा प्रतिनिवृत्तः सन् तान् समादाय शैवकान् ।
स्वराज्ये स्थापयामास शैवाचार्यवरांस्तदा ॥
काञ्चीमध्ये चोलभूमौ सर्वत्रैव प्रविस्तराः ।

[3]परीक्षणार्हमेतत् । किमनेन साधयितुं शक्यते यत् त्रिलोचनशिवाचार्यतः परमेव

---

१. उग्रोत्तरज्योतिरथोपसद्यः श्रीरामकण्ठोऽपि च वैद्यकण्ठः ।
नारायणश्चापि विभूतिकण्ठः श्रीनीलकण्ठोऽपि च सोमशम्भुः ॥
ईशानशम्भुर्हृदयादिना स्याद् विरञ्चिवैराग्यकयुग्मवाच्यौ ।
ज्ञानस्त्रिणेत्रो वरुणेश्वरौ ज्ञावित्यादयस्ते स्युरघोरशम्भुः ॥

२. हिस्ट्री आफ शैव कल्ट्स इन नोर्दर्न इण्डिया, अविनाश प्रकाशन, इलाहाबाद, सन् १९८०. अस्य ग्रन्थस्य ३८ पृष्ठस्था टिप्पणी द्रष्टव्या ।

३. त्रिलोचनशिवाचार्यकृता सिद्धान्तसारावली कन्नड़लिप्यां मुद्रितोपलभ्यते । तत्रेमे श्लोका न सन्तीति सूचिता वयं तल्लिपिपाठकैः ।

सिद्धान्तशैवदर्शनपरम्परा तत्र प्रसृतिं लेभे ? वस्तुतः साम्प्रतमिदमेव वक्तुं शक्यते यद् द्वैतवादिनां शैवागमानां तद्दर्शनस्य च संरक्षकाः संवर्धकाश्च सन्ति दाक्षिणात्या विद्वांस इति तेभ्यो नमोवाकं व्याहरामः।

यथा शैवागमानां दश, रौद्रागमानामष्टादश संख्या निश्चिता, तथैव तेषामुपागमानामपि संख्या सुनिश्चितैव, न त्वनन्ता। एतेषां नामानि च पण्डितप्रवर-एन. आर. भट्टसम्पादिते रौरवागमप्रथमभागे आगमक्रमेण, तदाधारेण संकलिते लुप्ता. उपोद्घाते च (पृ. ८६-९३) अकारादिक्रमेण द्रष्टुं शक्यन्ते। इदं चात्रावधेयम्—रामकण्ठादयः शैवाचार्याः सर्वेषामागमानां सममेव प्रामाण्यमङ्गीकुर्वन्ति। पूर्वमीमांसायामर्थवादापरनामधेयानां प्ररोचनादिवाक्यानां नहिनिन्देतिन्यायेन स्वार्थे प्रामाण्यं नाङ्गीक्रियते, किन्तु प्ररोचनावाक्यानि प्रवृत्त्यर्थम्, निन्दावाक्यानि च निवृत्त्यर्थमुपादीयन्ते। अत एतादृशानां वाक्यानां प्रवृत्तिर्निवृत्तिर्वा प्रयोजनम्, न तु स्वार्थे तात्पर्यमिति नैतादृशानि वाक्यानि दृष्ट्वा विमनायितव्यम्।

डॉ. एस. एन. दासगुप्तमहोदयेन महता परिश्रमेण पञ्चभागात्मको भारतीयदर्शनानामितिहासग्रन्थः संदृब्धः। तत्र पञ्चमे भागे शैवदर्शनस्यान्यैरितिहासविद्भिरकृतस्य विवरणं दृश्यते। किन्तु क्रमव्यत्यासादयो नैके दोषास्तत्र समवलोक्यन्ते। दक्षिणभारतीयमिदं दर्शनमिति मिथ्या धारणा दोषाणामेतेषां मूलमिति वक्तुं शक्यते। अत एव प्राचीनानामर्वाचीनानां च सामग्रीणां संकरस्तत्र समजायत। दोषाणामेतेषां परिहारपूर्वकं शैवागमानामितिहासः प्रस्तूयेतेति धिया "शैव धर्म-दर्शन" इत्यभिधानः कश्चन ग्रन्थो हिन्दीभाषायां सज्जीक्रियेतेति वर्ततेऽस्मदीयः संकल्पः। भगवान् शिवोऽत्र शरणम्।

मूलग्रन्थ एव यदा त्रुटयः सन्ति, तदा तदाधारेण लिखितानां वाक्यावलीनां का कथेति सर्वमेतत् सुविचार्यैव ग्राह्यं सदसद्विवेकनिपुणैर्मनीषिभिः। अष्टाविंशत्यागमेषु सर्वेषां महत्त्वं नास्तीति वचनमपि "मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी" इत्याभाणकमेव चरितार्थयति। पश्यन्तु नाम शैवागमाचार्यैर्निर्मितान् पद्धतिग्रन्थान् निबन्धग्रन्थांश्च, यत्रेमे सर्वेऽप्यागमाः श्रुतिसंमततया प्रमाणीक्रियन्ते।

डॉ. [1]एस. एन. दासगुप्तमहोदयेन, डॉ. [2]कृष्णकान्तहाण्डीकीमहोदयेन च स्वस्वग्रन्थेषु सिद्धान्तशैवसिद्धान्तानां परिचयः प्राधान्येन भोजदेवकृततत्त्वप्रकाश-कुमारदेवकृततात्पर्यदीपिकाख्यतद्व्याख्यानसाहाय्येन कृतः। अघोरशिवरामकण्ठव्याख्यानसहितानामष्टप्रकरणग्रन्थानां तदा प्रकाशितत्वेऽपि किमर्थमाभ्यां विद्वद्भ्यामिमे ग्रन्था नोप-

---

१. हिस्ट्री आफ इण्डियन फिलासफी, भा. ५, केम्ब्रिज युनिवर्सिटी प्रेस, सन् १९५५; अत्रत्यानि १५९-१७० पृष्ठानि द्रष्टव्यानि। अत्रत्येष्वन्येष्वपि प्रकरणेषु दासगुप्तमहोदयेन दक्षिणशैवमतादिनाम्ना सिद्धान्तशैवदर्शनं विवृतम्। तत्सर्वं विपर्यस्तप्रायमिति नास्मभ्यं रोचते।

२. यशस्तिलक एण्ड इण्डियन कल्चर, जीवराज जैन ग्रन्थमाला, शोलापुर, सन् १९४९; अत्रत्यानि ३३४-३३७ पृष्ठानि द्रष्टव्यानि।

युक्ता इति न जानीमः। दासगुप्तमहोदयस्तत्त्वप्रकाशीयाऽघोरशिववृत्तिमातृकामवश्यमेव स्मरति। वस्तुतो द्वैतवादिनां सिद्धान्तशैवानां सिद्धान्ता अत्रैव याथातथ्येन व्याख्याताः। तत्त्वप्रकाशस्य तद्व्याख्यायास्तात्पर्यदीपिकायाश्च सिद्धान्तशैवीयग्रन्थान्तरापेक्षया प्रकृतिर्भिन्नेत्यस्मिन् विषये किमप्युक्तमस्माभिः[१]। पूर्वोक्तविद्वद्द्वयवचनसमालोचनमुखेन पुनरपि विचार्यते।

दासगुप्तमहोदयः कुमारोऽस्थिरचित्त इति तमाक्षिपति, कुमारेण प्रतिपादिताः सर्वे सिद्धान्ताः केषुचन पुराणेषु सामान्यतः, विशेषतश्च सूतसंहितायां पूर्वमेव व्याख्याता इति च स वदति। कुमारदेवः सूतसंहितां कापि नाम्ना नोद्धरति। अत्र श्रीकण्ठभाष्ये च सूतसंहितावचनानि प्रमाणीक्रियन्ते न वेति परीक्षणीयमास्ते। बाढं तेन वायवीयसंहिता नैकवारमुद्धृता। अन्यानि कानिचन पुराणानि कूर्मपुराणं तदन्तर्गतामीश्वरगीतां च स सादरं स्मरति। मतङ्गमृगेन्द्रादीनागमग्रन्थांश्च स यथावसरं प्रमाणयति, किन्तु नाघोरशिवादिवत् सार्वात्म्येन आगमाननुसरति। अघोरशिवादयो हि दाक्षिणात्या आचार्याः काश्मीरिकैराचार्यैर्द्वैतवादिभिः क्षुण्णां पदवीमनुसरन्ति, मध्यदेशीयाश्च आचार्या नैकात्म्येन तदनुयायिन इति वयं पूर्वमवोचाम[२]। एवं च कैश्चन द्वैताद्वैतवादिभिरद्वैतवादिभिश्च स्थापितां पुराणेषु प्रपञ्चसारप्रभृतिग्रन्थेषु च निर्दिष्टां निश्चितां परम्परां कुमारः स्वीये व्याख्यानेऽनुसरतीति तस्यास्थिरचित्तत्वकथनं नैव प्रमाणानुमोदितं पश्यामः।

**सिद्धान्तशैवा द्वैतवादिनः**

कुमारदेवस्य— [३]"न च शिवस्य परिणामित्वमिति वाच्यम्, विवर्तवादाश्रयणात्" (पृ. ४३) इतीदृग्विधानि शाङ्कराद्वैतवादानुकारीणि वाक्यानि दृष्ट्वा डॉ. हाण्डीकीमहोदयः शैवदर्शनं विवर्तवादमनुसरतीति वक्ति, ईशानशिवगुरुदेवपद्धतिं च स्मरति। किन्त्वेतद्विभावनीयं यदेतादृशानि वाक्यानि तत्र दृष्ट्वैवाघोरशिवस्तत्त्वप्रकाशव्याख्यानारम्भेऽद्वैतवासनाविष्टैरित्यादिश्लोकं रचयति। वस्तुतो द्वैतवादिनः शैवाः सत्कार्यवादिन इत्यसकृत् स स्वीयासु वृत्तिषु सत्कार्यवादोऽयमस्माभिर्विस्तरेण मृगेन्द्रवृत्तिदीपिकायां व्याख्यात इति कथयति। अतो नैव कुमारदेवव्याख्यानं सार्वात्म्येन सिद्धान्तशैवदर्शनमनुकरोतीति विभावनीयं विपश्चिद्भिः। अग्रे तदेतत् पुनः पुनः स्फुटीभविष्यति।

द्वैतवादिनः सिद्धान्तशैवाः पतिपशुपाशाख्यस्य तत्त्वत्रयस्य सार्वात्म्येन पार्थक्यं मन्यन्ते। नैषामैक्यं कदापि भवितुमर्हतीति तेषां निश्चितः सिद्धान्तः। अत एव ते द्वैतवादिनोऽभिधीयन्ते। नैयायिकादिवद् माध्वा वैष्णवा अपि जीवात्मपरमात्मनोः शाश्वतिकं भेदमेवोररीकुर्वन्ति। अतः सिद्धान्तशैवग्रन्थानां तद्विपरीतं व्याख्यानं नैव परम्परां तदीयामनुसरतीति नूनमवगन्तव्यम्। बन्धमोक्षावत्र वास्तविकौ, न त्वद्वैतवादिनामागमाना-

१. अत्रैव उपोद्घाते १०-१२ पृष्ठानि द्रष्टव्यानि।

२. अत्रैव उपोद्घातीये ११-१२ पृष्ठे द्रष्टव्ये।

३. अत्र कुमारः—"अपरे पुनर्माया च वस्तुरूपेत्येतद्वाक्यमन्यथा व्याचचक्षिरे" (पृ. ४३) इत्येवं कस्यचन व्याख्याकारस्य मतं प्रस्तुवन् वाक्यमेतल्लिखतीति ज्ञायते।

मिव बौद्धानामिव वा विकल्पघटितौ। मोक्षं प्रति प्रवर्तमानस्य च जनस्य दीक्षैव मुख्यं साधनम्। कर्मणो ज्ञानस्य योगस्य वा दीक्षाङ्गतयैव साधनत्वं न साक्षात्।

## दीक्षा

सत्स्वपि प्रसङ्गेषु दीक्षाविषये न किमप्युक्तं कुमारदेवेन। स तस्मिन् प्रसङ्गे (पृ. ३३) कर्मणो ज्ञानस्य वा चर्चां विधायैव विरमति। तद्विपरीतमघोरशिवः स्पष्टं वदति—'अत एव मलस्य द्रव्यत्वाच्चक्षुषः पटलादेरिव दीक्षाख्येनेश्वरव्यापारेण निवृत्तिः, न तु ज्ञानमात्रात्" (पृ. ३४) इति। रत्नत्रये स्मृतम्—

सदाशिवपदं योगाच्चर्यातो वाऽथ दीक्षया।
प्राप्यते चित्तभेदेन मोक्षो वाऽथ चतुष्टयात्॥ (श्लो. १४७)

इति मतङ्गपारमेश्वर(२६।६३)वचनमपि प्राधान्येन दीक्षाया एव मोक्षसाधनत्व-प्रतिपादकमिति सप्रमाणं साधयति सः, अत्र च—"दीक्षैव मोक्षदा पुंसां चिदभिव्यक्ति-कारिणी" इति षट्साहस्रिका(कालपादा)वचनं प्रमाणयति। "यथोक्तं कालपादादौ दीक्षयेत् श्वपचानिति" इति मालिनीवार्त्तिकेऽभिनवगुप्तेन (१।१९७) स्मृतं काल-पादावचनं साम्प्रतं मुद्रिते सार्धत्रिशतिकालोत्तरे—"तं विदित्वा महासेन श्वपचानपि दीक्षयेत्" (८।७) इत्येवमुपलभ्यते।

दीक्षाप्रसङ्गे सद्योज्योतिश्शिवाचार्यः स्पष्टं भाषते मोक्षकारिकायाम्—"दीक्षायां साधकत्वेन चतुर्णां वर्णिनामिह। अधिकारो गुरुत्वेन ब्राह्मणस्यैव कीर्तितः॥" (श्लो.९९)इति। अपि च, नरेश्वरपरीक्षायाम्—"अनुज्ञाताश्च वेदोक्ताः शैवे वर्णाश्रमादयः। वेदस्यापि प्रमाणत्वे यत्नोऽस्माभिरतः कृतः॥" (३।७६) इत्येवं वेदोक्तान् [१]वर्णाश्रमा-चारान् वेदांश्च प्रमाणत्वेनाङ्गीकरोति। ईश्वरकर्तृकत्वेन स वेदानां प्रामाण्यमूरीकरोति, कुमारश्चापौरुषेयत्वेनेति तु [२]पूर्वमुक्तमेव। अत्र दीक्षाप्रसङ्गे परमोक्षनिरासकारिकायां प्रसङ्गान्तरेणोपक्षिप्तं वचनमेतद् विशेषतोऽवधेयं वर्तते—"द्रव्यप्रिया भवन्तो वै ज्ञाता नैव गुणप्रियाः" (श्लो ४३) इति। किं भविष्यति कदाचिन्मानवीया मतिर्गुणप्रिया?

## शक्तिशिवौ

दीक्षा चेयं शक्तिपाताधीना। शक्तिपातश्चानुग्रहकरणं नाम शिवस्य कृत्यम्। तत्र कोऽयं शिव इति जिज्ञासायामत्र पतिः शिव उक्तः। अत्र कुमारः शिवशब्देन जात्येक-वचनेन शिवत्वयोगिनां मन्त्र-मन्त्रेश्वर-मन्त्रमहेश्वर-मुक्तात्म-शक्ति-शिवानां सवाचकानां शिवतत्त्वप्राप्तिसाधनेन दीक्षादिनोपायकलापेन सह पतिपदार्थे संग्रहं करोति। "मुक्ता-

---

१. इदमेव तत् कारणं येन सद्योज्योतिश्शिवाचार्यस्य सिद्धान्ता नारदीयपुराणादिष्वङ्गीकृताः। क्षेमराजेन च सिद्धान्तप्रियो लोक इति वदता भैरवाद्यागमेषु तदानीन्तनस्यापि लोकस्य वैरस्यं प्रकटीकृतम्। अनेन लौकिकवैदिकोभयप्रियत्वं सिद्धान्तशास्त्रस्य सिद्धयति।

२. अत्रैव उपोद्घातीयं १० पृष्ठं द्रष्टव्यम्।

त्मानोऽपि शिवाः किन्त्वेते यत्प्रसादतो मुक्ताः। सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः॥" इत्यादिना मुक्ताद्यपेक्षया पञ्चमन्त्रतनुत्वं नाम शिवस्य वैलक्षण्यं प्रतिपाद्यते। भगवानवधूतसिद्धश्च—"परमशिवः सिद्धान् प्रत्युपरताधिकारोऽप्यन्येष्वनुपरताधिकारः। सिद्धः पुनरेकान्तेन सर्वत एवोपरताधिकार इति भेदः" (पृ. २८१) इत्येवं परमशिवस्य मुक्तात्मनश्च शिवस्य भेदं निर्दिशति। सततोदितः प्रभुः शान्त इत्यनेन च भगवतः शिवस्य सततोदितं (नित्योदितं) शान्तोदितं[1] चेत्यवस्थाद्वयं तथैव सूच्यते, यथा हि पाञ्चरात्रागमेषु परस्य व्यूहात्मनश्च भगवतो वासुदेवस्य नारायणस्य वा तदेतद्दशाद्वयं वर्ण्यमानमास्ते। [2]लयभोगाधिकारभेदेन, शक्तोद्युक्तप्रवृत्तभेदेन, सकल-सकलनिष्कल-निष्कलस्वरूपमुखेन च तस्यावस्थात्रयवत्त्वमपि तत्र तत्र वर्ण्यते। जीवोन्मुखस्य शिवस्यावस्थात्रयमेतत्। एवमेव शिवोन्मुखस्य जीवस्याप्यवस्थात्रयं[3] सांसिद्धिकादिगुणत्रयं[4] चोत्पद्यमानं शास्त्रेषु वर्ण्यते। तदेतदग्रे भविष्यति।

## बिन्दुनादौ

अत्रेदं विचारणीयम्—लब्धदीक्षः शिवसमतारूपां मुक्तिं कामयमानो जीवः षडध्वशुद्धिमुखेन यदा प्रवर्तते, तदा तत्त्वान्तःपातिनः शिवस्यापि षडध्वान्तर्भूततया तस्यापि किं शुद्धिरपेक्षिता, उत सर्वानुग्राहकः पञ्चमन्त्रतनुः शिवस्तद्भिन्न इति? अत्राघोरशिवः शिवतत्त्वं जगदुराचार्या इति कारिकाव्याख्यायामाह—"एवंभूतमुपादानरूपं महामायाख्यं शिवतत्त्वमाचार्या जगदुरिति। न त्वियमार्या परमशिवविषयतया तच्छक्तिविषयतया वा व्याख्येया, शिवादिपृथिव्यन्ततत्त्वलक्षणप्रस्तावे तत्त्वातीतयोस्तयोरत्राप्रस्तुतत्वात्। तयोरेव शिवतत्त्वरूपत्वेन शुद्धाध्वोपादानत्वाभ्युपगमे परिणामित्वादचेतनत्वादिदोषप्रसङ्गात्। न च चिद्विवर्ताभ्युपगमो युक्तः, सर्वप्रमाणसिद्धत्वेन जगतोऽसत्यत्वाभावात्, विवर्तस्य चासत्यत्वाभ्युपगमात्, शिवतत्त्वसंज्ञाया बिन्द्वात्मनः कुण्डलिन्याश्रितसमवायाभावेन परिग्रहशक्तित्वेन श्रवणाच्च" (पृ. ४८) इति, अत्रैव पौष्करागम-

---

१. "तत्र सततोदिताऽपरनामधेयया दशया युक्तः परवासुदेव इति, शान्तोदितया च दशया युक्तो व्यूहवासुदेव इत्युच्यते" इत्यादिना प्रतिपादितं परब्रह्मणो दशाद्वयमस्माभिः सात्वतसंहिताया उपोद्घाते (पृ. २१-२३) निर्दशितमिति तत एव द्रष्टव्यम्।

२. भगवतः शिवस्यावस्थात्रयमेतन्मतङ्गपारमेश्वरविद्यापादे तृतीयचतुर्थपटलयोर्विस्तरेण विवृतं द्रष्टव्यम्। अत्रापि यथायथं निरूपितप्रायम्। बौद्धमहायानशाखायां भगवतो बुद्धस्य धर्मसंभोगनिर्माणाख्यं कायत्रयमभ्युपगम्यते। कायत्रयमेतल्लयभोगाधिकारावस्थाभिरपि सूचयितुं शक्यते।

३. शिवस्य जीवस्य चावस्थात्रयमेतदत्र नतिपूर्वः कृतवर्ग इति श्लोकव्याख्यायाम् (पृ. १३९), लुप्ता. उपो. च १३०,१३४-१३५ पृष्ठेषु द्रष्टव्यम्।

४. "सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः" (का. ४३) इत्येवं सांख्यकारिकायां प्रदर्शिता धर्मादयो भावा उत्पद्यमाना जीवेषु—"सांसिद्धिका वैनयिकाः प्राकृताश्च भवन्त्यणोः" इत्यादिना मृगेन्द्रवचनप्रामाण्येनात्राऽपि विवृता विद्यन्ते (पृ. २१६)।

वचनानि च स प्रमाणयति। नादोपादानत्वेनापि स महामायां साधयति। अपि चान्यत्र (पृ. ४५)—उपादानं शरीराणां विद्याविद्येश्वरात्मनामिति वचनमुद्धृत्य नादादिद्वारेण मन्त्रतन्त्राद्युत्पादकत्वमप्यस्याः श्रूयत इत्युक्त्वा शक्तेर्नादो भवेद् बिन्दुरक्षरं मातृका तत इति मृगेन्द्रागमवचनं स्मारयति। शक्तितत्त्वव्याख्यानावसरे च—"अस्य बिन्दोर्य आद्य उन्मेषः प्रथमः परिणामः शान्त्यादिभुवनात्मको नादात्मकश्च, तच्छक्तितत्त्वमुच्यते" (पृ. ५०) इति वदन् स शक्तिशिवशब्दौ बिन्दुनादवाचकौ साधयति। एवं च षडध्वशुद्धिप्रक्रियायां तत्त्वान्तःपातिनोः शिवशक्तिपर्याययोर्बिन्दुनादयोरेव शुद्धिरपेक्ष्यते, न तु तत्त्वातीतयोस्तयोरिति तत्प्रतिपादितः पन्थाः। "तत्त्वाध्वा च पदाध्वा च वर्णाध्वा भुवनात्मकः। मन्त्राध्वा च पदाध्वा च विशन्त्येकं परं शिवम्॥ अप्रमेयमनिर्देश्यम्" इति च मृगेन्द्रक्रियापादवृत्त्युद्धृतं स्वायम्भुवागमवचनम् (पृ० १७४)।

नादो बिन्दुरिति श्लोकव्याख्यानावसरे शिवाख्यं तत्त्वमाश्रिताविति पाठं स्वीकरोति कुमारः। विद्येश्वरविद्यामन्त्राणां सदाशिवे वृत्तिमन्ये मन्यन्त इति मतं स खण्डयति, सकलौ नादबिन्दू सदाशिवं तत्त्वमाश्रिताविति पाठान्तरं च प्रदर्शयति। अघोरशिवस्तु—"परबिन्दोः शिवतत्त्वत्वेन तत्कार्यस्य सूक्ष्मनादस्य शक्तितत्त्वान्तर्भावेन चोक्तत्वात् सकलो बिन्दुरक्षरबिन्द्वात्मको नादश्च स्थूलध्वनिरूपः। द्वौ च सदाशिवतत्त्वान्तर्भूतौ ज्ञेयौ। विद्येशानामनन्तादीनामीश्वरतत्त्वेऽन्तर्भावः। मन्त्राणां सप्तकोटिसंख्याकानां वाचिकशब्दानां च व्योमव्याप्यादीनां विद्यानां[1] च कामिकाद्यष्टाविंशतितन्त्राणां विद्यातत्त्वेऽन्तर्भावः" (पृ. ५३) इत्येवं कारिकामेनां व्याकरोति, "बिन्दोर्यो द्वितीयः प्रसरः परिणामः शक्तितत्त्वव्यवधानेन जायते तत् सदाशिवतत्त्वमाहुः" (पृ. ५१) इति च सदाशिवतत्त्वस्य स्वरूपं प्रदर्शयति।

पञ्चानां शुद्धतत्त्वानां क्रमः कल्पित इत्यस्यार्थस्य प्रतिपादिका पञ्चानामप्येषामिति कारिका प्रक्षिप्तेत्यघोरशिवो भाषते, तत्त्वं वस्तुत एकमिति कारिकां च परमशिवप्रतिपादकतया योजयति। भोजदेवोऽत्र 'कल्पिताः' इति पदं प्रयुङ्क्ते। कुमारदेव एवात्र भोजानुगुणः प्रतीयते। न स पञ्चानामिति कारिकां प्रक्षिप्तां मन्यते। अघोरशिवस्तु—"ततश्चास्य शक्तिव्यापारभेदादुपचारेण सदाशिवादिभेदाः काल्पनिका एव, न तु परमार्थतः। अधिष्ठेयस्य तु बिन्दोः शिवतत्त्वाद्यवस्थाभेदः सत्य एव" (पृ. ५५) इति ब्रूते, मृगेन्द्रपौष्करागमौ च प्रमाणयति। वस्तुतोऽत्र भोजराजस्तद्व्याख्याता कुमारश्च सिद्धान्तशैवागमसिद्धान्तात् प्रच्युताविव दृश्येते अभेदवादमिव स्थापयन्तौ। षडध्वशुद्धिप्रक्रियायां क्रमः कश्चन आश्रीयते। स च शास्त्रेषु व्युत्क्रमेण (संहारक्रमेण) उपादीयते। "व्युत्क्रमेणोपनेयोऽसौ शिवाय गमनं प्रति" इति हि स्वायम्भुवागमः। किञ्च, प्रलयाकलानां विज्ञानाकलानां च विद्याविद्येश्वरादिपदप्राप्तिः क्रमेणैव श्रूयते। "शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" इति वचनानुसारं महामायामुपादानीकृत्य शिवः शुद्धाध्वानमनन्तश्च मायामुपादायाऽशुद्धाध्वानं प्रवर्तयतीति च श्रूयते। एतत्सर्वमसामञ्जस्यमवलोक्यैवाघोरशिवो हेतुप्रदर्शनपुरस्सरं कारिकाया अस्याः प्रक्षिप्तत्वं साधयति (पृ. ५४)।

---

१. स्त्रीदेवत्या मन्त्रा विद्यापदेनाभिधीयन्त इति शाक्तागमीया परिभाषा नात्राघोरशिवेन स्वीकृता। उचितं तु तदेव प्रतिभाति, प्रकरणानुरोधात्।

रत्नत्रये बिन्दुशक्तिशिवाख्यानि त्रीणि तत्त्वानि वर्ण्यन्ते। तत्र शक्तिशिवौ तत्त्वातीतौ, बिन्दुश्च शिवतत्त्वपर इति व्याख्येयम्, "जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते। स बिन्दुः परनादाख्यो नादबिन्द्वर्णकारणम् ॥" (श्लो. २२) इति तत्रैवोक्तेः। शिवः कर्ता शक्तिकरणको महामायामुपादाय जगत् सृजत्यवति संहरतीति सुष्ठूक्तं जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयत इति। बिन्द्वात्मकमेतत् शिवतत्त्वं परनादाख्यम्। तदुक्तं रत्नत्रये—"शब्दतत्त्वमघोषा वाग् ब्रह्म कुण्डलिनी ध्रुवम् ॥ विद्याशक्तिः परो नादो महामायेति देशिकैः। [1]बिन्दुरेवं समाख्यातो व्योमाऽनाहतमित्यपि ॥" (श्लो. ७०-७१) इति। नादकारिकायामपि स एवमेव वर्णितः—"तत्सिद्धो नादः परः सुमङ्गला मालिनी महामाया ॥ समनाऽनाहतबिन्दुरघोषा वाग् ब्रह्म कुण्डलिनीतत्त्वम्। विद्याख्यं तत्त्वमित्युक्तं तैस्तैस्तदागमेष्वित्थम् ॥" (श्लो. १६-१७) इति। अनेन एकमेव तत्त्वं तेषु तेष्वागमेषु तत्तन्नाम्ना प्रसिद्ध्यतीति सूच्यते। परनादाख्य एष [2]बिन्दुरेव नादबिन्द्वर्णकारणतया कालोत्तरादौ वर्णितः। "तत्र नादो नामाभिधेयबुद्धिहेतुर्बिन्दोः प्रथमप्रसररूपः सूक्ष्मो नादश्चिन्तया रहितत्वेन श्रीमत्कालोत्तराद्युक्तः। बिन्दुश्च तत्कार्यं मयूराण्डरसबिन्दुवदव्यपदेश्यः परामर्शज्ञानरूपोऽक्षरबिन्दुस्तत्रैव सूक्ष्मत्वेनोक्तः। अर्णश्च वर्ण आकाशवायुप्रभवः श्रोत्रग्राह्यः स्थूलशब्दः। तदुक्तं तत्र—"स्थूलं शब्द इति प्रोक्तं सूक्ष्मं चिन्तामयं भवेत्। चिन्तया रहितं यत्तु तत्परं परिकीर्तितम् ॥" (पृ. १५२) इत्येवमघोर-

१. बिन्दोरस्य सूक्ष्मा, पश्यन्ती, मध्यमा, वैखरी चेति चतस्रोऽवस्था रत्नत्रये ७२-८५ श्लोकेषु प्रतिपाद्यन्ते। तदनन्तरं च प्रोच्यते—"सैषा चतुर्विधा वृत्तिर्निवृत्त्यादिकलाश्रयात्। पञ्चधा भिद्यते भूयः कलास्ता बिन्दुवृत्तयः ॥ (श्लो. ८५-८६) इति। मतान्तरप्रदर्शनपूर्वकं कृतो बिन्दुस्वरूपविमर्शो रत्नत्रये (श्लो. १२६-१८२) एव द्रष्टव्यः।

२. बिन्दुरयं प्रपञ्चसारे एवं वर्ण्यते—"सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः संनिधेस्तदा। विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ॥ कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा। स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥ स बिन्दुनादबीजत्वभेदेन च निगद्यते।''''' बिन्दोस्तस्माद् भिद्यमानाद् रवोऽव्यक्तात्मको भवेत्। स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते ॥" (१।४१-४३, ४४) इति। शारदातिलके तु—"सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः ॥ परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः। बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः ॥ बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः। समवायः समाख्यातः सर्वागमविशारदैः ॥ रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा, बीजादजायत। वामा, ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः ॥''''' भिद्यमानात् पराद् बिन्दोरव्यक्तात्मा रवोऽभवत् ॥ शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः। शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे जगुः ॥'''चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः ॥ तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्। वर्णात्मनाऽऽविर्भवति गद्यपद्यादिभेदतः ॥ अथ बिन्द्वात्मनः शम्भोः कालबन्धोः कलात्मनः। अजायत जगत्साक्षी सर्वव्यापी सदाशिवः ॥" (१।७-१०, ११-१२, १३-१५) अत्र बहु वक्तव्यमस्ति, किन्तु नाधुनाऽस्माभिः किमप्युच्यते।

शिवस्तद्विस्पष्टयति। अत्र कारणबिन्दुतो भिन्नः कार्यबिन्दुः, परनादाच्च भिन्नो नाद इति सूच्यते। नादश्चैषः—"बुद्धयस्मितामनोभ्यो विद्यातो रागतः कलायाश्च। मायापुंशक्तिभ्यो नादोऽन्यो दृश्यते ध्वनिभ्योऽपि॥" इत्यादिना नादकारिकायां वर्ण्यते। रत्नत्रये च—"शब्दराशिश्च बिन्दूत्थो बिन्दुर्नादादसावपि। बिन्दोरनाहतादेर्वा कारणं शुद्धवर्त्मनः॥" इत्येवं प्रकरणमेतदुपसंह्रियते। "अनाहतबिन्दुरिति शुद्धाध्वयोनेर्महामायायाः संज्ञा" (पृ. १७८) इति चाघोरशिवो व्याकुरुते।

पञ्चानामाद्यानां चिद्रूपतयाऽन्वय इति कारिकांशव्याख्यानावसरेऽघोरशिवः—"आद्यानां शुद्धानां पञ्चानां तत्त्वानां सर्वज्ञत्वसर्वकर्तृत्वोपोद्बलनहेतुत्वात् चिद्रूपतया चिदुपकारितयाऽन्वयः। न तु तेषां चैतन्याभ्युपगमो युक्तः, अचेतनत्वस्य प्रागेव साधितत्वात्" (पृ. १०२) इति भणति, बिन्द्वाख्यस्य शिवतत्त्वस्य स्वरूपनिरूपणावसरे च सः—"अथवा ज्ञानक्रिये अस्य न स्वभाव इति नञ्प्रश्लेषणाज्जडरूपतया व्याख्येयम्, न तु ज्ञानस्वभावतया, उपादानत्वेन मृदादिवदचेतनत्वात्, ज्ञानस्वभावस्योपादानत्वायोगात्" (पृ. ४७) इति।

## अघोरशिवमतालोचनम्

सर्वस्यैतस्याघोरशिवेन बिन्दुनादादिपरतया योजितस्य शुद्धतत्त्वप्रकरणस्य वैशद्यार्थं पूर्वमस्माभिः प्रमातृसप्तकविचारः प्रस्तूयते। शिवः, मन्त्रमहेश्वरः, मन्त्रेश्वरः, मन्त्रः, विज्ञानाकलः, प्रलयाकलः, सकलश्चेति सप्त प्रमातारः काश्मीरिकैः शैवैः कैश्चन [1]शाक्तैश्चाचार्यैः स्वीक्रियन्ते। शक्तिसमवेतः शिवः प्रथमः प्रमाता, सदाशिव एव मन्त्रमहेश्वरः, ईश्वरो मन्त्रेश्वरः, शुद्धविद्या च मन्त्रपदाभिलप्या। मलमात्रयुक्तो विज्ञानाकलः, मलकर्मयुक्तः प्रलयाकलः, मलकर्ममायाख्यपाशत्रयबद्धश्च सकल इति सर्वे एते शब्दा [2]मन्त्रमहेश्वरपदं विहाय विशेषशब्दार्थसूचिकासाहाय्येनात्र विभिन्नेषु प्रकरणेषु व्याख्याता द्रष्टुं शक्यन्ते।

मायाधिकारान्मुक्ताः प्रलयाकला विज्ञानकलाश्च क्रमेण मन्त्र-मन्त्रेश्वरत्वमेव न, शिवत्वमपि लभन्ते। मन्त्रमन्त्रेश्वराधिपतयोऽनन्तादयः क्रोधेशा मण्डलिनः शतरुद्राश्च किमेते सर्वेऽचेतना ज्ञानशून्याः? नेत्येव प्रश्नस्योत्तरं स्यात्। "शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" इति श्रूयते। तत्र शिवो महामायामुपादाय शुद्धसृष्टिम्, अनन्तश्च मायामाश्रित्याशुद्धसृष्टिमातनुत इत्यघोरशिवोऽपि तत्र तत्र व्याकरोति। अतश्च

---

१. अभिनवगुप्तेन तन्त्रसारे नवमाह्निके त एते वर्णिताः, प्रमातृसप्तकेष्वेकमित्यादिना च सुभगोदयवासनायां शिवानन्देन सूचिताः।

२. "महेश्वरः, मन्त्रमहेश्वर इत्यर्थः" (पृ ३१) इत्यत्र प्रयुक्तो मन्त्रमहेश्वरशब्दो मन्त्रेश्वरस्यानन्तस्य सूचकोऽभिप्रेतोऽघोरशिवस्य, न मन्त्रमहेश्वरस्य सदाशिवस्य। "ईश्वरतत्त्वाश्रिता मन्त्रमहेश्वरत्वेनोच्यन्ते" (पृ. १३१) इत्येवं स स्वयमेव व्याचष्टे, "मननत्राणयोगिनोऽणवस्तत्पतयश्च मन्त्रेश्वरा मन्त्रमहेश्वरा उच्यन्ते" (पृ. ३३१) इति च।

शुद्धाध्वप्रकरणमेतदघोरशिवेन व्याकुलीकृतमिव प्रतीयते। जडानां हि तेषां कथं प्रमातृकोटौ प्रवेशः स्यात् ?

तत्त्वातीतौ शक्तिशिवौ स स्मरति (पृ. ४८)। तत्त्वान्तःपातिनावपि तौ स्याताम्। षट्त्रिंशत्तत्त्वेषु शक्तिशिवयोरेव सर्वत्र परिगणनं विद्यते, न क्वापि बिन्दुनादयोः। "शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा। अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः॥"[1] इति वचनानुसारं शब्दात्मिका सृष्टिः शक्तितः, अर्थात्मिका च शिवादाविर्भवतीति ज्ञायते। तत्र बिन्दोरर्थात्मिका, नादाच्च शब्दात्मिका सृष्टिः प्रवर्तत इति बिन्दुनादयोः शिवशक्तिस्वरूपत्वमङ्गीकर्तुं शक्यते, किन्तु बिन्दुनाददृष्टान्तेन शुद्धानां पञ्चानामपि तत्त्वानां जडत्वसाधनं युक्त्यागमविरुद्धमेव। अथवा (पृ. ४७) इत्यादिना पक्षान्तरोत्थापनेनाघोरशिवस्यापि वैरस्यमत्र दृश्यत इव।

## त्रिविधाः षड्विधा वा पशवः

पशुत्रयप्रकरणमपि व्याकुर्वन् स एवमाह—परिपक्वमलान् सकलानाचार्यमूर्तिस्थः शिवः शक्तिपातमहिम्ना परे तत्त्वे योजयति, शेषांश्चाष्टादशाधिकशतसंख्याकान् मन्त्रेशान्[2] विधत्ते। प्रलयाकलेषु येषां मलकर्मणी पक्वे ते मुच्यन्ते, अन्ये संसरन्ति। तेषु कांश्चनानुगृह्य महेश्वरस्तेभ्यो भुवनपतित्वं वितरति। विज्ञानाकलेषु शिवोऽष्टावनन्तादीन् विद्येशत्वे नियोजयति, अन्यांश्च सप्तकोटिसंख्याकान् मन्त्रान् विधत्ते। अत्र शुद्धतत्त्वान्तःपातिनां शिवप्रेर्यत्वमितरेषां चानन्तेशप्रयोज्यत्वमभिमतम्, [3]"गुह्यातिगुह्यगुह्यतरपवित्रस्थाण्वाख्यपञ्चाष्टकादीनां भुवनपतीनामनन्तनियुक्तत्वेनैव श्रुतेः" (पृ. ३१) इत्यघोरशिवकथनात्। तत्र—

तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्च वीरेशः।
श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाभ्यधिकम्॥

इत्येते सकलानामनन्तनियोज्यानामष्टादशाधिकशतसंख्याकानां भुवनाधिपतीनां भेदाः प्रदर्श्यन्ते। तेषु—"मण्डलिनोऽष्टौ [4]कलामस्तकवासिनो गहनेशादयः" (पृ. ३२), "तत्र मण्डलिनोऽष्टौ कलामस्तकस्थाः।.....मण्डलाधिपतिभ्यो यस्तत्त्वमार्गः प्रतिष्ठितः" (पृ. १२७) इत्येवं मण्डलिनः, "क्रोधादयश्च [5]गुणमस्तकस्था अष्टावेव" (पृ. ३२,

१ सौन्दर्यलहर्या अरुणामोदिन्यां व्याख्यायां वायुसंहितावचनत्वेनोद्धृतम् (पृ. ३०)।

२. "मन्त्रमन्त्रेश्वरयोः पश्चादुत्पत्तेर्मायागर्भाधिकारित्वादधोभावेऽप्येषामाचार्यादिवत् पश्वनुग्रहाय मन्त्रप्रयोजनकत्वान्मन्त्रेश्वरत्वम्। न त्वनन्तादीनामिव मन्त्रेभ्य ऊर्ध्वं स्थितत्वात्" (पृ. २६२) इत्यघोरशिवः।

३. गुह्याष्टक-अतिगुह्याष्टक-गुह्याद्गुह्यतराष्टक-पवित्राष्टक-स्थाण्वष्टकभुवनानि स्वच्छन्दतन्त्रे (१०।८५३-८९२) विवृतानि द्रष्टव्यानि। पञ्चाष्टकभुवनान्येतानि भोगकारिकायामपि (श्लो. ११३) स्मर्यन्ते।

४. कलामस्तकस्था गहनेशादयो मण्डलिनस्तत्रैव (१०।११२४) नाम्ना निर्दिष्टाः।

५. गुणमस्तकस्थाः क्रोधादयः (१०।१०६७), क्रोधाष्टकनामानि (१०।९७६) च तत्रैव द्रष्टव्यानि।

१२७), "क्रोधेश आदौ यस्याष्टकस्य [१]श्रीकण्ठसहितस्य" (पृ. २६२) इत्येवं क्रोधेशादयः, "वीरेशो वीरभद्रः शतरुद्राधिष्ठाता" (पृ. ३२, १२७), "शतरुद्राणां ब्रह्माण्डधारकाणामधिष्ठाता वीरभद्रः" (पृ. २३१), "वीरभद्रादीनां मायागर्भाधिकारित्वात् सकलत्वाच्च ब्रह्मादिवन्मायातत्त्वादधः कलादिभुवनेष्ववस्थितिः" (पृ. २६२), "शेषास्त्वप्रधाना विद्येशा वीरभद्ररुद्रादयः।···सूक्ष्मादीनां च मन्त्राणां च तदीशानामपि वीरभद्रादीनामनन्तोपरमकाल एव सर्वेषां युगपच्छिवसमता परा मुक्तिः" (पृ. २६४) इत्येवं वीरभद्रः, "श्रीकण्ठो [२]गुणतत्त्वनिलयोऽधस्तनभुवनादेश्च कर्ता" (पृ. ३२, १२७) इति श्रीकण्ठः, "शतरुद्रास्तु ब्रह्माण्डधारकाः" (पृ. ३२), "शतभवाः शतरुद्रा ब्रह्माण्डधारकाः" (पृ. १२७) इति च शतरुद्रा अत्रैव व्याख्याताः। शतरुद्राणां[३] नामान्यत्रैव (पृ. १७-१८) कुमारदेवोद्धृतगुरुदेवपद्धतिवचनेषु द्रष्टव्यानि। श्रीकण्ठादीनां गहनेशादीनां च तत्तद्भुवनपतीनां नामानि [४]तन्त्रयात्रायां संक्षेपेण, [५]स्वच्छन्दतन्त्रे च विस्तरेण द्रष्टव्यानि। एतेषां च गौणं मन्त्रेश्वरत्वम्, "अनुग्रहाय जन्तूनां मन्त्राणां हि प्रयोजकाः। एते मन्त्रेश्वरास्तस्मान्न मन्त्रोर्ध्वव्यवस्थितेः॥" इति मोक्षकारिकवचनात्। "इत्थं मन्त्रमन्त्रेश्वरयोः पश्चादुत्पत्तेर्मायागर्भाधिकारित्वादधोभागेऽप्येषामाचार्यादिवत् पश्वनुग्रहाय मन्त्रप्रयोजकत्वान्मन्त्रेश्वरत्वम्, न त्वनन्तादीनामिव मन्त्रेभ्य ऊर्ध्वं स्थितत्वात्" (पृ. २६२) इति हि तत्राघोरशिवव्याख्यानम्।

गुह्यातिगुह्यगुह्यतरपवित्रस्थाण्वाख्यपञ्चाष्टकादीनां भुवनपतीनामनन्तनियोज्यत्वमधुनैवाघोरशिवप्रामाण्येन (पृ. ३१) सूचितम्। मोक्षकारिकाव्याख्यायामपि स वक्ति—"तन्मात्राद्यहङ्कारान्ते चाध्वनि गुह्यातिगुह्यगुह्यतरपवित्रस्थाण्वाख्यानि पञ्चाष्टकानि भुवनानां स्थितानि" (पृ. २३१) इति। [६]महेश्वर एतेषां भुवनानामाधिपत्यं प्रलयाकलेभ्यो वितरतीति व्याकुरुते भोजदेववचनमघोरशिवः (श्लो. १२)। एतेषां भुवनानामप्यवस्थितिस्तन्त्रयात्रायां स्वच्छन्दतन्त्रे च द्रष्टुं शक्यते। तेन सकलेभ्यः य

१. श्रीकण्ठाष्टकं च तत्रैव (१०।९८२-९८३) दृश्यते।

२. श्रीकण्ठ इति नाम्ना च कैलाशनिलयस्तथा।
शर्वाद्याभिश्च तनुभिरष्टाभिर्व्याप्य तिष्ठति॥ (१०।१३५०)

३. अत्र बलोऽतिबलश्चेति नामद्वयं दृश्यते। विश्वामित्रश्च दाशरथये रामाय बलामतिबलां चेति विद्याद्वयं प्रयच्छति (वाल्मीकिरामायणे बालकाण्डे २२ सर्गो द्रष्टव्यः)। किमत्र वर्तते कोऽपि संबन्धः?

४. तत्रत्ये २६-२७ पृष्ठे द्रष्टव्ये।

५. स्वच्छन्दतन्त्रस्य भुवनाध्वनिरूपके दशमे पटले सिद्धान्तिसंमतानां चतुर्विंशत्युत्तरशतद्वयभुवनानां विस्तरेण विवरणं दृश्यते। कैरणे च विद्यापादे (८।९०-१४१) तानि संक्षेपेण सूचितानि। मालिनीविजये (१।३७) तु भुवनानां सकलानां संख्याऽष्टादशोत्तरशतमेव सूचिता, वर्णितानि च तानि पञ्चमाधिकारे।

६. पृ. २५, २ टिप्पणी द्रष्टव्या।

प्रलयाकलानां स्थितिरधस्तादित्यायाति, सकलानामष्टादशोत्तरशतभुवनाधिपतीनामङ्गीकारात्। "श्रीपूर्वशास्त्रे च मन्त्रमहेश्वराणां विज्ञानाकलाः, मन्त्रेश्वराणां सकला उपादानत्वेनोक्ता इति पारिशेष्यान्मन्त्राणां प्रलयाकलोपादानत्वं सिद्धम्" (९।१४१) इति वदन् तन्त्रालोकविवेककारो जयरथोऽपि मतमेतत् समर्थयतीव।

कुमारस्तु प्रलयाकलानष्टादशोत्तरशतभुवनाधिपतीनङ्गीकुरुते, न सकलान्। सकलास्तु पुर्यष्टकदेहयुताः संसरन्तीति स आह। तेनोद्धृतानि सिद्धान्तहृदयवचनानि तद्व्याख्यामेव समर्थयन्ति, किन्तु तत्रैव निदर्शितानि शैवरहस्यवचनानि श्रीमतोऽघोरशिवस्य व्याख्यानं पोषयन्ति। मोक्षकारिकायां चानन्तादयोऽष्टौ मन्त्रेश्वराः, सप्तकोटिसंख्याका मन्त्राः, अष्टादशोत्तरशतभुवनाधिपतयश्च मण्डल्यादयो यद्यपि वर्ण्यन्ते, किन्तु तेषां विज्ञानाकलप्रभृतिभ्यो न कोऽपि सम्बन्धः प्रदर्शितः। प्रसङ्गेऽस्मिन् मन्त्रमहेश्वरस्य सदाशिवाख्यस्य कुत्रापि चर्चा नास्ति। रत्नत्रयकारः श्रीकण्ठस्तु—"उत्तीर्णमायाम्बुधयो भग्नकर्ममहार्गलाः। अप्राप्तशिवधामानस्त्रिधा विज्ञानकेवलाः॥" (श्लो. २३) इति, "विज्ञानकेवलास्त्रेधा" (श्लो. १४१) इति त्रिविधान् विज्ञानाकलान् सदाशिवेश्वरमन्त्राख्यान् वर्णयति। "विद्या विद्याधिपतयः पशुपूर्वाः सदाशिवाः" (श्लो. २४) इति स्पष्टोक्तौ सत्यामप्यघोरशिवोऽमुं श्लोकं सकल-प्रलयाकल-विज्ञानाकलपरकतया योजयति, तन्नास्मभ्यं रोचते।

विषयोऽयं सद्योज्योतिषा तत्त्वसंग्रहेऽपि निबद्धः। प्रकरणमेतद् व्याकुर्वन्नघोरशिवः—"अत्र च विज्ञानकेवलानष्टौ बोधयामास पुद्गलानिति श्रुतेः शुद्धाध्ववर्तित्वाच्च विज्ञानाकलानां मध्यात् परिपक्वमलानामेव तत्पाकतारतम्यवशाद् विद्येश्वरत्वे मन्त्रेश्वरत्वे च नियोगः, अपरमन्त्रेश्वरत्वेऽशुद्धाध्ववर्तित्वादपक्वमलानां प्रलयाकलानामेवेति मन्तव्यम्" (पृ १२७) इत्येवं प्रलयाकलानामपरमन्त्रेश्वरत्वम्, विज्ञानाकलानां च परमन्त्रेश्वरत्वं साधयति। मन्त्रपदं स एवं तत्रैव व्याकरोति—"मन्त्रशब्दश्चात्र "मननं सर्ववेदित्वं त्राणं संसार्यनुग्रहः। मननत्राणधर्मित्वान्मन्त्र इत्यभिधीयते॥" इति श्रुतेः शिवशक्तितदनुगृहीतेषु च वर्तते। उपचारात्तु वाचकशब्दानां मन्त्रत्वमिति वक्ष्यामः। निर्मलत्वाच्च प्रकाशितज्ञानक्रिया एते मननादिधर्मयोगाच्छुद्धविद्यातत्त्वाश्रितत्वाच्च रौरवादौ शैवशास्त्रे मन्त्रतत्त्वमित्युच्यन्ते" (पृ. १२७) इति। अत्र स्पष्टमेवानन्तेशप्रभृतीनां विज्ञानाकलानां मन्त्रेश्वरत्वं मन्त्रत्वं च, अष्टादशोत्तरशतसंख्याकानां प्रलयाकलानामपरमन्त्रेशत्वं भुवनाधिपतित्वं च प्रतिपाद्यते। स्पष्टमेवैतदघोरशिवस्य व्याख्यानं पूर्वव्याख्यानतो विपरीतम्।

अत्राघोरशिवेन मन्त्रेश्वरा एव मन्त्रमहेश्वरा उक्ताः, मन्त्राद्यात्मकशब्दोपादानतया विद्येश्वरादीनां देहेन्द्रियाद्याधारभूतशुद्धाध्वभुवनोपादानत्वेन च कुण्डलिन्याख्या महामाया तेन साधिता (पृ. १३१)। वस्तुतस्तु सदाशिवतत्त्वमेव मन्त्रमहेश्वरपदभागित्यवगन्तव्यम्। महामायापदेनापि तदभिलपितुं शक्यते। एवं च मन्त्रमहेश्वरः सदाशिवः, मन्त्रेश्वरा अनन्तादय ईश्वरपदभाजः, मन्त्रा विद्याश्च सप्तकोटिसंख्याका इति त्रिविधा विज्ञानकेवलाः, पृथिव्यादिकलातत्त्वपर्यन्तानां भुवनानामधिपतयः शतरुद्रा-

दयश्च प्रलयाकला इत्येव पक्षोऽस्माकमुचितः प्रतिभाति। पक्वमलाश्च सकला हिरण्यगर्भादयः, सनकाद्या योगिनः, आचार्या देवाश्च भवन्तीति सिद्धान्तहृदयप्रदर्शितः पन्थाः।

## पञ्चकृत्यानि

इदं च मन्त्रमन्त्रेश्वराख्यानं मोक्षकारिकायामपि ७२-९३ श्लोकेषु दृश्यते। अन्ते तत्र सद्योज्योतिश्शिवाचार्यो भणति—

सूक्ष्मादिनायकोऽनन्तः स तद्युक्तः शिवेरितः।
उत्पत्तिस्थितिसंहारसंरोधानुग्रहार्थकृत् ॥ (श्लो. ८७)
सृष्ट्यादिपञ्चकर्माणि कृत्वाऽनन्तेश्वरस्ततः।
पारतन्त्र्याद् विनिर्मुक्तः प्राप्नोति पतितुल्यताम् ॥ (श्लो. ९४)

अनेन शिववदनन्तस्यापि पञ्चकृत्यसम्पादकत्वं ज्ञायते। "विद्येश्वराणां च पञ्चविधकृत्याधिकारित्वात्" (पृ. १५२) इत्यघोरशिवोऽपि व्याख्यातवान् रत्नत्रयपरीक्षायाम्। तानि च पञ्चकृत्यानि[1] सृष्टि-स्थिति-संहार-तिरोभाव-अनुग्रहाख्यानि शैवागमेषु प्रसिद्धानि। रौरवागमसिद्धानि च तानीमानि सन्ति—"सृष्टिसंरक्षणादानभवानुग्रहकारिणः" (१।१५) इति। अत्र सृष्टिस्थाने स्थितिरिति, भवस्थाने च भाव इति पाठौ दृश्येते। तौ नाङ्गीकार्यौ। संरक्षणशब्दोऽत्र स्थितेः, आदानशब्दश्च संहारस्य वाचकः। भवशब्दो जन्ममृत्युपरम्परां सूचयन् तिरोधानं व्यञ्जयति। एवं च रौरवागमप्रदर्शितेषु पञ्चकृत्येषु नामभेदं विहाय नार्थे किञ्चन वैपरीत्यमिति विभावनीयम्।

कुमारदेवः सर्गपदं व्याकुर्वन्—"स सर्गः पञ्चविधः, भावतत्त्वभुवनभूतप्रत्ययात्मसृज्यस्य पञ्चविधत्वात्" (पृ. २५) इति वक्ति, शैवरहस्यवचनं च प्रमाणयति। तत्र तत्त्वात्मिका, भुवनाख्या, (पञ्च)भूतात्मिका च सृष्टिः प्रसिद्धैव। भावसर्गः प्रत्ययसर्गश्च सांख्यदर्शने प्रसिद्धः, शैवागमेष्वपि तत्र तत्र वैशद्येन विव्रियत इति सत्यमाह कुमारदेवः सृष्टेः पाञ्चविध्यम्।

## अण्डचतुष्टयात्मिका सृष्टिः

तत्र चतुर्विंशत्युत्तरशतद्वयभुवनात्मिका सृष्टिः शैवशास्त्रेष्वण्डचतुष्टयात्मिका वर्ण्यते। तदुक्तं परमार्थसारे—

निजशक्तिवैभवभरादण्डचतुष्टयमिदं विभागेन।
शक्तिर्माया प्रकृतिः पृथ्वी चेति प्रभावितं प्रभुणा ॥ (श्लो. ४) इति।

विशेषजिज्ञासुभिरत्रत्यं योगराजीयं व्याख्यानं द्रष्टव्यम्। शक्तिपदं चात्र महामायापरं मन्तव्यम्। पृथिव्यण्डे सन्त्यष्टोत्तरशतं भुवनानीति तेषां विस्तरोऽप्यन्यत्र द्रष्टव्यः।

---

१. सात्वतसंहिताया उपोद्घाते ३१ पृष्ठस्थां द्वितीयां टिप्पणीं पश्यत।

गुणतत्त्वस्य प्रकृतेश्च पृथक् पृथग् विवरणं दृश्यत इति प्रकृत्यण्डविषये सोऽयं विचारणीयो विषयः। "अव्यक्ताद् गुणतत्त्वं प्रख्याव्यापारनियमरूपमिह, त्रय एव गुणास्त्विह येषां संभूतिरव्यक्तात्, महतश्च गुणत्रयाज्जन्म" इत्यादिभिर्वचनैरव्यक्ताद् गुणत्रयस्य, गुणत्रयाच्च महत्तत्त्वस्य जन्मेति ज्ञायते। गुणा एव प्रधानाख्यया नित्यत्वेन स्थिता इति सांख्यमतमत्र निरस्यते, त्रयो गुणास्तथाप्येकं तत्त्वमिति च भण्यते। ननु प्रकृतेर्गुणत्रयस्य, गुणत्रयाच्च महतो जन्म चेत् तत्त्वसंख्यायां [1]वृद्धिरनिवार्येति चेन्न, अविभागो हि गुणानामाधारे क्ष्मादिभागवदवश्यमित्यादिना वचनेन सद्योज्योतिषा तस्य समाहितत्वात्। "क्ष्मादिभागानां घटादिरूपाणां यथा पृथिव्यात्मक आधारेऽवश्यमविभागो भवति, एवं सत्त्वादीनामपि गुणभागानां कस्मिंश्चिदाधारेऽवश्यमविभागो विज्ञेयः। ततस्तस्याविभागस्य य आधारस्तदव्यक्तम्" (पृ. ११९) इति हि तत्राघोरशिवो भाषते। एवं च नात्र तत्त्वसंख्याव्यतिक्रमः। एकमेव तत्त्वमनभिव्यक्तगुणमव्यक्तनाम्ना, व्यक्तं च सद् गुणत्रयनाम्नोच्यत इति तदभिप्रायः। अत एवोच्यते—यस्मात् प्रकृतिगुणानां नात्यन्तं वस्तुतो भेद इति। प्रकृतिश्चात्र सांख्यवन्न नित्या, किन्तु मायातः कलातो वा तस्योत्पत्तिरिह स्वीक्रियते। कुमारदेवश्च—"अव्यक्तगुणतत्त्वयोरत्यन्तभेदाभावान्न च तत्त्वाधिक्यम्" (पृ. ४६) इति स्पष्टमेवाह। एवं च जलतत्त्वतः प्रकृतितत्त्वपर्यन्तं वर्तते प्रवृत्तिः प्रकृत्याख्यस्याण्डस्य।

तत उपरि वर्तते मायाण्डं नियतितत्त्वतो मायातत्त्वपर्यन्तं विततम्। माया च वस्तुरूपा मूलं विश्वस्य नित्या सा, कलादीनां तत्त्वानामविवेको माया, मायोपादानमिष्यते सूक्ष्मा। एका नित्या व्यापिन्यनादिनिधना शिवासक्ता, विकृतेः परतो माया नित्या विम्वी ह्यचेतना चैका। सर्गस्थितिविलयानामाधारः कारणं च सा जगतः॥, मायातत्त्वं चिता विहीनं च, मायातत्त्वं जगद्बीजमविनाश्यव्ययात्मकमित्यादिना लक्षिता माया पुंसो ज्ञकर्तृतार्थं मायातस्तत्त्वपञ्चकं भवति, [2]अव्यक्तं मायातः, नानाविधशक्तिमयी सा जनयति कालतत्त्वमेवादौ, मायातो नियतिः, मायातस्तदनु कला, कला च मायाजा, कला चेति चकारात् कालनियती च मायासमुत्पन्ने इत्येवं कलाकालादीनामुत्पादयित्री विद्यते। माया चैषाऽनन्तनाथेन क्षोभिता कलादिक्षितिपर्यन्तं तत्त्वजातं सूते। एषा च क्षीरदधिन्यायेन न सर्वात्मना परिणाममेति, किन्तु घृतकीटन्यायेनैकदेशेन। माया पुरुषः शिव इत्येतत्त्रितयं महार्थसंहारेऽवशिष्यते, शम्भुः पुरुषो माया नित्यं विभु कर्तृशक्तियुक्तं च। सुप्तेऽपि विकृतिजाते त्रितयं जागर्ति तत्त्वानाम्॥, शिवपुरुषावतिसंख्यौ प्रसवविहीनौ चिता समेतौ च। एकं प्रसवित्वयुतं मायातत्त्वं चिता विहीनं च॥" इत्यादिना च मायापुरुषशिवानां साधर्म्यवैधर्म्ये निरूप्येते। तत्र सृष्टि-

---

१. नवैकादशेत्यादिके श्रीमद्भागवतीये पद्ये गुणत्रयं पृथक् परिगण्याष्टाविंशतिसंख्याकानि तत्त्वानि प्रतिपाद्यन्ते। अस्मदीयायां तन्त्रयात्रायां "कति तत्त्वानि" इति शीर्षको निबन्धो द्रष्टव्यः (पृ. ४)। अग्रिमा ३२ पृष्ठस्था २ संख्याका टिप्पणी चात्र द्रष्टव्या।

२. अभिनवगुप्तस्तु—"मायातोऽव्यक्तकलयोरिति रौरवसंग्रहे। श्रीपूर्वे तु कलातत्त्वादव्यक्तमिति कथ्यते॥" (९।४-४१) इत्याह। तथैव सप्रमाणं व्याकुरुते जयरथः (पृ. ४१,१७४)।

काले शिवस्य सृष्ट्यादिकरणपूर्वकमात्मनां भोगभोजनात्मकः, मायायाश्च भोगसाधनं-कलाद्युत्पादनतत्पोषणात्मकः, पश्चात्मनां च भोग्यभोगरूपो व्यापार इति च त्रयाणामेतेषां व्यापारभेदा निरुच्यन्ते।

"मायैव कारणं शुद्धाशुद्धयोर्मलकर्मणोः। अशुद्धयोरशुद्धैव मायाऽतो द्विविधा मता॥" अत्राशुद्धा मायाऽनुपदं व्याख्याता। शुद्धा च माया महामायापदोपात्ता। शुद्धानि पञ्चतत्त्वानि सन्ति महामायाण्डान्तर्गतानि, यद्धि शक्त्यण्डनाम्ना परमार्थसारे प्रोक्तम्। रत्नत्रये (श्लो. १५५-१५८) स्थूला, सूक्ष्मा, परा चेति त्रिविधा महामाया प्रदर्शिता। तत्र स्थूला गुणात्मिका बुद्ध्यादिभोगजननी। सा पुरुषस्य प्रकृतिः। प्रकृतिमपि तस्यैव स्थूलमवस्थान्तरमाहुरित्यघोरशिवः। सूक्ष्मा कलादितत्त्वानामविभागस्वरूपिणी। सा मायाभिधा जननी मोहिनी सर्वाशुद्धाध्वकारणं च। मन्त्रयोनिः परा माया नित्या कुण्डलिनी। सा विद्याविद्येश्वराणां शरीराणामुपादानमिति। अत्र शुद्धतत्त्वानामुपादानं महामाया, शुद्धाशुद्धानां माया, अशुद्धानां च प्रकृतिरित्येकमेव तत्त्वमाधारभेदात् स्थूलसूक्ष्मपराख्यां लभते। अचैतन्ये सत्युपादानत्वमेषां सामान्यो धर्म इत्यौपचारिकमेकत्वमेतेषां वक्तुं शक्यते, किन्तु नित्यत्वानित्यत्वप्रवर्तकत्वादीनां लक्षणानां भेदात् सिद्धान्तिनस्त्रयाणामेषां तत्त्वानां भिन्नत्वमेवाङ्गीकुर्वन्ति। बिन्दुपरनादापरपर्यायाया महामायायाः स्वरूपं पूर्वमेव विवेचितम्। तदिदं पञ्चविधं सर्गमण्डचतुष्टयं च भगवान् परमशिवो जीवस्य भोगमोक्षार्थं विधत्त इति जीवात्मनः स्वरूपं प्रविविच्यते।

## भोगमोक्षोन्मुखो जीवात्मा

शिवोन्मुखस्य जीवात्मनोऽवस्थात्रयगुणत्रयादिकं निर्दशितम्। भोगोन्मुखो जीवात्मा चात्र अणु-पशु-पुद्गल-पुरुषप्रभृतिभिः शब्दैर्व्यवह्रियते। अस्य च—"किञ्चित्कर्तृत्वादिनाऽणुत्वम्, न परमाणुवदवस्थानात्" (पृ. १६) इति कुमारः। अणवो जीवाः पाशबद्धत्वात् पशव उच्यन्ते। एते च पशवस्त्रिविधा इति पूर्वमेव प्रदर्शितम्। पशुशब्दो मलत्रयवाचकतयाऽपि श्रीमद्रौरवादौ दृश्यते। परमोक्षनिरासकारिकाव्याख्यायां रामकण्ठः—"अनुग्रहतिरोभावौ द्वौ पाशौ तु सदाशिवे" इति, "पशुराद्यः सदाशिवः" (पृ. २८२) इति च वक्ति। अतः पाशयुक्तत्वात् सदाशिवोऽप्याद्यः पशुरिति ज्ञातव्यम्। "सदाशिवश्चात्राधिकारावस्थः शिव एव" (पृ. १५३) इति च रत्नत्रयोल्लेखिन्यामघोरशिवः प्राह। पुद्गला मलयुक्तात्मान उच्यन्ते। मन्त्रेश्वराननन्तादीननुगृह्णाति पुद्गलानिति मोक्षकारिकावचनेन मन्त्रेश्वरा अनन्तादयोऽपि पुद्गला उच्यन्ते, किन्तु तत्रैव—"सृष्ट्यादिपञ्चकर्माणि कृत्वाऽनन्तेश्वरस्ततः। पारतन्त्र्याद् विनिमुक्तः प्राप्नोति पतितुल्यताम्॥" इत्यपि स एवाह। पतितुल्यः पशुरेव [1]कालनियतिकलाविद्यारागाख्यैः

---

१. कुमारदेवोऽमुमेव क्रमं स्वीकरोति। अघोरशिवस्तु—"ननु श्रीमन्मतङ्गादौ कलाविद्यारागेभ्योऽनन्तरमस्य व्यापारः श्रूयते? सत्यम्, कालादीनामुत्तरोत्तरस्यैव तत्र प्रवृत्तिक्रमो दर्शितः, अत्र तु सृष्टिक्रम इत्यविरोधः" (पृ. ७४) इत्याह। "विद्या रागोऽथ नियतिः कालश्चैतच्चतुष्टयम्। कलाकार्यम्"(९।२०३), "माया कला रागविद्ये कालो नियतिरेव च।

पञ्चकञ्चुकैर्यदाऽऽवृतो भवति, तदा पुरुषाख्यतां [1]लभते तत्त्वेषु गणनां च। अत एवाहाघोरशिवः—"कलादिपञ्चतत्त्वोपबृंहितोऽणुर्भोक्तृत्वेन पुंस्तत्त्वनिर्देशं याति। न तु परमार्थतस्तस्य तत्त्वं भुवनाधारत्वं च विद्यते। अत एव तद्भुवनानां रागतत्त्व एव स्थितिरित्युक्तं श्रीमन्मतङ्गादौ" (पृ. ८०) इति।

पुरुषशब्देन च जात्येकवचनेन मलयुक्ताः सर्वे बद्धात्मान उच्यन्ते। तत्त्वसंग्रहे तदिदं तत्त्वमेवं वर्ण्यते—"नित्यं विभु च मलेन ह्यनादिसंरुद्धदृक्क्रियं तत्त्वम्। पश्वभिधानं यस्य हि भोगायाऽयं तु परिकरोऽभिहितः॥" (पृ. १२६) इति। कारिकामिमां व्याकुर्वाणोऽघोरशिवः—"कूटस्थनित्येन मलेन प्रवाहनित्येन च कर्मणाऽनादिसम्बन्ध(द्ध)स्य मोक्षदित्सायां शम्भुर्मलपरिपाकार्थं कर्मभोजनाय मायीयेन कलादिना सम्बन्धं करोति, तदासावात्मा सकल इत्युच्यते, महाप्रलये तु कलाद्युपसंहारान्मलकर्मयुक्तः प्रलयाकलः, विज्ञानयोगादिना कर्मणो विनाशात् केवलमलयुक्तो विज्ञानाकलः" (पृ. १२६) इत्याह। अघोरशिवस्तत्त्वेषु पुरुषतत्त्वस्य स्थानं निर्धारयन्नेवमाह—"ननु मतङ्गादौ प्रकृतिरागयोर्मध्ये पुरुषतत्त्वं श्रूयते? तत्सत्यम्। तस्य तु चेतनत्वान्नित्यत्वाच्च भुवनाद्याधारत्वेनाध्वत्वं[2] न संभवति। तथाहि—कलादिपञ्चकयुक्तस्य भोक्तृत्वेन पुंस्त्वमलेनाऽनात्मादावात्माभिमानरूपेण योग इति दीक्षायां तत्स्थान एव तच्छुद्ध्यर्थमागमेषु प्रक्रमितत्वादूर्ध्वं पुरुषतत्त्वतया पाठः श्रूयते। अतश्चाचार्येण तद्वर्णनमुपेक्षितम्। मायातत्त्वानन्तरं तु पशुस्वरूपं वक्ष्यति" (पृ. १२०) इति। अतश्च मायातत्त्वानन्तरं पुरुषतत्त्वशुद्धिर्विधीयते, न तु प्रकृतित ऊर्ध्वमिति स्पष्टमस्य ग्रन्थस्याभिप्रायो भवति।

अत्रैवाघोरशिवो मलस्य न तत्त्वान्तरत्वम्, अपि तु पशुतत्त्व एव तस्यान्तर्भावं करोति। मलेन विना पशुत्वायोगादौपचारिक एष प्रयोगो मन्तव्यः। वस्तुतस्तु पतिपशुपाशाख्यं तत्त्वत्रयं पृथगेवेत्यवोचाम। अद्वैतवादिनो दार्शनिकास्तिरोधानशक्तेर्महा-

---

कञ्चुकानि षडुक्तानि" (९।२०४) इति च तन्त्रालोके वदन्नभिनवगुप्ताचार्योऽपि कलादिक्रममेवाङ्गीकरोति। सूक्ष्मशरीरस्य कलादिपृथिव्यन्तत्रिंशत्तत्त्वपरतया योजनमपि तदनुगुणमेव। अभिनवगुप्तोऽत्रैव (९।४५-४८) ज्ञानोत्तर-स्वायम्भुव-किरण-मतङ्गपारमेश्वर-वर्णितानि मतान्तराणि प्रदर्शयति, समाधानं चैवं प्रदर्शयति—"तस्यां च न क्रमः कोऽपि स्याद्वा सोऽपि विपर्ययात्॥ तस्माद्विप्रतिपत्तिं नो कुर्याच्छास्त्रोदिते विधौ॥" (९।२१९-२२०)।

१. अत्र कुमारः—"यदायमीश्वरः''''पुरुषसंज्ञां च लभते" (पृ. ७९) इति वदन्नद्वैतवादोन्मुख एव दृश्यते।

२. पुरुषस्याध्वान्तःपातित्वाभावे त्रिगुणस्य त्रयो गुणास्तथाप्येकं तत्त्वमिति वचनानुगुणं पृथक् तत्त्वतया परिगणनेऽपि न तत्त्वसंख्याधिक्यमिति विभावनीयम्। "शास्त्रेऽस्मिन् गुणास्तत्त्वान्तरं विदुः" (तन्त्रा. ९।२२४) इति चाभिनवगुप्तः।

मायायाश्चौपचारिकं पाशत्वमिति ते विहाय शिष्टानां [1]मल-कर्म-मायाख्यानां पाशानां मलत्वमङ्गीकृत्य तस्याणवकार्ममायीयाख्यान् भेदान् कुर्वन्ति । तत्राणवं मलमेव संसाराङ्कुर-कारणम्, तच्चाज्ञानात्मकमिति सर्वमेतदस्माभिरुपोद्घाते लुप्तागमीये (पृ. १५०-१५१) व्यावर्णितम् । मलस्य तदिदं स्वरूपं सिद्धान्तागमज्ञैर्नाङ्गीक्रियते । ते हि मलस्य द्रव्यत्वाच्चक्षुषः पटलादेरिव दीक्षाख्येनैवेश्वरव्यापारेण निवृत्तिमभिप्रयन्ति । "अत एव शुद्धविद्यासंयोजनात् पूर्वं मायोर्ध्वस्थान एव मलविच्छित्तिर्दीक्षायां कार्येति गुरव आचक्षते" (पृ. १२८) इत्यघोरशिवो भणति । अपि च—"अत एव दीक्षायां सूक्ष्मदेहशुद्धिर्मायातत्त्वाधोभागे एव स्थाने कार्येत्युक्तं रौरवादौ" (पृ. १२५) इति वदन् मायातत्त्वाधोभागे त्रिंशत्तत्त्वात्मकसूक्ष्मदेहशुद्धिं शुद्धविद्यासंयोजनात् पूर्वं च मायोर्ध्वस्थाने पुरुषमलविच्छित्तिं वदति । अनेन पुनरपि मायोर्ध्वस्थान एव पुरुषतत्त्वशुद्धिर्विधेयेति सिद्ध्यति ।

"स तु ज्ञानप्रागभाव इत्येके । परे तिमिरसदृशो जडात्मको भावरूपो ज्ञाननिवर्त्य इति । गुरवस्तु अविद्यासंस्कारात्मक इत्याहुः" इत्येते त्रयोऽपि पक्षा मलस्वरूपोपस्थापकाः कुमारदेवेनोपस्थापिता न कुर्वन्ति सार्वात्म्येन सिद्धान्तागमप्रातिनिध्यम् । दीक्षाख्येन व्यापारेण हि मलस्य निवृत्तिरत्राभिप्रेयते । "क्रिया हि फलदा पुंसां न ज्ञानं स्यात् फलप्रदम्" (श्लो. १२९) इति रत्नत्रयवचनमप्यत्रानुगुणम् । मलविषयको विचारोऽस्मदीये लुप्ता. उपो. (पृ. १३६-१५१), अघोरशिवीयमृगेन्द्रवृत्तिदीपिकायां च विस्तरेण कृत इति विशेषजिज्ञासुभिस्तत एवावलोकनीयः । मलपाक-कर्मसाम्य-शक्तिपातादयो विषया अपि परस्परानुस्यूतास्तत्र तत्रास्माभिरघोरशिवादिभिश्च विचारिता इति न तेऽत्र पुनः प्रतन्यन्ते । कर्मसाम्यस्य चात्र रत्नत्रयोल्लेखिन्यां निर्धारितं स्वरूपमेवास्मभ्यं रोचते (पृ. २००-२०१) । विस्तरेण चास्य स्वरूपं मृगेन्द्रवृत्तिदीपिकायां तेन प्रदर्शितम् । कर्मसाम्यमलपाकाद्यपेक्षश्च शक्तिपातः सिद्धान्तिभिः स्वीक्रियते, न निरपेक्षः स्वतन्त्रः । यस्याश्चः शक्तेः पातस्तस्या दीक्षया निरोधः, शक्तिपातचिह्नानि, मलपरिपाकाविनाभूतः शक्तिपात इत्यादयो विषयाश्च विशेषशब्दसूचीसाहाय्येन परामृश्याः ।

"येषां शरीरिणां शक्तिः पतत्यविनिवृत्तये । तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ, द्वेषो भवस्थितौ । भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके विधौ ॥" इत्येवं शक्तिपातचिह्नानि मृगेन्द्रे स्मर्यन्ते । लिङ्गाख्यो भावाख्यश्च सर्गः, सांसिद्धिकाः प्राकृतिका वैकृताश्च धर्माद्या भावाः सांख्यकारिकायामपि वर्ण्यन्ते । तत्र सांख्यदर्शने महदादिसूक्ष्मपर्यन्तमष्टादशतत्त्वमयं सूक्ष्मशरीरं लिङ्गाख्यमिति, धर्मादीनामष्टविधानां भावानां सर्गश्च भावाख्यः प्रत्ययाख्यो वा प्रोच्यते । धर्मादय एते भावाश्च सांसिद्धिकाः, प्राकृतिकाः, वैकृताश्च भवन्ति । वैकृता भावा नैमित्तिका उच्यन्ते । [2]धर्मादीनां सात्त्विकत्वम्, अधर्मादीनां च तामसत्वं तत्र

१. "मलोऽभिलाषश्चाज्ञानमविद्या लोलिका प्रथा । भवदोषोऽणुप्लवश्च ग्लानिः शोषो विमूढता ॥ अहंममात्मतातङ्को मायाशक्तिरथावृतिः । दोषबीजं पशुत्वं च संसाराङ्कुरकारणम् ॥ इत्याद्यन्वर्थसंज्ञाभिस्तत्र तत्रैव भण्यते ।" (तन्त्रा. ९।८४-८६) इति मलस्य पर्यायानाहाऽभिनवगुप्तः ।

२ तदुक्तं सांख्यकारिकायाम्—"धर्मो ज्ञानं विराग ऐश्वर्यम् । सात्त्विकमेतद्रूपं तामसमस्माद् विपर्यस्तम् ॥" (का. २३) इति ।

वर्ण्यते। सिद्धान्तिनस्तु कलादिपृथिव्यन्तत्रिंशत्तत्त्वात्मकं सूक्ष्मशरीरमङ्गीकुर्वन्ति। "अधर्मादित्रयं रागो धर्मादि च चतुष्टयम्। तमोरजःसत्त्वमयं रूपं तत्कर्मजं मतौ॥" (श्लो. ५५) इति वदन् भोगकारिकाकारोऽधर्माज्ञानानैश्वर्याख्यं रूपं तामसम् रागस्त्ववैराग्याख्यं राजसम्, [1]धर्मज्ञानवैराग्यैश्वर्याख्यं सात्त्विकमित्येवं सात्त्विकादिविभागेषु तान् विभजति। त्रयो गुणाश्च मृगेन्द्रे वर्णिता एवम्—"सांसिद्धिका वैनयिकाः प्राकृताश्च भवन्त्यणोः॥ विशिष्टधर्मसंस्कारसमुद्दीपितचेतसाम्। गुणः सांसिद्धिको भाति देहापायेऽपि पूर्ववत्॥ लोकधीगुरुशास्त्रेभ्यो भाति वैनयिको गुणः। समर्जितो वैनयिको मनोवाक्तनुचेष्टया॥ प्राकृतो देहसंयोगे व्यक्तः स्वप्नादिबोधवत्।" (वि० १०।२६-२८) इति। वैकृता नैमित्तिका वा भावा अत्र वैनयिकपदेनोपात्ताः। भावसर्गः प्रत्ययसर्गश्चात्र पृथक् पृथगुपात्तौ। तथाहि—'इह हि बुद्धौ वासनात्वेन स्थिता [2]धर्मादयोऽष्टौ भावा उच्यन्ते। यदाहुः—"भावयन्ति यतो लिङ्गं तेन भावाः प्रकीर्तिताः" इति। त एव प्रकर्षावस्थां प्राप्ताः स्थूलेन रूपेण भोग्यदशामापन्नाः संसारिणां प्रत्यायनात् प्रत्ययाः कथ्यन्ते। तदुक्तम्—"प्रत्याययन्ति क्षेत्रज्ञं प्रत्ययास्तेन कीर्तिताः" इति। अतश्च(ा)-वैराग्येण राजसेनेषद्युक्तात् सात्त्विकाद् धर्मादिभावचतुष्टयात् सिद्धिरुत्पद्यते। सा च व्यक्तस्य गुणादेरव्यक्तस्य च प्रधानस्य ज्ञस्य च पुरुषस्य संबुद्धिस्तद्विषयं ज्ञानमेव प्रकर्षावस्थां प्राप्ता सिद्धिरुच्यते। उक्तं च —"पुंप्रकृत्यादिविषया बुद्धिर्या सिद्धिरत्र सा" इति।

तत्र व्यक्ताव्यक्तविषये बुद्धिबोधे तत्प्रकाशकत्वेनात्यन्तं विविक्तः पुरुषः स्वयमेवावभासते, यदाहुः —"तदा द्रष्टुः स्वरूपेऽवस्थानम्" (यो. सू. १।३) इति। नास्य पुरुषस्य शिवस्वरूपस्य बुद्धिप्रकाश्यत्वम्, भोग्यत्वादिदोषप्रसङ्गात्। तदुक्तम्—[3]"बुद्धिबोध-

---

१. धर्मशब्दमेवं विवृणोति कुमारः—"सुखाऽसाधारकारणं धर्मः···इत्येके। अन्ये तु चोदनालक्षणोऽर्थो धर्मः।···अपरे धर्मः पुरुषगुणः कर्तुः प्रियहितमोक्षहेतुः।···अहिंसालक्षको धर्म इति केचित्। चैत्यवन्दनादिलक्षणो धर्म इति बौद्धाः। परे परोपकारलक्षणो धर्म इति" (पृ. ३७)। एवं षट् पक्षान् समुपस्थाप्य कुमारस्तत्रान्त्यं त्रयमनुपपन्नमित्युक्त्वा तत्र हेतून् प्रदर्शयति। अत्रेदं विचारणीयम्—"जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" (२।३१) इत्याह भगवान् पतञ्जलिरहिंसादीनां विषये। "अष्टादशपुराणेषु व्यासस्य वचनद्वयम्। परोपकारः पुण्याय पापाय परपीडनम्॥" इति च स्मर्यते। "न चाहं कामये राज्यं न स्वर्गं नापुनर्भवम्। कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्॥" इत्येवंविधेषु वचनेषु जागरूकेषु सत्सु कथं नाम अहिंसायाः परोपकारस्य च धर्मत्वं प्रत्याख्यातुं शक्येत।

२. अष्टौ धर्मादयो भावाः, सिद्ध्यादयश्च चत्वारः प्रत्यया इत्युच्यन्ते। धर्मादिभाववर्गस्तदुपादानः सिद्ध्यादिप्रत्ययवर्गश्च द्विविधोऽयं बौद्ध एव बोधः। अत एव द्विविधोऽप्ययं सर्गः सांख्यकारिकायां भावसर्गनाम्नैवोक्तः। प्रत्ययसर्गस्य तत्र पञ्चाशद् भेदाः परिगणिताः। सिद्धान्तागमेषु तु ते सिद्ध्यादिप्रत्ययभेदेन शतत्रयसंख्याका वर्ण्यन्ते। धर्मादीनामात्मगुणत्वं नैयायिकादयोऽभिप्रयन्ति, तदत्र प्रतिषिद्ध्यते।

३. "आत्मसंवित्प्रकाशस्य बोधोऽसावजडोऽप्यलम्" (तन्त्रा. ९।२२९) इत्यादिना मतमेतत् समालोचयदभिनवगुप्तः।

प्रकाश्यत्वं शिवस्यान्यैः समीहितम् । शैवमानमविन्दद्भिः पशुमानानुवासितैः ॥" इत्यादिना, "अन्तःप्रकरणवृत्तिर्या बोधाख्या सा महेश्वरम् । न प्रकाशयितुं शक्ता पाशत्वान्निगडादिवत् ॥" इत्यन्तेन ग्रन्थेन[१] मोक्षकारिकासु । अत एव शिवदृष्टौ कालपादास्वायम्भुवटीका-मतङ्गटीका-किरणादिप्रामाण्येन नादात्मकस्यैव शब्दराशेर्मन्त्रात्मकस्य शिवस्वरूपबोधकत्वमङ्गीकृतम्, न पाशात्मकस्य शब्दस्य । "प्रमातृभूमिगतानां मन्त्राणां परभूमिगतानां च शब्दानां न तु वागिन्द्रियस्य कदाचित्, वागिन्द्रियं हि मायापद एव स्थितम्, शब्दस्तु परतन्मात्राख्यः परव्योममहाभूतमयः परमेश्वरस्य पञ्चब्रह्मविन्यासे वक्त्रमुच्यते" (पृ. १०४) इति च तत्र भट्टोत्पलः कस्यचिद्वचनं समुद्धरति । नादकारिकाव्याख्यायामघोरशिवोऽप्याह—'स्थूलस्य पाशरूपस्य मायीयस्य शब्दस्य शिवादिशुद्धवस्तुप्रतिपादकत्वासंभवात् शुद्धस्य मन्त्रतन्त्रात्मनः शब्दस्य कारणत्वेनाऽप्येषा (महामाया) सिद्धेत्याह.....ततश्चाङ्गारस्थानीयेष्वेषु शब्देष्वभिव्यक्ता अग्निस्थानीयाः सूक्ष्मा मन्त्रशब्दाः कार्यकरा भवन्तीत्युक्तं श्रीमन्मतङ्गादौ" (पृ. २२४) इति ।

## जीवस्याप्यवस्थात्रयम्

यथा शिवः कृत्यभेदादुपचारेण शक्तोद्युक्तप्रवृत्तावस्थासु स्थितो निष्कलः, निष्कलसकलः, सकल इति; लयभोगाधिकारावस्थ इति चोच्यते, तथैव जीवोऽपि केवलावस्थः सकलावस्थः, अमलावस्थश्च सन् लयभोगाधिकारावस्थासु प्रविशतीति—"तथाहि विमलोदारगम्भीरे चिन्महोदधौ । स्वात्मनि प्रविलीयन्ते तेनैके समधिष्ठिताः ॥' इत्यादिना, "ततः स तेषामेकोऽपि लयभोगाधिकारिणाम् । अधिष्ठातृतया भेदमौपचारिकमृच्छति ॥" इत्यन्तेन ग्रन्थेन रत्नत्रये (श्लो. २८४-२८८) वर्ण्यते ।

## शिवस्य सकलं स्वरूपम्

एतदर्थं जीवः शिवस्य सकलं स्वरूपं [२]मूर्तिरूपमाश्रयते । "अधिकारावस्थायां कार्यभेदादष्टत्रिंशत्कलाभेदभिन्ना शक्तिरेवास्य मूर्तिः । तद्योगादेव चासौ सकलः प्रोच्यते" (पृ. १३३) इत्यघोरशिव आह । सकलस्य स्वरूपस्य साक्षात्काराय स मन्त्रानाश्रयते । निर्मलत्वात् प्रकाशितज्ञानक्रिया एते मन्त्रा मननादिधर्मयोगाच्छुद्धविद्यातत्त्वाश्रितत्वाच्च रौरवादौ शैवशास्त्रे मन्त्रतत्त्वमित्युच्यन्ते (पृ. १२७) । प्रतिमाचित्रादाविव मन्त्रात्मके शब्देऽभिव्यक्ताः शिवादिशब्दवाच्या एवैते फलदा भवन्ति (पृ. १३१) । यच्छ्रूयते— "अनुग्रहाय लोकस्य शिवो मन्त्र इति श्रुतिः । या त्वनुग्राहिका शक्तिः सा मन्त्रत्वमिहागता ॥" इति, "मननात् सर्वभावानां त्राणात् संसारसागरात् । मन्त्ररूपा हि तच्छक्तिर्मननत्राणधर्मिणी ॥" इति च । यतो हि प्रतिमादिषु चित्रादिष्विव भगवान् मन्त्रेषु मातृकादिषु यन्त्रादिषु चावतरति । अवतरणं चात्रोद्योगावस्थापरित्यागेन प्रवृत्तत्वम् ।

---

१. अत्रत्यौ १०६, १११ श्लोकौ नारदीयपुराणेऽपि दृश्येते (१।६३।११०-१११) ।

२. मूर्तिः शक्त्यन्तगोचरा (पृ. ११३), ध्येयाकाराभिव्यक्तां शक्तिरूपां मूर्तिमधिष्ठाय (पृ. १३३) इत्यादिना च मूर्तिशब्दोऽयमत्र व्याख्यातः ।

एतच्च भगवतः सकलं स्वरूपमेव। भगवत्यास्त्रिपुरसुन्दर्याः श्रीचक्रेऽवतारश्च "एतच्चक्रावतारं तु कथयामि तवानघे" (१।९) इत्यादिना योगिनीहृदये चक्रसङ्केते प्रोच्यते।

अत्र—"मूर्तिस्तद्वांश्चेति हि लेशादुक्तिश्च शक्तिशक्तिमतोः" इत्येवं तत्त्वसंग्रहेऽतिसंक्षेपेण शक्तिशक्तिमतोः स्वरूपं प्रदर्श्यते। "शक्तिर्मूर्तिस्तस्य हि", "मूर्तिमधिष्ठाय हरः पुरुषाणां परहितैककृत् शम्भुः। कुरुते तु भुक्तिमुक्ती", "आसनं मूर्तिरावाह्यमेतत् त्रितयमध्वनि। व्याप्यव्यापकभावेन ज्ञात्वा यजनमारभेत्॥ आसनं शुद्धविद्यान्तं मूर्तिः शक्त्यन्तगोचरा। आवाह्यं शिवतत्त्वं स्यात्" इत्यादिषु स्थलेषु प्रयुक्तो मूर्तिशब्दः शक्तिवाचकः, तद्वांश्च शिव इति शक्तिशक्तिमतोर्लेशादुक्तिर्ननु सत्यैव।

## शक्तिः शक्तिमांश्च

तत्र शक्तिः—"सर्वज्ञानक्रियारूपा शक्तिरेका हि शूलिनः। इच्छाज्ञानक्रियाद्या यत्प्रभवाः कार्ययोनयः॥" इति वचनानुसारमेकैव सती इच्छाज्ञानक्रियादिरूपेण बहुधा भिद्यते। "एक एव शिवस्तद्वच्छक्तिरप्यविकारिणी। लयभोगाधिकारेषु तौ हि चिन्मात्ररूपिणौ॥" इत्यनेन च एकस्यैव शिवस्य तस्याः शक्तेश्च औपचारिका भेदा उच्यन्ते। एते भेदाश्च तत्रैव वर्णिता एवम्—"एकैव खलु चिच्छक्तिः शिवस्य समवायिनी। त्रिविधोपाधिसंभेदाल्लयभोगाधिकारिणी। तयैतयाऽभिसम्बन्धादेको देवस्त्रिधा भवेत्॥ शिवः सदाशिवोऽधोशो लयभोगाधिकारवान्।" इति। शक्तेर्लक्षणं चात्र शक्तिरप्रतिघोदारेत्यादिश्लोकेषु विस्तरेण वर्ण्यते॥ "कामानपि बहूनेकः कल्पवृक्षः प्रयच्छति। चिन्तामणिश्च विविधानचिन्त्यमहिमा यथा॥ तथाऽनाहितसंस्कारविशेषकस्वरूपिणी। चिदचिन्त्या विभोः शक्तिरशेषार्थक्रियाविधौ॥" इत्यादिना च शक्तेर्माहात्म्यातिशयस्तत्र प्रदर्शितः। अत्रैव श्रीकण्ठेन चिदद्वयवादोऽपि विस्तरेण समालोच्यते।

शिवशक्त्योरभेदस्तु नात्र स्वीक्रियते। श्रीकण्ठेन हि—"तयोर्भेदोऽधुनोच्यते" इत्यादिना शक्तिशक्तिमतोर्भेदो युक्तिपुरस्सरं साधितः। तथा हि—"परानपेक्षं रूपं यद्विज्ञानं शिवसंज्ञितम्। तस्य शक्तिं परापेक्षं रूपमाहुर्विपश्चितः॥ आकारद्वयसंवित्तिरशेषस्यापि वस्तुनः। परापेक्षानपेक्षाभ्यामस्ति शक्तिः शिवाश्रया॥....तेन शक्तिः परापेक्षं रूपमीशस्य युज्यते।" इत्यादिना परापेक्षानपेक्षाभ्यां शिवशक्त्योर्भेदस्तत्र साध्यते। "न तु शक्तिः परापेक्षा वस्तुतोऽस्तीति केचन" इत्यादिना च स शक्तिशक्तिमतोरभेदवादिमतं तिलशः खण्डयति, "अनन्यापि विभिन्नाऽतः शम्भो सा समवायिनी" इत्यादिना च प्रकरणमेतदुपसंहरति। अत्र च—"द्वे शक्ती समवायिन्यौ शिवे ज्ञानक्रियात्मके॥ आद्या तु संविद् विज्ञानं क्रिया कुण्डलिनी परा। ज्ञानशक्त्या विजानाति क्रियया कुरुते जगत्॥ क्रिया हि फलदा पुंसां न ज्ञानं स्यात् फलप्रदम्। ताभ्यां न विरहस्तस्य ते च न स्तः शिवं विना॥" इत्येते श्लोका रत्नत्रयोया विशेषतोऽवधेया विपश्चिद्भिः।

## भोगमोक्षौ

परहितैकदृक् शम्भुः पशूनां भुक्तिमुक्ती सम्पादयतीत्युक्तम्, बन्धमोक्षकरः शिव इति च। तत्र भोगकारिकया भोगः, मोक्षश्च मोक्षकारिकयाऽत्र प्रतिपादितः। परमोक्ष-

निरासकारिकासु पक्षान्तरीयं मोक्षस्वरूपं समालोचितम्। तदाधारेण किञ्चिदिवात्र भोगमोक्षयोः स्वरूपं विविच्यते। भोग्य-भोग-भोगसाधनादयः शब्दा [1]अन्यत्र व्याख्याता अस्माभिः। भोगार्थं तनुकरणभुवनान्यपेक्षितानि भवन्ति। तत्र शुद्धानि तानि महामायाप्रसङ्गेन, शुद्धाशुद्धानि च मायाप्रसङ्गेन विवृतानीत्यवशिष्टान्यशुद्धानि तानि सांख्यप्रक्रियासंमतानि प्राकृतानि साम्प्रत मतभेदप्रदर्शनपुरस्सरं प्रतन्यन्ते।

त्रयो गुणास्तथाप्येकं तत्त्वमिति निर्दशितं प्राक्। गुणत्रयतो विषयाध्यवसायरूपिणी धीर्भवति। अस्या बुद्धेर्धर्माद्यष्टगुणत्वं सिद्धयादिप्रत्ययभेदश्च वर्णित एव। बुद्धितत्त्वादहङ्कारो न केवलमभिमानात्मकः, अपि तु जीवनसंरम्भगर्वरूपो जायते। सात्त्विकराजसतामसभेदः स [2]वैकारिकतैजसभूतादिनामभिः प्रोच्यत इत्येकः पक्षः सांख्यकारिकासंमतः कुमारेण निर्दिश्यते। केचिद् वैपरीत्यमिच्छन्ति, स च तैजसवैकारिकभूतादिकेति ग्रन्थपाठश्चेत्याहुरिति पक्षं च स एवोपन्यस्यति। अघोरशिवः सर्वत्रामुमेव पक्षमाश्रयते। "तैजसादिकनामानः क्रमशः सात्त्विकादयः" इति भोगकारिकावचनमपि तदनुगुणम्। योगिनीहृदयदीपिकाधृते [3]स्वच्छन्दसंग्रहवचनेऽप्ययमेव क्रमोऽङ्गीकृतः। सांख्या [4]अन्तःकरणत्रयस्य "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" इति संगिरन्ते, अत्र तु अहङ्कारस्य संरम्भाख्यात् प्रयत्नात् शारीराः पञ्च दश वा वायवश्चेष्टन्ते। यथाह पञ्चकर्मकृत इत्यादिश्लोकव्याख्यायामघोरशिवः—"जीवनाय शरीरधारणार्थं प्रणयनापनयनादिपञ्चकर्मकृतस्तत्तद्वृत्तिभेदेन प्राणापानादिसंज्ञाभाजो वायोः प्रवर्तकः संरम्भात्मको यः प्रयत्नः, सोऽहङ्कारवृत्तिः" इति, "पञ्चकर्मकृत इति च प्राधान्यादुक्तम्, उद्गारादिकर्तृत्वेन चास्य वायोः श्रवणात्" (पृ. २११) इति च। अहङ्कारस्य करणस्कन्धः पञ्चप्राणात्मकः, प्रकृतिस्कन्धश्च सात्त्वराजसतामस इत्यभिनवगुप्तोऽप्याह (तन्त्रा. ९।२३१-२३३)।

"तैजसाख्यादहङ्काराद् राजसाच्चलस्वभावं मन उत्पद्यते, वैकारिकात् सात्त्विकात् प्रकाशलाघवोपेतमिन्द्रियदशकम्। भूतादेस्तामसात् तमोबहुलानां तन्मात्राणामुद्भव इति। तैजसात् सात्त्विकात् स्वच्छं लघूत्पद्यते मन इत्यन्ये। सात्त्विकसहकृताद् वैकारिकाद्

---

१. लुप्ता. उपो. १६५-१६६ पृष्ठे द्रष्टव्ये।

२. कुमारोऽत्र तत्त्वप्रकाशस्यामुमेव पाठमङ्गीकरोति। गुरुदेवस्तु—"सात्त्विकस्तैजसो नाम वैकारी राजसः स्मृतः। भूतादिस्तामसस्तेऽपि पृथक् तत्त्वान्यवासृजन्॥" इत्युक्त्वा—तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि। भूतादेस्तन्मात्राण्येषां सर्गोऽयमेतस्मात्॥" इत्येवं तत्त्वप्रकाशवचनं प्रमाणयति (गु. प. क्रि., पृ. १३)। "तैजसानि शरीराणि" इति महाभारतवचनमपि तैजसः सात्त्विको गुण इति प्रज्ञापयति।

३. दीपिकाभाषानुवादसहितेऽस्मदीये योगिनीहृदयसंस्करणे—"सोऽयं तैजसवैकारिभौतिकाख्यास्वरूपतः" (पृ. १८८) इति वचनं तत्रत्यं द्रष्टव्यम्।

४. "अन्येऽन्तःकरणं प्राणमिच्छन्ति व्यक्तचेतनम्" (श्लो. ३०) इति भोगकारिकावचनं सांख्यमतं सूचयन्निव दृश्यते। व्यक्तचेतनमिति विशेषणं तु लोकायतिकपक्षं ख्यापयति। तथैव व्याख्यातमघोरशिवेन।

राजसाद् बुद्धीन्द्रियाणामुत्पत्तिः, ज्ञानसाधनत्वात् । तामससहकृताद् वैकारिकात् कर्मेन्द्रियाणामिति । सांख्याः सात्त्विकादेवाहङ्कारादेकादशेन्द्रियाणाम्, तामसात् तन्मात्राणामुत्पत्तिं मन्यन्ते" इति कुमारो विवृणोति । अघोरशिवस्तु—"तैजसादहङ्कारान्मनोबुद्धीन्द्रियाणि जायन्ते, वैकारिकात् कर्मेन्द्रियाणि, भूतादेरपि तन्मात्राणीत्यर्थः । न च तैजसतो मन एव वैकारिकादुभयरूपाणीति व्याख्येयम्" इत्याह । उत्पत्तिरहङ्काराच्चित्तबहिष्करणभूतयोनीनामिति वचनं विवृण्वंश्च स एवमेवाह—"तत्र मनसो बुद्धीन्द्रियाणां च सात्त्विकात् तैजसाख्यादहङ्कारस्कन्धादुत्पत्तिः, कर्मेन्द्रियाणां तु राजसाद् वैकारिकाख्यात्, भूतयोनीनां च तन्मात्राणां तामसाद् भूतादिसंज्ञादेवं त्रिविधादहङ्कारादेषामुत्पत्तिः" इति । "बुद्धीन्द्रियद्वारेण तैजसेनाहङ्कारेणात्मनो ज्ञानशक्तिरुन्मील्यते । वैकारिकेणापि कर्मेन्द्रियद्वारेण क्रियाशक्तिरुन्मील्यते" इत्यपि स एवाह । एतच्च मतं भोगकारिकानुगुणम् । तदुक्तं तत्र—"समनोबुद्धिदेवानां गणो यस्मात् प्रकाशकः । तस्मात् स सात्त्विकाज्जातः स्वानुरूपादहङ्कृतः ॥" इति, "राजसाद् वैकृताद् वर्गः कर्माक्षाणां तु कर्मकृत्" इति, "मात्रासंघोऽप्यहङ्काराद् वर्गद्वयविलक्षणः । प्रकाश्यस्तामसस्तस्माज्जातो भूतादिसंज्ञकात् ॥"इति च । अयमेव पक्षस्तन्त्रालोकेऽपि (९।२३४,२५३,२७१) स्वीकृतः । अत्र स "तैजसादुभयम्" ( का. २५) इति सांख्यकारिकामतमपि स्मरति । ततः स मनसो राजसाहङ्कृतिजन्यत्वमिति पक्षम्; मनसः सात्त्विकात्, बुद्धिकर्मेन्द्रियाणां राजसादहङ्काराज्जन्मेति पक्षम्; खेटपालस्य कर्मेन्द्रियाणां राजसत्वमिति पक्षं च समुपस्थाप्य—"श्रीपूर्वशास्त्रे तु मनो राजसात् सात्त्विकात् पुनः । इन्द्रियाणि समस्तानि युक्तं चैतद्विभाति नः ॥" (तन्त्रा. ९।२७६-२७७) इत्याह । मतमेतन्नास्मभ्यं रोचते । "तत्त्रिधा तैजसात् तस्मान्मनोऽक्षेशमजायत । वैकारिकात् ततोऽक्षाणि तन्मात्राणि तृतीयकात् ॥" (१।३१) इति हि तत्रत्यं वचनम् । सांख्यकारिकापद्धत्या तैजसपदं राजसतया संयोज्याभिनवगुप्त एवं वदति, जयरथश्चान्यत्र (९।२७४-२७५)—"सात्त्विकादिति तैजसशब्दाभिहितात्,.... [1]राजसादिति वैकारिकशब्दाभिहितात्" इति व्याकुर्वाणोऽपि प्रसङ्गेऽस्मिन् तद्व्याख्यानं न स्मरति । वस्तुतो मनसः सात्त्विकाहङ्कारजन्यत्वम्, बुद्धिकर्मेन्द्रियाणां राजसत्वम्, तन्मात्राणां तामसत्वं मालिनीविजये वर्ण्यते ।

मनसो विभुत्वानुमानं कौमारिलोक्तं निरस्यात्र तस्याणुत्वं साध्यते । बुद्धीन्द्रियाणां नैयायिकोक्तं भौतिकत्वं व्युदस्य सांख्योक्तमाहङ्कारिकत्वं तेषां स्वीक्रियते । नैयायिकादयः कर्मेन्द्रियाणि नेच्छन्ति, तेषां पक्षश्चात्र बहुशः समालोच्यते । भ्रूक्षेपादीनां कर्मेन्द्रियत्वपक्षो निरस्यते, "आनन्दादिभिरेतैस्तु कर्मभिः परिभाषितैः । कर्मेन्द्रियाण्यतो नैषामानन्त्यं कर्मणां वशात् ॥" इति भोगकारिकावचनानुसारं च कर्मेन्द्रियाणामानन्त्यं प्रत्याख्यायते । "एतानि स्थानमात्राणि बुद्ध्यक्षाणीति मा कृथाः । स्थानेषु सत्सु वैकल्यान्न संविज्ज्ञायते यतः ॥" इति वचनेन वागादीन्द्रियाणि वचनादीनां करणानि, न त्वधिष्ठानानीत्यवगन्तव्यम् । तन्मात्रशब्दस्य च—"मात्रशब्देन भूतसंश्लेषो भूतभावेन परिणामो

१. अत्रैव—"वैकारिकशब्दाभिधेयात् सात्त्विकादहङ्कारात्" (९।२७४-२७५) इति व्याकुर्वन् जयरथो मतान्तरमपि निर्दिशति ।

वा व्युदस्तः। केवलाः शब्दादयः सूक्ष्मत्वेनावस्थितास्तन्मात्राणीत्यर्थः" (पृ. ९६) इति व्युत्पत्तिरत्र प्रदर्श्यते।

"भूतानि पञ्च तेभ्यो भवन्ति तान्येकगुणवृद्धया" इत्यत्र तन्मात्रेभ्यो भूतानामुत्पत्तिं भोजदेवो वर्णयति। वचनमेतत् कुमार एवं व्याचष्टे मतभेदप्रदर्शनपुरस्सरम्—[1]"शब्दतन्मात्रात् शब्दैकगुणमाकाशमुत्पद्यते, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राच्छब्दस्पर्शगुणो वायुः, उक्ततन्मात्रद्वयसहिताद् रूपतन्मात्रात् शब्दस्पर्शरूपगुणं तेजः, उक्ततन्मात्रसहिताद् रसतन्मात्रात् चतुर्गुणा आपः, शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्रोपादानकारणात् शब्दस्पर्शरूपरसगन्धात्मकपञ्चगुणा पृथिवी समुत्पद्यत इति। **अपरे** केवलेभ्यस्तन्मात्रेभ्यः केवलानि भूतानीत्याहुः। **अन्ये** तु शब्दतन्मात्रादाकाशस्पर्शतन्मात्रावुत्पद्येते, स्पर्शतन्मात्राद् वायुरूपतन्मात्रौ, रूपतन्मात्रात् तेजोरसतन्मात्रौ, रसतन्मात्राद् जलगन्धतन्मात्रौ, गन्धतन्मात्रात् पृथिवीति। **परे** शब्दतन्मात्रादाकाशः, तद्द्वयसहितात् स्पर्शतन्मात्राद् वायुः, तत्त्रयसहिताद् रूपतन्मात्रात् तेजः, तच्चतुष्कसहिताद् रसतन्मात्रादापः, तत्पञ्चकसहिताद् गन्धतन्मात्रात् पृथिवीत्याहुः। **अपरे** शब्दतन्मात्रादाकाशः, तस्मात् स्पर्शतन्मात्रम्, तस्माद् वायुः, तस्माद् रूपतन्मात्रम्, तस्मात्तेजः, तस्माद् रसतन्मात्रम्, तस्मादापः, ताभ्यो गन्धतन्मात्रम्, तस्मात् पृथिवीति ब्रुवते" (पृ. ९६-९७) इति।

अत्राघोरशिवः—"शब्दैकगुणमाकाशम्। शब्दस्पर्शगुणो वायुः। शब्दस्पर्शरूपगुणोऽग्निः। शब्दस्पर्शरूपरसगुणमम्भः। शब्दादिगन्धान्तपञ्चका पृथिवी" (पृ. ९७) इति पक्षं मृगेन्द्रागमप्रामाण्येनाङ्गीकरोति, आकाशविशेषगुणः शब्द इति वैशेषिकादीनां मतं च मृगेन्द्राधारेणैव निरस्यति। तत्त्वसंग्रहवृत्तौ भोगकारिकावृत्तौ च स एनामेव पद्धतिमनुसरति।

एवं मायावृतो मलिनोऽणुः सकलः स्वकर्मानुसारं कलादिपृथिव्यन्ततत्त्वसमाहाररूपं सूक्ष्मशरीरमाश्रित्य संसारेऽस्मिन् पर्यटन् नानाविधान् भोगान् भुङ्क्ते यावद् भगवतस्तिरोभावकरी शक्तिस्तं न परित्यजति। कर्मपरिपाकवशात् शक्तिपातमहिम्ना समुपजाते कर्मसाम्येऽभिव्यक्तायामनुग्रहशक्तौ तु सा निवर्तते। ततो भोगेभ्यो विरक्तो जीवो मोक्षमधिगन्तुं प्रयतते।

मोक्षश्चात्र अपवर्ग-निर्वाण-निःश्रेयस-परमव्योम-महाविभूति-मुक्ति-मोक्षप्रभृतिभिः पदैर्विवृतः। विभिन्नेषु भारतीयेषु दर्शनेष्वेते शब्दाः प्रयुज्यन्ते। अत्र कुमारः—"शरीराद्युपाधिविरहाज्जीवात्मनः शिवस्वभावस्य घटाकाशस्य तदुपाधिघटविनाशे परमाकाश इव परमेश्वरे शिवे लयोऽपवर्गः" (पृ. ११) इति, "महत्सौख्यनामकोऽपवर्गः" (पृ. १५)

---

१. अयमेव पक्षः सांख्यतत्त्वकौमुद्यामङ्गीकृतः "पञ्चभ्यः पञ्च भूतानि" (का. २२) इति वचनव्याख्यानावसरे। तथाहि—"तत्र शब्दतन्मात्रादाकाशं शब्दगुणम् शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद् वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात् तेजः शब्दस्पर्शरूपगुणम्, शब्दस्पर्शरूपतन्मात्रसहिताद् रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायते" इति।

इति च तं निदर्शयति। प्रीत्यानन्दशब्दौ विवृण्वन् स वक्ति—"ननु शिवस्यानन्दमयत्वे प्रीत्यात्मकसत्त्वगुणरूपत्वेन सगुणत्वात् परिणामादिदोषप्रसङ्गः,⋯नैवम्, प्रीत्यानन्दशब्दयोर्भिन्नार्थत्वात्। तथाहि—विषयेन्द्रियसम्प्रयोगजन्यानित्यसातिशयसुखं प्रीतिशब्देनोच्यते, सततैकरूपनित्यनिरतिशयात्मस्वभावसुखमानन्दशब्दवाच्यमिति नोक्तदोषावकाश इत्येके। अन्ये तु सत्त्वगुणे निर्मले पुण्यहेतुना विषयेन्द्रियसम्प्रयोगेण परिणते नित्यसुखमेव प्रतिबिम्बितं प्रीतिशब्देनोपदिष्टम्, एतस्यैवानन्दस्येति श्रुतेः। सत्त्वगुणस्य न सुखात्मता, सुखप्रतिबिम्बाश्रयतया सुखरूपत्वाभिधानमिति मन्यन्ते" (पृ. ६) इति। सर्वमेतत् कुमारदेवीयं प्रतिपादनमघोरशिवस्य "अद्वैतवासनाविष्टैः" इत्याक्षेपस्यैव समर्थकम्।

कुमारदेवोऽन्यत्र—"अर्हिस्यदेहाद्युत्पत्तिर्मोक्षमाहुर्दिगम्बराः, ⋯शरीरपरिमितस्यात्मनः शरीरनाशे नक्षत्रादिवदवस्थानं निःश्रेयसमित्यार्हतैकदेशीयैरुक्तम्, शुद्धचित्तसन्तानोत्पत्तिरपवर्ग इति सौगताः⋯वैभाषिक-सौत्रान्तिक-ज्ञानाद्वैतवादिनो बौद्धाः। शुद्धचित्तसन्ततेरपि विनाशोऽपवर्ग इति शून्यवादिनः" (पृ. १०८-११०) इत्येवमार्हतसौगतसंमतमपवर्गं निःश्रेयसं मोक्षं च प्रदर्शयति। "मोक्षावस्थायां शरीरेन्द्रियाद्यभावेऽप्यात्मगुणनित्यसुखविषयबुद्धिसन्ततिसंभवं भगवान् भट्टपादो मन्यते" (पृ. ६३) इत्येवं स भट्टकुमारिलप्रोक्तं मोक्षस्वरूपं सूचयति। स एव निर्वाणपदमेवं व्याचष्टे—"अपक्षयलक्षणविनाशप्रतिषेधो वा निर्वाणम्। नितरां वानम् अपक्षयो न्यूनत्वम्, तन्नास्ति, सततैकरूपत्वात्" (पृ. ७) इति। "वृत्तिसाध्या प्रीतिः पुरुषार्थः। स काम एव, नान्यो मोक्षादिः" (पृ. १०७) इति चार्वाकपक्षं समुपस्थाप्य समालोच्य च कुमारो मोक्षस्यैव परमपुरुषार्थत्वं साधयति। किं तस्य स्वरूपमिति जिज्ञासायां तु मुक्तिं नित्यानन्दानुभवलक्षणां प्रदर्शयन्, सुखचिदात्मको मोक्ष इति वदन्, मोक्षः शिवसमानतारूप इत्यत्र च शिवेन समानता निर्विशेषताऽविवेकता रूपं स्वरूपं यस्य स शिवसमानतारूपः, सायुज्यलक्षण इति यावदिति व्याकुर्वंश्च स सत्यमद्वैतवादमेवानुसरति, न तु सिद्धान्तसम्मतं द्वैतवादम्। अघोरशिवो हि—"साम्यरूपं मोक्षं भजन्तीत्यर्थः। न तु शिवात्मन्यैक्यं ते प्रयान्तीति व्याख्येयम्, अद्वैतस्य प्रागेव निषेधात्" (पृ. १९६) इत्येवं स्पष्टमेवाद्वैतवादं खण्डयति।

क्लेशमुक्तः प्रसन्नात्मा मुक्त इत्यभिधीयते, मुक्तात्मानोऽपि शिवाः, मुक्तात्मानः सम्प्राप्तशिवसाम्या इत्यादिना मुक्तानां लक्षणमत्र वर्ण्यते। यद्यपि—'विद्याविद्येशत्वं चापरमुक्तिः परेह शिवसमता" (त. सं. ५१) इत्यत्र विद्यादिपदानां परमुक्त्यपेक्षया प्रेर्यत्वेऽपि परमोत्तीर्णत्वान्निर्मलत्वाच्च न पुनः संसारयोग इत्यपरमुक्तित्वमुक्तम्, शिवसाम्यमेव हि परमोक्ष इति, तथापि मन्त्रादयः परमुक्त्यर्हत्वान्मुक्तसंज्ञाभाज उच्यन्ते। मुक्ते तदैश्वर्योत्पत्तिरिति हि प्रवाहेश्वरवादिनः। "मुक्तेषु शिवाज्जातं माहात्म्यमनादिमध्यान्तम्" (श्लो. ५६) इति च तत्त्वसंग्रहकार आह। मुक्तस्त्वमल इति चाघोरशिवः। मोक्षः शिवसाम्यं सदाशिवादिपदप्राप्तिश्चेत्यनेनापि परापराख्योऽयं द्विविधो मोक्षः स्वीक्रियते। मोक्षः सप्तप्रकार इति तु मतङ्गपारमेश्वरे योगपादे वर्ण्यते।

"सा च शिवसाम्यरूपा मुक्तिर्न गोत्वादिजातिवदेका, अपि तु भिन्नैव प्रतिपुरुषगता, सादृश्यव्यतिरेकेण जातेरसंभवात्" इति, "मुक्तौ नैयायिकाद्युपगतसंविदभावोऽप्ययुक्तः" इति च वदन्नघोरशिवो नैयायिकाद्यभ्युपगतां जाति[२] सादृश्यव्यतिरिक्तां नाङ्गीकरोति, बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माणां नवानामत्यन्तं विमोक्षोऽपवर्ग इति वैशेषिकाद्यभिमतमपवर्गस्वरूपं च स न स्वीकरोति। सिद्धान्तिनो हि मुक्तस्य मलादिपाशाद्यपगमात् सर्वज्ञत्वसर्वकर्तृत्वादिकमुद्भवतीत्याचक्षते। तदुक्तं मोक्षकारिकायाम्—"मलादिपाशविच्छित्तिः सर्वज्ञानक्रियोद्भवः" (श्लो. ४४) इति। सर्वार्थदृक्क्रियात्मकशिवत्वव्यक्त्या शिवसाम्यरूपस्य मोक्षस्यैवानुग्रहरूपत्वमत्र प्रोच्यते।

मुक्तिपदमघोरशिवेन दर्शनान्तरमोक्षपरकतयाऽपि व्याख्यातम्, परमव्योमपदं च—"तं चानश्वरत्वेनापराकाशमातिशायिकं परमव्योमाख्यमागमज्ञाः प्राहुः" इत्यत्र परबिन्दुपरकतया योजितम्। नादकारिकाव्याख्यायां सः—"नादज्ञानादेव परमुक्तिसिद्धेः कथं दीक्षैव मोचिनीति श्रीमत्स्वायम्भुवादावुक्तम्" (पृ. २२४) इत्याशङ्क्य "ज्ञानस्यापि दीक्षाङ्गत्वेनैव मोक्षसाधनत्वान्न केवलस्य" (पृ. २४४) इति समादधाति। ज्ञानादेव मोक्ष इति हि वेदान्तिसांख्यादयो मन्यन्ते। तेषामपि मतं समालोच्याघोरशिवस्तत्र तत्र मलस्य दीक्षाख्येन व्यापारेण निवृत्तिरिति दीक्षैव मोक्षकारणमिति किल पक्षं नूनमत्र सर्वोपरि स्थापयति। अत्रैव मोक्षो नेश्वरकर्तृक इति मतं समालोच्यते, शिवादेवात्मनां मोक्ष इति पक्षश्च प्रतिष्ठाप्यते।

परशिवसाम्यरूपो मोक्ष इति खलु मोक्षस्य स्वरूपं सिद्धान्तिनोऽङ्गीकुर्वन्तीत्यसकृदवोचाम। परशिवसमता मोक्ष इति लक्षणे समतायां समुत्पत्ति-संक्रान्ति-आवेश-अभिव्यक्तिपक्षाः प्रादुर्भवन्ति। "तत्र महाव्रतिनः (कालामुखाः) उत्पत्त्या साम्यमभ्युपगच्छन्ति। मुक्तौ तावच्छिवसाम्यमस्ति। तच्च सर्वज्ञत्वादिरूपम्। तच्च तदैवोत्पद्यते। तस्माच्छिवगुणसदृशगुणोत्पत्त्यैव शिवसाम्यमिति। पाशुपताः [३]संक्रान्त्या साम्यमुप-

---

१. परमानन्दसंविद् देवी, संविदानन्दो देव इति।....देवता परमानन्दसंविदत्रोपदिश्यते। ....बोधस्वरूपवाची संवित् प्रोक्ता च देवता गुरुभिः" (पृ. ८-९) इत्यादिना संविदद्वयवादं स्थापयति कुमारः। चिदानन्दात्मिका च मुक्तिदशा शैवैः स्वीक्रियते, न नैयायिकादीनामिव ज्ञानादिशून्या पाषाणकल्पा। सोऽयं संविदद्वयवादो रत्नत्रये (श्लो. २०२-२३३) विस्तरेण निरस्यते। द्वैतवादिनो हि सिद्धान्तशैवा नैवाङ्गीकुर्वन्ति चिदद्वयवादम्। "संवित्सुखे परस्परमात्मनश्च भिन्ने आत्मगुणरूपे" इति नैयायिकमतं कथञ्चिदभ्युपगच्छन्तोऽपि ते मोक्षदशायां तयोरभावं नाङ्गीकुर्वन्ति। तत्र मुक्तेषु दृक्क्रियात्मकमैश्वर्यमभिव्यक्तीभवतीति ते ब्रुवते। अपि च, नित्यमुक्तोदिताचिन्त्यप्रभावा....चात्मनः" (पृ. १९२) इति वदन् रत्नत्रयकारः संवित्पदं शक्तिपरकतया योजयति, शक्तिशक्तिमतोश्च स भेदमेव साधयति।

२. अपोहवादं सादृश्यं वा समाश्रित्य नैके दार्शनिका नैयायिकाभ्युपगतां जातिं नाङ्गीकुर्वन्ति।

३. संक्रान्तिपक्षं सिद्धान्तशैवा नाभ्युपगच्छन्ति। अत्र पूर्वपक्षी प्रत्यवतिष्ठते—"स्वबोधसंक्रान्तिनिमित्तं गुरूणां शिष्यस्य विषय उपदेशेन दृष्टः" (पृ. २८६) इति। अत्र स

गच्छन्ति। कस्तूरिकाद्यामोदः पटादाविवेश्वरस्थं सार्वज्ञ्यादिकं मुक्तपुरुषे संक्रामति। तस्माच्छिवगुणसंक्रान्त्या साम्यमिति। कापालिकाः समावेशेन साम्यमुपगच्छन्ति। यथा ग्रहाः पुरुषेष्वाविशन्ति तथेश्वरगुणा मुक्तेष्वाविशन्ति। तस्माच्छिवगुणसमावेशेन साम्यमिति। शैवैकदेशिनोऽभिव्यक्त्या साम्यमुपगच्छन्ति। शिवस्येव जीवानामपि सार्वज्ञ्यादिकं पूर्वमेवास्ति, किन्तु संसारदशायां मलरुद्धं सन्न प्रकाशते। मुक्तौ तु मलविगमेनाभिव्यज्यते। तस्मात् स्वीयगुणाभिव्यक्त्या शिवसाम्यमिति" (पृ. १५६-१५७) इत्येवमिमे चत्वारः पक्षाः शैवपरिभाषायां प्रदर्शिताः। अत्रान्तिमं पक्षं सिद्धान्तशैवाः स्वीकुर्वते। मोक्षदशायामपि जीवः शिवात् पृथगेव सन्तिष्ठते। अतो मोक्षेऽपि पशोः शिवात् पृथक्सत्तास्वीकाराद् द्वैतमिदं[1] दर्शनम्।

आत्मा यदा कर्मसाम्यमलपरिपाकाभ्यां युज्यते, तदा तस्मिन्ननुग्रहाख्या पारमेश्वरी शक्तिः पतति। शक्तिपात इति समाख्यया तदागमेषु परिचीयते। कर्मसाम्यं नाम समवेतयोर्विरुद्धफलयोः पुण्यरूपयोरपुण्यरूपयोः पुण्यापुण्यरूपयोर्वा युगपत्[2] फलौन्मुख्यम्। इदं च तिरोधानशक्तिनिवर्तनद्वाराऽनुग्रहशक्तिनिपाते हेतुः। अस्य च शक्तिपातस्य संसारविद्वेषमुमुक्षाशिवभक्त्यादीनि[3] चिह्नानि। एतैश्चिह्नैरञ्चितं संजातशक्तिपातं शिष्यं विलोक्य गुरुस्तं दीक्षयति, [4]षडध्वशुद्धिमुखेन क्रियाकलापेन तस्य मलान् विशोधयति।

दीक्षयैव मोक्षः प्राप्यत इति पक्षोऽघोरशिवपद्धत्या पूर्वमेवास्माभिः साधितः। शैवेषु वैष्णवेषु चागमेषु कर्मणां भोगहेतुत्ववत् कर्मसाम्यावस्थायां [5]मोक्षहेतुत्वमपि स्वीक्रियते। आचार्यशिष्ययोरुभयोरपि सम्बन्धसम्पादकोऽत्र शिवस्वरूपो मन्त्र एवाभिमन्यते। शक्तिपातसमन्वितो हि शिष्यो देशिकमनुप्राप्य दीक्षाक्षपितकल्मषो निर्मलः सन्

स्वायम्भुववचनमपि प्रमाणयति। "परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते" (१।७) इति चाह पातञ्जलयोगभाष्यकारः। "गुरोर्नियोगतः शास्त्रे स्वातन्त्र्यं गुरुवद् भवेत्। संक्रान्तिवचनस्यार्थस्तत्रैव गुरुणोदितः॥" इति च तत्र सद्योज्योतिश्शिवाचार्यनिर्दिष्टं समाधानम्।

१. डॉ. कान्तिचन्द्रपाण्डेयविरचिते शैवदर्शनबिन्दौ (पृ. २५) अस्मदीयायामागममीमांसायां (पृ. ४०, ५१-५२) चायं विषयो व्याख्यातो द्रष्टव्यः।

२ आगममीमांसाया ५२ पृष्ठस्था १ टिप्पणी द्रष्टव्या। "समे कर्मणि संजाते" इति किरणागमवचनमुद्धरता शैवपरिभाषाकारेण तदेतत् प्रतिपाद्यते। अघोरशिवस्तु मतमेतत् खण्डयति, अन्यथा च प्रकरणमेतदुपस्थापयतीति पृ. २००-२०१ इत्यत्र वर्णितो विषयो विवृतः पूर्वमेवास्माभिः।

३. शक्तिपातचिह्नान्यत्र—"येषां शरीरिणां शक्तिः" इत्यादिना वचनजातेन दर्शितानि (पृ० १४१-१४२, १४९-१५०)।

४. आगममीमांसाया ५२ पृ., २ टि. अवलोकनीया। लुप्ता. उपो. (पृ. १७४-२०२) च विस्तरेण विवृता प्रक्रियेयम्।

५. आगममीमांसाया ५२ पृष्ठस्थां ३ टिप्पणीमवलोकयत।

शिवसाम्यं लभते। शिवस्येव जीवानामपि सार्वज्ञ्यादिकं पूर्वमेवास्ति। किन्तु संसार-दशायां मलरुद्धं सन्न प्रकाशते। मुक्तौ तु मलविगमेनाभिव्यज्यते। तस्मात् स्वीय-गुणाभिव्यक्त्या शिवसाम्यमिति सिद्धान्तशैवाः सत्यमभिव्यक्त्या शिवसाम्यमङ्गीकुर्वते।

उत्पत्ति संक्रान्ति-आवेश-विलयादयः पक्षा यथा निरस्यन्ते, तथा मोक्षकारिका-परमोक्षनिरासकारिका-तद्व्याख्यानादिषु द्रष्टव्यम्। तत्रोत्पत्तिपक्षः कालामुखानाम्, संक्रान्तिपक्षः पाशुपतानाम्, आवेशपक्षश्च वर्तते कापालिकानां शैवानामिति पूर्वोक्तशैव-परिभाषावचनतः स्पष्टीभवति। तारकाभुवने नक्षत्रमार्गेऽवस्थानं मोक्ष इति कस्यचि-न्मतं परमोक्षनिरासकारिकायां समालोच्यते। एतच्च मतमार्हतैकदेशिनामिति[1] कुमारदेववचनतो निश्चीयते। परिणतिवेदान्तिनो भास्करमतानुयायिनः, मायावादमतयः शाङ्करवेदान्तिनः, प्रदीपनिर्वाणवादिनश्च सन्ति बौद्धाः। हृदयप्रमाणकृच्च वर्तते लकुलीशशिष्यो मुसुलेन्द्रः। "परस्मिन्नकार्यात्मनि महाविभूत्यभिधाने घटादीनामिव मृदि लयो मोक्षः" (पृ. २९९) इति व्याकुर्वन् रामकण्ठो महाविभूत्यभिधानां मोक्षपदवीं निर्दिशति। एवमेवान्येऽपि पक्षास्तत्र व्याख्याताः। अत्र सर्वषामेषां पक्षाणां तदङ्गी-कुर्वतां च विशिष्टः परिचयोऽधुना आयाससाध्य इव दृश्यते।

रामकण्ठोऽत्र सर्वेषामेव मोक्षशास्त्राणां यथायथं प्रामाण्यमुररीकरोति। रुचीनां वैचित्र्याद्धि मतमतान्तराणि प्रवर्तन्ते, "त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे" इति, "नृणामेको गम्यस्त्वमसि पयसामर्णव इव" इति च दिशा सर्वे धर्माः सर्वाणि च शास्त्राणि तमेकमेव तत्त्वं प्रतिपादयन्तीति मत्वा "स्वधर्मे निधनं श्रेयः परधर्मो भया-वहः" इति च भगवद्वचनं स्मरन्तो मानवाः "द्रव्यप्रिया भवन्तो वै ज्ञाता नैव गुणप्रियाः" इति सद्योज्योतिश्शिवाचार्यस्याक्षेपं मनसिकृत्य द्रव्यलोभं परित्यज्य गुणप्रियाः स्युरित्येवास्याष्टप्रकरणात्मकस्य ग्रन्थसमूहस्याद्यतनीनं प्रयोजनमुत्पश्यामः। प्रवर्ततां नाम मानवीया जातिस्तदनुगुणमित्येव भगवान् शक्तिवान् शिवः प्रार्थ्यते।

## कृतज्ञताज्ञापनम्

एवमष्टप्रकरणस्थग्रन्थग्रन्थकर्तृव्याख्यातॄणां तत्स्मृतग्रन्थग्रन्थकाराणां च संक्षिप्तं परिचयम्, अत्र प्रतिपादितानां केषाञ्चन विशिष्टानां सिद्धान्तानां स्वरूपं च समासेन विरोधपरिहारसमालोचनपुरस्सरमुपस्थापितमिति तेन प्रीयतां परमेश्वरः। अस्मिन् शुभे कर्मणि कृतसहायानां सहृदयानां सुहृदामादरणीयानां विदुषां परमश्रद्धास्पदानां गुरूणां च स्मरणमवसरप्राप्तमत्र चर्च्यते। सर्वप्रथमं वयं तान् पूर्वाचार्यान्, आधुनिकांश्च ग्रन्थ-प्रणेतॄन् स्मरामः, यैः क्षुण्णेन हि पथाऽस्माभिरेषा विद्यायात्रा सम्पादिता। यत्र क्वचन मतान्येतेषां समालोचयतामप्यस्माकं चेतसि तान् प्रति समादरो नाणुमात्रमपि क्षणमपि तिरोबभूव। तदनु येषां कृपाभरेणागमिकदर्शनानुशीलनरुचिरस्मासु समुत्पन्ना, तेषां वन्दनीयचरणानां साम्प्रतं शिवभावमापन्नानां गुरुवर्याणां श्रीमतां गोपीनाथकविराजमहो-

---

१. "शरीरपरिमितस्यात्मनः शरीरनाशे नक्षत्रादिवदवस्थानं निःश्रेयसमित्यार्हतैकदेशीयैरुक्तम्" (पृ. १०९)।

दयानां चरणयोरयं शब्दसुमनोऽञ्जलिः समर्प्यते। ग्रन्थस्यास्य सम्पादने विनियुक्तानां संस्करणानां टिप्पण्यादिषु विनियुक्तानां ग्रन्थानां च सम्पादकान्, ग्रन्थस्यास्य प्रकाशनायानुज्ञायकाप्रदातॄन् संस्कृतविश्वविद्यालयकुलपतिचरान् डॉ. गौरीनाथशास्त्रिमहोदयांश्च साधुवादैः सभाजयामः। साम्प्रतं कुलपतिधुरां गुर्वीं वहतां श्रीमतां डॉ. वेङ्कटाचलन्-महोदयानां करकमलयोर्ग्रन्थमिमं त्वदीयमिति न्यायेन समर्पयामः। ग्रन्थसम्पादनकर्मणि विशेषत उद्धरणस्थलनिर्देशे कृतभूरिसहायं श्रीमन्तं जनार्दनशास्त्रिपाण्डेयमहोदयं ज्येष्ठ-भ्रातृकल्पं सादरं स्मरामः। संस्कृतविश्वविद्यालयस्य प्रकाशनाधिकारिणं डॉ हरिश्चन्द्र-मणित्रिपाठिमहोदयम्, गोयनकाविश्वनाथपुस्तकालयाध्यक्षं श्रीदेवमणियाज्ञिकमहोदयम्, तत्रत्यानन्यान् कार्यकर्तॄन्, रत्नामुद्रणालयस्य व्यवस्थापकांश्च धन्यवादशतैः सभाजयामः। अन्ते विविधानुक्रमणीसंयोजने कृतसहायां पुत्रीं सौ. सुषमानाम्नीं पुत्रं च चि. तरुणकुमारद्विवेदिनं शुभाशीर्वादशतैः संयोज्य विरमामोऽस्माद् वाग्व्यापारात् समादधतु सज्जना इति न्यायं विद्वत्सकाशं सविनयं स्मारयन्तः। इति शम्॥

श्रावणपूर्णिमा, संवत् २०४५ — विदुषां वशंवदः
२७–८–८८ ई. — **व्रजवल्लभद्विवेदो वाराणसीस्थः।**

# विषयानुक्रमणी

## उपोद्घाते



## तत्त्वप्रकाशे

## तत्त्वसंग्रहे

## तत्त्वत्रयनिर्णये



## रत्नत्रयं

## भोगकारिकायाम्

## नादकारिकायाम्



## मोक्षकारिकायाम्

## परमोक्षनिरासकारिकायाम्

## परिशिष्टे



———

# अष्टप्रकरणम्

१. तत्त्वप्रकाशो भोजदेवकृतः
कुमारदेवकृततात्पर्यदीपिकया अघोरशिवकृतवृत्त्या च संवलितः ।

२. तत्त्वसंग्रहः सद्योज्योतिश्शिवाचार्यकृतः
अघोरशिवकृतया लघ्वीविवृत्या सहितः ।

३. तत्त्वत्रयनिर्णयः सद्योज्योतिश्शिवाचार्यकृतः
अघोरशिवकृतया वृत्त्या समेतः ।

४. रत्नत्रयं श्रीकण्ठसूरिणा विरचितम्
अघोरशिवकृतया उल्लेखिन्या व्याख्यया सहितम् ।

५. भोगकारिका सद्योज्योतिश्शिवाचार्यकृता
अघोरशिवकृतया वृत्त्या संवलिता ।

६. नादकारिका नारायणकण्ठसुतभट्टरामकण्ठविरचिता
अघोरशिवकृतया व्याख्यया समेता ।

७. मोक्षकारिका सद्योज्योतिश्शिवाचार्यरचिता
नारायणकण्ठसुतभट्टरामकण्ठकृतया व्याख्यया सहिता ।

८. परमोक्षनिरासकारिका सद्योज्योतिश्शिवाचार्यकृता
नारायणकण्ठसुतभट्टरामकण्ठकृतया वृत्त्या समेता ।

———

# तत्त्वप्रकाशः

## श्रीकुमारकृतया तात्पर्यदीपिकया

## श्रीमदघोरशिवाचार्यप्रणीतया वृत्त्या च सहितः ।

**चिद्घन एको व्यापी नित्यः सततोदितः प्रभुः शान्तः ।**
**जयति जगदेकबीजं सर्वानुग्राहकः शम्भुः ॥ १ ॥**

### तात्पर्यदीपिका

नमः शर्वाय देवाय कारणत्रयहेतवे ।
निर्मलाय सदानन्दचित्स्वरूपाय शम्भवे ॥
शक्तिं सदाशिवं चेशं नत्वा देवीं सरस्वतीम् ।
तत्त्वप्रकाशतात्पर्यदीपिका क्रियते मया ॥

प्रारिप्सितस्यास्य शास्त्रस्याविघ्नेन परिसमाप्तिप्रचयगमनाद्यर्थम् इष्टदेवतास्तुतिं करोति—चिद्घन इति ।

नन्विष्टदेवतास्तुतिनमस्कारादेः शास्त्रपरिसमाप्तिप्रचयगमनादिहेतुता कुतोऽवगम्यते ? शिष्टाचारानुमितादागमादिति ब्रूमः । शास्त्राद्यारम्भे शिष्टैरिष्टदेवतास्तुतिनमस्कारादेः क्रियमाणस्य तदिष्टपरिसमाप्त्यादिहेतुतां विना न सम्भवः । तेनास्य तद्धेतुत्वम् । तच्चागमादेवावगम्यते, अन्यस्य प्रमाणस्यात्रासम्भवात् । तथा—"मङ्गलाचारयुक्तानां विनिपातो न विद्यते" इति स्मृतेश्च तदवगमः । तथा परिसमाप्तेः कादाचित्कतया कारणापेक्षा । तच्चान्यस्यासम्भवान्नमस्कारादिजनितो धर्मविशेष इति कल्प्यते । कथं तस्य तद्धेतुत्वमिति चेत्, उच्यते—नमस्कारादिः कायिको वाचिको मानसो वा धर्मविशेषं सम्पादयन् विघ्नहेतुभूतमधर्मं पर्यस्य परिसमाप्त्यादिहेतुतामधिगच्छति, तस्येष्टत्वादिष्टहेतुत्वाच्च धर्मस्येति । कथं तर्हि क्वचित् कृते नमस्कारे परिसमाप्त्यभाव इति चेत्, तद्वैगुण्यादिति ब्रूमः । यथा कारीर्यादौ वृष्ट्यादिसाधनेऽनुष्ठिते वृष्ट्याद्यभावात् तद्वैगुण्यकल्पना प्रतिबन्धकाधर्मप्राचुर्यकल्पना वा, एवमत्रापीति न विरोधः । कथं तर्हि नमस्काराद्यभावे क्वचित् परिसमाप्तिः, कारणाभावे कार्योत्पत्त्यसम्भवादिति चेत्, नैवम् । तत्र वाचिकनमस्काराभावेऽपि कायिकमानसादेरनुमेयत्वात्, अन्यथा परिसमाप्तेरसम्भव इति । ननु तर्हि स एवास्त्वत्रापि, किं वाचिकेन ग्रन्थप्राचुर्यसम्पादकेनेति चेत्, नैवम् । वाचिके प्रयोजनान्तरसम्भवेन तदुपादानात् । तथा हि—यस्तु विस्मृत्येष्टदेवतास्तुतिनमस्कारादिं श्रवणे प्रवर्तते, तेनाप्याद्यश्लोकत्रयपाठमात्रादेव नमस्कारः कृतो भवतीति प्रयोजनान्तरसम्भवात् तदुपादानमिति न कश्चिद् विरोधः ।

अथ पदार्थः—चिद्घन इति चैतन्यघनः, चैतन्यसारः, चिन्मात्र इति यावत्। "अथैष एव परमानन्दोऽनन्तरोऽपारो विज्ञानघनः" इत्यादिश्रुतेः, "आद्यन्तरहितं शुद्धं चिदानन्दमयं शिवम्" इत्यादिस्मृतेश्च भगवतः शम्भोश्चिद्रूपत्वं सिद्धम्। तथा शिवेन सूत्रकर्त्रा—"चैतन्यमात्मा" (१।१) इत्यनेन प्रथमसूत्रेणात्मनश्चैतन्यरूपत्वमुपवर्णितमित्युपपन्नं चिद्घन इति।

एक इति। अद्वितीय इत्यर्थः। "एकमेवाद्वितीयम्" (छा० उ० ६।२।१), "अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः"(अथ० उ० १) इत्यादिश्रुतेः। तथा—"एको रुद्रो न द्वितीयाय तस्थे" (३।२) इति श्वेताश्वतरे। "एक एव रुद्रो न द्वितीयाय तस्थे" (तै० सं० १।८।६।१) इति त्रैयम्बकाध्याये। नीलरुद्रे च—"सर्वो रुद्रस्तस्मै रुद्राय नमोऽस्तु" (तै० आ० १०।१६।१) इत्यादिनाऽद्वितीयत्वप्रतिपादनादुपपन्नं शिवाद्वितीयत्वमिति। न च प्रत्यक्षादिप्रमाणैरनेकार्थावभासादनुपपन्नं शिवाद्वितीयत्वमिति वाच्यम्, एकस्याप्यवस्थानभेदेनानेकधा भासनोपपत्तेः। यथैकस्यैव मृत्पिण्डस्य घटशरावकुम्भकुड्यमृदङ्गाद्यात्मनाऽवस्थानभेदवशेनानेकधा भासनम्, सुवर्णपिण्डस्यैकस्यैवाङ्गुलीयकरुचककटकमुकुटाद्यवस्थानभेदवशेन, एवमेकस्यैव सतो रुद्रस्य घटः सन् पटः सन् कुसूलः सन् अस्तीत्यादि प्रत्यक्षतोऽखिलरूपतयाऽवभासस्य "एकं सद् विप्रा बहुधा वदन्ति" (ऋ० १।१६४।४६), "एकं सन्तं बहुधा कल्पयन्ति" (ऋ० १०।११४।५) इत्यादिश्रुतितश्चावस्थानभेदवशेनानेकधा भासनमुपपद्यत इति न प्रत्यक्षादिविरोधसम्भवः, अपौरुषेयतयाऽसम्भवद्दोषेण स्वतःप्रमाणभूतेन प्रबलेन वेदराशिना शिवाद्वितीयत्वस्य सिद्धत्वात्, तद्विपरीतदुर्बलप्रत्यक्षादिसिद्धानेकत्वस्य बाध्यत्वाच्च। तथा हि वेदवाक्यानामपौरुषेयत्वं प्रतिपाद्यते। तेनाप्रामाण्यकारणानामज्ञानरागद्वेषादीनां वेदवाक्येऽसम्भवादप्रामाण्यासम्भवः। नहि शब्दे स्वतो दोषः सम्भवति, आप्तानाप्तवाक्ययोः प्रामाण्याप्रामाण्यनियमसम्भावनात्। नहि वक्तृगतदोषतदभावानुसारं विना स्वतो दोषगुणाभ्यां प्रामाण्याप्रामाण्ययोरभ्युपगमे तन्नियमः सम्भवति, आप्त्यनाप्त्योस्तदकारणत्वात्। नित्यस्य वेदराशेरनाप्तकृतत्वाभावेनाप्रामाण्यासम्भवात्, स्वतःप्रमाणत्वे सति तत्सिद्धशिवाद्वितीयत्वस्य प्रबलप्रमाणसिद्धत्वान्न प्रत्यक्षादिविरोधसम्भवः। न च कर्त्रभावेन गुणस्याप्यभावात् प्रामाण्यस्याप्यभाव इति वाच्यम्, व्युत्पन्नपदपदार्थस्य तद्वाक्यश्रवणसमनन्तरमेव तदर्थविषयप्रमोत्पत्तेरुपलम्भात्। गुणसद्भावश्च न प्रामाण्यकारणम्, अप्रामाण्यकारणभूतदोषपरिहारार्थत्वादिति। तथा तत्परवेदसिद्धत्वाच्च शिवाद्वितीयताप्रतिपादकस्य वाक्यस्य तत्र तात्पर्यं षड्विधलिङ्गसद्भावादवगम्यते। तदुक्तं न्यायविद्भिः—"आदिमध्यान्तसङ्गानमभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥" इति। एतानि लिङ्गानि रुद्राद्वितीयताप्रतिपादकश्रुतौ सन्त्येव।

तथा हि—"सर्वो वै रुद्रः" (म० ना० उ० १०।११), "पुरुषो वै रुद्रः" (म० ना० उ० १०।११), "सर्वो ह्येष रुद्रः" (तै० आ० १०।१६।१) इत्यादिमध्यान्तसङ्गानाख्यं तात्पर्यलिङ्गमुपलभ्यते। तथा "सर्वो वै रुद्रः" (तै० आ० १०।१६।१), "सर्वो ह्येष रुद्रः" (तै० आ० १०।१६।१) इत्यसकृदुपदेशादभ्यासलक्षणं च तात्पर्यलिङ्गं सिद्धम्।

तथा—"विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्" (म० ना० उ० १०।११), "सर्वो ह्येष रुद्रः" (तै० आ० १०।१६।१) इत्यादिश्रुतार्थस्वरूपं च तात्पर्यलिङ्गं सिध्यति। तथा "तमेवं विद्वानमृत इह भवति" ( तै० आ० ३।१।३ ), "विद्यया विन्दतेऽमृतम्" ( के० उ० २।४ ), "आत्मा ज्ञातव्यः", "तरति शोकमात्मवित्" ( छा० उ० ७।१।३ ), "न च पुनरावर्तते" ( छा० उ० ८।१५।१ ), "भूयश्चान्ते विश्वमायानिवृत्तिः" ( श्वे० उ० १।१० ), "य एवैक उद्भवे सम्भवे च" ( श्वे० उ० ३।१ ), "य एतं विदुरमृतास्ते भवन्ति" ( श्वे० उ० ३।१ ) इत्यादिभिः शिवात्मैकत्वज्ञानस्य फलश्रवणात् तत्प्रतिपादकश्रुतीनां तत्र तात्पर्यसिद्धिः। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (ई० उ० ७) इति स्तुत्यर्थवादसद्भावादेकत्वे तच्छ्रुतेस्तात्पर्यं सिध्यति। तथा—"य एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति, अविदुषस्त्वथ तस्य भयं भवति" (तै० उ० २।७) इत्यादिनिन्दार्थवादसद्भावाच्च तत्सिद्धिः। तथा—"सर्वो वै रुद्रः" ( तै० आ० १०।१६।१ ) इत्यादिवाक्यसिद्धं रुद्रस्य सर्वात्मकत्वं वाक्यान्तरेण "पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम्" ( श्वे० उ० ३।१५; ऋ० ८।४।१७) इत्यनेन विरुध्येत। तत्र 'पुरुषो वै रुद्रः" ( म० ना० उ० १०।११ ) इत्यविरोधोपपादनादुपपत्त्याख्यं च तात्पर्यलिङ्गं सिध्यति। तथा "सदेव सोम्येदमग्र आसीत्" ( छा० उ० ६।२।१ ) इत्यादिवाक्यान्तरसिद्धसदद्वितीयत्वविरोधं च परिहरद् "रुद्रः सन्" ( महाना० १३।२ ) इति वाक्यमुपपादकम्। तथा "वेदाहमेतं पुरुषं महान्तम्" ( श्वे० उ० ३।७ ) इत्यादिना "नान्यः पन्था अयनाय विद्यते" ( श्वे० उ० ३।७ ) इत्यन्तेन श्रुतिवाक्येन सिद्धमहापुरुषाद्वयत्वविरोधं च "रुद्रः सन् महः" (महाना० १३।२) इति वाक्यं परिहरदुपपादकम्। तेन सुतरां रुद्राद्वितीयत्वेऽस्याः श्रुतेस्तात्पर्यसिद्धिः। तदेतदनुवादसिद्धं शिवाद्वितीयत्वमाश्रयणीयम्, अन्यथा तदानर्थक्यादिति। तदुक्तमार्याकारेण—

अज्ञातोऽर्थः फलवानसकृत् सम्भावितश्च दृष्टान्तैः।
पौर्वापर्यानुगतः श्रुतः कथं कथ्यते तथा नेति ॥ इति।

तस्मान्न प्रत्यक्षादिना दुर्बलेन बाधावकाश इति। प्रधान इति वा, "न वा ओजीयो रुद्र! त्वदस्ति" ( ऋ० २।३३।१०; तै० आ० ४।५।७ ), "भीषास्माद् वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥" (तै० उ० २।७-८) इत्यादितैत्तिरीयात् श्वेताश्वतराच्च सर्वप्राधान्यं भगवतो महेश्वरस्य रुद्रस्यावगम्यते। तथाहि—"य एवैको जालवानीशत ईशनीभिः सर्वान् लोकानीशत ईशनीभिः" ( श्वे० उ० ३।१ ) इत्यादि। "सर्वस्मादधिकत्वं ये न वदन्ति पिनाकिनः। साधारणं स्मरन्त्येनं सदारस्त्वं समाविश ॥" ( २।६।५८-५९ ) इत्युक्तं लैङ्गे पुराणे। तस्मात् तत्प्राधान्यं श्रद्धातव्यमिति।

व्यापोऽस्यास्तीति व्यापी, सर्वगत इत्यर्थः। अगत्वा सर्वमूर्तसंयोगित्वं सर्वगतत्वम्। अगमनं च सर्वत्र सद्भावाद् गगनवदिति, "आकाशवत् सर्वगतश्च नित्यः" इत्यादिश्रुतेः। "स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च। वसत्येको महावीर्यो नानाभावसमन्वितः ॥" इत्यादिस्मृतेश्च। न चाकाशवदेवास्य जडत्वमिति वाच्यम्, चिद्रूपताप्रतिपादकश्रुतिविरोधात्। अथवा व्यापित्वं सर्वस्वरूपत्वमेकत्वे हेतुतयोक्तम्। तच्च—

"स इज्ज्योतिः स यजमान आसीत् सो मातरिश्वा स उदेति सूर्यः। स चन्द्रमाः स पृथ्वी जलाषः स आकाशो विश्वा भुवना विवेश ॥" इति मूर्त्यष्टकप्रतिपादकलिङ्गसूक्तिश्रुतिसिद्धम्।

नित्य इति अविनाशीत्यर्थः। "क्षरं प्रधानममृताक्षरं हरः" (१।१०) इति श्वेताश्वतरश्रुतेः। कालत्रयव्यापित्वं वा नित्यत्वं तद्राहित्यं वा, "सर्वेषु कालेष्वनुसन्ततात्मा" इत्यादिश्रुतेः, "परस्त्रिकालादकलो हि दृष्टः" (६।५) इत्यादिश्वेताश्वतरश्रुतेश्च तदवगमः।

सततोदित इति। सततं सर्वदा उदयः प्रकाशो यस्यासौ तथोक्तः। अनुदितास्तमितप्रकाशः, स्वयंप्रकाश इत्यर्थः। "अत्रायं पुरुषः स्वयंज्योतिः" (बृ० उ० ४।३।९) इति श्रुतेः, "सर्वगः पुरुषः परः" (२।२।१७) इतीश्वरगीतास्मृतेश्च तदवगमः। प्रभुरिति। कर्तृकर्मकरणादिसकलकारकार्थवाहित्वरूपाप्रतिहतैश्वर्यं प्रभुत्वम्। तच्च—"यथोर्णनाभिः सृजत्येवमेवासौ सृजति" (मु० उ० १।१।७) इति श्रुतेः, "संसारहेतुः संसारी मोक्षहेतुश्च निर्वृतः", "प्रजायसे जनयसि जन्यसे मुहुः" इत्यादिस्मृतितश्च सिद्धम्। करणादिं विना सकलकार्यजनकत्वं वा। तच्च—"आत्मा वा इदमेकमेवाग्र आसीन्नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत" (ऐ० उ० १।१) इत्यादिश्रुत्यवगतम्। निष्क्रियकर्तृत्वं वा। "यथा मणिरयस्कान्तसान्निध्यादुपकारकः। अयसश्चलतस्तद्वच्छिवोऽप्यस्येति सूरयः॥" (शि० पु० ७।१।३१।८९), "यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते। मनसो नोपकर्तृत्वात् तथासौ परमेश्वरः॥" इत्यादिपुराणागमादवगतं तस्य तत्प्रभुत्वम्, श्रमाद्यसम्भवात्। सव्यापारकर्तृत्वस्याप्रभुत्वरूपता च श्रमादियोगात्।

तत्र हेतुमाह—शान्त इति। सर्वव्यापाररहितः शिवो यतः, अतोऽसौ प्रभुरिति। अथवा जगत्सृष्टिस्थितिध्वंसादिकर्मसम्बन्धवशात् कर्मवश्यशरीरादिप्रसङ्गेन या संसारित्वप्रसक्तिर्भगवतः, सा च निषिध्यते—शान्त इति। सर्वक्रियारहिततयोदासीनस्वभावस्य परमेश्वरस्य सर्वज्ञस्य न परगतक्रियया संसारसंभव इति, "निष्कलं निष्क्रियं शान्तं निर्गुणं तं निरञ्जनम्" (श्वे० उ० ६।१९) इत्यादिश्रुतेस्तदवगमात्। तथा—"पश्यन्ति ऋषयो मुक्ताः स्वात्मानं परमार्थतः। विकारहीनं निर्दुःखानन्दमात्मानमव्ययम्॥" (२।२।१३) इतीश्वरगीतास्मृतेश्च। मुक्त इति वा, "तदेकमजमव्यक्तं नित्यलुप्तमलुप्तदृक्" इत्यादिश्रुतेः, "अहं ब्रह्माव्ययः शान्तो निर्मलो निष्क्रियोऽव्ययः। एकाकी भगवान् मुक्तः केवलः परमेश्वरः॥" (ई० गी० २।८।२) इत्यादिस्मृतेश्च तदवगमः।

जयतीति। सर्वोत्कर्षेण वर्तत इत्यर्थः। "यस्मात् परं नापरमस्ति किञ्चित्" (श्वे० उ० ३।९), "अणोरणीयान् महतो महीयान्" (कठो० २।२०) इत्यादिश्रुतेस्तदवगमात्। "सर्वेन्द्रियेभ्यः परमं मन आहुर्मनीषिणः। मनसश्चाप्यहङ्कारमहङ्कारान्महान् परः॥ महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषाद् भगवान् प्राणस्तस्य सर्वमिदं जगत्॥ प्राणात् परतरं व्योम व्योमातीतोऽग्निरीश्वरः। ईश्वरान्न परं किञ्चित्" (ई० गी० २।३।१८-२०) इत्यादिस्मृतेश्च। स्वोपासकानां श्रवणाद्युपजातपरमार्थदर्शने ज्ञानादेरभिभवादभिभवो वा जयतेरर्थः। तथा सर्वमात्मनो वशे कृत्वा वर्तत इति वशीकारो वा। तथा लयोदये निखिलकार्यजालं स्वात्मन्येव स्वीकृत्यास्त इति स्वीकारो वा।

(शि.पु.७।१।३०)

जगदेकबीजमिति। जगतः कालादेः कार्यजातस्य एकं प्रधानं बीजं कारणम्, मूलकारणमिति यावत्। अथवा जगतामेकः कर्ता च बीजमुपादानं चेति जगदेकबीजम्, निमित्तोपादानभूत इति यावत्। "यतो वा इमानि भूतानि जायन्ते यत् प्रयन्त्यभिसंविशन्ति" (तै० उ० ३।१), "एको रुद्रो मृत्युरव्यक्तमेकं बीजं विश्वं देव एकः स एव" (ई० गी० २।८।१६) इत्यादिश्रुतेः, "अस्माद्धि जायते सर्वमत्रैव प्रविलीयते" (२।२।६) इतीश्वरगीतास्मृतेश्च परमेश्वरस्य जगदुपादानभावो गम्यते। तथा—"द्यावाभूमी जनयन् देव एकः" (ऋ० १०।८१।३), "भुवनस्य पितरं गीर्भिराभिः" (ऋ० ६।४९।१०), "स विश्वकृद् विश्वविदात्मयोनिः" (श्वे० उ० ६।१६) इत्यादिश्रुतेः, "सर्गकाले च करोति सर्गम्" इत्यादिस्मृतेश्च तस्य निमित्तभावोऽवगम्य इति मायाशरीरस्य परमेश्वरस्य जगन्निमित्तत्वोपादानत्वे सम्भवत इति न विकारित्वादिप्रसङ्गः।

सर्वानुग्राहक इति। सर्वेषां चेतनानामचेतनानां चानुग्रहं मोक्षा(द्यं?ख्यं)करोतीति तथोक्तः। वक्ष्यति च—"मुक्तिमणूनाम्" (श्लो० ३५) इति। ननु यदि स्वप्रयोजनार्थमनुग्रहकरणम्, तर्हि सर्वानन्दत्वहानिः, तत्साध्यसुखस्य तदुत्पत्तेः प्रागसत्त्वात्। स्वप्रयोजनाभावे तु प्रवृत्त्यसंभवः। तदुक्तं न्यायविद्भिः—"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते। यदि प्रयोजनोद्देशो हीयेतानन्दरूपता॥" इति। नैवम्, करुणया स्वभावतो वा प्रवृत्त्युपपत्तेः। ननु यदि करुणयाऽनुग्रहकरणम्, तर्हि मोक्षमेवासौ सृजेत्, न संसारात्मकं जगत्सर्जनम्, तस्यान्याय्यत्वात्। तथा हि—दुःखदर्शनपूर्वकं करुणया प्रवर्तमानानां तद्दुःखसंप्रहाणायैव प्रवृत्तिरुचिता, न तद्दुःखसम्पादनाय। अतो न युक्तं दुःखात्मकं जगत्सर्जनम्। नैवम्, अज्ञाननिवृत्त्यात्मकस्यापवर्गस्य ज्ञानतत्कारणाद्यपेक्षत्वेन जगत्सर्जनोपपत्तेः। तथा हि–ज्ञानं तावदपरोक्षभूतमपवर्गकारणम्। आपरोक्ष्यं च निदिध्यासनेनाविद्यासंस्कारतिरस्कारे सत्युद्भवति। निदिध्यासनं च श्रवणमननाभ्यां शिवात्मज्ञाने संजाते सम्भवति। ते चान्तःकरणशुद्धितः संजायेते। सा काम्यप्रतिषिद्धकर्मपरिहारेण नित्यनैमित्तिककर्मानुष्ठानाद् भवति। तदनुष्ठानं पशुसस्यराजरक्षादिपूर्वकम्। अतो यदिदं तत् सर्वं मोक्षशेषमिति न व्यर्थं जगत्सर्जनम्। कामनाश्रुतयश्चैहिकफलाः "चित्रया यजेत पशुकामः" (तै० सं० २।४।६।१) इत्यादय ऐहिकफलनिविष्टचित्तान् विप्रान् वैदिकमार्गे प्रवर्तयितुं प्रवृत्ताः, स्वर्गफलाश्च तदुत्सुकानिति। ये च शत्रुनाशोत्सुकास्तान् वैदिकमार्गे प्रवर्तयितुं श्येना(चि?जि)राद्यभिचारकर्मविषयश्चेति। ततश्च विहितस्नानपापक्षयकर्मानुष्ठानान्वाधानाग्निहोत्रादिना क्रमात् मनश्शुद्धिसम्भवे सति कामनानिवृत्तौ नित्यनैमित्तिककर्मानुष्ठानाद् आत्मविविदिषारूपान्तःकरणशुद्ध्युद्भवे श्रवणमननाभ्यां शिवात्मज्ञाने संजाते निदिध्यासनाभ्यासाद् अविद्यातत्संस्कारापनयनानन्तरं शिवात्मापरोक्ष्ये सति मोक्ष इति। तदुक्तं मोक्षधर्मादौ—"सर्वत्र विहितो धर्मः स्वर्गः सत्यफलोदयः। बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया॥" ( म० भा० १२।१७४।२ ) इति। अत्र ये महेश्वरनियुक्ते श्रौते स्मार्ते वा कर्मणि प्रवर्तन्ते, ते मुच्यन्ते; ये तु न प्रवर्तन्ते, ते संसरन्ति। तदुक्तमैतरेयोपनिषदादौ—"एष पन्था एतत्कर्म तस्मान्न प्रमाद्येत नातीयाद् न ह्यत्यायत् पूर्वे येऽत्यायंस्ते पराबभूवुः" ( १।१।१ ) इत्यादि। अनुग्रहस्वभावत्वाद्वा प्रवृत्तिः। तदा च तस्य कारणापेक्षितया न सकलजगन्मोक्षप्रसङ्गः।

तदुक्तं श्रीवायवीये—"अनुग्रहस्वभावत्वे न सर्वान् मोचयेच्छिवः। स्वभावोऽपि हि भावानां भाविनोऽर्थस्य कारणम् ॥ नहि स्वभावतोऽसन्तमर्थं कर्तैव साधयेत् । यथा विकासयत्येव रविः पद्मानि भानुभिः ॥ समं न विकसन्त्येव स्वस्वभावानुरोधतः । एवं पक्वमलानेव मोचयेन्न शिवः परान् ॥" ( शि० वा० १।३१।५५-५७ ) इत्यादि ।

शम्भुरिति । शं सुखं तस्मिन् भवतीति शम्भुः, स्वयमानन्दरूप इत्यर्थः । "विज्ञानमानन्दं ब्रह्म"(बृ० उ० ३।९।२८) इत्यादिश्रुतेः, "आनन्दमजमव्यक्तं निष्कलं तदुदाहृतम्" इत्यादीश्वरगीतास्मृतेश्च तदवगमः । ननु शिवस्यानन्दमयत्वे प्रीत्यात्मकसत्त्वगुणरूपत्वेन सगुणत्वात् परिणामादिदोषप्रसङ्गः । तथा हि सांख्याचार्यैरुक्तम्—"प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥"(सां० का० १२) इति । नैवम् । प्रीत्यानन्दशब्दयोर्भिन्नार्थत्वात् । तथाहि–विषयेन्द्रियसम्प्रयोगजन्यानित्यसातिशयसुखं प्रीतिशब्देनोच्यते, सततैकरूपनित्यनिरतिशयात्मस्वभावसुखमानन्दशब्दवाच्यमिति नोक्तदोषावकाश इत्येके । अन्ये तु सत्त्वगुणे निर्मले पुण्यहेतुना विषयेन्द्रियसंप्रयोगेण परिणते नित्यसुखमेव प्रतिबिम्बितं प्रीतिशब्देनोपदिष्टम्, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृ० उ० ४।३।३२) इति श्रुतेः सत्त्वगुणस्य न सुखात्मता, सुखप्रतिबिम्बाश्रयतया सुखरूपत्वाभिधानमिति मन्यन्ते ॥ १ ॥

## वृत्तिः

शिवं प्रणम्य षट्त्रिंशत्तत्त्वातीतं सशक्तिकम् ।
व्याख्यां तत्त्वप्रकाशस्य स्फुटां लघ्वीं करोम्यहम् ॥
अद्वैतवासनाविष्टैः सिद्धान्तज्ञानवर्जितैः ।
व्याख्यातोऽत्रान्यथाऽन्यैर्यत् स ततोऽस्माकमुद्यमः ॥

तत्र तावदाचार्यः प्रारिप्सितस्य प्रकरणस्याविघ्नपरिसमाप्त्यर्थं सिद्धान्तशास्त्रप्रवृत्तिनिमित्तं सकलतत्त्वातीतं निष्कलं परमशिवमाद्ययाऽऽर्यया स्तौति—चिद्घन इति ।

चिच्छब्देनात्र ज्ञानक्रिये लक्ष्येते । तदुक्तं श्रीमन्मृगेन्द्रे—"चैतन्यं दृक्क्रियारूपम्" ( वि० २।५ ) इति । चिदेव घनं देहो यस्य स चिद्घनः । न तु कर्मकालादीश्वरवादिनामिव जडः, अचेतनस्य चेतनाधिष्ठानं विना प्रवृत्त्ययोगात् । न चास्य बैन्दवशरीराद्युपगमो युक्तः, अनीश्वरत्वप्रसङ्गात् । तस्य च कर्त्रन्तरापेक्षायां स्वकर्तृकत्वेऽन्यकर्तृकत्वे वाऽनवस्थाप्रसङ्गाच्च । एकः अद्वितीयः । न त्वनेकेश्वरपक्षोऽपि युक्तः, रथादीनामप्यनेककर्तृकाणामेकेच्छानुवर्तनं विनाऽनुत्पत्तेः । यदुक्तम्—"बहवो यत्र नेतारः सर्वे पण्डितमानिनः । तथा महत्त्वमिच्छन्ति तद्व्यक्तमवसीदति ॥" इति । अनेन प्रवाहेश्वरपक्षोऽपि निरस्तः, ऐश्वर्यस्य स्वरूपव्यक्तिलाभात्मकत्वेन विनाशानुपपत्तेः । व्यापी सर्वगतः । न तु क्षपणकादीनामिव शरीरपरिमितः, सङ्कोचविकासधर्मी वा, तादृशस्याचेतनत्वानित्यत्वादिदोषप्रसङ्गात् । नित्यः आद्यन्तरहितः । न तु बौद्धादीनामिव क्षणिकः, उत्पत्तिकाल एव नश्यतस्तस्य जगत्कर्तृकत्वासंभवात् । ननु मुक्तात्मानोऽप्येवंभूता एवात आह—सततोदितः । नित्यमुक्तः । न तु मुक्तात्मान इवेश्वरान्तरप्रसादमुक्तः, अनवस्थाप्रसङ्गात् । प्रभुः प्रभवनशीलः । न त्वीश्वरान्तरप्रेर्य इत्यर्थः । प्रागुक्ता-

देव हेतोः। नाप्यकर्ता, जगत्कर्तृत्वेनैवास्य सिद्धेः। शान्तः रागद्वेषादिरहितः, "मोहो मदश्च रागश्च विषादः शोष एव च। वैचित्र्यं चैव हर्षश्च सप्तैते सहजा मलाः॥" (म० पा०, वि० ६।१०३-१०४) तत्कारणस्य मलादेरसंभवात्। किं पुनरेवंभूतस्येश्वरस्य सद्भावे प्रमाणमिति चेदत आह—जगदेकबीजमिति। जगतः निमित्तकर्ता। अयमभिप्रायः—सन्निवेशादिमत्त्वेन जगतः कार्यत्वं बुद्ध्वा तस्य निमित्तं कारणमीश्वराख्यं कार्यत्वेन हेतुनाऽनुमीयते। यद्यत् सावयवं तत्तत् कार्यम्, यद्यत् कार्यं तत्तत् सकर्तृकमिति न्यायात्। यच्छ्रूयते–[1]"विवादाध्यासितं विश्वं विश्ववित्कर्तृपूर्वकम्। कार्यत्वादावयोः सिद्धं कार्यं कुम्भादिकं यथा॥" इति। श्रीमन्मतङ्गेऽपि—"निमित्तकारणं त्वीशः" (वि० ६।९९) इति। अयं चेश्वरवादोऽस्माभिर्मृगेन्द्रवृत्तिदीपिकायामुक्तस्तत एवावधार्यः।

सर्वानुग्राहकः। अनुग्रहश्चात्रोपलक्षणं सृष्ट्यादेरपि। अतश्च सृष्टिस्थितिसंहारतिरोभावानुग्रहाख्यैः पञ्चभिः कृत्यैः सर्वेषामात्मनां भोगमोक्षप्रद इत्यर्थः। सर्वकर्तृत्वादेव चास्य सर्वज्ञत्वं सिद्धम्, अज्ञातस्य करणासंभवात्। उक्तं च—"सर्वज्ञः सर्वकर्तृत्वात् साधनाङ्गफलैः सह। यो यज्जानाति कुरुते स तदेवेति सुस्थितम्॥" (मृ० वि० ५।१३) इति। एवंभूतः शम्भुः परमेश्वरो जयति सर्वोत्कर्षेण वर्तते, प्रोक्तैरेव हेतुभिरिति॥ १॥

**नोदयति यन्न नश्यति निर्वाति न निर्वृतिं प्रयच्छति च।**
**ज्ञानक्रियास्वभावं तत्तेजः शाम्भवं जयति॥ २॥**

### तात्पर्यदीपिका

अस्य प्रथमश्लोकस्य सकलशास्त्रार्थसंग्रहरूपत्वाद् एतत्सूचितामिष्टदेवतास्तुतिमुत्तरश्लोकेन विवृणोति। अथवा इष्टदेवतास्तुतिच्छलेन निष्कलं प्राप्यं शिवतत्त्वमभिधाय तत्प्राप्त्युपायभूतं सकलनिष्कलात्मकं तेजो ज्योतिर्लिङ्गादिरूपेणावस्थितं स्तौति—नोदयतीति।

अयमर्थः—यत् तेजो नोदयति नाविर्भवत्यादित्यादिवत्। न च नश्यति नास्तं गच्छति। निर्वाति न, न मुच्यते। अज्ञानतन्मूलरागद्वेषतत्प्रयुक्तप्रवृत्तिधर्माधर्मतद्वश्यशरीरेन्द्रियाद्यभावेन संसाराभावात्। अज्ञानाभावश्च सर्वज्ञत्वात्। अपक्षयलक्षणविनाशप्रतिषेधो वा निर्वाणम्, नितरां वानम् अपक्षयो न्यूनत्वम्, तन्नास्ति, सततैकरूपत्वात्। तच्च नित्यत्वात्। निर्वृतिं प्रयच्छति चेति। निर्वृतिर्मुक्तिः, तां प्रयच्छति प्रददाति स्वोपासकानामिति। ज्ञानक्रियास्वभावं ज्ञप्तृकर्तृस्वभावं तच्छाम्भवं शम्भोरिदं शाम्भवं तेजः, इतरतेजोनिकरेभ्य उक्तैः कारणैरुत्कृष्टमिति। अथवा शाम्भवं तेजोरूपं मन्त्रात्मकं विग्रहम्, तत्प्राप्त्युपायभूतं सकलमिति यावत्। जयतीति। सर्वस्मादुपरि वर्तते इत्यर्थः। कुतः? अस्य विग्रहस्योत्तरविग्रहवदुत्पत्तिनाशाद्यभावात्। तच्च वेदमयत्वाद् वेदस्य च नित्यत्वादिति॥ २॥

---

१. पौष्करागमस्य श्लोकोऽयमिति लु० सं०, भा० २, पृ० १२० इत्यतोऽवसीयते।

## वृत्तिः

एवं धर्मिस्वरूपं शिवं प्रस्तुत्य धर्मस्वरूपस्य तत्सामर्थ्यस्य लयावस्थां स्तुति-व्याजेन दर्शयति—नोदयतीति ।

उत्पत्तिविनाशशून्यमित्यनेन तद्योगिनो बौद्धज्ञानाच्चैतन्यात्मनः शिवतेजसो विशेषं दर्शयति । यद्येवम्—"चैतन्यं दृक्क्रियारूपं तदस्यात्मनि सर्वदा" ( वि० २।५ ) इति [1]श्रुतेरात्मसामर्थ्याच्छिवसामर्थ्यस्य को विशेष इत्यत आह—निर्वाति न निर्वृतिं प्रयच्छतीति । अयमस्य पशुसामर्थ्याद्विशेषो दर्शितः, यदिदं केनापि न मच्यते तत्त्वनेन पाशविमोचनेन प्रकटीक्रियत इति । किं ततः ? इत्यत आह—ज्ञानक्रियास्वभावं तत्तेजः शाम्भवं जयतीति । चिद्धर्मत्वादेवेदमपि चिदात्मकमित्यर्थः । यच्छ्रूयते – "शक्तिर्नाचेतना चितः" ( मृ० वि० ३।४ ) इति ॥ २ ॥

**शक्तो यया स शम्भुर्भुक्तौ मुक्तौ च पशुगणस्यास्य ।**
**तामेकां चिद्रूपामाद्यां सर्वात्मनाऽस्मि नतः ॥ ३ ॥**

## तात्पर्यदीपिका

एवं महेश्वरं स्तुत्वा महेश्वरीं महादेववल्लभामखिलभुवनजननीं नित्यसहिताम्—"एष ते रुद्रभागः सह स्वस्राऽम्बिकया तं जुषस्व" ( वा० सं० ३।५७; तै० सं० १।८।६।१२ ) इत्यादिश्रुतिसिद्धपूजास्तुत्यादिसाहित्यप्रदर्शनाय फलाप्तये च स्तौति—शक्त इति ।

अयमर्थः—यया शक्त्या भगवान् महेश्वरः पशुगणस्यास्य भुक्तिप्रदाने मुक्ति-प्रदाने च शक्तः समर्थो भवति, तां नतोऽस्मीति महेश्वरीस्तुतिकर्तव्यता प्रतिपादिता, तया विना भगवतोऽनुग्राहकत्वासंभवात् । तथाहि–शिवस्य सर्वगतस्य केवलस्य निष्क्रिय-स्योदासीनतनोः पशुसमुदायं प्रति भुक्तिमुक्तिप्रदानासंभवाच्छक्तिमत एव तत्प्रदानोपपत्तिः । अतः शक्तिसहितस्यैवानुग्राहकत्वमिति । एकामिति । अद्वितीयामित्यर्थः । ननु शिव एव सर्वमिति पूर्वं शिवाद्वितीयत्वं प्रतिपादितम्, अतः कथमिहाद्वितीयतावाचोयुक्तिरिति चेत्, सर्वस्यापि वस्तुनो देवीदेवात्मकत्वसद्भावेनोभयाद्वितीयतावचनोपपत्तेरिति ब्रूमः । तथाहि – केवलात्मावस्थानलक्षणस्यापवर्गस्य तावच्चिदानन्दरूपतया देवीदेवात्मता विद्यते । मोक्षस्यानन्दरूपत्वाभावे पुरुषार्थता हीयेत, सुखस्यैव मुख्यपुरुषार्थत्वात् । न च दुःखाभावस्यापि पुरुषार्थतयाऽपवर्गस्यानन्दरूपत्वाभावेऽपि दुःखसंस्पर्शविरहेण पुरुषार्थत्व-संभव इति वाच्यम्, दुःखाभावस्य सुखानुगुणतया पुरुषैरर्थ्यमानत्वेन मुख्यपुरुषार्थत्वा-भावात् । तस्मात् सुखस्यैव मुख्यपुरुषार्थत्वेनानन्दरूपताऽपवर्गस्याश्रयणीया । सा चाननु-भूयमाना न पुरुषार्थतां भजत इति तदनुभवोऽप्याश्रयणीय इति सुखचिदात्मको मोक्ष इति तस्य देवीदेवात्मकत्वसिद्धिः । तत्र परमानन्दसंविद् देवी संविदानन्दो देव इति, "एषा विद्या ह्यहं वेद्यः" इति पुराणागमात् तदवगमः । तथा देवीमन्त्रकल्पे चोक्तम्—"आदिनाथ ऋषिश्छन्दो देवी गायत्रि उच्यते । देवता परमानन्दसंविदत्रोपदिश्यते ॥"

१. मृगेन्द्रागमोऽत्र श्रुतित्वेन निर्दिष्टः ।

इति। भुवनेश्वरीकल्पे च—"बोधस्वरूपवाची संवित् प्रोक्ता च देवता गुरुभिः" इति। तथा—"विज्ञानमानन्दं ब्रह्म" ( बृ० उ० ३।९।२८ ) इत्यादिश्रुतेश्च तदवगमः। "याऽनुभूतिरजामेयानन्तात्मानन्दविग्रहा। महदादिजगन्मायाचित्रभित्ति नमामि ताम् ॥" इत्यभियुक्तवचनाच्च तदवगमः। न च संवित्सुखे परस्परमात्मनश्च भिन्ने आत्मगुणरूपे इति वाच्यम्, "चिदानन्दात्मकः शिवः" इत्यादिश्रुतिविरोधात्, भेदाभ्युपगमे तद्-गुणत्वासंभवप्रसङ्गाच्च। ननु चिदानन्दयोरभेदेऽन्यतस्तदनुभवासंभवात् स्वयंप्रकाशतया मोक्षसंसारयोरविशेषप्रसङ्गः? नैवम्, संसारावस्थायां जपासन्निहितस्वयम्प्रभस्फटिक-वदात्मनोऽसत्कल्पतयाऽऽनन्दानुभवासंभवेनाविरोधादिति। तदिदम् "आनन्दं[1] ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते" इति श्रुतिसिद्धम्।

नन्वस्तु शुद्धतत्त्वस्य देवीदेवात्मता। कारणतत्त्वस्य मायाशबलितस्य कथं देवी-देवात्मतेति चेत्, निमित्तोपादानभावेनावस्थानादिति ब्रूमः। तदुक्तं लैङ्गे—"अस्याष्ट-मूर्तेः शर्वस्य शिवस्य गृहमेधिनः। गृहिणी प्रकृतिर्दिव्या प्रजाश्च महदादयः ॥" इति। कार्यतत्त्वस्य चात एव चिदचिदात्मतया देवीदेवरूपत्वम्। तथा च भूतानां चतुर्दश-विधानां देहदेह्यात्मना द्वैरूप्याद् देवीदेवात्मता। ननु भूतानां कथं देवीदेवात्मकत्वम्? तद्विभूतित्वादिति ब्रूमः। तथा च बृहदारण्यकश्रुतिः—"एकाकी न रमते। स द्वितीय-मैच्छत्। स हैतावानास। पुंस्त्वं स्त्रीत्वं चापातयत्। पतनात् पतिः पत्नी च। सा गौरभवत्। ऋषभ इतरः। ताभ्यां गावः। सा वडवाऽभवदश्व इतरः। ताभ्यामश्वाः" ( बृ० उ० १।४।३-४ ) इत्यादिवाक्यैरखिलजन्त्वात्मना देवदेव्योर्जगत्कारणयोरवस्थाना-वभासादखिलस्य तद्विभूतित्वसिद्धिः। मानवे च—

द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्।
अर्धेन नारी तस्यां च विराजमसृजत् प्रभुः॥ ( म० स्मृ० १।३२ )

"पुँल्लिङ्गमखिलं देवः स्त्रीलिङ्गं परमेश्वरी"

इति लैङ्गवचनाच्च तत्सिद्धिरिति। महेश्वरीमहेश्वरयोर्भेदाभावेनोभयाद्वितीयत्व-वचनम्। तथा हि—एकमेव शिवतत्त्वं पुंल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गशब्दैर्व्यवह्रियते, भावानां तत्त्रैविध्यदर्शनेनास्यापि भावतयाऽन्यतमरूपप्रसक्तौ तन्नियामकासंभवात्। तथा हि—शिवतत्त्वस्य स्त्रीत्वनपुंसकत्वयोरभावेन घटस्य घटशब्देनेव महेश्वरशब्देन पुँल्लिङ्गेन व्यवहारः। न च पुंस्त्वसद्भावाद् घटस्य घटशब्देन व्यवहार इति वाच्यम्, पुंस्त्वस्यात्यन्तमत्रानुपलम्भात्। तथापि तस्य सत्त्वाभ्युपगमे शशविषाणादेरपि सत्त्वप्रसङ्गः। तथा पुंस्त्वनपुंसकत्वयोरप्यभावाच्छिवेति स्त्रीलिङ्गशब्देन व्यवहारः। न च तस्य स्त्रीत्वसद्भावादिति वाच्यम्, शालामालादिशब्दानां तदभावेन स्वार्थे वृत्त्यभावप्रसङ्गात्। न च घटादौ स्त्रीलिङ्गशब्दस्यापि प्रवृत्तिप्रसङ्ग इति वाच्यम्, पङ्कजशब्दस्येव क्वचिदेव प्रवृत्तेरिष्टत्वात्। एवं पुंस्त्वस्त्रीत्वयोरप्यभावाच्छिवतत्त्वस्य

---

१. "आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्" इति प्रामाणिकवचनं योगिनीहृदयदीपिकायां ( ३।१०८ ) दृश्यते। कुलार्णवेऽपि ( ५।८० ) वचनमिदं वर्तते।

नपुंसकलिङ्गेन ब्रह्मेत्यनेन शब्देन व्यवहारः, न च नपुंसकत्वसद्भावात्, कुण्डमित्रादिशब्दानां तदभावेन स्वार्थे वृत्त्यभावप्रसङ्गात्। तथा पुरुषादिशब्दानामितररूपासत्त्वाद् निमित्तात् प्रवृत्तिर्ज्ञेया, लाघवस्य सद्भावादात्मनि च पुंस्त्वरहिते वृत्तिसद्भावाच्चेति। तस्मान्महेश्वरीमहेश्वरयोर्भेदाभावादुपपन्नमुभयाद्वितीयत्ववचनमिति। तदुक्तं बृंहण्याम्—

शिवो देवः शिवा देवी शिवं ज्योतिरिति त्रिधा।
अलिङ्गमपि यत्तत्त्वं लिङ्गभेदेन कथ्यते॥ इति।

भगवता श्रीबादरायणेन सनत्सुजाते चोक्तम्—"सा प्रतिष्ठा तदमृतं लोकास्ते ब्रह्म तद् यशः। भूतानि जज्ञिरे तस्मात् प्रलयं यान्ति तत्र च॥" (म० भा० ५।४४।३०) इति। पुंस्त्वाद्यभावश्च, "नैव स्त्री न पुमानेष नैव चायं नपुंसकः" (५।१०) इत्यादिश्वेताश्वतरश्रुतेः, "न च स्त्री न पुमानेष न चैवेदं नपुंसकम्" (शि० वा० १।५।४८) इत्यादिश्रीवायवीयागमाच्च सिद्धः। कथं तर्हि भेदेन नमस्कार इति चेत्, शिवोपलक्षितशक्तेः शक्त्युपलक्षितशिवाद् भेदोपपत्तेरिति ब्रूमः। शक्तिशक्तिमतोरभेदादद्वितीयतोपपत्तिः। न च धर्मधर्मिभावेन शक्तितद्वतोरभेदासंभव इति वाच्यम्, केवलभेदाभ्युपगमेऽस्यायं धर्म इति व्यपदेशाभावप्रसङ्गात्। न च सम्बन्धसद्भावात् तदुपपत्तिरिति वाच्यम्, सम्बन्धस्यापि सम्बन्धान्तराभ्युपगमेऽनवस्थाप्रसङ्गात्। अनाश्रयणे च सम्बन्धस्य सर्वसाधारण्येनास्यायमिति व्यपदेशाभावः। तस्माद् धर्मधर्मिणोरभेदोऽभ्युपगन्तव्य इति। कथञ्चिद् भेदस्यापि सद्भावेन भेदव्यवहारो मुखोदरादिभेदव्यवहारवदिति। शिवशक्त्योरभेदे हेतुमाह—चिद्रूपामिति। शिवश्चिद्घनः, इयं च चिद्रूपा चित्स्वरूपा चिन्मात्रेति न तयोर्भेद इति। अयमर्थः शैवरहस्ये चोक्तः—"अग्न्यौष्ण्यवदद्वैधं द्वैधं च मिथः कथञ्चन दधाते। शक्तिशिवौ वस्त्वैक्यं मणिप्रभावद् यतो युक्तम्॥" इति। आद्यामिति। अखिलकारणतया प्रथमोद्भूतामित्यर्थः। वक्ष्यति च—"चिदचिदनुग्रहहेतोः" (श्लो० २७) इति। सिद्धान्तहृदये चोक्तम्—'सिसृक्षोराद्य उन्मेषः शक्तिसाम्यात्मकोऽस्य यः। तदुपाधिः शिवः शक्तितत्त्वमित्यभिधीयते॥" इति। सर्वात्मनास्मि नत इति। मनसा वाचा कर्मणा प्रपन्नोऽस्मीत्यर्थः॥ ३॥

### वृत्तिः

इदानीमधिकारावस्थायामपि शिवस्य शक्तिरेव कारणमित्याह—शक्त इति।

शक्त्यात्मनैव करणेनात्मनां भोगमोक्षसिद्धये शिवः पञ्चविधकृत्यकरणे शक्तः समर्थो भवति, न तद्व्यतिरिक्तेन करणान्तरेण। ननु देहेन्द्रियरहितस्य कर्तृत्वं न दृश्यते? इति चेन्न, तद्रहितस्यात्मनः शक्तिमात्रादेव स्वदेहस्पन्दादौ सामर्थ्यदर्शनात्। उक्तं च—"कारणं तु न शक्त्यन्यत्" (मृ० वि० ३।४) इति। एकामित्यनेनास्या इच्छादिभेदो वामादिभेदश्च ज्ञेयकार्याद्युपाधिभेदेनोपचारान्न तु परमार्थत इति दर्शयति, "एकैवानेकतां याति शिवशक्तिरुपाधितः" इति श्रुतेः। चिद्रूपामित्यनेन कार्यभेदोऽपि मायादिवन्नास्याः परिणाम इति दर्शयति, तस्य जडधर्मत्वात्। आद्यां प्रधानभूताम्, समवेताम्। अनेन परिग्रहशक्तिस्वरूपं बिन्दुमायात्मकमप्यस्य बाह्यं शक्ति-

द्वयमस्तीति सूचयति, उपादानं विना जगदुत्पत्त्ययोगात् । वक्ष्यति चात्र—"कर्त्रा विना न कार्यं न तथोपादानकरणाभ्याम्" ( श्लो० ३७ ) इति ॥ ३ ॥

**लोकानुग्रहहेतोः करुणारसनिर्भरेण चित्तेन ।**
**तत्त्वप्रकाश एषोऽस्माभिः क्रियते समासेन ॥ ४ ॥**

### तात्पर्यदीपिका

एवमिष्टदेवतास्तुत्यादिना निरस्तसमस्तान्तरायः शास्त्रकर्ता विषयसम्बन्धप्रयोजनवच्छास्त्रं कर्तुं प्रतिजानीते—लोकानुग्रहहेतोरिति ।

लोकानां पशूनामनुग्रहोऽपवर्गः, तदर्थमिति प्रयोजननिर्देशः । तदनभिधाने शास्त्रस्याग्रहणं स्यादिति । तदुक्तं भगवता भट्टपादेन—"सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् । यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते ॥" (श्लो० वा०१।१२) इति । वक्ष्यति च—"चिदनुग्रहस्त्वयं किल" ( श्लो० ३६ ) इति । लोकानुग्रहहेतोरेष तत्त्वप्रकाश इत्युक्तेः शास्त्रप्रयोजनयोः साध्यसाधनभावसम्बन्धसिद्धिः, अन्यथा तादर्थ्यासम्भवात् । तत्त्वानि प्रकाश्यन्ते प्रदर्श्यन्ते येन शास्त्रेण स तत्त्वप्रकाश इत्यनेनास्य शास्त्रस्य विषयः प्रतिपादितः, तत्त्वानामत्र प्रतिपाद्यमानतया विषयत्वात् ।

ननु च शास्त्रात् प्रतिपाद्यमानतत्त्वविषयज्ञानमुत्पद्यते । अतः कथमस्यापवर्गसाधनत्वमिति चेदुच्यते, तत्त्वज्ञानस्यावान्तरव्यापारत्वेन शास्त्रस्य तत्साधनत्वोपपत्तेः । तथाहि—शास्त्रश्रवणात् तत्त्वज्ञानं शास्त्रविषयमुत्पद्यते । तस्मिन् सत्यज्ञानान्यथाज्ञानयोर्निवृत्तिः । ततस्तन्मूलरागाद्यभावः । ततस्तत्कार्या प्रवृत्तिर्निवर्तते । ततो धर्माधर्मयोरनुत्पत्तिः । पूर्वोत्पन्नयोः संचितयोः दीक्षाकर्मणा विनाशः । आरब्धकार्ययोस्तयोरस्तशरवद् विनियुक्तत्वादुपभोगादेव प्रक्षयः । ततः शरीराद्युपाधिविरहाज्जीवात्मनः शिवस्वभावस्य घटाकाशस्य तदुपाधिघटविनाशे परमाकाश इव परमेश्वरे शिवे लयोऽपवर्गाख्यो भवतीति । एतदुक्तं [1]श्रीकौर्मे—"घटाकाशमिवाकाशे सरित्तोयमिवार्णवे । जीवो मे विलयं यातु शिवाख्ये परमात्मनि ॥" इति । शिवधर्मोत्तरे च—"जगतस्तत्त्वसंबोधादज्ञानं विनिवर्तते । अज्ञानविनिवृत्तौ च रागादीनामसम्भवः ॥ रागाद्युपशमात् पुंसां पुण्यपापपरिक्षयः । तत्क्षयाच्च शरीरेण न पुनः सम्प्रयुज्यते ॥ अशरीरं च संक्लेशैः सर्वैरेव न बाध्यते । क्लेशमुक्तः प्रसन्नात्मा मुक्त इत्यभिधीयते ॥" इत्यादि । तस्मात् शास्त्रात् तत्त्वज्ञानद्वारेणापवर्गो भवतीति सिद्धम् ।

ननु च यद्यस्मादेव शास्त्रात् तत्त्वज्ञानोत्पत्तिः, तर्हि शास्त्रकर्तुस्तत्त्वज्ञानाभावप्रसङ्गः, प्राक्शास्त्राभावात् । न च शास्त्रकरणानन्तरं तच्छ्रवणात् तस्य तत्त्वज्ञानमिति वाच्यम्, तज्ज्ञानाभावे तत्त्वप्रतिपादकशास्त्रकर्तृत्वस्यैवासम्भवात् । नह्यज्ञातेऽर्थे शब्दप्रयोगो घटत इति । नैतदेवम्, किरणपारमेश्वरादिषु तत्त्वानां प्रतिपादितत्वेन तच्छ्रवणात् तस्य तत्त्वज्ञानोपपत्तेः । न चास्मदादीनामपि तथा तत्त्वज्ञानोपपत्तेरनारम्भणीयमिदं

१. काशीराजन्यासमुद्रिते कूर्मपुराणे श्लोकार्धसूच्यां वचनमेतन्नोपलभ्यते ।

शास्त्रमिति वाच्यम्, अस्मदादीनां तथाविधप्रज्ञासामर्थ्याभावेन विप्रकीर्णतया विस्तरेण च प्रतिपाद्यमानतत्त्वविषयज्ञानस्याशक्यसम्पादनत्वात्। अथ तत्त्वज्ञानस्यापवर्गसाधनत्वे समुत्पन्नतत्त्वज्ञानास्त्वनन्तरमेव मुच्यन्त इति शास्त्रकरणतद्व्याख्यानाद्यसम्भवाद् अस्मदादीनां तत्त्वज्ञानासम्भवः। अथ शास्त्रकर्ता तदर्थमवतिष्ठत एवेति चेत्, न तर्हि तत्त्वज्ञानमपवर्गे साधनम्, तज्ज्ञानसद्भावेऽप्यपवर्गाभावादिति। नैष दोषः, शिवात्मज्ञानस्यापरोक्षभूतस्यापवर्गजनकत्वाभ्युपगमात्। तथा हि—श्रौते तत्त्वज्ञाने संजातेऽपि न भवत्यपवर्गः, निदिध्यासनसम्भवस्य ज्ञानापरोक्ष्यस्य तदानीमभावात्। श्रौते हि तत्त्वज्ञाने संजाते मननसापेक्षपुनर्निदिध्यासनसंभवं शिवात्मैकत्वविषयमपरोक्षज्ञानं देहादिविषयापरोक्षभूताज्ञाननिरसनात्मकमपवर्गमुपजनयति, (तच्चा?अ)परोक्षभ्रमस्य परोक्षज्ञानेन निवृत्त्यसंभवात्। स चोदीच्यामुदित आदित्य इत्यपरोक्षदिग्भ्रमस्य तदुदयपूर्वकपूर्वदिक्त्वानुमानेन निवृत्त्यदर्शनादनुगम्यते। पुनश्चाभ्यासवशादपरोक्षज्ञानोद्भवे निवृत्तिदर्शनाच्चेति।

तथा हि श्रुतयः श्रुतिशिरसि वर्तमाना एकमेवार्थमुपपादयन्ति। तथा च—"अरे आत्मा द्रष्टव्यः" (बृ० उ० २।४।५) इति निर्द्धारेणापवर्गसाधनं शिवात्मदर्शनमेव विहितम्। तदुपायत्वेन श्रवणमनननिदिध्यासनानि विधीयन्ते—"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० उ० २।४।५) इति। तेन न श्रवणमात्रजनितं विज्ञानमपवर्गसाधनम्, किन्तु निदिध्यासनसम्भवं शिवात्मदर्शनमिति गम्यते। एषां श्रवणादीनां सद्वारेण निर्द्वारेण चात्मदर्शनं प्रत्यङ्गत्वम्, "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। ज्ञात्वा च सततं ध्येयः" इति, "एते दर्शनहेतवः" इति सिद्धं च। अतो न शास्त्रकरणतद्व्याख्यानाद्यसंभवः, तत्त्वज्ञानिनां यावदापरोक्ष्यमवस्थानाभ्युपगमादिति। न च शरीरादिव्यतिरिक्तात्मासत्त्वेनाधिकार्यभावात् स्वर्गापवर्गफलदमिदं शास्त्रमनारम्भणीयमिति वाच्यम्, शरीरादिव्यतिरिक्तस्य नित्यस्य जीवात्मनः सद्भावस्य वक्ष्यमाणत्वात्। न च मोक्षतत्साधनप्रतिपादकशास्त्रान्तरसम्भावनादनारम्भणीयमिदं शास्त्रमिति वाच्यम्, शास्त्रान्तराणां शिवतत्त्वाप्रतिपादकानाम्—"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥" (श्वे० उ० ६।२०) इत्यारणवाक्येन श्वेताश्वतरेणापवर्गहेतुताप्रतिक्षेपाच्छिवप्रतिपादकानां चेतरतत्त्वव्यावृत्त्यात्मकशिवज्ञानविधायकवाक्यैरपवर्गहेतुता प्रतिक्षिप्ता। तथा हि—द्विविधमिह शिवज्ञानमपवर्गकारणम्—इतरव्यावृत्त्या, स्वरूपतश्चेति, श्रुतिस्मृत्योस्तथा विधानात्। "आत्मा ज्ञातव्यः", "प्रकृतितो विवेक्तव्यः", "अन्यदेव तद्विदिताद् अथो अविदितात्" (केनो० १।४) इत्याद्याः श्रुतय इतरव्यावृत्त्या, "सत्यं ज्ञानमनन्तम्" (तै० उ० २।१), "आनन्दम्" (तै० उ० ३।६), "प्रज्ञानं ब्रह्म" (ऐ० उ० ५।३) इत्यादयः स्वरूपतोऽपि विज्ञानं प्रतिपादयन्ति। "नायं पृथ्वी न सलिलं न तेजः पवनो नभः। न प्राणो न मनोऽव्यक्तं न शब्दः स्पर्श एव वा॥ न रूपरसगन्धाश्च नाहंकर्ता न वागपि। न पाणिपादौ नो पायुर्न चोपस्थं द्विजोत्तमाः॥ न कर्ता न च भोक्ता वा न च प्रकृतिपूरुषौ। न माया नैव च प्राणश्चैतन्यं परमार्थतः॥" (ई० गी० २।३।७-९) इत्याद्याः स्मृतय इतरव्यावृत्त्या, "आत्मायं केवलः स्वच्छः शान्तः सूक्ष्मः सनातनः। अस्ति सर्वान्तरः साक्षी चिन्मात्र-

स्तमसः परः ॥'' (ई० गी० २।२।४) इत्याद्याः स्वरूपतः शिवात्मज्ञानं प्रतिपादयन्तीत्युभयथा विज्ञानस्याश्रयणीयत्वात् । तथाविधविज्ञानसाधनमिदं शास्त्रमारम्भणीयमिति सिद्धम् । करुणारसनिर्भरेण चित्तेनेति । करुणायाः संजातो रसः करुणारसः अनुजिघृक्षा । अथवा करुणा चासौ रसश्चेति । तेन निर्भरं विश्रृङ्खलं यत् तत् करुणारसनिर्भरम्, तेन । चित्तेन मनसा । न ख्यातिलाभपूजार्थं शास्त्रकरणम्, किन्तु केवलं करुणानुन्नमानसैरस्माभिः क्रियत इत्यर्थः । आत्मनि गुरुषु बहुवचनविधानादस्माभिरिति बहुवचननिर्देशः । समासेनेति शैवागमेषु विप्रकीर्णतया विस्तरेण चोक्तानां तत्त्वानां मन्दबुद्ध्यनुग्रहार्थं समासेन संश्लेषणेन, संक्षेपेण वेत्यर्थः ॥ ४ ॥

### वृत्तिः

अधुना प्रकरणे प्रतिपाद्यमर्थं प्रतिजानीते—लोकेति । तत्त्वानां पृथिव्यादिशिवान्ततत्त्वानां तत्कर्तुः शिवस्य तदुपकार्याणां चात्मनां प्रकाशः क्रियत इत्यर्थः ॥ ४ ॥

**शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात् त्रितयम् ।**
**तत्र पतिः शिव उक्तः पशवो ह्यणवोऽर्थपञ्चकं पाशः ॥ ५ ॥**

### तात्पर्यदीपिका

तत्त्वप्रकाशः क्रियत इत्युक्तम् । तत्रेदमाशङ्कते—कानि तानि तत्त्वानि, कियन्ति चेति । एकादिषट्त्रिंशान्तं बहुभिराचार्यैर्बहुधा तत्त्वानां प्रतिपादितत्वादाशङ्कासमुद्भवः । तामाशङ्कामपनेतुमाह—शैवेति ।

अयमभिप्रायः—एकादिषट्त्रिंशान्तेषु तत्त्वपक्षविशेषेषु सर्वेष्वपि मुख्यत्वादनभ्युपगमे दोषप्रसङ्गाच्च पतिपशुपाशात्मकत्रैविध्यमाश्रयणीयम् । तथा हि—पशोः संसारिणोऽनभ्युपगमे धर्माधर्मजन्ममरणसुखदुःखानुभवलक्षणस्य संसारस्य तन्निवृत्तिलक्षणस्य चाश्रयाभावादसत्त्वम्, तत्प्रतिपादकश्रुतिस्मृतीतिहासपुराणादेश्च निर्विषयतयाऽप्रामाण्यप्रसङ्गश्च स्यात् । तथा पाशानां संसारहेतुभूतानां मलकर्ममायाख्यानामभावे शरीरादेरभावे स्वर्गनरकगमनजन्ममरणादेरभावप्रसङ्गः, आत्मनो निष्क्रियस्य तदखिलासंभवात् । तथा पत्युः परमेश्वरस्याभावे जगत्सृष्टिस्थितिध्वंसधर्माधर्मबन्धमोक्षविचारादेरसंभवः, जीवानामसर्वज्ञानां शरीररहितानां तदसंभवात् । तस्मात् तत्त्वत्रैविध्यं सर्वेष्वपि पक्षविशेषेष्वभ्युपेयमिति । ननु तत्त्वैकत्वद्वित्वपक्षयोस्तदाश्रयणमुपाधिभेदकृतभेदसद्भावादिति ब्रूमः । तथाहि—एकमेव जलतत्त्वमुपाधिवशात् तरङ्गफेनबुद्बुदात्मनाऽप्रच्युतस्वभावं यथा त्रैविध्यभागवगम्यते, तथाऽयं शिवोऽप्यप्रच्युतस्वस्वभावस्त्रैविध्यं पतिपशुपाशात्मकमनुभवति । तदुक्तं शैवरहस्ये—''अनुभवति हि पशुभावं शिव एवाणवतिरोहितात्मगुणः । सोऽपि मलो यः कश्चन शक्तिलवः सर्वथा शार्वः ॥'' इति । प्रकृतिपुरुषात्मना द्वैविध्ये प्रकृतितदुपहितानुपहितात्मना त्रैविध्यसम्भव इति षट्त्रिंशान्तेषु चतुष्टयादिषु चेतरतत्त्वानामत्रैवान्तर्भावात् तत्त्रैविध्योपपत्तिः । तथाहि—पत्यौ शुद्धानां तत्त्वानामन्तर्भावः । मायाकार्याणां शुद्धाशुद्धानां पशावन्तर्भावः । अव्यक्तादिपृथिव्यन्तानां

केवलाशुद्धानां पाश इति। तदुक्तं शैवरहस्ये—"पत्यौ शिवस्वभावाः सर्वे सर्वात्मना प्रकाशन्ते। केचन पाशेषु पशुषु चान्तर्दधते निरवशेषम् ॥" इति। अत एवास्य त्रितयस्य मुख्यत्वम्, अन्येषामत्रैवान्तर्भावात्। अथवा क्रमान्मुख्यत्वमिति।

ननु कथमेतदवगम्यत इत्यत आह—शैवागमेष्विति। ते च—"कामिकं योगजं चिन्त्यं कारणं त्वजितं परम्। दीप्तं सूक्ष्मं सहस्रं च अंशुमान् सुप्रभेदकम् ॥ विजयं चैव निःश्वासं स्वायम्भुवमतः परम् ॥ वीरं च रौरवं चैव मुकुटं विमलं तथा ॥ चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा। सिद्धं सन्तानसर्वोक्तं पारमेश्वरमेव च ॥ किरणं वातुलं चैव त्वष्टाविंशतिसंहिताः। मूलभेदमिति ख्यातमसंख्यमुपभेदकम् ॥" इति। एषूक्तत्वादिति। तथा हि पारमेश्वरे तावत्—"पाश्यः पाशयिता पाशास्त्रयमेतद् व्यवस्थितम्" (वि० ६।२) इति। किरणे च—"पशुपाशपतिज्ञानविचारप्रतिपादकम्। किरणाख्यं महत् तन्त्रम्" (वि० १।१३) इत्यादि। श्रीवायवीये च—"अजडं च जडं चैव नियन्तृ च तयोरपि। पशुः पाशः पतिश्चेति कथ्यते त्रितयं क्रमात् ॥" (शि० वा० १।५।१२)

शैवेति शिवप्रणीतत्वविशेषणेनागमानां प्रामाण्यं सूचितम्। तथाहि—शिवस्य सर्वज्ञतया ज्ञानान्यथाज्ञानरागद्वेषादेरप्रामाण्यवाक्यरचनाहेतोरभावात् तद्रचितानामागमानां सिद्धयत्येव प्रामाण्यम्। नहि सर्वज्ञस्याज्ञानं संभवतीत्यज्ञानादप्रमाणवाक्यरचनेति वक्तुं शक्यते। अज्ञानाभावादेव तन्मूलरागद्वेषादेरभावात् तन्मूलाप्रमाणवाक्यरचनासम्भवः। तस्मात् क्षीणदोषतयाप्तेन महेश्वरेण रचितानां प्रामाण्यसद्भावात् तदुक्तप्रमेयतथात्वमभ्युपेयमिति। तदुक्तं शिवधर्मोत्तरादौ—"विधिवाक्यमिदं शैवं नार्थवादः शिवात्मकम्। लोकानुग्रहकर्ता यः स मृषार्थं कथं वदेत् ॥ सर्वज्ञपरिपूर्णत्वादन्यथा केन हेतुना। ब्रूयाद् वाक्यं शिवः शान्तः सर्वदोषविवर्जितः ॥ यद् यथावस्थितं वस्तु गुणदोषैः स्वभावतः। यावत्फलं च यत् पुण्यं सर्वज्ञस्तत् तथा वदेत् ॥ रागाज्ञानादिभिर्दोषैर्ग्रस्तत्वादनृतं वदेत्। ते चेश्वरे न विद्यन्ते ब्रूयात् स कथमन्यथा ॥ अपास्ताशेषदोषेण सर्वज्ञेन शिवेन यत्। प्रणीतममलं वाक्यं तत् प्रमाणं न संशयः ॥ तस्मादीश्वरवाक्यानि श्रद्धेयानि विपश्चिता। यथार्थं पुण्यपापेषु तदश्रद्धो व्रजत्यधः ॥" इति।

नन्वीश्वरप्रणीततागमानां कुतोऽवगम्यते ? तदागमैरेवेति चेत्, तदेतरेतराश्रयता। अथागमस्य प्रमाणभूतस्याप्तकर्त्रपेक्षायां तदन्यस्यातीन्द्रियार्थदर्शिनः कर्तृत्वासंभवाच्च सर्वेश्वरस्य सर्वकर्तुः सर्वज्ञस्यागमकर्तृत्वं निश्चीयत इति चेत्, नैवम्। आगमप्रामाण्यानिश्चयादेवं कल्पनानुपपत्तेः। तथा आप्तान्तराप्रणीतत्वे प्रमाणाभावादतीन्द्रियार्थदर्शिनः कर्तृत्वाविरोधाच्च न शिवप्रणीतत्वविशेषणस्यार्थवत्त्वमिति। नैतदेवम्, आगमस्य प्रतिपत्तिसामर्थ्यात्मकात् प्रमाणान्तरात् प्रामाण्यसिद्धेः।

तथा हि—द्विविधो ह्यागमः, दृष्टार्थोऽदृष्टार्थश्चेति। तत्र दृष्टार्थानां चित्रायागविधायकवाक्यसदृशानां तदुक्तकर्मानुष्ठानेन तदुक्तफलसंभवदर्शनात् प्रामाण्यमनुमाय तत्कर्तुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वनिश्चयेऽन्येषामदृष्टार्थानामपि तत्कर्तृकतया दृष्टार्थवाक्यवत् प्रामाण्यमनुमीयत इति। न च पूजाजपादिविशिष्टकर्मणां विशिष्टतत्तत्फलसाधनतामध्यक्षतोऽवगच्छन्नागमकर्ता भवेदसर्वज्ञः, एतद्दर्शिनो ह्यदृश्यवस्त्वन्तरा-

भावात्। न चानुमानादिममर्थमुपलभ्य तत्र वाक्यरचनेति वाच्यम्, व्याप्तिग्रहणलिङ्गादेरसम्भवात्। अनुमानं हि लिङ्गलिङ्गिनोः प्रत्यक्षतो व्याप्तिग्रहणे सति लिङ्गमात्रदर्शनादुपजायमानं लिङ्गिविज्ञानमाह। तथाहि—प्रत्यक्षतो महानसादौ धूमाग्न्योर्लिङ्गलिङ्गिनोरविनाभावे गृहीते देशान्तरे पर्वतादौ धूमदर्शनादग्न्यनुमानं प्रवर्तमानं दृष्टम्। तदत्र फलकर्मणोः साध्यसाधनभावस्य लिङ्गलिङ्गिनोः प्रत्यक्षतया लिङ्गानुपलम्भाच्च व्याप्तिग्रहणासंभवान्नानुमानसंभव इत्यनुमानमूलता नागमानाम्। नाप्यागमान्तरमूलता, तस्यापि पौरुषेयत्वेनागमान्तरमूलताभ्युपगमेऽनवस्थाप्रसङ्गात्। न च वेदव्यतिरिक्तमपौरुषेयं वाक्यं पश्यामः, येन तन्मूलता कल्प्येत। तस्मान्नागमान्तरमूलता आगमानाम्। न च योगिनामतीन्द्रियार्थदर्शिनामागमकर्तृत्वमिति वाच्यम्, तेषां महेश्वरप्रसादापेक्षसर्वज्ञतया तदुपायदीक्षापूर्वकपूजाद्यावेदकागमानां सद्भावस्य प्रागेवाश्रयणीयत्वात्, जगत्कर्तुः शिवादन्यस्यागमकर्तृत्वकल्पनानां गौरवापाताच्च स एवागमानामपि कर्तेति कल्प्यते। न च परस्परविरुद्धधर्मप्रतिपादकागमानामेकाप्तकर्त्रभ्युपगमासंभवादनेकाप्तकर्त्रभ्युपगमप्रसङ्ग इति वाच्यम्, वर्णाश्रमाद्यधिकारिभेदवशेन वेद्यस्य चैकस्यैव शिवस्य करुणानिधेर्विरुद्धधर्मोपदेशोपपत्तेरिति नेतरेतराश्रयत्वादिदोषः। न च लोकपरिग्रहे स्यादन्योन्याश्रयत्वमिति वाच्यम्, तस्य प्रामाण्यपरिज्ञानमूलत्वाभावात्। तथाहि—प्रथमं तावदागमान् विरचय्य ब्रह्माणं स्वसुतं महेश्वरो ग्राहयामाम। ततः स्वसुतान् ब्रह्मा, ततस्तेऽपि स्वसुतानिति वेदपरिग्रहवदागमपरिग्रहोपपत्तेर्नोक्तदोषावकाशः।

ननु शिवप्रणीततयाऽऽगमप्रामाण्यं पूर्वमुपवर्णितम्। सम्प्रति प्रतिपत्तिसामर्थ्यादिति पूर्वापरविरोध इति चेन्न, उत्पत्तिज्ञप्त्यपेक्षया उभयोरप्युपपत्तेः। तथाहि—शिवप्रणीततयागमानां प्रामाण्यमुपजातं तत्प्रतिपत्तिसामर्थ्येनावगम्यत इति न कश्चिद्विरोधः। वेदमूलत्वाद्वाऽऽगमप्रामाण्यम्। तदानीमपि शिवप्रणीतत्वादागमप्रामाण्यं द्रढयति, शिवदृष्टस्य वेदार्थस्याबाध्यत्वादिति। स चागमो द्वेधा—प्रत्यक्षश्रुतिमूलोऽनुमेयश्रुतिमूलश्चेति। तत्र प्रत्यक्षश्रुतिमूलानामागमानां प्रत्यक्षश्रुतिमूलवत् प्रामाण्यम्, अनुमेयश्रुतिमूलानामष्टकादिश्रुतिमूलवदित्यागमेषु प्रतिपाद्यमानानामर्थानां श्रुतिषूपलम्भात् तन्मूलतागमानामवगम्यते। तथाहि—"रुद्रोऽवश्यं यष्टव्यः" इति श्रुतिवाक्याद् रुद्रयागकर्तव्यताऽवभासते। तत्र करणादिकं मन्त्रार्थवादावगतमागमैः प्रतिपाद्यत इति तन्मूलतागमानाम्। तथाहि—"तमुष्टुहि यः स्विषुः सुधन्वा यः" (ऋ० ५।४२।११) इत्यत्र पूजास्तुतिनमस्कारादे रुद्रगोचरस्य महत्सौख्यनामकापवर्गं प्रति हेतुताऽवगम्यते। "अन्तरिच्छन्ति" (ऋ० ८।७२।३) इत्यत्र ध्यानजपौ रुद्रविषयौ कर्तव्यावित्यवगम्यते। "यज्ञं रुद्राय मीढुषे" (ऋ० १।१२२।१) इत्यत्र पान्तं पानीयं सोमाख्यमन्धोहवी रुद्राय हरध्वमित्यवगम्यते। एवं शतरुद्रीयनीलरुद्रसूक्तश्वेताश्वतरेशावास्याथर्वशिरस्तच्छिखारौद्रसूक्तारणादिष्वागमप्रतिपाद्यमानानामर्थानां सद्भावो द्रष्टव्य इति।

अत्र प्रयोगाः—विवादपदं तन्त्रशास्त्रं प्रमाणम्, यथार्थत्वात्, सम्प्रतिपन्नवाक्यवत्। तथा तन्त्रशास्त्रं प्रमाणम्, आप्तोक्तत्वात्, यद्यदाप्तोक्तं तत्तत्प्रमाणम्, यथा पुराणादि, तथेदमाप्तोक्तम्, तस्मात् प्रमाणम्। तथागमाः शिवप्रणीताः, तदन्याजन्यकार्यत्वात्, यद्यत् तदन्याजन्यकार्यं तत्तच्छिवप्रणीतम्, यथा प्रपञ्चः, तथा चैते, तस्माच्छिव-

प्रणीताः। तन्त्रशास्त्रं कार्यम्, वेदान्यवाक्यत्वात्, यद्यद् वेदव्यतिरिक्तं वाक्यं तत्तज्जन्यं दृष्टम, यथा भारतादि। न च प्रपञ्चस्य शिवप्रणीतत्वासिद्धेः साध्यविकलो दृष्टान्त इति वाच्यम्, तस्योपरिष्टादुपपाद्यमानत्वात्। तथा तन्त्रशास्त्रं प्रमाणम्, वेदमूलत्वात्, मन्वादिस्मृतिवत्। तद् वेदमूलं च, तदुक्तार्थप्रतिपादकत्वात्, मन्वादिस्मृतिवदिति। अथ शास्त्रमप्रमाणम्, अनाप्तकृतत्वात्, सम्प्रतिपन्नवदिति प्रत्यनुमानबाधादोषप्रसङ्ग इति चेत्, नैवम्, विकल्पानुपपत्तेः। तथाहि—अनाप्तकृतत्वादित्यस्य कोऽर्थः? यद्याप्तेनाकृतत्वम्, आहोस्विदनाप्तेन कृतत्वम्। यद्याद्यः पक्षः, तर्हि वेदवाक्यैर्व्यभिचारः, तेषां प्रमाणभूतानामेवाप्तेनाकृतत्वहेतोः सद्भावात्। असिद्धश्चायं हेतुः, आप्तकृतत्वस्य साधितत्वात्। यद्युत्तरः पक्षः, तदा चाप्तकृतत्वादेवासिद्धता। न चानाप्तरचिता आगमाः, वेदविरुद्धत्वात्, बौद्धाद्यागमवदिति साधयितुं शक्यत्वान्नासिद्धतेति वाच्यम्, वेदार्थप्रतिपादकतया वेदमूलानामागमानां वेदविरुद्धत्वस्याप्यसिद्धत्वात्। तस्माच्छैवागमेषूक्तत्रैविध्यादिकं मार्कण्डेयागस्त्यरामदधीचादिसकलशिष्टजनैः परिगृहीतत्वाच्चादरणीयमिति।

पतिपशुपाशा इति। पतिश्च पशवश्च पाशाश्चेति तथोक्ताः। के त इत्याकाङ्क्षायामाह—तत्र पतिः शिव उक्तः पशवो ह्यणवोऽर्थपञ्चकं पाश इति। तत्र तेषां मध्ये पशूनां पालनात् पतिशब्देन शिव उक्तोऽभिहितः। पशवो ह्यणवः अणुत्वसम्पादकमलादिसम्बन्धिनः। शिवस्वभावा जीवाः पशवो न चतुष्पाद एव, द्विपदां च पशुत्वश्रवणात्। तथाहि—"एतावन्तो वै पशवो द्विपादश्चतुष्पादश्च। यो वामिन्द्रावरुणा द्विपात्सु पशुषु यो वा चतुष्पात्सु पशुषु" ( तै० सं० २।३।१३।१ ) इत्यादिश्रुतेः। तेषामीश्वरत्वाद् भगवतः शिवस्य पशुपतित्वम्, "येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्" ( तै० सं० ३।१।४।१ ) इति श्रुतेः। लैङ्गोपरिभागे च—"ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य धीमतः। पशवः परिकीर्त्यन्ते संसारवशवर्तिनः॥ तेषां पतित्वाद् भगवान् रुद्रः पशुपतिः स्मृतः।" ( लि० पु० २।९।११-१२ ) इति। ननु केन कारणेन जीवात्मनां शिवस्वभावानां मलादिपाशसम्बन्ध इति चेदुच्यते—मलपाशसम्बन्धात् कर्मपाशसम्बन्धः। तत्सम्बन्धान्मायापाशसम्बन्धः। मलपाशसम्बन्धस्य त्वनादित्वेन न कारणापेक्षा। यस्य वस्तुन आदिमत्त्वं तस्यैव हि कारणापेक्षित्वम्। अस्य त्वनादित्वान्न कारणापेक्षेति। तदुक्तं किरणे—"अनादिमलसम्बन्धान्मलिनत्वमणौ स्थितम्। अनादिमलमुक्तत्वान्निर्मलत्वं स्थितं शिवे॥ आदिमत्त्वं यदा सिद्धं निमित्तं कथ्यते तदा। ईदृग्रूपं स्मृतं ताभ्यां शुद्धाशुद्धं यथार्थतः। विशुद्धः स्फटिकस्तस्मात् ताम्रं तावत् सकालिकम्॥ यथास्मिन्न निमित्तं स्यात् तथा न स्याच्छिवात्मनोः॥" (कि० ३।३-५) इति। ननु तर्हि पशूनां शिवत्वाभावप्रसङ्ग इति चेत्, नैवम्, तेषां शिवस्वभावत्वे श्रुत्यादिप्रमाणसद्भावस्य वक्ष्यमाणत्वात्। अत एव पाशबद्धत्वात् पशुत्वम्। तेन किञ्चित्कर्तृत्वादिनाऽणुत्वम्, न परमाणुवदवस्थानात्, तेषामव्यापकत्वेन तदसंभवादिति।

अर्थपञ्चकं पाश इति। अर्थानां मलकर्मसूक्ष्मस्थूलमायापाशानुग्राहकशिवशक्तीनां पञ्चकमर्थपञ्चकम्, तत्पाशाख्यं तत्त्वमिति। तदुक्तम्—"मलं कर्म च माया च मायोत्थमखिलं जगत्। तिरोधानकरी शक्तिरर्थपञ्चकमुच्यते॥" इति। नन्वर्थपञ्चकं

पाश इतीह प्रतिपादितम्, शास्त्रान्तरे तु पाशानां त्रैविध्यमुक्तमिति विरोधः। तथा हि शैवरहस्ये तावत्—"सहजमनादि मलं स्यात् पाशेषु त्रिष्वपि प्रधानतमम्। कर्म च माया च मले सति पाशतया प्रवर्तेते॥" इति। प्रयोगमञ्जर्यां च – "पाशास्त्रयो निगलयन्ति" इति। नैवम्, ईश्वरशक्तेः पाशानुग्राहितयैव पाशत्वाभिधानान्मायापाशस्य स्थूलसूक्ष्मात्मना द्वैविध्येन च पञ्चधा भेदाभिधानादिति।

अध्वपञ्चकं पाश इति केचित् पठन्ति। तदाध्वनां षण्णां तत्त्ववर्णमन्त्रभुवनपदकलानां पञ्चकमध्वपञ्चकं पाश इति। तदुक्तं सिद्धान्तहृदये—

शिवः पशुपतिः प्रोक्तः पशवो ह्यणवो मताः।
ते पाशबद्धाः पशवः पाशः स्यादध्वपञ्चकम्॥
अध्वानस्तत्त्वभुवनकलार्णपदमन्त्रकाः।
यैरमी पुरुषा बद्धाः संसरन्ति भवाद् भवम्॥
मलादिजाः षडध्वानस्तत्त्वाद्यास्ते च पञ्चधा।
निवृत्त्यादिविभागेन तदुक्तं ह्यध्वपञ्चकम्॥ इति।

गुरुदेवपद्धतौ च—

अथाध्वनां क्रमादेषां व्याप्तिः सम्यङ् निगद्यते।
पृथ्वीतत्त्वं क्षवर्णश्च मन्त्रौ हृदयसद्यकौ॥
कालाग्निरपि कूष्माण्डहाटकौ ब्रह्मवैष्णवे।
रौद्रं च भुवनान्यन्तर्ब्रह्माण्डस्य भवन्ति षट्॥
अण्डाद् बहिः शतं रुद्रा दशदिक्षु व्यवस्थिताः।
कपालीशो ह्यजो बुद्धो वज्रदेहः प्रमर्दनः॥
विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः।

प्राच्यां दिशि।

अग्नी रुद्रो हुताशश्च पिङ्गलः खादको हरः।
ज्वलनो दहनो बभ्रुर्भस्मान्तश्च क्षयात्मकः॥

आग्नेय्यां दिशि।

यमो मृत्युर्हरो धाता विधाता च तथापरः।
कर्ता चैव च संयोक्ता नियोक्ता धर्म एव च।
तद्वद् धर्मपतिस्तत्र दशमो दक्षिणे स्थिताः॥
निर्ऋतिर्मारणो हन्ता क्रूरदृष्टिर्भयानकः।
ऊर्ध्वकेशो विरूपाक्षो धूम्रलोहितदंष्ट्रिणः॥

नैर्ऋत्याम्।

बलो ह्यतिबलश्चैव पाशहस्तो महाबलः।
श्वेतोऽथ जयभद्रश्च दीर्घहस्तो बलान्तकः॥
वारुण्यां मेघनादश्च सुनादश्च प्रकीर्तितः।
शीघ्रो वायुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षयान्तकः॥
पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः।

वायव्याम् ।

निधीशो रूपवान् धन्यः सौम्यदेहो जटाधरः ॥
लक्ष्मीधरो रत्नधरः श्रीधरश्च प्रसाधनः ।
प्रकामो दशमश्चेति कौबेर्यां दिशि संस्थिताः ॥
विद्याधिपेशसर्वज्ञा ज्ञानभुग् वेदपारगः ।
सुरेशशर्वज्येष्ठाश्च भूतपालो बलिप्रियः ॥

ऐशान्याम् ।

विषो विषधरोऽनन्तः क्रोधनो मारुताशनः ।
न्यग्रोधोदुम्बरीशश्च फणीन्द्रो वज्रदंष्ट्रिणौ ॥

अधोभागे ।

शम्भुर्विभुर्गणाध्यक्षस्त्रियक्षस्त्रिदशेश्वरः ।
संवाहश्च विवाहश्च नभोलिप्सुस्त्रिलोचनः ॥
तेषामुपरि रुद्राणां वीरभद्रो व्यवस्थितः ।
भद्रकाल्याश्च भुवनमेवमष्टाधिकं शतम् ॥
भुवनानि क्रमोक्तानि रुद्राणां स्वाख्यया पृथक् ।
मन्त्रावसानिकपदान्महादेवपदावधि ॥
विलोमतः पदानि स्युरष्टाविंशतिसंख्यया ।
इत्यध्वपञ्चकं षष्ठ्या निवृत्तिकलया समम् ॥
व्याप्तं संचिन्तनीयं स्यादध्वषट्कं विभागतः ।
आपोऽग्निर्वायुराकाशो गन्धश्च रसरूपके ॥
स्पर्शः शब्दश्च वाक्पाणी पादपायुभगानि च ।
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणश्चेतीन्द्रियाणि च ॥
मनोऽहङ्कारबुद्ध्यन्तमन्तःकरणकत्रयम् ।
सर्वेषां त्रिगुणाऽथ स्यात् प्रकृतिः कारणं परा ॥
त्रयोविंशतितत्त्वानि विलोमादिति संख्यया ।
हादिटान्तास्ततो वर्णास्त्रयोविंशतिसंख्यकाः ॥
शिरश्च वामदेवाख्यो मन्त्रौ तद्वत् पुराणि तु ।
षट्पञ्चाशत् क्रमेण स्युरमरेशादिनामभिः ॥
अमरेशं प्रभासं च नैमिषं पुष्कराषढी ।
डिण्डिमुण्डिर्भारभूतिरित्यष्टावम्बुतत्त्वके ॥
हरिश्चन्द्रश्च श्रीशैलो जल्पीशाम्रातकेश्वरौ ।
मध्यमेशो महाकालः केदारो भैरवस्तथा ॥
भुवनाष्टकमित्येतत् तेजस्तत्त्वे व्यवस्थितम् ।
गया चैव कुरुक्षेत्रं नोखलं कनखलं तथा ॥
विमलेशोऽट्टहासश्च महेन्द्रं भीमकेश्वरम् ।
इत्यष्टौ भुवनानि स्युर्वायुतत्त्वगतानि तु ॥

वस्त्रापदो रुद्रकोटिरविमुक्तो महालयः ।
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरित्यपि ॥
भुवनाष्टकमाकाशसंज्ञतत्त्वे व्यवस्थितम् ।
छगलण्डो द्विरण्डश्च मार्को गोमण्डलेश्वरः ॥
कालञ्जरं दारुवनं शङ्कुकर्णं स्थलेश्वरम् ।
प्रारभ्य गन्धतन्मात्रमहङ्कारान्तमध्वनि ॥
स्थितानि भुवनान्यष्टावेतानि तु यथाक्रमम् ।
पैशाचं राक्षसं याक्षं गान्धर्वं चैन्द्रसोम्यके ॥
प्राजेशं ब्राह्ममित्येतद् देवयोन्यष्टकं धियि ।
अकृतं च कृतं चैव भैरवं ब्राह्मवैष्णवे ॥
कौमारमौमं श्रीकण्ठमिति योन्यष्टकं स्मृतम् ।
गुणप्रकृतितत्त्वे तु स्थिरमेतत् तु भौवनम् ॥
अष्टकैः सप्तभिस्त्वेवं षट्पञ्चाशद् यथाक्रमम् ।
भुवनानि स्थितान्येवं पदान्यप्येकविंशतिः ॥
महेश्वराख्यात् प्रारभ्य स्यादरूपिन्पदावधि ।
एवं पञ्चविधाध्वा स्यात् प्रतिष्ठाकलया समम् ॥
षष्ठ्या व्याप्तं विचिन्त्यं स्यात् षोढाध्वव्याप्तिरीदृशी ।
अथ विद्याकलायां तु पुरुषो राग एव च ॥
अशुद्धविद्या च कला नियतिः काल एव च ।
माया च सप्त तत्त्वानि वर्णसप्तकसंयुतम् ॥
ञकारादि घकारान्तं शिखाघोरौ च मन्त्रकौ ।
वामादिभुवनानि स्युः सप्तविंशतिसंख्यया ॥
वामो भीमस्तथैवोग्रो भवश्चेशान एव च ।
एकवीरश्च पुरुषः षडेते भुवनेश्वराः ॥
प्रचण्डोमापतिश्चाजो ह्यनन्तश्चैकरुद्रकः ।
रागतत्त्वे स्थितं त्वेतद् भुवनानां तु पञ्चकम् ॥
क्रोधचण्डावशुद्धायां विद्यायां तु व्यवस्थितौ ।
नियत्यां ज्योतिसंवर्तौ ततः सूकरसंज्ञितः ॥
पञ्चान्तकैकवीरौ च शिवदश्च कलागताः ।
महादेवो वामदेव उद्भवश्चैकपिङ्गलः ॥
एकनेत्रस्तथेशानो भुवनेशस्ततः परः ।
अङ्गुष्ठमात्र इति चाप्यष्टावेते स्थलेश्वराः ॥
कालतत्त्वे च मायायां भौवनी सप्तविंशतिः ।
व्यापिन्निति समारभ्य ध्यानाहारपदावधि ॥
पदानां विंशतिश्चात्र स्याद् विद्याकलयाऽखिलम् ।
व्याप्तं सञ्चिन्तयेदेवं षड्विधाध्वव्यवस्थितिः ॥

अथ शान्तिकलायां स्याच्छुद्धविद्येश्वरावधि ।
सदाशिवश्च तत्त्वानि त्रीणि तस्यां स्थितानि हि ॥
वर्णास्त्रयः स्युर्गखका मन्त्रौ कवचपूरुषौ ।
अष्टादशैव भुवनान्यत्र वामादिसंज्ञया ॥
वामा ज्येष्ठा च रौद्री च काली कलविकारिणी ।
बलविकरणी चैव बलप्रमथिनी तथा ॥
सर्वभूतदमन्येका नवमी तु मनोन्मनी ।
शुद्धविद्याह्वये तत्त्वे स्थितान्येवमनुक्रमात् ॥
अनन्तेशश्च सूक्ष्मश्च ततश्चापि शिवोत्तमः ।
एकनेत्रश्चैकरुद्रस्त्रिमूर्तिस्तु तथाऽपरः ॥
श्रीकण्ठश्च शिखण्डी च भुवनानीश्वराह्वयम् ।
सदाशिवाख्यं भुवनं स्थितं तत्त्वे सदाशिवे ॥
पदान्येकादशाऽत्रैव नित्ययोगिन आदितः ।
व्योमव्यापिपदान्तानि स्थितान्येवं तु पञ्चधा ॥
षष्ठ्या तु शान्तिकलया व्याप्तान्येवं विचक्षणैः ।
षड्विधाध्वमयी व्याप्तिर्बोद्धव्या क्रमशो भवेत् ॥
तथैव शान्त्यतीतायां शिवतत्त्वं व्यवस्थितम् ।
वर्णाः षोडश सर्गाद्याः स्वराः स्युस्ते विलोमतः ॥
अस्त्रेशानौ तथा मूलमन्त्रो मन्त्रा भवन्ति हि ।
निवृत्त्यादीनि भुवनान्यत्र पञ्चदशैव हि ॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
शान्त्यतीतेति हि कलाः स्युर्बिन्दौ भुवनानि हि ॥
इन्धिका दीपिका रोचिर्मोचिका चोर्ध्वगा तथा ।
भुवनानीति पञ्च स्युस्तानि नादकलाः खलु ॥
व्यापिनी व्योमरूपा चाप्यनन्ता चाप्यनाथया ।
अनाश्रिता चेति कलाः शक्ताः स्युर्भुवनान्यपि ॥
मन्त्राद्यं प्रणवं यत् तद् विलोमेनान्तकं तु तत् ।
पदमेकं भवेदेवमध्वायं पञ्चधोदितः ॥
शान्त्यतीतकलाव्याप्तं विद्यादित्यध्वनां क्रमात् ।
षड्विधा व्याप्तिरुद्दिष्टा शैवागमविनिर्णयात् ॥
षडध्वज्ञानवान् मुच्येन्मोचयेच्च भवार्णवात् ।

एकत्राध्वा षड्विधैकादश स्यु-
र्मन्त्रास्त्वेकं चाप्यशीतिः पदानि ।
षट्त्रिंशच्चाप्यत्र तत्त्वानि वर्णाः
पञ्चाशत् स्युः पञ्चसंख्या कलेति ॥ ८

अथ पदोद्धारः—

प्राक्पदं प्रणवं तत् स्यादेकवर्णं शिवात्मकम् ।
व्योमव्यापि चतुर्थ्यन्तं द्वितीयं पञ्चवर्णकम् ॥
तृतीयं व्योमरूपाय पञ्चार्णमपरं तथा ।
सर्वव्यापि चतुर्थ्यन्तं शिवायेत्यथ पञ्चमम् ॥
त्र्यक्षरं च विजानीयात् पञ्चाङ्गानि शिवस्य तु ।
अनन्तायेत्यनन्तस्य वाचकं चतुरक्षरम् ॥
अनाथायेति सूक्ष्मस्य पदं स्याच्चतुरक्षरम् ।
अनाश्रिताय पञ्चार्णं पदं शिवतमस्य तु ॥
ध्रुवायेति पदं त्र्यर्णमेकनेत्रस्य कीर्तितम् ।
शाश्वतायैकरुद्रस्य पदं स्याच्चतुरक्षरम् ॥
योगपीठसंस्थिताय चाष्टार्णं तु त्रिमूर्तिनः ।
श्रीकण्ठस्य पदं नित्ययोगिने पञ्चवर्णकम् ॥
ध्यानाहाराय पञ्चार्णं पदमेतच्छिखण्डिनः ।
नमः शिवायेति पदं षड्वर्णं प्रणवादिकम् ॥
सर्वप्रभुश्चतुर्थ्यन्तं पञ्चार्णं पदसन्ततौ ।
शिवाय पदमन्यच्च चतुर्थ्यन्तं त्रिवर्णकम् ॥
पदमीशानमूर्धाय षड्वर्णं मुनिसत्तम ।
तदीशानस्य बोद्धव्यं सप्तार्णं पुरुषस्य तु ॥
स्यात् तत्पूरुषवक्त्राय अघोरहृदयाय च ।
सप्तार्णं बहुरूपस्य तद्वद् वामस्य कीर्तितम् ॥
स्याद् वामदेवगुह्याय सद्यस्याप्यथ कथ्यते ।
सद्योजातमूर्तयेति सप्तवर्णमुदीरितम् ॥
प्रणवादि प्रयोक्तव्यं पञ्चार्णं च नमो नमः ।
गुह्यातिगुह्याय पदं षड्वर्णं द्व्यर्णकं परम् ॥
गोप्त्रेपदं चतुर्वर्णं मातङ्गे निधनाय तत् ।
अकारपूर्वं पञ्चार्णं चन्द्रज्ञाने प्रकीर्तितम् ॥
सर्वविद्याधिपायेति पदं स्यात् सप्तवर्णकम् ।
सर्वयोगाधिपूर्वं तु गतायेत्यष्टवर्णकम् ॥
ज्योतीरूपाय पञ्चार्णं पदमेतत् सुशोभनम् ।
परमेश्वरपूर्वं तु परायेत्यष्टवर्णकम् ॥
अचेतनाचेतनेति सप्तवर्णं पदं विदुः ।
व्योमिन्व्योमिंश्चतुर्वर्णं व्यापिन्व्यापिंस्तथा पदम् ॥
अरूपिश्च द्विरभ्यस्य षड्वर्णं पदमीरितम् ।
प्रथमेति द्विरभ्यस्तं षड्वर्णमपरं तथा ॥

तेजस्तेज इति प्रोक्तं चतुर्वर्णं पदं विभोः ।
ज्योतिर्ज्योतिः पदं तद्वद् विज्ञेयं चतुरक्षरम् ॥
त्र्यर्णं पदमरूपाख्यं तथानग्नेपदं शुभम् ।
त्रिवर्णं स्यादधूमाख्यमभस्माख्यं तथा पदम् ॥
अनादे त्र्यर्णमुद्दिष्टं नात्रयं धूत्रयं तथा ।
ॐभूस्तद् द्व्यक्षरं ज्ञेयमोंभुवश्च त्रियक्षरम् ॥
ॐ स्वो वर्णद्वयं चानिधनाख्यं चतुरक्षरम् ।
निधनाख्यं त्रिवर्णं स्यात् पञ्चार्णं निधनोद्भवम् ॥
द्व्यक्षरं स्याच्छिवपदं द्व्यर्णं शर्वपदं विभोः ।
परमात्मंश्चतुर्वर्णं महेश्वरपदं तथा ॥
चतुर्वर्णं समुद्दिष्टं महादेवपदं हि यत् ।
सद्भावेश्वरसंज्ञं तु पञ्चार्णं मुनिसत्तम ॥
महातेज इति प्रोक्तं पदं वर्णचतुष्टयम् ।
पदं पञ्चार्णमुद्दिष्टं योगाधिपतिसंज्ञकम् ॥
मुञ्च मुञ्च चतुर्वर्णं षड्वर्णं प्रमथात्मकम् ।
शर्वशर्वपदं चात्र बोद्धव्यं चतुरक्षरम् ॥
भवयुग्मं तथा तद्वद् भवोद्भवपदं पुनः ।
पदमष्टाक्षरं चान्यत् सर्वभूतसुखप्रदम् ॥
सर्वसान्निध्यपूर्वं तु करान्तं सप्तवर्णकम् ।
पदमष्टाक्षरं ब्रह्मविष्णुरुद्रपरम्परम् ॥
अनर्चितं द्विरभ्यस्तमष्टार्णं पदमुच्यते ।
असंस्कृतपदं तद्वत् पूर्वस्थितपदं तथा ॥
साक्षिस्तु रूपदे तद्वच्चतुर्वर्णं द्विरुक्तितः ।
षट् पतङ्गपदे वर्णाश्चत्वारः पिङ्गसंज्ञके ॥
तद्वज्ज्ञानपदं शब्दसूक्ष्माख्ये चतुरक्षरे ।
द्व्यक्षरं स्याच्छिवपदं तथा शर्वपदं विभोः ॥
त्र्यक्षरं सर्वदपदं प्रणवादि नमो नमः ।
पञ्चवर्णं शिवायेति त्रियक्षरमुदीरितम् ॥
नतियुग्मं पञ्चवर्णं सतारं पदमुत्तमम् ॥ इति ॥ ५ ॥

## वृत्तिः

तान्येव प्रकाशान्युद्दिशति—शैवागमेष्विति ।

पदार्थानामिति शेषः । तदुक्तं तन्त्रलक्षणे—"त्रिपदार्थं चतुष्पादं महातन्त्रम्" (मृ० वि० २।२) इति । अतश्च तेष्वेवान्येषां वस्तूनामन्तर्भाव इति लक्षणेन दर्शयति—तत्र पतिरिति । तत्र तेषु त्रिपदार्थेषु मध्ये पतिपदार्थः शिव इत्युक्तः । शिवशब्देनात्र जात्येकवचनेन शिवत्वयोगिनां मन्त्रमन्त्रेश्वरमन्त्रमहेश्वरमुक्तात्मशक्तिशिवानां सवाचकानां

शिवत्वप्राप्तिसाधनेन दीक्षादिनोपायकलापेन सह पतिपदार्थे संग्रहः कथ्यते। अणवश्चात्मानः प्रेर्याः। अनेन च पशुत्वयोगिनां विज्ञानकलादिभेदभिन्नानां बद्धात्मनां पशुपदार्थत्वमुच्यते। अर्थपञ्चकमित्यनेन मलरोधशक्तिकर्ममायाबिन्दवः प्रोच्यन्ते। ततस्तेषां पञ्चानां बिन्दुमायोद्भूतैः शुद्धाशुद्धरूपैस्तत्त्वभुवनभूतभावैः सह पाशपदार्थे संग्रहः। ननु कथमेकस्या एव शिवशक्तेः पतिपदार्थे पाशपदार्थे च संग्रह उच्यते? सत्यम्, परमार्थतः पतिपदार्थ एव शक्तेरन्तर्भावः। पाशत्वं तु तस्याः पाशधर्मानुवर्तनेनोपचारात्। तदुक्तं श्रीमन्मृगेन्द्रे—"तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा। धर्मानुवर्तनादेव पाश इत्युपचर्यते॥" ( वि० ७।११ ) इति॥ ५॥

**मुक्तात्मानोऽपि शिवाः किन्त्वेते तत्प्रसादतो मुक्ताः।**
**सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः॥ ६॥**

**तात्पर्यदीपिका**

ननु पशूनां शिवस्वभावतया पतिव्यतिरेकासम्भवात् (तत्तद् ? कथं तद्) द्वैविध्यप्रसङ्ग इत्याशङ्क्याह—मुक्तेति।

अयमभिप्रायः—मुक्तात्मनामेव शिवस्वभावत्वम्। किन्तु तेषामपि मुक्तेः प्राग् न शिवात्मता, ताम्रादेः स्वर्णस्वभावाच्छादककालिमाकल्पमलादिपाशप्रच्छादितशिवस्वभावतया पशुत्वात्। अत एव ते तत्प्रसादतो मुक्ताः। स शिवस्त्वनादिमुक्तः। एक इति। एक एव नित्यमुक्त इत्यर्थः, कालत्रयेऽपि मलादिसम्बन्धरहितत्वात्। तदुक्तं श्रीवायवीये—

अनादिमलसंश्लेषप्रागभावात् स्वभावतः।
अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते॥ इति।
(शि० वा० १।३२।२९)

पञ्चमन्त्रतनुरिति। नादबिन्दुपदवर्णवाक्यात्मना पञ्चात्मकसकलमन्त्रशरीर इत्यर्थः। मन्त्रस्वरूप इति वा। "तस्योष्णिग्लोमानि त्वग् गायत्री त्रिष्टुम्मांसमनुष्टुप् स्नायुरस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती" (ऐ० उ० १।६।१) इत्यादिश्रुतेर्वैदिकादिमन्त्राणां धातुमयत्वप्रतिपादनाच्छिवस्य मन्त्रशरीरत्वावगमः। अथवा प्रणववेदचतुष्कात्मना पञ्चात्मकमन्त्रतनुरिति। तदुक्तं लैङ्गादौ—

ओङ्काररूपमृग्वक्त्रं सामजिह्वासमन्वितम्।
यजुर्वेदमहाग्रीवमथर्वोष्ठमजं विभुम्॥ (१।१।३०-३१) इति। २

बीजबिन्दुनादशक्तिशान्तात्मना पञ्चात्मकप्रणवतनुरिति वा, "ओमिति ब्रह्म, ओमित्यथो योऽसौ तपति" इत्यादिश्रुतेः। पञ्चाक्षरतनुरिति वा, निवृत्त्यादिपञ्चतत्त्वतनुरिति वा, पञ्चब्रह्मतनुरिति वा। तदुक्तं लिङ्गोद्भवे—

[1]अथ दृष्ट्वा कलावर्णमृग्यजुस्सामरूपिणम्।
ईशानमीशमकुटं पुरुषाख्यं पुरातनम्॥

---

१. आद्यं श्लोकद्वयं लिङ्गपुराणे ( १।१७।८९-९० ) दृश्यते।

अघोरहृदयं हृद्यं वामगुह्यं सदाशिवम् ।
सद्यःपादं महादेवं महायोगीन्द्रभूषणम् ॥
निष्कलं सूक्ष्ममव्यक्तं सकलं च महेश्वरम् ।
सर्गप्रतिष्ठासंहारलीलार्थं लिङ्गरूपिणम् ॥
प्रधानं लिङ्गमाख्यातं लिङ्गी च परमेश्वरः । इत्यादि ।

पारमेश्वरे च—

पञ्चमन्त्रतनुः श्रीमान् सकलः परिपठ्यते ।....
योगयोगीश्वरः स्वामी स्वतन्त्रः पशुपाशहा ॥
( वि० ३।१८, १९)

ईशानमूर्धा पुंवक्त्रो ह्यघोरहृदयः प्रभुः ।
उच्यते वामगुह्योऽयं सद्योमूर्तिर्महेश्वरः ॥
एवं मन्त्रास्तु पञ्चैते यैर्निबद्धा तनुः शिवा । इत्यादि ।
( वि० ४।१४-१५, ३० )

तस्मादेवं विज्ञेयः विशेषेण भेदेन पशुभ्यो ज्ञेयः शिव इति । न च परमेश्वरवाचकस्य वेदमन्त्रादेर्वाच्याद् भेदसद्भावेन तस्य वेदमयत्वाभाव इति वाच्यम्, तयोर्भेदे वाच्यवाचकनियमाभावप्रसङ्गात् । न च सम्बन्धात् तन्नियमः, सम्बन्धस्य सम्बन्धान्तराश्रयणादनवस्थादिदोषस्योक्तत्वात् । न च वाचकत्वशक्तिर्नियामिकेति वाच्यम्, तस्याश्च वाच्याद् भेदसद्भावेऽन्यशक्तिवदनियामकत्वात् । शक्तेर्वाच्यासाधारण्यमप्यभेदव्यतिरिक्तं न संभवतीति वाच्यवाचकयोरेवाभेदोऽभ्युपगन्तव्यः, किमनया शक्तिकल्पनया । न च वाच्यवाचकभावस्य भिन्ननिष्ठतया तयोरभेदोऽसंभव इति वाच्यम्, गुणगुणिभेदवद् भेदस्याप्यत्र सद्भावात् । न च भेदाभेदयोर्विधिप्रतिषेधरूपत्वेन विरोधादेकत्रासम्भवः, वाच्यवाचकभावान्यथानुपपत्तिप्रमाणसिद्धत्वात् । तथा घटोऽयं पटोऽयं शब्दोऽयमिति वाचकसंपृक्तार्थप्रतिभासाद् घटशब्दोऽयमित्यसंपृक्तशब्दप्रतिभासाच्च शब्दार्थयोरैक्यमाश्रयणीयम् । अत एव तत्त्वादिवाचकमन्त्रविन्यासात् तत्त्वादिसान्निध्यमिति सर्वमवदातम् ॥ ६ ॥

## वृत्तिः

अस्तु तर्हि मुक्तानां पाशसंसर्गरहितत्वाच्छिवत्वम्, विद्येश्वरादीनां तु बैन्दवशरीरयोगेऽपि कथं पशुत्वाभावोऽत आह—मुक्तात्मेति ।

मुक्तात्मानः संप्राप्तशिवसाम्याः । अपिशब्दाद् विद्येश्वरादयश्च शिवा एव, पशुत्वाख्येन मलेन विरहात् । तद्योगिनां हि पशुत्वम्, "पशुः पशुत्वसंयोगात्" इति श्रुतेः । अत एषां शिवत्वेन सर्वज्ञत्वादिना योगात् शिवत्वमेव । बैन्दवशरीरयोगस्तु अधिकारमलांशावशेषतोऽधिकारनिबन्धन एव । अत एव मायोत्तीर्णत्वाद् मलरहितत्वाच्च विद्याविद्येश्वरप्राप्तेरपरमुक्तित्वम् । कथं पुनर्मन्त्रेश्वराणां कलादियोगेऽपि शिवत्वम्, साक्षात् शिवानुगृहीतत्वेन सर्वज्ञत्वादिना योगान्मलरहितत्वाच्च । कलादीनां योगस्तु मायागर्भाधिकारमलांशावशेषतोऽधिकारनिबन्धनत्वेन, तेषामावश्यकत्वाच्च ।

यदुक्तम्—"कलायोगेऽपि नो वश्याः कलानां पशुसंघवत्" (मो.का. ८२) इति। यद्येवं शिवत्वे समानेऽपि मुक्तात्मादिभ्योऽस्य परमेश्वरस्य को विशेषोऽत आह—किन्त्वेते तत्प्रसादतो मुक्ता इति। एते पूर्वोक्ता विद्येश्वरादयः, तस्य परमेश्वरस्य प्रसादतः। सोऽनादिमुक्त इति। अनादिमुक्तः स्वभावसिद्धनित्यनिर्मलनिरतिशयार्थज्ञानक्रियाशक्तियुक्त इत्यर्थः। ननु ईश्वरस्यापि "पञ्चवक्त्रः त्रिपञ्चदृक्" इत्यादिनाऽऽगमेषु शरीरेन्द्रिययोगः श्रूयत इत्यत आह—पञ्चमन्त्रतनुः। अयमभिप्रायः—ध्यानार्थमेवेश्वरस्य पञ्चवक्त्राद्याकारः श्रूयते, निराकारे ध्यानपूजाद्ययोगात्। यदाहुः—"आकारवांस्त्वं नियमादुपास्यो न वस्त्वनाकारमुपैति बुद्धिः" इति। श्रीमत्पौष्करेऽपि—"साधकस्य तु लक्ष्यार्थं तस्य रूपमुदाहृतम्" इति। श्रीमन्मृगेन्द्रेऽपि—"वपुषोऽविद्यमानत्वाद् यद् यत् कृत्यं करोति सः। तत्र तत्रास्य तत्कर्तृवपुषाऽनुकृतं वपुः॥" (मृ० क्रि० ३।४१) इति। अतः पञ्चमन्त्रात्मिकाः पञ्चकृत्योपयोगिन्य ईशानाद्याः शक्तय एव शरीरकार्यं कुर्वाणास्तनुरित्युपचारादुच्यन्ते। तदुक्तम्—"तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः। ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम्॥" (मृ० वि० ३।८-९) इति॥ ६॥

**पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहृतितिरोभावाः।**
**तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य॥ ७॥**

## तात्पर्यदीपिका

ननु पतिसद्भावे प्रामाणाभावात् तत्त्वत्रैविध्यासंभव इत्याशङ्क्याह—पञ्चेति। अयमर्थः—सर्गस्थितिसंहारतिरोभावानुग्रहात्मना पञ्चविधं पञ्चप्रकारं तत्कृत्यं महेश्वरकार्यं तस्मिन् प्रमाणम्, तस्यैव कर्तुं शक्यत्वादिति। न चान्यो जीवो माया वा जगत्सृष्ट्यादिकं कर्तुं शक्नोति, पशोरुपादानोपकरणविनियोगक्रमज्ञानाभावात्, मायायाश्चाचेतनतया तदसम्भवादिति। स सर्गः पञ्चविधः, भावतत्त्वभुवनभूतप्रत्ययात्मसृज्यस्य पञ्चविधत्वात्। तदुक्तं शैवरहस्ये—

भोगेन परिणमयितुं कर्माणि घृणानिधिः पतिः सृजति।
भावं तत्त्वं भुवनं भूतं प्रात्ययिकमपि सर्गम्॥ इति।

विस्तरत उपरिष्टादुपपाद्यते। स्थितिः पालनम्। संहृतिर्विनाशः, स्वेषु स्वेष्वसाधारणकारणेषु कार्यस्य लयः, सूक्ष्मरूपेणावस्थानमिति यावत्। आत्मनां पाशैः प्रच्छादनं तिरोभावः। अनुग्रहकरणं मोक्षादि। ननु विरुद्धमिदमुक्तं पाशैरात्मप्रच्छादनद्वारेण संसारहेतुत्वम्, आत्मप्रच्छादनमलादिपाशनिरसनेनापवर्गप्रदानं चेति चेत्, नैवम्, विषयभेदेनानयोरविरोधात्। येषां साधनचतुष्टयसंपत्तिः, तान् प्रत्यनुग्रहकरणम्। येषां तन्नास्ति, तान् प्रति संसारहेतुत्वमिति। प्रोक्तं सततोदितस्यास्येति। कर्त्रा विना कार्योत्पत्त्यसंभवाद् अन्यस्य कर्तृत्वासम्भवाच्चास्य महेश्वरस्य सततोदितस्य स्वयंप्रकाशचैतन्यमात्रस्य परिपूर्णस्य निर्व्यापारस्योदासीनस्यापि साक्षिणः परमेश्वरस्य सृष्ट्यादिषु कर्तृत्वं प्रोक्तम्, अभिहितमित्यर्थः। तदुक्तम्—

यथा ह्यविक्रियो वह्निर्जलतण्डुलविक्रियाम् ।
तथा करोत्युदासीनः शम्भुर्मायादिविक्रियाम् ॥ इति ॥ ७ ॥

### वृत्तिः

अत एवाह—पञ्चविधमिति ।

एतत्कृत्यपञ्चकं शुद्धाध्वविषये साक्षाच्छिवकर्तृकम्, अशुद्धाध्वविषये त्वनन्तादिद्वारेणेत्युक्तम् । तथा श्रीमत्किरणे—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" ( कि० ३।२७ ) इति । तत्र शिवस्य साक्षात् सृष्टिर्बिन्द्वात्मकादुपादानाच्छुद्धतत्त्वभुवनाद्युत्पादनपूर्वकं तद्भुवनवासिनां विद्याविद्येश्वराणां च बैन्दवशरीरयोजनम्, नादादिक्रमेण विद्योत्पादनं च । अनन्तादिद्वारा तु मायाद्युपादानादशुद्धतत्त्वभुवनाद्युत्पादनपूर्वकं पशुसंघानां सूक्ष्मेण तात्त्विकशरीरेण स्वकर्मानुगुणभौवनशरीरेण च योजनम्, मन्त्रेश्वराणामधिकारनिबन्धशरीरोत्पादनं च । स्थितिः स्वशक्त्या निरुद्धस्य सर्वस्य जगतः स्वविषयेऽवस्थापनम् । संहृतिस्तु शुद्धाशुद्धयोः कार्यवर्गयोर्बिन्दुमाययोरुपसंहारः । तिरोभावश्च पाशानुग्रहणेनात्मनां यथानुगुणभोगभोजनम् । अनुग्रहोऽपि पाशतिरोधानेनात्मनां परापरमोक्षदानमिति । ननु—"सृष्टिसंरक्षणादानभावानुग्रहकारिणः" ( १।१५ ) इति श्रीमद्रौरवादिश्रुतेर्विद्याविद्येशानामपि पञ्चकृत्याधिकारित्वात् कथं सततोदितस्यास्येति नियमः ? उच्यते—तेषामपि शिवप्रेरणयैव पञ्चविधकृत्यकर्तृत्वात् तथोक्तमित्यविरोधः ॥ ७ ॥

## पशवस्त्रिविधा ज्ञेया विज्ञानप्रलयकेवलौ सकलः ।
## मलयुक्तस्तत्राद्यो मलकर्मयुतो द्वितीयः स्यात् ॥ ८ ॥

### तात्पर्यदीपिका

एवमुद्देशक्रमेण पतितत्त्वस्य लक्षणं परीक्षां च कृत्वाऽनन्तरप्राप्तपशुतत्त्वनिर्णयार्थमाह—पशव इत्यादि ।

पाशाः कथ्यन्ते, तैर्ये बद्धास्ते पशव इति । अथ शरीरादिव्यतिरिक्तस्येहलोकपरलोकसंचारिणः संसार्यात्मनः पशोः सद्भावे प्रमाणाभावादाश्रयासिद्धमिदं पशुलक्षणमिति चेत्, नैवम्, शरीरव्यतिरिक्तस्य नित्यस्यात्मनो जातिस्मृत्यादिभिः प्रमाणैः सद्भावावगमात् । तथा हि पूर्वजन्मनि निहितं निध्यादिकमपरस्मिन् जन्मनि मयेदमत्र निहितं पूर्वमित्युपादीयमानमुपलभ्यते । अतो देहातिरिक्तस्यैकस्य नित्यस्य निधिविन्यासकर्तुः पशोः सद्भावः, अन्यथा तदुपादानासम्भवात् । न चान्यनिहितमन्येनोपादीयत इति वाच्यम्, अन्यानुभूतेऽन्यस्य स्मरणासम्भवेन तत्पूर्वकोपादानासम्भवात् । न चासौ भ्रान्तिमूलेति वाच्यम्, बाधकाभावात्, प्रत्यक्षतस्तदुपलम्भेन संवादतः प्रामाण्यसिद्धेश्चेति । तथा "योनिमन्ये प्रपद्यन्ते" (क.उ. ५।७) इत्याद्यागमाच्च पूर्वशरीरपरित्यागेन शरीरान्तरप्राप्तेरुपलम्भात् शरीरव्यतिरिक्तात्मसिद्धिः । न च प्राण आत्मा, वायुरूपत्वाद् बाह्यवायु-

वत्, मम प्राणा इति प्राणात्मनोर्मम वस्त्रमितिवद् भेदोपलम्भाच्च। आर्हतैकदेशीयोक्तमिन्द्रियात्मत्वं तत्तदिन्द्रियानुभूतार्थेषु तत्तदिन्द्रियविनाशेऽपि स्मृतिदर्शनात् प्रत्यस्तम्, अन्यानुभूतेऽन्यस्य स्मरणासंभवात्। तथा नियतविषयग्राहकाणामिन्द्रियाणामनियतविषयावगन्त्रात्मत्वासम्भवात्। तच्च योऽहं चक्षुषा रूपमन्वभवम्, सोऽहमिदानीं श्रोत्रेण शब्दमनुभवामीत्यनुसन्धानसिद्धमिति। नापि मन आत्मा, करणत्वात् कुठारवत्, तथा परिमितत्वात् कार्यत्वाच्च घटादिवत्। तथात्मनि सिद्धे युगपदिन्द्रियार्थेषु युगपज्ज्ञानानुत्पत्त्या मनसः पुनः सद्भावसिद्धेर्नात्मा मन इति। तथान्तःकरणवृत्तिरूपबुद्ध्यात्मत्वं बौद्धैः कल्पितं स्मरणासंभवप्रसङ्गेन निरसनीयम्। तथाहि—पूर्वबुद्ध्यनुभूतेऽर्थे बुद्ध्यन्तरस्यान्यत्वेनानुभवाभावात् स्मरणासंभवः। न चाननुभूतेऽर्थे स्मृतिः संभवति, अनुपलम्भात्। न च सा बुद्धिरवतिष्ठत एवेति वाच्यम्, बुद्धेः प्रतिक्षणविनाशस्य सर्ववादिसम्मतत्वात्। एकसन्तानत्वेन वासनानुगमात् तदुपपत्तिरिति चेन्न, वासनासन्तानयोरपि क्षणिकत्वे पूर्वोक्तदोषापातात्। तथा तयोर्ज्ञानादव्यतिरेकेण परिहारः। अक्षणिकत्वे व्यतिरेके च स्वसिद्धान्तविरोधः। तदुक्तं न्यायविद्भिः—

> अथापि नित्यं परमार्थसन्तं सन्ताननामानमुपैषि भावम्।
> उत्तिष्ठ भिक्षो ! फलितास्तवाशाः सोऽयं समाप्तः क्षणभङ्गवादः॥ इति।

विषयानन्द आत्मा, अनन्यार्थत्वाद् अत्यन्तप्रियबुद्धिविषयत्वाच्चेति केचित्। तदपि विषयेन्द्रियमनोबुद्ध्यात्मसंबन्धेनोत्पद्यमानं बुद्धिकल्पमित्युपेक्षणीयमेवेति। तस्माद् बुद्धीन्द्रियशरीरेभ्यो व्यतिरिक्त आत्मा पाशबद्धत्वात् पशुरिति सिद्धम्। तदुक्तं श्रीवायवीये—

> बुद्धीन्द्रियशरीरेभ्यो व्यतिरिक्तो विभुर्ध्रुवः।
> अस्त्येव कल्पितात्मेति हेतुस्तत्र सुदुर्गमः॥
> बुद्धीन्द्रियशरीराणां नात्मता सद्भिरिष्यते।
> स्मृतेरनियतज्ञानादयावद्देहवेदनात् ॥ इत्यादि।
> ( शि० पु० वा० १।५।४३-४४ )

तदेवं प्रतिपादितानां पशूनां विभागमाह—त्रिविधा ज्ञेया इति। त्रिप्रकारा ज्ञातव्या इत्यर्थः। कथमित्यत आह—विज्ञानप्रलयाकलाः सकला इति। तेषां तेषां क्रमेण लक्षणमाह—मलयुक्तः मलपाशसंबद्धः। तत्र तेषां मध्ये। आद्यो विज्ञानकलः। मलकर्मयुतः मलकर्मात्मकपाशद्वयसम्बद्धो द्वितीयः॥ ८॥

## वृत्तिः

इत्थं पतिपदार्थभेदमुक्त्वा पशुपदार्थभेदमाह—पशव इति।

तत्रेति तेषां मध्ये, आद्यः विज्ञानकेवलाख्यो वर्गः। "विज्ञानयोगसंन्यासैर्भोगाद्वा कर्मणः क्षयात्" ( प० मो० का० ५५ ) इति कर्मक्षयतः कर्मभोगार्थस्य कलादिबन्धस्याप्यभावात् केवलं मलमात्रयुक्तः स्यात्। द्वितीयस्तु प्रलयकेवलाख्यो वर्गः प्रलये कलादेरुपसंहारात् मलकर्मयुक्तो भवति॥ ८॥

**मलमायाकर्मयुतः सकलस्तेषु द्विधा भवेदाद्यः ।**
**आद्यः समाप्तकलुषोऽसमाप्तकलुषो द्वितीयः स्यात् ।। ९ ।।**

### तात्पर्यदीपिका

सकल इति सकललक्षणपूर्वकं विज्ञानकलविभागमाह—मलेति ।

मलश्च माया च कर्म च मलमायाकर्माणि, तैर्युक्तः सम्बद्धः सकल इति । तेषु त्रिषु, आद्यो विज्ञानकलो द्विविधो भवति—समाप्तकलुषोऽसमाप्तकलुषश्चेति । तत्राद्यः प्रथमः, अणूनां प्रथमत्वात् । समाप्तकलुष इति । मलशक्तिः कालुष्यम्, तत् समाप्तं नष्टं यस्य स समाप्तकलुषः । असमाप्तकलुषो द्वितीयः । तेनासौ प्रच्छन्नज्ञानक्रियाशक्तिर्भवतीति ॥ ९ ॥

### वृत्तिः

सकलस्तु बन्धत्रययुक्तः । तत्र च मायायाः साक्षात् संबन्धाभावाद् मायाशब्देन तत्कार्यभूताः कलादयः कथ्यन्ते । तद्युक्तत्वादेव चास्य सकलत्वम् । अतश्च विज्ञानादिना कर्मक्षयेऽपि किञ्चित्कालं संस्कारवशेन शरीरस्थितिः संभवतीति मलमायायुक्तेऽपि सकलभेदः शास्त्रेषु श्रूयते । उक्तं च सांख्यैः—

सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः ॥ ( सां० का० ६७ ) इति ।

किञ्च, तेष्विति । आद्यो विज्ञानकेवलः पुनर्द्विधा भिद्यते । कौ तौ भेदावित्यत आह—आद्य इति । मलस्य द्रव्यत्वे सति जडत्वाच्चक्षुषः पटलादेरिव पाकः संभवतीति । आद्यो विज्ञानकेवलः पक्वमलापक्वमलभेदेन द्विविधो भवतीति भावः ॥ ९ ॥

**आद्याननुगृह्य शिवो विद्येशत्वे नियोजयत्यष्टौ ।**
**मन्त्रांश्च करोत्यपरान् ते चोक्ताः कोटयः सप्त ।। १० ।।**

### तात्पर्यदीपिका

ननु विज्ञानकलस्य द्विविधस्यापि मलपाशसम्बन्धसद्भावात् तन्निवृत्त्यात्मकं न शिवसायुज्यम्, नापि स्वर्गनरकमध्यस्थानेषु देवादिभेदेनावस्थानम्, दीक्षया कर्मविनाशे सति श्रवणादिनाऽनात्मन्यात्मबुद्धिरपाकृताविद्याकृतमायासम्बन्धाभावात् । अतः कुत्रास्यावस्थानमित्याशङ्क्याह—आद्यानिति ।

आद्यान् समाप्तकलुषान् विज्ञानकलान् अनुगृह्य दीक्षापूर्वकश्रवणमननाभ्यां परोक्षज्ञानप्रदानात्मकमनुग्रहं कृत्वा । नापरोक्षज्ञानप्रदानात्मकम्, तस्य निदिध्यासनमध्ये कर्मक्षयान्तरायनिपातेनोत्पातासंभवात् । विद्येशत्वे विद्येश्वरपदेशत्वे मुक्तिकल्पे नियोजयत्यष्टौ विज्ञानकलान् । इतरान् मन्त्रान् मन्त्रदेवतारूपान् करोति भगवान् शिव इति । तदुक्तं सिद्धान्तहृदये—

"विद्येश्वरान् करोत्यष्टावीशोऽन्यान् मनुदेवताः" इति ।

कति मन्त्रा इत्याकाङ्क्षायामाह—ते चोक्ताः कोटयः सप्तेति । ते च महामन्त्राः सप्तकोटिसंख्यया संख्याता इति ॥ १० ॥

### वृत्तिः

तयोस्तु—आद्यानिति । आद्यान् पक्वमलान् पाकतारतम्यापेक्षयाऽधिकारयोग्यानुगृह्य मलापोहनेन सर्वज्ञत्वादिना युक्तान् बैन्दवशरीरयोगिनश्च कृत्वा तेषु विशिष्टमलपाकवतोऽष्टौ विद्येशत्वे योजयति । अनन्त-सूक्ष्म-शिवोत्तम-एकनेत्र-एकरुद्र-त्रिमूर्ति-श्रीकण्ठ-शिखण्डिसंज्ञान् पञ्चकृत्याधिकारिणः शुद्धाध्वाधिष्ठातॄनीश्वरतत्त्वनिवासिनश्च करोतीत्यर्थः । अपरांस्तु सप्तकोटिसंख्यातान् मन्त्राननुग्रहकारणभूतान् विद्यातत्त्वनिवासिनश्च करोतीत्यर्थः । तेषु चार्धं सकलविषये गुर्वधिकरणस्य शिवस्यानुग्रहकर्मणि करणत्वेन स्थित्वा महाप्रलये मोक्षं याति । अन्यत् त्वर्धं निरधिकरणस्य शिवस्य विज्ञानकलादिविषये मन्त्रेश्वरमायागर्भाधिकारिविषये च करणत्वं प्राप्याधिकारवैराग्यात् सृष्ट्यनन्तरमेवापावृत्तं भवति । तदुक्तं श्रीमन्मृगेन्द्रे—

प्रयोक्तृदेहसापेक्षं तदर्धमखिलेऽध्वनि ।
कृत्वाधिकारं स्थित्यन्ते शिवं विशति सेश्वरम् ॥
विनाधिकरणेनान्यत् प्रधानविकृतेरधः ।
कृत्वाऽधिकारमीशेष्टमुपैति स्वाध्वसंहृतौ ॥ (वि० ४।७८) इति ।

ये त्वत्रात्यन्तमलपाकवन्तोऽधिकारानपेक्षास्तान् परे पदे योजयति । ये त्वपक्वमलास्तेषां मलपाकान्तं विज्ञानकलत्वमेवेत्युक्तं श्रीमद्रौरवादौ ॥ १० ॥

**प्रलयाकलेषु येषां पक्वे मलकर्मणी व्रजन्त्यन्ये ।**
**पुर्यष्टकदेहयुता योनिषु निखिलासु कर्मवशात् ॥ ११ ॥**
**स्यात् पुर्यष्टकमन्तःकरणं धीकर्मकरणानि ।**
**कांश्चिदनुगृह्य वितरति भुवनपतित्वं महेश्वरस्तेषाम्[1] ॥१२॥**
**शेषा भवन्ति सकलाः कलादियोगादहर्मुखे काले ।**
**शतमष्टादश तेषां कुरुते स्वयमेव मन्त्रेशान् ॥ १३ ॥**

### तात्पर्यदीपिका

इदानीं प्रलयाकलसकलयोः स्वरूपनिर्णयार्थं श्लोकत्रयमाह—प्रलयाकलेष्विति ।

अयमभिप्रायः—प्रकर्षेण लयं गतं कलादिधरान्ततत्त्वात्मकं शरीरं येषां ते प्रलयाकलाः । प्रलयावस्थायां मलकर्ममात्रपाशसम्बद्धा आत्मान इति यावत् । तेषु येषां मलश्च कर्म च मलकर्मणी पक्वे परिपाकं गते, ज्ञानाग्निना साहचर्यात्, तेषां महेश्वरो

---

१. श्रीकुमारव्याख्यायां श्लोकस्य पूर्वोत्तरार्धयोर्वैपरीत्यं दृश्यते ।

भुवनपतित्वं वितरति। तेभ्यः प्रयच्छति, ददातीत्यर्थः। तेषां तेष्वपि कांश्चित् पक्वकर्मकाननुगृह्य गणेशान् करोति। कांश्चित् पक्वमलान् मन्त्रतन्त्रेश्वरान् करोति द्रष्टृत्वेनेति। कति मन्त्रेश्वरा इत्याकाङ्क्षायां शतमष्टादशेति। स्वयमेवेति। ब्रह्मादिसहायान्तरमनपेक्ष्यैवेति। तदुक्तं लैङ्गे—

> नाधिकान् न च हीनांस्तान् मानसानात्मनः समान्।
> सहस्रं हि सहस्राणामसृजत् कृत्तिवाससाम्॥ इत्यादि।

एभ्योऽन्ये ये पक्वमलकर्माणः शेषाः शिष्टास्ते सकला भवन्ति, कलादितत्त्वयोगात्। अहर्मुखे काल इति। सृष्टिकाले सर्वमेतत् करोति भगवान् महेश्वर इति। पुर्यष्टकदेहयुतास्त एव निखिलासु योनिषु देवमनुष्यतिर्यगादिषु व्रजन्ति चरन्तीत्यर्थः। नन्वात्मनां व्यापकत्वादमूर्तत्वाच्च कथं निखिलयोनिगमनागमनसंभव इत्याशङ्क्याह—पुर्यष्टकदेहयुता इति। सूक्ष्मशरीरस्य पुर्यष्टकाख्यस्य जीवोपाधेः संभवात् तदनुसारेण पशोरपि क्षेत्रज्ञस्य गमनागमने संभवत एव। यथा घटाकाशस्य तदुपाधिभूतघटगमनागमनाभ्यां गमनागमने, तथात्राप्युपाधिधर्माणां गमनादीनामुपहिते क्षेत्रज्ञे संभव उपपद्यत एवेति। कर्मवशादिति। कर्मानुरूपेणेत्यर्थः। ननु जीवोपाधिभूतं पुर्यष्टकं किमित्याशङ्क्याह—स्यात् पुर्यष्टकमन्तःकरणं धीकर्मकरणानीति। पुरि स्थूलशरीरे वर्तमानं यदष्टकं तत् पुर्यष्टकम्। तत् किमित्यत आह—अन्तःकरणं धीकर्मकरणानीति। बुद्ध्यहङ्कारमनांस्यन्तःकरणम्, धियः कर्म व्यापारो विषयनिश्चयो धीकर्म, तत्करणानि तन्निमित्तानि शब्दादीनि च पुर्यष्टकमिति केचित्। तदुक्तम्—

> शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः।
> मनो बुद्धिरहङ्कारः पुर्यष्टकमुदीरितम्॥ (कालो० १७।४-५)

गुरवस्तु धीकर्म च करणानि च धीकर्मकरणानीति ब्रुवते। तत्राष्टकत्वं शब्दस्पर्शरूपरसगन्धबुद्धीन्द्रियकर्मेन्द्रियान्तःकरणात्मना विभागाद् भवति। परे कर्मेन्द्रियबुद्धीन्द्रियान्तःकरणचतुष्टय-प्राणादिपञ्चक-तन्मात्रपञ्चक-कामकर्माविद्यात्मनाष्टविधं पुर्यष्टकमित्याहुः। तथा चोक्तम्—

> कर्मेन्द्रियाणि खलु पञ्च तथापराणि
> बुद्धीन्द्रियाणि मनआदिचतुष्टयं च।
> प्राणादिपञ्चकमथो वियदादिकं च
> कामश्च कर्म च तमः पुनरष्टमी पूः॥ इति॥ ११-१३॥

### वृत्तिः

प्रलयाकलेषु मध्ये येषां मलः पक्वस्तत्पाकवशादेव कर्मापि समस्तं पक्वं ते व्रजन्तीति, मोक्षमिति शेषः। मलपरिपाकस्य शक्तिपातद्वारेण मोक्षहेतुत्वात्। यदुक्तं श्रीमन्मृगेन्द्रे—

> तमश्शक्त्यधिकारस्य निवृत्तेस्तत्परिच्युतौ।
> व्यनक्ति दृक्क्रियानन्त्यं जगद्बन्धुरणोः शिवः॥ (वि० ५।१) इति।

श्रीमत्स्वायंभुवेऽपि—"क्षीणे तस्मिन् धिया सा स्यात्परं निःश्रेयसं प्रति" (३२।१७) इति। अन्ये त्वपक्वमलाः पुर्यष्टकदेहयुताः सन्तः कर्मवशेन तद्भोगार्थं निखिलासु योनिषु

भुवनजशरीरात्मिकासु व्रजन्तीति पूर्वक्रियानुषङ्गोऽत्रापि कर्तव्यः। 'एते' इति पाठापेक्षायां पुर्यष्टकदेहयुता योनिषु व्रजन्तीति व्याचक्षते। तेषां प्रोक्तः श्रुतिविरोधः, पक्वमलानामपि पुनः संसारयोगादनिर्मोक्षप्रसङ्गश्च दोषः ॥ ११ ॥

अथ किं तत्पुर्यष्टकमित्यत आह—स्यादिति।

तत्र पुर्यष्टकं नाम प्रतिपुरुषं नियतः सर्गादारभ्य कल्पान्तं मोक्षान्तं वाऽवस्थितः पृथिव्यादिकलान्तत्रिंशत्तत्त्वात्मकोऽसाधारणरूपः सूक्ष्मदेहः। यच्छ्रूयते—

प्रयोक्त्र्यादिमहीप्रान्तमेतदण्वर्थसाधकम्।
प्रत्यात्मनियतम्.... ( मृ० वि० १२।३२-३३ ) इति।

तत्त्वसंग्रहेऽपि—

वसुधाद्यस्तत्त्वगणः प्रतिपुंनियतः कलान्तोऽयम्।
पर्यटति कर्मवशतो भुवनजदेहेष्वयं च सर्वेषु ॥(श्लो० २४-२५)इति।

अतश्चायमर्थः—अन्तःकरणशब्देन मनोबुद्ध्यहङ्कारवाचिनाऽन्यान्यपि पुंसो भोगक्रियायामन्तरङ्गानि कलाकालनियतिविद्यारागप्रकृतिगुणाख्यानि सप्त तत्त्वान्युपलक्ष्यन्ते। धीकर्मशब्देन बुद्धेरध्यवसिततया ग्राह्याणि पृथिव्याद्याकाशान्तानि पञ्चभूतानि तत्कारणानि च शब्दादीनि पञ्चतन्मात्राण्युच्यन्ते। करणशब्देन बुद्धीन्द्रियाणि कर्मेन्द्रियाणि ( च ) दर्शयति। ननु—

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः।
बुद्धिर्मनस्त्वहङ्कारः पुर्यष्टकमुदाहृतम् ॥ ( १७।४-५ )

इति श्रीमत्कालोत्तरे श्रूयते। सत्यम्—अत एव तत्सूत्रं तत्रभवता रामकण्ठेन त्रिंशत्तत्त्वपरतया व्याख्यातम्। कथं पुनरस्य पुर्यष्टकत्वम्? भूततन्मात्रबुद्धीन्द्रियकर्मेन्द्रियान्तःकरणसंज्ञैः पञ्चभिर्वर्गैस्तत्कारणेन गुणेन तदापूरकेण प्रधानेन कलादिपञ्चकञ्चुकात्मना वर्गेणारब्धत्वादित्यविरोधः। अथ तेषु पुर्यष्टकयुक्तेषु मध्ये कांश्चिदनुगृह्य महेश्वरः, मन्त्रमहेश्वर इत्यर्थः। गुह्यातिगुह्यगुह्यतरपवित्रस्थाण्वाख्यपञ्चाष्टकादीनां भुवनपतीनामनन्तनियुक्तत्वेनैव श्रुतेः, साञ्जनत्वाच्च। अनुगृह्येति। स्वाधिकारान्तं प्रकटीकृतज्ञानक्रियानणिमादियोगिनश्च कांश्चिद् विशिष्टपुण्यवतः कृत्वेत्यर्थः ॥ १२ ॥

अनतिपक्वमलत्वेन संसारयोगिभ्यश्च ये शेषाः पक्वमलाः सन्तोऽपि तत्पाकमान्द्यान्मायागर्भाधिकारयोग्यास्तेऽपि सर्गप्रारम्भेऽधिकारनिबन्धनेन कलादिना योगात् सकला भवन्ति। तद्योगेऽपि ते मलरहितत्वात् शेषा इत्युक्ताः। कियन्तस्ते केन नियुक्ता इत्यत आह—शतमष्टादशेति। तेषामष्टादशाधिकशतं स्वयमेव शिवो ह्यपनीतमलान् कृत्वा मन्त्रेशपदे योजयति। न तु तेऽनन्तनियुक्ता इत्यर्थः। कलादियोगस्तु तेषामनन्तकर्तृक एव, "अनन्तोऽसिते प्रभुः" ( कि० वि० ३।२७ ) इत्युक्तत्वात् ॥ १३ ॥

**तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्च वीरेशः ।**
**श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाभ्यधिकम् ।। १४ ।।**

### तात्पर्यदीपिका

शतमष्टादश मन्त्रेश्वरा इत्युक्तम् । के त इत्याकाङ्क्षायामाह—तत्राष्टौ इति ।

तत्र मन्त्रेश्वराणां मध्येऽष्टौ मण्डलिनः, क्रोधाद्याः तत्समाः, अष्टावित्यर्थः । शिष्टा वीरेशादय इति । एतदुक्तं सिद्धान्तहृदये—

त्रिविधास्ते च विज्ञानकलाश्च प्रलयाकलाः ।
सकलाश्चेति तेष्वाद्या मलमात्रयुताः परे ॥
मलकर्मयुता मायामलकर्मसमायुताः ।
सकला इति तेष्वाद्या द्विविधाः पक्वकल्मषाः ॥
अपक्वकल्मषाश्चेति अत्राद्याननुगृह्य तु ।
विद्येश्वरान् करोत्यष्टावीशोऽन्यान् मनुदेवताः ॥
द्व्येकपक्वद्विपक्वाः स्युश्चतुर्धा प्रलयाकलाः ।
पक्वोभयान् पुराधीशान् गणेशान् पक्वकर्मगान् ॥
रुद्रान् पक्वमलानन्यानष्टादशशताधिकान् ।
सकलस्त्वष्टधा त्रिद्व्येकपक्वाश्च त्र्यपक्वकाः ॥
हिरण्यगर्भः + + + सनकाद्याश्च योगिनः ।
आचार्यांश्चैव देवांश्च क्रमात् तेष्वकरोत् प्रभुः ॥ इत्यादि ।

शैवरहस्ये च—

विज्ञानकलसंज्ञः प्रलयाकलसंज्ञकोऽथ सकलाख्यः ।
त्रिविधोऽयं पुरुषः स्यादेकोत्तरबन्धसंबन्धात् ॥
विज्ञानकलसंज्ञान् समाप्तकलुषान् करोति विद्येशान् ।
अष्टावनुगृह्य शिवो मन्त्रानपि सप्तकोटिभिदान् ॥
प्रलयाकलाश्च केचिद् भुवनेशाः पक्वकलुषकर्माणः ।
कर्मवशादवशिष्टा निखिलास्वपि योनिषु चरन्ति ॥
सकलाः कलादियोगात् सृष्टिदशायां त एव निर्दिष्टाः ।
शतमष्टादश तेष्वपि मन्त्राणामीशितारः स्युः ॥
शतरुद्राः क्रोधादिकमष्टकमङ्गुष्ठमात्रपूर्वमपि ।
वीरेशश्रीकण्ठौ मन्त्रेशत्वेन वर्तन्ते ॥ इत्यादि ॥१४॥

### वृत्तिः

तानेव विभजति—तत्राष्टौ इति ।

अत्र मण्डलिनोऽष्टौ कलामस्तकवासिनो गहनेशादयः क्रोधादयश्च गुणमस्तकस्था अष्टावेव । वीरेशो वीरभद्रः शतरुद्राधिष्ठाता । श्रीकण्ठो गुणतत्त्वनिलयोऽधस्तनभुवनादेश्च कर्ता । शतरुद्रास्तु ब्रह्माण्डधारका इति ॥ १४ ॥

**परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन ।**
**योजयति परे तत्त्वे स दीक्षयाऽऽचार्यमूर्तिस्थः ॥ १५ ॥**

### तात्पर्यदीपिका

नन्वेवं संसरतां पशूनां तर्हि मोक्षमार्गेऽवतारो न स्यादित्याशङ्क्याह—परिपक्वमला ये तानिति ।

द्विविधा हि परमेश्वरस्य शक्तिः, बन्धकरी मोचिका चेति । तयोराद्याऽनादिकालमेव प्रवृत्ता पशून् पाशजालैर्बध्नाति । तस्यां कालवशात् कर्मसाम्येन विरोधादुपरतव्यापारायां मोचिका शक्तिः स्वपतनकालमन्वेषयन्ती महेश्वरे वर्तमाना तेषु पशुषु निपतति । ततश्च संसारोत्सादनहेतुभूतशक्त्यां निपतितायां भगवानाचार्यमूर्तिमास्थाय दीक्षां कृत्वा मलादिपाकं विधाय परमेश्वरतत्त्वे संयोजयतीति नासंपाद्यो मोक्षमार्गेऽवतार इति । तदुक्तम्—

समे कर्मणि संजाते कालान्तरवशात् पुनः ॥
तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ।
सर्वज्ञः स शिवो यद्वत् किञ्चिज्ज्ञत्वविवर्जितः ॥
शिवत्वव्यक्तिसम्पूर्णः संसारी न पुनस्तदा । इत्यादि ।
( कि० वि० १।२०-२२ )

शक्तिद्वयं च भगवताऽवधूतपादेनोक्तम्—

बध्नाति काचिदपि शक्तिरलुप्तशक्तेः
क्षेत्रज्ञमप्रतिहता तव पाशजालैः ।
ज्ञानासिना च विनिकृत्य गुणानशेषा-
नन्या करोत्यभिमुखं पुरुषं विमुक्तौ ॥ इति ॥ १५ ॥
( भ० स्तो० १७ )

### वृत्तिः

अथ त्रिबन्धनबद्धेषु सकलेषु मध्ये सः शिवः । परितः समन्तादाधिक्येन पक्वमलान् सकलान् तिरोधानशक्त्युपसंहारेणानुग्रहशक्त्या पाशनिरोधनादिकया स्पृष्टान् गुरुमधिष्ठाय दीक्षया परे पदे शिवसाम्यरूपे योजयति । मन्दमलपाकांस्तु मन्दतरादिशक्तिपातेन विद्येश्वरादिपदे योजयति । यच्छ्रूयते—

रुद्रमन्त्रपतीशानपदभाजो भवन्ति ते ।
स्थितौ याननुगृह्णाति गुरुमास्थाय चिद्वतः ॥ (मृ० वि० ५।३) इति ।
''यो यत्राभिलषेद् भोगान् स तत्रैव नियोजितः ।
सिद्धिभाङ्मन्त्रसामर्थ्यात्''[1] (स्वा० ३९।२) इति च ।

---

१. सम्पूर्णः श्लोकः सार्धत्रिशतिकालोत्तरवृत्तौ ( १।५ ) समुद्धृतः ।

अत एव विज्ञानप्रलयकेवलयोर्निरधिकरण एव शिवस्यानुग्रहः सिद्धः। अत एव मलस्य द्रव्यत्वाच्चक्षुषः पटलादेरिव दीक्षाख्यैनैवेश्वरव्यापारेण निवृत्तिः, न तु ज्ञानमात्रादिति भावः ॥ १५ ॥

**बद्धान् शेषानखिलान् विनियुक्ते भोगभुक्तये पुंसः ।**
**तत्कर्मणामनुगमादित्येवं कीर्तिताः पशवः ॥ १६ ॥**

### तात्पर्यदीपिका

इतरविनियोगपूर्वमुपसंहरति—बद्धान् इति ।

सूक्ष्मदेहेन च पुर्यष्टकाख्येन बद्धान् शेषान् सकलान् भोगभुक्तये विषयभुक्त्यर्थं विनियुङ्क्ते देवादिस्थानेषु स्थूलदेहेन संयोजयतीत्यर्थ इति ॥ १६ ॥

### वृत्तिः

अपरिपक्वमलांस्तु—बद्धान् इति ।

एष च प्रागुक्तानुवादः। अथ पशुपदार्थमुपसंहरति—इत्येवं कीर्तिताः पशव इति ॥ १६ ॥

**पाशाश्चतुर्विधाः स्युः पुंसो मलकर्मजौ मतौ प्रथमौ ।**
**मायीयतिरोधायकशिवशक्तिसमुद्भवौ चान्यौ ॥ १७ ॥**

### तात्पर्यदीपिका

इदानीमवसरप्राप्तानां लक्षणपरीक्षार्थमाह—पाशा इति ।

पशूनां बन्धकाः पाशाः। ते च चतुर्विधाः चतुष्प्रकाराः स्युः। पुंसः पुरुषस्य पशोः। तेषु प्रथमौ आद्यौ। मलकर्मसंज्ञकौ मलकर्माख्यौ। तत्रापि मलः प्रथमः पाशः, तत्पूर्वकत्वात् कर्मादीनाम्। स तु ज्ञानप्रागभाव इत्येके। परे तिमिरसदृशो जडात्मको भावरूपो ज्ञाननिवर्त्य इति। गुरवस्तु अविद्यासंस्कारात्मक इत्याहुः। तदुक्तं "ज्ञानं बन्धः" (१।२) इति शिवसूत्रवार्त्तिककृता—

> अहं ममेदमिति यज्ज्ञानं भेदप्रथात्मकम् ॥
> शब्दानुवेधतो जातं मायीयं मलकारणम् ।
> तद् बन्धनं समाख्यातमविद्यावृत्तिलक्षणम् ॥ (१।१६-१७) इति ।

किरणे च—

> मलोऽज्ञानं पशुत्वं च तिरस्कारकरस्तमः ।
> अविद्या ह्याकृतिर्मूर्च्छा पर्यायास्तस्य वाचकाः ॥ (वि० २।२०-२१) इति ।

द्वितीयः कर्माख्यः पाशः। मायीयो मायाजन्यः सूक्ष्मस्थूलात्मकशरीरादिरूपः। स तृतीयः। तिरोधायकशिवशक्तिसमुद्भवस्तत्स्वरूपश्चतुर्थ इति। बन्धस्य संसारस्य

जन्ममरणादिलक्षणस्य बन्धकाभावेऽसंभवात् पाशसद्भावसिद्धिः। बन्धस्तु श्रुत्यादि-प्रमाणसिद्ध इति। ननु मायाकार्यत्वाद् मलकर्मणोर्मायायां प्रवृत्तायां तयोरुद्भवः, प्रथम-भूतयोस्तयोरुद्भवे मायायाः प्रवृत्तिरिति इतरेतराश्रयप्रसङ्ग इति चेन्न, बीजाङ्कुरवदना-दित्वेन तत्परिहारोपपत्तेरिति ॥ १७ ॥

### वृत्तिः

अथ पाशपदार्थभेदमाह—पाशा इति।

ननु प्रागर्थपञ्चकं पाश इत्युक्तम्। अत्र तेषां चतुर्विधत्वोक्तिर्विरुद्धेति चेन्न, बिन्दोर्महामायात्मनः परमुक्त्यपेक्षया पाशत्वेऽपि तद्योगस्य विद्येश्वरादिपदप्राप्तिहेतु-त्वेनापरमुक्तित्वादत्र पाशत्वेनानुपादानमित्यविरोधः। अत एवाह—पुंस इति। पुंस्त्व-मलयोगिनः, सकलस्येत्यर्थः। अत एव शुद्धाध्ववासिनामनन्तादीनां महामायारोधशक्त्या-त्मकमेव पाशद्वयं विद्यते। तच्च मायादिवन्न मोहकम्, अपि तु बोधकमेवेति सर्वं सुस्थि-तम्। ननु "यन्नादाख्यं परं बीजं सर्वभूतेष्ववस्थितम्" ( सा० का० १।५ ) इति श्रुतेः सकलस्यापि बिन्दुकार्ययोगः ? सत्यम्, सर्वज्ञत्वाद्यविनाभूतेन बैन्दवशरीरादिनाऽस्य योगो नास्तीत्येवमुक्तम्। के ते इत्याह—मलकर्मजौ मतौ प्रथमाविति। मलकर्मरूपावेवात्र मलकर्मजाविति कार्यकारणयोरभेदेनोपचारादुच्येते, तयोरेवानन्तरसूत्रे लक्षणस्य वक्ष्य-माणत्वात्, तत्तत्कार्यकारणयोरावरणभोगभोजनयोः फलरूपतया पाशत्वेन प्रसिद्धेश्च। एवं मायेयतिरोधायकशिवशक्तिसमुद्भवावित्यत्रापि द्रष्टव्यम्। प्रथमावनादिसिद्धौ। तत्र मलः पुंसोऽनादि कृत्वा ज्ञानक्रियावारकः। कर्मापि प्रवाहानादि, बीजाङ्कुरादिन्यायेन कर्मजशरीरसन्तानस्याप्यनादित्वेन स्थितेः। मायेयस्तु कलादिरागन्तुकः पाशः, कर्म-सद्भाव एव तस्य सद्भावात्, तदभावेऽपि प्रलयकेवलिनो मलकर्मयोगाच्च। शिवशक्तेस्तु पाशाधिष्ठानेनात्मनि तिरोधायकत्वादुपचारेण पाशत्वमुक्तम्, वक्ष्यामश्च ॥ १७ ॥

**एको ह्यनेकशक्तिर्दृक्क्रिययोश्छादको मलः पुंसाम्।**
**तुषकम्बुकवज्ज्ञेयस्ताम्राश्रितकालिमावद् वा ॥ १८ ॥**

### तात्पर्यदीपिका

प्रथमोद्दिष्टस्य मलस्य लक्षणमाह—एक इति।

एकोऽनेकशक्तिरिति मलस्य लक्षणम्। कार्ममायीययोरनेकत्वात् तन्निवृत्त्यर्थमुक्त-मेक इति। तिरोधायकशक्तेरपि पाशत्वे सत्येकत्वाद् मलत्वप्रसङ्ग इति तन्निवृत्त्यर्थमनेक-शक्तिरिति पदम्। नन्वविद्यासंस्काररूपतायां मलस्यानेकत्वादयुक्तमेको मल इति, इति चेन्न, जलनिधिनिमग्नानन्तनदीजलवदेषामप्यनन्तानां संसर्गादेवैकत्वोपपत्तेरित्येके। अन्ये तु जात्यपेक्षयैकत्ववचनम्, अवान्तरानेकजातिसद्भावान्मायाकर्मणोरनेकत्वम्, तदभावाद् वासनाया एकत्वमिति ब्रुवते। तथा ज्ञानाभावरूपतायां च जात्यपेक्षयैवै-कत्ववचनम्। अन्यथा कस्यचिज्ज्ञानोदये सति ज्ञानप्रागभावनिवृत्तेः सकलजगन्मोक्ष-

प्रसङ्गादिति। भावात्मकत्वे मुख्यमेवैकत्ववचनम्। एकस्य ज्ञानोदयेऽपि निवृत्त्यनिवृत्त्यो-स्तमोवदुपपत्तेर्मलस्यानेकशक्तित्वाच्चैकस्य ज्ञानोदये तं प्रत्येव प्रच्छादनशक्तेर्विनाशादित-रेषामपवर्गाभावः संभवत्येव। तस्मादेकोऽनेकशक्तिर्मल इति। तदुक्तं किरणे—

"विभोरपि मलस्यास्य तच्छक्तेः क्रियते वधः।
उपायाच्छक्तिसंरोधः कस्मिंश्चित् क्रियते मले॥
शिवज्ञानं तथा तस्य शक्तिसंरोधकारकम्।
यथाग्नेर्दाहिका शक्तिर्मन्त्रेणाशु निरुध्यते॥
तद्वत् तच्छक्तिसंरोधः" (वि० २।२८-३०) इत्यादि।

दृक्क्रिययोश्छादको मलः पुंसां तुषकम्बुकवज्ज्ञेय इति। यथा तुषकम्बुकौ तण्डुलेन सहैकीभूतौ मूलाङ्कुराद्युत्पत्तेः कारणम्, तथा मलोऽपि पशूनां स्वरूपभूतज्ञान-क्रियाप्रच्छादकत्वेन कर्ममायादिमूलाङ्कुराद्युत्पत्तिकारणतयात्मना सहैकीभूतस्तिष्ठतीति। तदुक्तं किरणे—"मलश्चिच्छादको नैजो विशुद्धिः शिवता स्वतः" इति।

ताम्राश्रितकालिमावद् वेति। यथा ताम्राश्रिता कालिमा सहजातस्य स्वरूप-भूतस्वर्णतां प्रच्छाद्य ताम्रतामभिव्यज्य चावतिष्ठते, तथा मलोऽप्यात्मनो ज्ञानक्रियात्मकं स्वरूपं प्रच्छाद्य पशुत्वं चाभिव्यञ्जयन्नवतिष्ठत इति। ननु मलस्य सहजत्वे तत्क्षये तद्वतोऽपि विनाशप्रसङ्ग इति चेत्, नैवम्, ताम्राश्रितकालिमाविनाशे तत्स्वरूपाविनाशवत् सहजमलविनाशेऽप्यात्मस्वरूपाविनाशोपपत्तेः। तदुक्तम्—

सहजा कालिमा ताम्रे तत्क्षयान्न च तत्क्षयः॥
क्षयस्ताम्रस्य यद्वत् स्यात् पुरुषस्य मलक्षयः।
यथा तण्डुलकम्बूके प्रक्षीणे न च तत्क्षयः॥ इत्यादि ॥१८॥
( कि० वि० २।३१-३२ )

## वृत्तिः

तत्र मललक्षणमाह—एक इति।

एक एव मलः, जडत्वे सति नित्यत्वाज्जडानामनेकानां घटादिवदनित्यत्वं स्यात्। यद्येवं मलस्यैकत्वादेकस्य मोक्षार्थं तस्य निरोधे सर्वमोक्षप्रसङ्गः। अत आह—अनेक-शक्तिरिति। अनेकात्मावारकानेकशक्तियुक्तः, अत एकस्याः शक्तेः परिपाकेन तिरोधा-नेन तदावार्यस्यैव मोक्षः। तुषकम्बुकवदिति। यथा तण्डुलताम्रयोरनाद्यावारकत्वेन सहजं तुषादि कालिमा वा पश्चात्पाकेन रसशक्त्या निवर्तते, एवं मलोऽप्यात्मनोऽनाद्या-वारकः पाकवशाद्दीक्षया निवर्तते। यदि वा यथा शाल्यादेस्तुषाद्यङ्कुरोत्पत्तौ निमित्तम्, एवमात्मनो मलः शरीराद्युत्पत्तौ निमित्तम्। यथा वा ताम्रस्य कालिमा रसशक्त्या निवर्तते, तथा मलः शिवशक्त्या निवर्तत इत्येतावदात्मनो दृष्टान्तः, न तु सर्वसाम्ये-नेति॥ १८॥

**कर्मानादि प्रोक्तं धर्माधर्मात्मकं विचित्रं च ।**
**माया च वस्तुरूपा मूलं विश्वस्य नित्या सा ॥ १९ ॥**

**तात्पर्यदीपिका**

मलानन्तरं कर्ममायात्मकं पाशद्वयमुत्तरश्लोकपूर्वापरार्धाभ्यां निरूपयति—कर्मानादीति ।

कर्मानादि प्रवाहरूपेण, न चैकस्यैव कर्मणः सर्वदावस्थानेन । तथा सति भावरूपस्य कर्मणोऽनादित्वेनात्मवन्नित्यतयाऽनिर्मोक्षप्रसङ्गात् । नहि कर्माविनाशे संसारनिवृत्तिः संभवति । इत्येवं प्रोक्तं तत्त्वज्ञैः । धर्माधर्मात्मकमिति धर्माधर्मरूपेण द्विविधमिति । विचित्रं चेति विविधफलहेतुत्वाद् विचित्रमित्यर्थः । तथाहि—सुखासाधारणकारणं धर्मः, दुःखासाधारणकारणमधर्म इत्येके । अन्ये तु चोदनालक्षणोऽर्थो धर्मः, तल्लक्षणोऽनर्थोऽधर्म इति ब्रुवते । अपरे धर्मः पुरुषगुणः कर्तुः प्रियहितमोक्षहेतुः, तद्विपरीतोऽधर्म इति । अहिंसालक्षणो धर्म इति केचित् । चैत्यवन्दनादिलक्षणो धर्म इति बौद्धाः । परे परोपकारलक्षणो धर्म इति । तत्रान्त्यं त्रयमनुपपन्नम्, प्रमाणाभावात् । न च बौद्धाद्यागमाः प्रमाणम्, तेषां पौरुषेयतया मूलप्रमाणाभावे प्रामाण्याभावात् । न चैषां मूलप्रमाणं किञ्चिदुपलभ्यते, प्रत्यक्षादेर्धर्मं प्रति प्रामाण्यासंभवस्योक्तत्वात् । न चोपकारलक्षणस्य धर्मत्वम्, ब्राह्मणादिहिंसादेरपि तच्छत्रूपकारादिना धर्मत्वप्रसङ्गात् । नापि हिंसाया अधर्मत्वम्, व्रीह्यवघातदुष्टनिग्रहाग्नीषोमीयपशुहिंसादेरधर्मत्वप्रसङ्गादिति ।

स धर्मस्त्रिविधः, नित्यनैमित्तिककाम्यात्मना तस्य भेदात् । तत्र "यावज्जीवमग्निहोत्रं जुहुयात्", "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत", "यावज्जीवं ज्योतिष्टोमेन यजेत" इत्येवमादिवाक्यैर्नियमेन विहिता नित्याः । निमित्तादुपजायमाना नैमित्तिकाः । तद्यथा—"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" ( तै० सं० २.२.५.३ ) "अष्टका कर्तव्या" इत्येवमादिविहिता जातेष्ट्यादयः । कामनापूर्वकाः काम्याः, "अग्निहोत्रं जुहुयात् स्वर्गकामः" ( मै० उ० ६।३६ ), "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत", "ज्योतिष्टोमेन स्वर्गकामो यजेत" ( आप० श्रौ० १०।२।१ ) इत्येवमादिवाक्यविहिताः । ते द्विविधाः—सविद्याः केवलाश्चेति । सविद्या ईश्वरस्मरणपूर्वकाः । इतरास्तद्रहिता इति । एवंलक्षणो धर्मो द्विविधः—इष्टः पूर्तश्चेति । तत्रेष्टो वैदिकः, पूर्तस्तान्त्रिक इति । प्रतिषिद्धोऽधर्मः । तद्यथा—"ब्राह्मणो न हन्तव्य", "सुरां न पिबेत्", "न शङ्खेन पिबेत् तोयम्" इत्यादिवाक्यनिषिद्धा ब्राह्मणहिंसादयः । अपरे त्वधर्मश्च त्रिविध इत्याहुः—नित्याकरणम्, नैमित्तिकाकरणम्, प्रतिषिद्धकरणं चेति । नित्यनैमित्तिकाभ्यां प्रत्यवायपरिहारः, काम्यात् स्वर्गादिप्राप्तिः । अधर्मान्नरकादिगमनमिति । एतदुक्तं सिद्धान्तहृदये—

क्रियायाः सूक्ष्मरूपं हि कर्माहुर्द्विविधं च तत् ।
इष्टं पूर्तं च तत्रेष्टं वैदिकं तान्त्रिकं तथा ॥
पूर्तमित्युच्यते सद्भिस्तत् पुनस्त्रिविधं मतम् ।
धर्मोऽधर्मस्तथा चित्रमिति धर्मो विधेः पदम् ॥

स पुनस्त्रिविधः काम्यनित्यनैमित्तिकात्मना ।
निषिद्धोऽधर्म इतरच्चित्रं काम्यं पुनर्द्विधा ॥
सविद्यं केवलं चेति विद्या चेश्वरचिन्तनम् ।
प्रत्यवायहतिर्वा स्यादुपात्तदुरितक्षयः ॥
नित्यनैमित्तिकाभ्यां स्यादधर्मान्नारकी गतिः ।
अर्वाचीना मनुष्यात्तु पाषाणान्ता सुदुस्तरा ॥
काम्यात् स्वर्गगतिस्तस्मादूर्ध्वा ब्रह्मावसानिका ।
सविद्या देवयानेन पुनरावृत्तिवर्जिता ॥
केवला पितृयानेन गतिः संसरणात्मिका ।
धर्माधर्माख्ययोः साम्ये मानुष्यं लभते पुमान् ॥
कर्मणोः सर्वगामी स्याच्चित्राचित्रफलोदयः ।
कर्माख्योऽयं महापाशो दुर्मोचस्तेन जन्तवः ॥
इतस्ततः समाकृष्य नीयन्ते पशवो यथा । इत्यादि ।

एवं मलकर्मवशाद् महेश्वरेच्छया माया पुण्यापुण्यफलानुभवाय त्रिस्थानेषु देवादि-शरीरेन्द्रियविषयात्मना पुनः पुनः परिणमते । तदुक्तम्—

मलात् कर्तृत्वभोक्तृत्वे कर्तृत्वात् कर्म कर्मणः ।
भोगस्तदाक्षेपवशान्मायाबन्धस्ततस्तनुः ॥
भोगाधिकरणं भोग्या लोकाश्च करणानि च ।
इन्द्रियाणीति जायन्ते भोगसिद्ध्यै ततो मलः ॥
अभिलाषात्मकश्चेति बीजाङ्कुरफलादिवत् ।
अनादिः पाशजालोऽणून् बध्नाति भवचक्रके ॥ इत्यादि ।

विचित्रं चेत्यनेन कर्मसद्भावे प्रमाणमप्युक्तम् । तथाहि—ईश्वरदरिद्रादिभेद-भिन्नं विचित्रं जगद् विचित्रकारणं विना न संभवति । तच्च न दृष्टमुपलभ्यत इत्यदृष्ट-कारणकल्पनेति तत्सिद्धिः । तदुक्तं मातङ्गे—

जगतः सुप्रसिद्धे द्वे धर्माधर्मौ तु कर्मणी ।
अनादिकालसंरूढे ताभ्यां पुं वासितः सदा ॥ (वि० ८।९८) इत्यादि ।

तस्या मायायाश्च लक्षणमाह—विश्वस्य मूलमिति । विश्वस्य व्यक्तजातस्य कलादेर्मूलभूता उपादानभूता सा मायेति । तदुक्तम्—"कलादीनां तत्त्वानामविवेको माया" ( शि० सू० ३।३ ) इति । लक्षणपदेनैव तस्यां प्रमाणमप्युक्तम् । तथाहि—विश्वं जगद् एकोपादानजन्यम्, एकाकारत्वात्, यद्यदेकाकारं तत्तदेकोपादानजन्यम्, यथा घटकुम्भमृदङ्गशरावकुड्यवल्मीकादय एकाकारा एकमृदुपादानजन्याः, तथेदमपि जडत्वादिनैकाकारम्, तस्मादेकोपादानजन्यमिति । यदत्र सकलकलाद्यवनिपर्यन्ततत्त्व-जाताविवेकात्मकमुपादानम्, सा मायेति तत्सिद्धिः । विस्तरेणैतदुपरिष्टादुपपादयिष्यामः ।

मायाशब्दवाच्यतया तस्यापरमार्थत्वशङ्का स्यादिति तन्निवृत्त्यर्थमाह—वस्तु-रूपेति । सा माया वस्तुरूपा परमार्थभूता विश्वमूलत्वादीश्वरवदिति । नित्या च सा

माया। विश्वमूलत्वादीश्वरवदेवेति। अनित्यत्वे तस्या मूलान्तराभ्युपगमे विश्वमूलत्वाभावात्। न च माया महेश्वरमायाव्यतिरिक्तानामेव मूलमिति विश्वमूलत्वाभावस्तस्या इति वाच्यम्, जन्यस्यैव मूलापेक्षत्वादजन्यत्वमूलत्वाभावे विरोधाभावादिति। न च परमेश्वरस्य विश्वमूलत्वे प्रमाणाभावात् साधनहीनमुदाहरणमिति वाच्यम्, तस्य विश्वमूलत्वश्रवणात्। तथाहि—"यतो वा इमानि भूतानि जायन्ते" ( तै० उ० ३।१ ), "स इमाँल्लोकानसृजत" ( ऐ० उ० १।२ ), "आत्मन आकाशः सम्भूतः" ( तै० उ० २।१ ) इत्यादिभिर्वेदवाक्यैः परमेश्वरस्य जगन्मूलत्वमवगम्यते। ततो न साधनविकलमुदाहरणमिति। तथा परमर्षिणा वेदव्यासेन सूत्रकृता परमेश्वरस्य विश्वमूलत्वं "जन्माद्यस्य यतः" ( ब्र० सू० १।१।२ ), "शास्त्रयोनित्वात्" ( ब्र० सू० १।१।३ ) इति सूत्रद्वयेनोपवर्णितमिति। ननु तर्हि न मायाया विश्वमूलत्वम्, परमेश्वरस्यैव विश्वमूलत्वादिति चेत्, नैवम्, परस्परसृष्टयोरेव मायामहेश्वरयोर्विश्वमूलत्वेनोभयोरपि तदुपपत्तेः।

तथाहि—माया तावन्न परमेश्वरानधिष्ठिता जडा जगदुपादानं भवति, महेश्वरश्च चेतनोऽपि न मायां विना विश्वमूलतां भजते निर्व्यापारोदासीनमात्रत्वादिति तयोः संसृष्टयोरेव जगन्मूलत्वम्, अयःपिण्डाग्न्योरिव कार्यकारणादीति। माया चेति चशब्देन मायाकार्यस्य विश्वस्य वस्तुरूपत्वमुपवर्णितम्। न च प्रपञ्चस्य मिथ्यात्वादेतदनुपपन्नमिति वाच्यम्, तत्र प्रमाणाभावात्। ननु विमतः प्रपञ्चो मिथ्या, दृश्यत्वात्, यद् यद् दृश्यं तत्तन्मिथ्या यथा शुक्तिरजतम्, तथायमपि दृश्यः, तस्मान्मिथ्येत्यनुमानात् प्रपञ्चमिथ्यात्वसिद्धिरिति चेत्, नैवम्, शुक्तिरजतस्य तद्व्यतिरिक्तस्येदं रजतमिति भ्रान्तिगोचरस्यापरमार्थभूतस्य सद्भावे प्रमाणाभावात्। ननु विमतं रजतज्ञानं रजतविषयम्, रजतज्ञानत्वात्, सम्यग्रजतज्ञानवदित्यनुमानात् तत्र शुक्तौ रजतसद्भावः सिद्धः। नासौ सत्, तदानीं भ्रान्तत्वबाध्यत्वयोरसम्भवात्, सम्यग्रजतवत्। नाप्यसत्, शशविषाण इव ख्यातिबाधयोरसंभवप्रसङ्गात्। नापि सदसत्, विरुद्धत्वादिति सिद्धं तस्य सदसद्विलक्षणत्वम्। तदेवानिरूपितरूपत्वं मिथ्यात्वं चेति। तदुक्तम्—

सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ।
सदसद्भ्यामनिर्वाच्याऽविद्या वेद्यैः सह भ्रमा॥ इति।

तदेतदसारम्, अलौकिकस्य रजतस्य परमार्थभूतस्य तत्र प्रतिभासात्। तथा हि – द्विविधं हि रजतं लौकिकमलौकिकं चेति। तत्र लौकिकं वलयकरणादिसमर्थम्, अलौकिकमत्र प्रतिभासमानं तदसमर्थम्। तस्य द्वित्वादिसाम्येन परमार्थत्वान्न मिथ्यात्वम्। न च नेदं रजतमिति ज्ञानेनास्य बाधः, अपेक्षितलौकिकरजतविवेकख्यापकत्वेनास्याबाधकत्वात्। अथालौकिकरजतावबोधे लौकिकरजतार्थिनस्तत्र प्रवृत्त्यभावप्रसङ्ग इति चेन्न, अलौकिकस्यापि लौकिकभेदाग्रहणेन प्रवृत्त्युपपत्तेः। अथवाऽलौकिकस्य लौकिकतां मन्यमानस्तत्र प्रवर्तत इति। तथानिर्वचनीयरजतावबोधे च प्रवृत्त्यसम्भवाद् भवता च मदुक्तमार्गानुसार आश्रयणीय एव। अतो नानिर्वचनीयापरमार्थरजतसद्भाव इति दृष्टान्ताभावान्न प्रपञ्चमिथ्यात्वसिद्धिः।

ननु भेदाग्रहणस्य प्रवर्तकत्वे नालौकिकरजतकल्पना संगच्छते, शुक्तिरजतयोरेव गृह्यमाणस्मर्यमाणयोर्भेदाग्रहणाद् रजतार्थिनस्तत्र प्रवृत्त्युपपत्तेः कल्पनागौरव-

प्रसङ्गात् । तथाहि—इदं रजतमित्यत्र इदमनुभवः पुरोवर्तिशुक्तिविषयः । रजतमिति तु सदृशदर्शनसमुद्बुद्धसंस्कारजं देशान्तरगतरजतविषयं स्मरणम् । तत्रानुभूयमानस्मर्यमाणयोः शुक्तिरजतयोर्भेदाग्रहणादेव रजतार्थिनः पुरोवर्तिनि शुक्तिरजते प्रवृत्त्युपपत्तेर्नालौकिकरजतकल्पनमुपपन्नमिति । तत्र च न मिथ्याभूतं किञ्चिदस्तीति प्रपञ्चमिथ्यात्वानुमानस्य दृष्टान्ताभावादप्रामाण्यमिति । नैवम्, तच्छब्दोल्लेखनशून्यतया रजतज्ञानस्य स्मृतिरूपत्वासंभवात् । तस्मादत्रालौकिकं रजतं भासत इति । नैतदेवम्, अलौकिकरजतग्रहणस्य प्रवर्तकत्वानुपपत्तेः । न चालौकिकस्य लौकिकतां मन्यमानः प्रवर्तत इति वाच्यम्, अन्यथाख्यातिवादप्रसङ्गात् । न च लौकिकभेदाग्रहणात् प्रवृत्तिः, स्वर्णभेदाग्रहणेन तदर्थिनस्तत्र प्रवृत्तिप्रसङ्गात् । न च गृह्यमाणयोर्भेदाग्रहणं प्रवर्तकमिति स्वर्णाग्रहणेन तदर्थिनस्तत्र प्रवृत्त्यभाव इति वाच्यम्, लौकिकरजतस्याप्यगृह्यमाणतया तदर्थिनस्तत्र प्रवृत्त्यसंभवात् । न चानेन रजतज्ञानेन तस्यापि ग्रहणमिति वाच्यम्, देशान्तरस्थतयेन्द्रियगोचरत्वासंभवात् । न चेदं स्मृत्यनुभवात्मकं पुरोवर्तिदेशान्तरगतरजतद्वयविषयं विज्ञानद्वयमिति वाच्यम्, इन्द्रियसंप्रयोगजन्यत्वात् तच्छब्दोल्लेखशून्यत्वाच्च रजतज्ञानस्य स्मृतित्वासंभवात् । तस्मादत्र भासमानं रजतमसदिति शून्यवादिनो मिथ्यात्वं चासद्विषयत्वमिति प्रपञ्चमिथ्यात्वानुमानात् प्रपञ्चस्याप्यसत्त्वमिति । नैतदेवम्, असद्रजतावबोधे रजतार्थिनस्तत्र प्रवृत्त्यनुपपत्तेः । अथासद्रजतस्य सद्रजतभेदाग्रहात् तदभेदग्रहाद्वा प्रवृत्त्युपपत्तिरिति चेत्, नैवम्, रजतशुक्त्योरेव भेदाग्रहणादभेदग्रहणाद्वा प्रवृत्त्युपपत्तौ तद्व्यतिरिक्तासद्रजतकल्पनासंभवात् ।

तस्मादत्र रजतज्ञानं स्वगतं रजताकारं बहिः शुक्तिमस्तके प्रकाशयतीत्यात्मख्यातिवादिनः । असतः ख्यानायोगात् सतश्च देशान्तरस्थत्वादरजतस्य रजतधीगोचरत्वासंभवाच्च ज्ञानगतरजताकारस्य बाह्यतयाऽवभासो भ्रम इति । जाग्रज्ज्ञानानि च स्वाकारव्यतिरिक्तार्थशून्यानि, ज्ञानत्वात्, स्वप्नज्ञानवदिति ज्ञानाद्वैतवादी । ज्ञानमात्रं सर्वं तदन्यासत्त्वस्यानेनानुमानेनावगतत्वादिति । नैवम्, अस्यानुमानस्य पक्षहेतुदृष्टान्तादिग्राहकज्ञानैः स्वव्यतिरिक्तार्थवद्भिर्व्यभिचारात् । तेषामग्राह्यत्वेऽस्यानुमानस्याश्रयासिद्धिस्वरूपासिद्धिधर्म्यसिद्धदृष्टान्तत्वादिदोषप्रसङ्गः । न च स्वप्नज्ञानानां स्वाकारग्राहकत्वम्, विज्ञानानां साकारत्वे प्रमाणाभावात् । न च नीलज्ञानं पीतज्ञानमित्यादिप्रतिकर्मव्यवस्थान्यथानुपपत्त्या तज्ज्ञानानां नीलपीताद्याकारवत्त्वसिद्धिः, नीलपीतादेः कर्मकारकतया प्रामाण्यात् । तस्मात् स्वाकारं बहीरूपतया न ख्यापयन्ति भ्रान्तय इत्यात्मख्यात्यसंभवः । किं तर्हि भ्रान्तिज्ञानानां भ्रान्तत्वम्, अनादिवृद्धव्यवहारावगतस्वविषयपरित्यागेन विषयान्तरोपसर्पणमिति ब्रूमः । तत्र च प्रमाणं नेदं रजतम्, अपि तु शुक्तिकेति बाधकप्रत्ययानन्तरमिदं शुक्तिशकलं रजतरूपेण मया प्रत्याकलितमित्यबाध्यमानं प्रत्यभिज्ञात्मकं प्रत्यक्षमुपलभ्यत इति । तद्विपरीतानिर्वचनीयालौकिकख्यात्यसत्ख्यात्यात्मख्यात्यादिप्रतिपादकानां प्रमाणानामग्न्यनुष्णत्वप्रतिपादककृतकत्वानुमानवदप्रामाण्यमिति । तदुक्तं न्यायविद्भिः—

> विज्ञानानां यथार्थत्वं सर्वेषां केचिदूचिरे ।
> तदसाध्वन्यथाख्यातिर्मानस्यामीयते धिया ॥ इति ।

तथा अनुमानादप्यन्यथाख्यातिरत्रावगम्यते। तथा हि—विमता रजतार्थिनां पुरोवर्तिनि शुक्तिशकले प्रवृत्तिः स्वगोचरे रजतज्ञानपूर्विका, रजतादित्साधीनप्रवृत्तित्वात्, सम्यग्रजतप्रवृत्तिवदिति। शुक्तिशकलं वा रजतज्ञानविषयः, रजतादित्साधीनप्रवृत्तिविषयत्वात्, सम्यग्रजतवदिति। तथा नेदं रजतम्, अपि तु शुक्तिकेति बाधकप्रत्ययश्च पक्षान्तरेषु नोपपद्यते, शुक्तौ रजतरूपताप्राप्त्यभावात्। प्रकारान्तरेण बाधकप्रत्ययप्रसङ्गश्च—नेदं सद्रजतम्, अपि त्वसद्रजतमिति। नात्र सद्रजतमस्ति, अपि त्वन्यत्रेति वानिर्वचनीयख्यातिपक्षे। नात्र वलयकरणसमर्थं रजतमस्त्यपि त्वन्यत्रेति, नेदं वलयकरणसमर्थं रजतमपि त्वलौकिकमिति वा प्राभाकरैकदेशीयमीमांसकपक्षे। नेदं सद्रजतमपि त्वसद्रजतमिति, नात्र सद्रजतमस्त्यपि त्वन्यत्रेति वाऽसत्ख्यातिपक्षे। नात्र रजतमस्त्यपि त्वान्तरमित्यात्मख्यातिपक्षे। रजताद् भिन्नमिदं शुक्तिशकलमिति भेदाग्रहणपक्षे भवेदिति। तस्मादन्यथाख्यातिव्यतिरिक्तख्यातीनामसंभव इति। रजतार्थिप्रवृत्त्यसंभवाच्च ख्यात्यन्तरासंभवः। अनन्तवस्तुभेदाग्रहणसद्भावात् पुरोवर्तिनि तदर्थिनां प्रवृत्तिप्रसङ्गः। न च गृह्यमाणयोर्भेदाग्रहणात् प्रवृत्तिः, घटपटयोर्गृह्यमाणयोस्तदानीं भेदग्रहणाभावेन घटार्थिनः पटे प्रवृत्तिप्रसङ्गात्। न च धर्मिप्रतियोगिग्रहणवेलायां तदभेदग्रहणोपपत्तिः, उभयग्रहणपूर्वकत्वाद् भेदप्रवृत्तेरिति। अथ भेदस्य स्वरूपत्वात् स्वरूपग्रहणेन भेदस्यापि गृहीतत्वाद् भेदाग्रहणाभावेनाप्रवृत्तिरिति चेत्? न तर्हि रजतार्थिनः पुरोवर्तिनि शुक्तिशकले प्रवृत्तिः, स्वयम्प्रकाशमानयोर्ग्रहणस्मरणयोरिदं रजतमिति ज्ञानयोर्गृह्यमाणस्मर्यमाणयोश्च शुक्तिरजतयोः स्वरूपाग्रहणेन भेदाग्रहणासंभवात्। किञ्च, भेदाग्रहणस्य प्रवर्तकत्वे शब्दार्थसम्बन्धग्रहणासंभवप्रसङ्गः।

तथाहि—गामानयेति प्रयोजकवाक्यश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्तिमुपलभमानो बाल एवमवगच्छति—अस्य गमनक्रियाहेतुः प्रयत्नो जात इति, स्वात्मनि गमनादिक्रियायाः प्रयत्नपूर्वकत्वदर्शनात्। प्रयत्नकारणत्वेनेच्छां गमनानुमितप्रयत्नेनानुमिनोति, इच्छाकारणत्वेन चेष्टसाधनज्ञानकारणत्वेन च प्रयोजकवृद्धवाक्यं ज्ञानपूर्वकालवर्ति, तत्कारणवस्त्वन्तराभावात्। तत आनीयमानमर्थमुपलभमानोऽयमर्थसमुदायोऽनेन शब्दसमुदायादवगत इति जानाति। पश्चादावापोद्वापाभ्यां विशेषतोऽध्यवस्यति—अस्यार्थविशेषस्यायं शब्दविशेषो वाचकः, अस्य पदविशेषस्यायमर्थविशेषो वाच्य इति वा। अत्राग्रहणस्य ज्ञानप्रागभावरूपतयाऽशब्दजन्यत्वाच्छब्दशक्तिकल्पनानवकाशः, ज्ञानद्वारेणेच्छाप्रयत्नावुत्पाद्य शब्दस्य प्रवर्तकत्वादिति चन्द्रद्वित्वशङ्खपीतिमादिभ्रमादिषु न भेदाग्रहणसंभव इति। तस्मान्न भेदाग्रहणात् प्रवृत्तिः, अपि त्वन्यथाग्रहणादिति ब्रूमः। ननु शैवैः शास्त्रे अन्यथाख्यातिराश्रीयत इति कुतोऽवगतम्? भूतशुद्धितन्त्रे उक्तत्वात्। तथाहि—

अन्यथाख्यामुपाश्रित्य सांख्यवच्छिवशासनम्।
या अनिर्वचनीयेति तथा सिद्धान्तवादतः॥
वेदान्तवादिनां दृष्टिमाश्रितं वैष्णवं मतम्। इति।

सांख्यमिति च सेश्वरसांख्यं विवक्षितम्, इतरस्याख्यातिवादित्वात्। तथा(प्यु?-ह्यु,क्तं सांख्याचार्यैः—"विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" (यो॰ सू॰ १।८) इति

सूत्रेणान्यथाख्यातिप्रतिपादनात् । तस्माच्छुक्त्यविद्यासमुद्भूतस्य शुक्त्यधिष्ठितस्य शुक्ति-व्यतिरिक्तस्याधिष्ठानयाथात्म्यज्ञाननिवर्त्यस्य मिथ्याभूतस्य रजतस्याभावात् प्रपञ्च-मिथ्यात्वानुमानं धर्म्यसिद्धदृष्टान्ततया न प्रामाण्यसम्पदमधिगच्छतीति । तथात्मनोऽपि स्वतः सिद्धस्य श्रुतिप्रमाणदृश्यत्वाद् हेतोर्व्यभिचारः । किञ्च, प्रपञ्चस्य धर्मिणो दृश्यत्वेन हेतुना यथा साध्यते, तथा दृश्यत्वस्य हेतोर्मिथ्यात्वस्य साध्यधर्मस्य मिथ्यात्वं यद्यने-नैवानुमानेन साध्येत, तदा हेतोः पक्षैकदेशतया पक्षे वृत्त्यभावादनिश्चितपक्षवृत्तिरसिद्ध इत्यसिद्धत्वम्, प्रपञ्चमिथ्यात्वस्य धर्मिणोऽन्यत्र प्रपञ्चवदसिद्धेराश्रयैकदेशासिद्धत्वं च प्रसज्यते । तद्द्वयस्य मिथ्यात्वासाधने तत्र वर्तमानत्वाद् दृश्यत्वस्य व्यभिचारः । प्रमाणान्तरेण तन्मिथ्यात्वसाधने तन्मिथ्यात्वस्य मिथ्यात्वासाधनात् तत्र द्वयोर्व्यभिचारः । तस्यापि मिथ्यात्वसाधनेऽन्तिमस्य मिथ्यात्वस्य मिथ्यात्वासाधनात् (तत्र द्वयोर्व्यभिचारः । तस्यापि मिथ्यात्वासाधनेऽन्तिमस्य मिथ्यात्वस्य मिथ्यात्वासाधनात् ?) तत्र वर्तमानतया हेतोर्व्यभिचारः । तथा मिथ्यात्वं यद्यसत्त्वं तदा सन् घटः सन् पट इत्यादिप्रत्यक्षबाधः । प्रपञ्चस्य धर्मिणो मिथ्यात्वस्य धर्मस्य हेतोर्दृश्यत्वस्य शुक्तिरजतस्य दृष्टान्तस्य च शशविषाणकल्पत्वेनाश्रयासिद्ध्यादिदोषप्रसङ्गः । तेषां सद्भावे हेतोर्व्यभिचारः । इत्युभयथा शून्यवादिनां न वादेऽधिकारः । तदुक्तम्—

"अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः" ( श्लो. वा., निरा० १२९ ) इति ।

यदि ज्ञाननिवर्त्यत्वम्, तदा च प्रत्यक्षादिविरोधः, प्रत्यक्षादिना मुद्गरप्रहारादि-निवर्त्यत्वोपलम्भेन कार्यकल्प्यज्ञाननिवर्तनयोग्यताया असंभवात् । न च कल्पकोटिशत-सहस्रवर्तिनां पदार्थानां कारणान्तरविनष्टानामज्ञानादविनाशो घटत इति । यदि सदसद्वि-लक्षणत्वं मिथ्यात्वम्, तदापि प्रत्यक्षादिविरोधः, प्रत्यक्षादिना पदार्थानां सत्त्वासत्त्वयो-रुपलम्भात् । तथा विरुद्धत्वाच्च सदसत्त्ववदेकस्य पदार्थस्य न सदसद्वैलक्षण्योपपत्तिः । देशकालभेदेन त्वर्थानां सदसत्त्वयोरुपपत्तिः । उभयवैलक्षण्यं तु न कथञ्चिदुपपद्यत इति । अथ बाध्यत्वमिति चेदस्तु । बाध्यत्वं यदि नाशित्वम्, तदांशे सिद्धसाध्यतांशे धर्मिग्राहक-प्रमाणबाधा च । कालाद्यवनिपर्यन्ततत्त्वानां तत्कार्याणां च विनाशित्वस्य सिद्धत्वात्, मायायाः स्वग्राहकप्रमाणेन नित्यत्वस्य सिद्धत्वाच्चेति विश्वकार्यकलापस्य कारणा-पेक्षायां तन्मूलतया मायासद्भावसिद्धिः । अतस्तस्या नित्यत्वम्, विश्वकार्यकारणतया-कार्यत्वेनानित्यत्वासम्भवात्, तस्याश्च कारणान्तरकल्पनायामनवस्थाप्रसङ्गाच्च । नित्यत्वं कस्यचिदाश्रयणीयम् । तत् कल्पनागौरवपरिहाराय प्रथमभूताया मायाया एवाभ्युपगतमिति धर्मिग्राहकेणैव प्रमाणेन तन्नित्यत्वमपि सिद्धमिति न धर्मिग्राहक-प्रमाणविरोधः । न चानेन तस्य बाधासंभवः, अस्य तन्मूलतया तदभावे मायासद्भाव-सिद्धेराश्रयासिद्धिदोषप्रसङ्गात् । अथ बाधात्मकबोधविषयत्वं बाध्यत्वम्, तस्य (तच्च) शुक्तिरज्ज्वादावुपजातरजतसर्पादिज्ञानेऽप्यस्तीति न साध्यहीनमुदाहरणम् ।

तथा हि—अनादिसिद्धस्वविषयरजतादिपरित्यागेन विषयान्तरे शुक्त्यादावुप-सर्पणाद् मिथ्येदं ममोत्पन्नं रजतादिज्ञानमिति बाधात्मकबोधविषयता रजतादिज्ञानाना-मुपलभ्यते । तद्दृष्टान्तबलात् प्रपञ्चस्यापि बाधात्मकबोधविषयत्वं साध्यत इति न कश्चिद् दोष इति चेत्, नैवम्, सिद्धसाध्यताप्रसङ्गात् । तथा हि—"सर्वो वै रुद्रः"

( म० ना० १०।११ ) इत्यादिश्रुतेः "विचारतस्तु रुद्रस्य स्थूलमेतच्चराचरम्" इत्यादिस्मृतेश्च शरीरशरीरिरूपतया सर्वस्य रुद्रात्मकत्वावगमात् सर्वेषामपि पदार्थानां रुद्रात्मकत्वावभासस्य भ्रमरूपत्वम्। तेन नायं प्रपञ्चोऽशिवात्मकः, किन्तु रुद्रात्मक एवेति बाधात्मकबोधविषयत्वस्य सिद्धत्वात् सिद्धसाध्यताप्रसङ्ग इति। अथाशिवात्मतागोचरा ये प्रत्ययाः प्रपञ्चविषयास्तेषां मिथ्यात्वमन्यथाख्यातिरूपत्वं साध्यत इति चेत्, तर्हि सिद्धं नः समीहितम्, प्रपञ्चसत्यत्वाविरोधात्। नहि रज्जौ सर्पज्ञानोत्पादेन रज्जुसत्यत्वं विरुध्यत इति। तस्माद् युक्तमुक्तं माया च वस्तुरूपेति। अपरमार्थात् परमार्थवस्तूत्पादासम्भवाच्चेति।

अपरे पुनर्माया च वस्तुरूपेत्येतद् वाक्यमन्यथा व्याचचक्षिरे। तथाहि—माया वस्तुरूपा शिवरूपा, तत्कार्यं च जगच्छिवरूपम्, शिवाद् भिन्नस्य कस्यचिदसंभवात्। तथाहि—ज्ञानस्वभाव एवायमात्मा शिवो मायातत्कार्यात्मनाऽवभासते। ततः स एव तदुभयमिति। न च तथा सति शिवस्य परिणामित्वमिति वाच्यम्, विवर्तवादाश्रयणात्। अप्रच्युतस्वस्वभावस्य वस्तुनोऽन्यथाभावो विवर्तः। यथा रज्जोः सर्पत्वम्। नहि रज्जौ सर्पभावकाले परिणामादि दृष्टमिति महेश्वरस्यापि जगद्रूपत्वे तद्वदेव परिणामादिकासंभव इति शिव एव मायातत्कार्यात्मना भासत इति। तदुक्तमीश्वरगीतायाम्—

स एव मूलप्रकृतिः प्रधानः पुरुषोऽपि च।
विकारा महदादीनि देवदेवः सनातनः॥ (७।३१) इति।

नहि रजतादेरन्यत्र विद्यमानस्य शुक्तिकादौ भ्रमदर्शनादस्य प्रपञ्चस्यान्यत्रासंभवाद् भ्रमरूपत्वासंभव इति वाच्यम्, पूर्वदर्शनमात्रस्य भ्रमहेतुसंस्कारहेतुतया प्रयोजकत्वेनान्यत्र विद्यमानतयाऽप्रयोजकत्वात्। तस्मात् पूर्वपूर्वदिवसजन्मकल्पादिष्वनुभूतस्योत्तरोत्तरदिवसजन्मकल्पादिषु भ्रमसंभव इति न कश्चिद् दोषः। तदुक्तं शतककारेण—

सर्वविकल्पविहीनं शुद्धं शान्तं व्ययोदयविहीनम्।
यत् परतत्त्वं तस्मिन् विभाति षट्त्रिंशदात्म जगत्॥
दर्पणबिम्बे यद्वन्नगरग्रामादि चित्रमविभागि।
भाति विभागेनैव च परस्परं दर्पणादपि च॥
विमलतरपरमशाम्भवबोधात् तद्वद् विभागशून्यमपि।
अन्योन्यं च ततोऽपि च विभक्तमाभाति शिवरूपम्॥ इति॥१९॥
(प० सा० ११-१३)

### वृत्तिः

कर्मणोऽनादित्वं प्रवाहानादितयेत्युक्तम्। वैचित्र्यं च साधनभेदात्। साधनं च कर्त्रादिविशेषः, विचित्रभोगभेदात्मकफलदर्शनाच्च। माया च तावद् वस्तुरूपा। न तु वेदान्तवादिनामिवासत्यरूपा। विश्वस्य कलादेः साधारणस्य, भुवनाद्यात्मनोऽसाधारणस्य, सूक्ष्मदेहात्मन उभयरूपस्य, भुवनजशरीरात्मनश्चाशुद्धस्य सर्वस्य जगतो मूलमुपादानम्, उपादानं विना कार्यानुत्पत्तेः। सा च नित्या, परमकारणत्वात्, अनित्यत्वे त्वनवस्थाप्रसङ्गाच्च। अत एवैका सा ज्ञेया। एष च न्यायः शुद्धाध्वोपादानभूतस्य बिन्दो-

रपि समानः। ननु तत्र उद्देशसूत्रे मायेयः पाशत्वेनोद्दिष्टः, अत्र मायाया लक्षणमुक्तमिति विरोध इति चेत्, सत्यम्। मायायाः स्वतो बन्धकत्वाभावात् तत्र तत्कार्यमुद्दिष्टम्। अत्र तु तस्य कारणाधीनत्वात् कारणस्य लक्षणमुक्तम्। कार्यस्य तु विस्तृतत्वात् पश्चाल्लक्षणमभिधास्यत इत्यविरोधः॥ १९॥

**पाशानुग्राहित्वात् पुरुषतिरोधायिका विभोः शक्तिः।**
**पाशत्वेनाभिहिता पाशाश्च चतुर्विधास्त्वेवम्॥ २०॥**

### तात्पर्यदीपिका

इदानीं शक्तिगणं निरूपयति—पाशेति।

मलकर्ममायाकार्याणां पाशानामचेतनतया परमेश्वरशक्त्यावेशं विना पशुबन्धनसामर्थ्याभावात् स्वावेशेन पाशानुग्रहं स्वकार्ये प्रवर्तनं कुर्वती पुरुषतिरोधायिका पुरुषाच्छादिका विभोः परमेश्वरस्य शक्तिः पाशतयोक्ता तत्त्वज्ञैरिति। पाशाश्च चतुर्विधास्त्वेवमित्युपसंहरति। एवमुक्तेन प्रकारेण पाशाश्चतुर्विधा इत्यर्थः। नन्वर्थपञ्चकं पाश इत्युपक्रम्य पाशाश्चतुर्विधा इत्युपसंहारे पूर्वापरविरोध इति चेन्नैवम्, स्थूलसूक्ष्मविभागेनोक्ताया मायाया एकत्वविवक्षया चातुर्विध्याभिधानादिति। पाशाश्च चतुर्विधास्त्वेवमित्युपसंहारवाक्यस्थेन चशब्देन शास्त्रार्थोपसंहारो द्योतितः। एवं त्रिविधं तत्त्वमिति॥ २०॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायां पतिपशुपाशात्मकविचारः
प्रथमः परिच्छेदः॥

### वृत्तिः

इत्थं साक्षात् पाशत्रयमुक्त्वा शक्तेरुपचारेण पाशत्वमिति दर्शयन्नुक्तार्थमुपसंहरति—पाशेति॥ २०॥

**शुद्धानि पञ्चतत्त्वान्याद्यं तेषु स्मरन्ति शिवतत्त्वम्।**
**शक्तिसदाशिवतत्त्वे ईश्वरविद्याख्यतत्त्वे च॥ २१॥**
**पुंसो ज्ञकर्तृतार्थं मायातस्तत्त्वपञ्चकं भवति।**
**कालो नियतिश्च तथा कला च विद्या च रागश्च॥ २२॥**
**अव्यक्तं मायातो गुणतत्त्वं तदनु बुद्ध्यहङ्कारौ।**
**चेतोधीकर्मेन्द्रियतन्मात्राण्यनु च पञ्चभूतानि॥ २३॥**

### तात्पर्यदीपिका

## अथ द्वितीयः परिच्छेदः

अथ संक्षेपेणोक्तानां पतिपशुपाशानां विस्तारमुपदिशति—शुद्धानीति।

अत्राद्यं पञ्चकं शिवस्वरूपत्वाच्छुद्धम्, मध्यमं सप्तकं शुद्धाशुद्धम्, पशुरूपत्वात् । कथमत्र सप्तकत्वमित्यत आह—पुंसो ज्ञकर्तृतार्थं मायातस्तत्त्वपञ्चकं भवति । पुरुषस्य ज्ञानार्थं कर्तृत्वार्थं च मायातः तत्त्वपञ्चकमुत्पद्यते । तेन कारणभूता माया, कार्यभूतं पञ्चकम्, तदुपहितः पुरुषः सप्तम इति सप्तकत्वम् । तदुक्तं शैवरहस्ये—

माया कालो नियतिः कला च विद्याभिलाषकृत् पुरुषः ।
क्लृप्तानि सप्तधैवं शुद्धाशुद्धानि तत्त्वानि ॥ इति ।

शिष्टं केवलाशुद्धमव्यक्तादिपृथिव्यन्तम् । अव्यक्तस्य मायात उद्भवः, अव्यक्ताद् गुणतत्त्वस्य, गुणतत्त्वाद् बुद्धेः, बुद्धितत्त्वादहङ्कारस्य, अहङ्काराद् मनोबुद्धीन्द्रिय-कर्मेन्द्रियतन्मात्राणामुद्भवः, तन्मात्रेभ्य आकाशादिपृथिव्यन्तानामिति ॥ १-३ ॥

**वृत्तिः**

इत्थं सकलविषयं पाशत्रयमुभयविषयां तिरोधानशक्तिं चोक्त्वा मायोत्तीर्णविषयं शुद्धाध्वस्वरूपं पाशमाह—शुद्धानीति ।

शुद्धानि शुद्धतत्त्वानि । किं तानि नित्यानि, उतानित्यानि ? नित्यत्वे सृष्टि-विरोधः, अनित्यत्वे किं तेषामुपादानमित्यत आह—तेषु मध्ये शिवतत्त्वं बिन्द्वात्मकम् आद्यं प्रधानमुपादानं स्मरन्ति पूर्वाचार्याः । परमोपादानत्वेनैव चास्य मायावन्नित्यत्वं सिद्धमित्युक्तम् । अतश्चान्यानि चत्वारि तानि तत्कार्याणीति भावः । तदुक्तम्—"मायो-परि महामाया" (रौ० सं० ४।२८) इति । इदमत्राकूतम्—विद्यादितत्त्वानां विचित्रभुव-नादिसन्निवेशादिमत्त्वेन श्रुतेः कार्यत्वाव्यभिचारात् तत्तत्त्ववासिनां च शरीरादियोगात् तत्कारणं महामायात्मकं सिद्धमिति । यदुक्तम्—"उपादानं शरीराणां विद्याविद्येश्वरात्म-नाम्" इति । किञ्च, नादादिद्वारेण मन्त्रतन्त्राद्युत्पादकत्वमप्यस्याः श्रूयते—"शक्तेर्नादो भवेद् बिन्दुरक्षरं मातृका ततः" ( मृ० क्रि० १।२ ) इत्यादि । इत्थं बिन्द्वात्मकं शिवतत्त्वं प्रसाध्य तत्कार्याणि चत्वारि तानि किन्नामानीत्यत आह—शक्तिसदाशिवेति ॥ २१ ॥

एवं शुद्धानि तत्त्वानि संख्यातो नामतश्चोक्त्वाऽथोऽशुद्धान्यपि तथैवोद्दिशति—पुंस इति ।

पुंसो बद्धात्मनोऽज्ञकर्तृतार्थमज्ञत्वकर्तृत्वसिद्ध्यै मायातः साक्षात् पारम्पर्येण च कालादितत्त्वपञ्चकं भवति । पञ्चकञ्चुकयुक्तस्यास्य भोक्तृत्वेन पुंस्त्वमलयोगात् पुरुष-तत्त्वाख्या भवतीति वक्ष्यति ॥ २२ ॥

किं च—अव्यक्तमिति ।

धीकर्मेन्द्रियेति, बुद्धीन्द्रियकर्मेन्द्रियाणीत्यर्थः । अव्यक्तादीनि पञ्चविंशतितत्त्वानि मायातः पारम्पर्येणोत्पन्नानीति वक्ष्यामः । अत्र लक्षणोक्त्यवसरेण, एतेषां च ॥ २३ ॥

**पुरुषस्य भोगहेतोः प्रधानतो विंशतिर्भवेत् त्र्यधिका ।**
**यस्मात् प्रकृतिगुणानां नात्यन्तं वस्तुतो भेदः ॥ २४ ॥**

**तात्पर्यदीपिका**

किमर्थमेषामुत्पादः कृतो भगवता महेश्वरेणेत्याशङ्क्याह—पुरुषस्येति ।

पुरुषस्य पशोः स्वकृतपुण्यापुण्यफलभूतसुखदुःखानुभवार्थमेषामुत्पत्तिः। भोगस्तु भोगायतनं भूतात्मकं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्यान् शब्दादिविषयान् विना न संभवतीति भोगार्थमेषां जन्मेति सिद्धम्। अव्यक्तगुणतत्त्वयोरत्यन्तभेदाभावान्न च तत्त्वाधिक्यमिति। एतदुक्तं शैवरहस्ये—

अव्यक्तबुद्ध्यहङ्कृतिमनांसि चत्वारि शब्दमात्राद्यम्।
श्रोत्राद्यं वागाद्यं वियदाद्यं पञ्चकं च पृथक्॥
तत्त्वचतुर्विंशतिकं त्रिगुणात्मतयैव केवलाशुद्धम्। इति॥ ४॥

## वृत्तिः

सर्वेषां चैषां कुत्र कुत्रोपयोगः? किञ्च, प्रधानात् साक्षाज्जातानि कानि? तत्त्वान्तरव्यवधानेन जातानि कानीति सर्वं दर्शयिष्यामः। ननु "अव्यक्तं मायातः" (श्लो० २३) इत्यादिना प्रकृत्यधस्तनतत्त्वानां चतुर्विंशतेरुक्तत्वात् कथमत्र त्र्यधिका विंशतिरुच्यते? अत आह—यस्मात् प्रकृतिगुणानामिति। गुणानामेव प्रकृतित्वेन सांख्यैरभ्युपगमात् तन्निरासाय तेषामचैतन्ये सत्यनेकत्वाद् घटादीनामिव कारणान्तरेण भवितव्यमिति प्रकृतिसिद्धिरस्माभिरुच्यते। ततः कार्यकारणयोरभेदविवक्षयैवमुक्तमित्यविरोधः॥ २४॥

**व्यापकमेकं नित्यं कारणमखिलस्य तत्त्वजातस्य।**
**ज्ञानक्रियास्वभावं शिवतत्त्वं जगदुराचार्याः॥ २५॥**

## तात्पर्यदीपिका

प्रथमोद्दिष्टं शिवतत्त्वं लक्षयति—व्यापकमिति।

व्यापकं व्याप्तं सर्वगतमित्यर्थः। एकमद्वितीयं सर्वभूतस्वरूपेणावस्थितमित्यर्थः। नित्यम् अनश्वरम्। अखिलतत्त्वजातस्य कालादिपृथिव्यन्तस्य कारणमुत्पादकम्। ज्ञानक्रियास्वभावमिति। ज्ञानमात्रं क्रिया व्यापारः साक्षित्वं स्वभावो यस्य तत्त्वस्य तत् शिवतत्त्वमिति तल्लक्षणम्। जगदुराहुः। आचार्या आगमविद इति। अथवा स्वव्यतिरिक्तमस्ति चेत् तदखिलं व्याप्नोतीति व्यापकमित्युक्तम्। स्वसमानासमानपुरुषान्तराभावादेकत्वम्। व्याप्त्येकत्वे चाकाशस्यापि स्त इति तन्निवृत्त्यर्थं नित्यपदोपादानम्। व्याप्तिनित्यत्वैकत्वानि पशोरपि विद्यन्त इति तन्निवृत्त्यर्थं कारणमखिलस्य तत्त्वजातस्येति पदम्। मायायाश्च व्यापकनित्यत्वैकत्वाखिलकारणत्वसद्भावात् तन्निवृत्त्यर्थं ज्ञानक्रियास्वभावमित्युक्तम्। अतो यद् व्यापकमेकं नित्यमखिलतत्त्वकारणं ज्ञानक्रियास्वभावम्, तच्छिवतत्त्वमिति। एतदुक्तं श्वेताश्वतरे—

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः।
सर्वव्यापी स भगवांस्तस्मात् सर्वगतः शिवः॥ (३।११) इति।

शिवधर्मोत्तरे च—

आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः।
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे॥ इति।

सिद्धान्तहृदये च—

कूटस्थममृतं ब्रह्म सत्यमेकमविक्रियम् ।
निष्प्रत्यनीकं चित्सौख्यं नित्यतृप्तमलुप्तदृक् ॥
अध्वातीतं परं व्योम विश्वव्यापि निरामयम् ।
अणीयोऽणोरजं नित्यमुक्तं च महतो महत् ॥
अप्रतर्क्यमरूपादि निरौपम्यमलक्षणम् ।
सदात्मकं स्वयंज्योतिरवाङ्मनसगोचरम् ॥
अतन्निषेधमार्गेण ज्ञायते यच्च सूरिभिः ।
यच्च भ्रामकवत् कर्तृ ज्ञापकं च प्रदीपवत् ॥
मायासहायं तत्प्राहुः शिवतत्त्वं मनीषिणः । इति ॥ ५ ॥

## वृत्तिः

अथोद्दिष्टेषु तत्त्वेषु प्रथमोद्दिष्टं तावच्छिवतत्त्वं लक्षयति—व्यापकमिति ।

यत्प्राक् शुद्धाध्वोपादानत्वेन बिन्द्वात्मकं शिवतत्त्वं साधितं तद् व्यापकम्, शुद्धाशुद्धात्मनो जगतो निजपरिणतिरूपाभिर्निवृत्त्यादिभिः कलाभिर्विश्वं व्याप्नोतीत्यर्थः । यदाहुः—"कलावस्थानि तत्त्वानि तत्त्वस्थो भुवनव्रजः" ( मृ० क्रि० ८।७१ ) इत्यादि । तच्च एकम्, परमकारणत्वात् । अनेकत्वे हि जडत्वे सत्यनेकत्वाद् घटादिवत् कार्यं स्यादित्युक्तम् । अत एव नित्यम्, अनित्यत्वे परमकारणत्वाभावात्, तस्यापि चोपादानान्तरापेक्षायामनवस्थाप्रसङ्गाच्च । निखिलस्य च शुद्धरूपस्य तत्त्वजातस्य कारणम् उपादानम् । न त्वशुद्धस्य तत्त्वस्य, तस्य मायोत्पन्नत्वेनोक्तत्वादस्य च शुद्धत्वेनाशुद्धकारणत्वायोगात् । किञ्च, ज्ञानक्रिये स्वस्मिन् स्थिते आत्मनां भावयतीति ज्ञानक्रियास्वभावम् । अयमर्थः—तत्तद्भुवनेश्वराराधनाद् दीक्षया वा स्वकार्यभूतशुद्धाध्वभुवनप्राप्तानां ज्ञानक्रिये प्रकटयतीति । यदुक्तं श्रीमन्मतङ्गे—

शान्त्यतीतं परं तत्त्वमविनाश्यव्ययात्मकम् ।
येनोन्मीलितसामर्थ्याः [1]पशवो जीवतां गताः ॥ ( वि०३।३२-३३ ) इति ।

अत एवास्य बोधकत्वम् । ननु मायापि कलादिद्वारेण ज्ञानक्रियाप्रकाशिकेत्युक्तम्, सत्यम्, मायोत्पन्नस्य ज्ञानादेः किञ्चिद्विषयत्वादनात्मादावात्मादिभावनाहेतुत्वाच्च सा मोहिका । इदं तु सर्वविषयज्ञानादिप्रकाशकत्वाच्छास्त्रसिद्धोपादानद्वारेण शिवादिशुद्धवस्तुबोधकत्वाच्च बोधकमित्यविरोधः । यद्वा ज्ञानक्रियाख्यं स्वं धनमात्मनां भावयत्यभिव्यनक्तीति ज्ञानक्रियास्वभावम् । अथवा ज्ञानक्रिये अस्य न स्वभाव इति नञ्प्रश्लेषणाज्जडरूपतया व्याख्येयम्, न तु ज्ञानस्वभावतया, उपादानत्वेन मृदादिवदचेतनत्वात्, ज्ञानस्वभावस्योपादानत्वायोगात् । तदुक्तं श्रीमत्पराख्ये—"निमित्तमीश्वरस्तेषामुपादानं स बिन्दुराट्" इति । अन्यत्राप्युक्तम्[2]—"सा च कुण्डलिनी शम्भोः शक्तिः

१. पशवः शिवतां गता इति मुद्रितग्रन्थपाठः शुद्धः ।
२. पौष्करागमीयं वचनमिदम् ।

शुद्धा जडात्मिका" इति । एवंभूतमुपादानरूपं महामायाख्यं शिवतत्त्वमाचार्या जगदुरिति । न त्वियमार्या परमशिवविषयतया तच्छक्तिविषयतया वा व्याख्येया, शिवादिपृथिव्यन्ततत्त्वलक्षणप्रस्तावे तत्त्वातीतयोस्तयोरत्राप्रस्तुत्वात् । तयोरेव शिवतत्त्वरूपत्वेन शुद्धाध्वोपादानत्वाभ्युपगमे परिणामित्वादचेतनत्वादिदोषप्रसङ्गात् । न च चिद्विवर्ताभ्युपगमो युक्तः, सर्वप्रमाणसिद्धत्वेन जगतोऽसत्यत्वाभावात्, विवर्तस्य चासत्यत्वाभ्युपगमात् । शिवतत्त्वसंज्ञाया बिन्द्वात्मनः कुण्डलिन्याश्चित्समवायाभावेन परिग्रहशक्तित्वेन श्रवणाच्च प्रोक्तैव व्याख्या युक्ता । तदुक्तम्—

[1]नात्र शक्तिरुपादानं चिद्रूपत्वाद्यथा शिवः ।
परिणामोऽचितः प्रोक्तश्चेतनस्य न युज्यते ॥
चितो विवर्त एवोक्तस्तथात्वे कार्यशून्यता ।
सर्वप्रमाणसंसिद्धं चिद्विवर्तं कथं जगत् ॥
मायापि नात्रोपादानं मोहकत्वात् स्वतेजसा ।
सा च कुण्डलिनी शम्भोः शक्तिः शुद्धा जडात्मिका ॥
न तादात्म्यात् स्थिता किन्तु वर्तमाना परिग्रहे ।
शिवे कर्तरि तादात्म्यान्नेयं कुण्डलिनी स्थिता ॥
उपादानं त्वतो हेतोः कुलाले मृत्तिका यथा । इति ।

शब्दब्रह्मवादिपक्षेणाप्यात्मन एव नादादिक्रमेण बहुधाऽवस्थानं न युज्यत इत्युक्तं नादकारिकासु—

अविकार्यत्रात्मोक्तस्तच्छक्तिश्चाप्यतो न योग्यौ तौ ।
बहुधा स्थातुं यद्वा चैतन्यविनाकृतौ विकारित्वात् ॥ (१९) इत्यादि ।

अतः शब्दोपादानत्वेनापि महामाया सिद्धयतीत्येवमादि विस्तरेणास्माभिर्मृगेन्द्रवृत्तिदीपिकायां दर्शितमिति ततोऽवधार्यम् ॥ २५ ॥

**अस्मिन्निलीय निखिला इच्छाद्याः शक्तयः स्वकं कार्यम् ।**
**कुर्वन्ति तेन तदिदं सर्वानुग्राहकं प्राहुः ॥ २६ ॥**

### तात्पर्यदीपिका

ननु निष्क्रियस्य शिवतत्त्वस्य कथं निखिलतत्त्वकारणत्वमित्याशङ्क्याह—अस्मिन्निति ।

अस्मिन् परमेश्वरतत्त्वे निलीनास्तत्तत्त्वमवलम्ब्य स्थिता इच्छाद्याः शक्तयः स्वकार्यं कुर्वन्ति, न स्वातन्त्र्येण, तासां शिवसामर्थ्यरूपत्वात् । तेनासौ शिवो निखिलतत्त्वकारणम्, अत एव सर्वानुग्राहकश्च भवतीति । अस्य शिवतत्त्वस्य षडध्वव्याप्तिः—

स्वराः षोडश वर्णाध्वा ताराद्यं नवकं पदम् ।
मन्त्रौ षड्वर्णपञ्चार्णौ तत्त्वं तत्र शिवात्मकम् ॥

---

१. पौष्करागमस्य श्लोका इमे इति लु० सं०, भा० २, पृ० १२१ दर्शनादवगम्यते ।

नेन्तं नमः परायाद्यं त्रिपञ्चभुवनान्यपि ।
निवृत्त्यादीनि पञ्चात्र शान्त्यतीतादयः कलाः ॥
सर्वत्रान्ते पदं योज्यं स्यात् षडध्वात्मने नमः ॥ ६ ॥

### वृत्तिः

अत एव—अस्मिन्निति ।

इच्छाद्याः शिवशक्तयः, अस्मिन् उपादाने प्रथमं निलीय तदधिष्ठानेन स्वकमनुग्राह्यानुग्राहकलक्षणं कार्यं तच्छेषभूतं च सृष्ट्यादिकं कुर्वन्ति । ततस्तदिदमपि परम्परया सर्वानुग्राहकत्वात् सर्वानुग्राहकं प्राहुः, न तु शक्त्यधिष्ठाननैरपेक्ष्येणास्वातन्त्र्यात्, अचेतनस्य चेतनाधिष्ठानं विना कार्योत्पादनायोगात् ॥ २६ ॥

**चिदचिदनुग्रहहेतोरस्य सिसृक्षोर्य आद्य उन्मेषः ।**
**तच्छक्तितत्त्वमभिहितमविभागापन्नमस्यैव ॥ २७ ॥**

### तात्पर्यदीपिका

अथ शक्तितत्त्वमाह—चिदिति ।

अयमर्थः—पशुपाशानुग्रहार्थं सिसृक्षोः परमेश्वरस्याद्यो य उन्मेषः उन्निद्रभावः, ईक्षणमिति यावत्, तच्छक्तितत्त्वमित्युक्तम्, शिवतत्त्वादभिन्नं च, शक्तितद्वतोर्भेदासंभवादिति । ननु कथं शक्तेः सद्भावावगमः ? कार्यानुपपत्त्येति ब्रूमः । निष्क्रियस्य शिवस्य जगत्सृष्ट्यादिकं शक्त्यभावे न संभवतीति तत्सिद्धिः । तथा हि—यथाग्नेरङ्गुलिसंयोगे विद्यमानेऽपि मण्यादिप्रतिबन्धकसद्भावदशायां स्फोटकार्यानुद्भवादग्न्यङ्गुलिसंयोगव्यतिरिक्ता दाहिका शक्तिः कल्प्यते, तथात्रापि पञ्चविधकार्यान्यथानुपपत्त्या शक्तिसद्भावसिद्धिः । न चाग्न्यङ्गुलिसंयोग एव स्फोटहेतुरिति वाच्यम्, तस्य प्रतिबन्धाप्रतिबन्धावस्थयोः सद्भावेनाविशेषेण स्फोटकार्योदयप्रसङ्गात् । न च प्रतिबन्धकाभावात्मककारणाभावात् तदानीं कार्यानुदयो न शक्त्यभावादिति वाच्यम्, प्रतिबन्धकाभावस्याकारणत्वात् । भूतानां भविष्यतां देशान्तरे वर्तमानानां च प्रतिबन्धकानामभावसद्भावेऽपि स्फोटकार्यानुत्पत्तेस्तस्याकारणत्वसिद्धिः । न चैतस्य प्रतिबन्धकाभावस्य कारणत्वेन तद्व्यतिरिक्ताभावसद्भावेऽपि कार्यानुदयो घटत इति वाच्यम्, एतदभावस्य कारणत्वे प्रमाणाभावात्, विपरीतप्रमाणसद्भावाच्च । तथाहि—विमतो भावः स्फोटाजनकः, प्रतिबन्धकाभावत्वात्, तदन्याभाववदिति । तथैतत्प्रतिबन्धकविगमने एतदभावसद्भावेऽपि प्रतिबन्धकान्तरसद्भावे स्फोटकार्यानुदयाच्चैतस्याकारणत्वसिद्धिः । न च सर्वेषां प्रतिबन्धकानामभावः कारणम्, उपरिदीपनयनस्याङ्कुरोत्पत्तिप्रबन्धकस्यापनयने बीजादङ्कुरोत्पत्तिप्रसङ्गात् । अथ न दीपनयनप्रध्वंसः कारणम्, तत्प्रागभावस्य कारणत्वात् । स चात्र नास्तीति तस्य तत्र नीतत्वादिति चेत्, नैवम्, उपरिदीपनयनप्रागभावान्तरसद्भावेनाङ्कुरोत्पादप्रसङ्गात् । न चासावेव कारणमिति वाच्यम्, उपरिनीतदीपेषु बीजाङ्कुरेष्वेतद्दीपनयनप्रागभावस्य सद्भावात् तेभ्यो बीजेभ्योऽङ्कुरोत्पत्तिप्रसङ्गात् ।

अतो दीपनयनादतीन्द्रियं किमपि कारणं नष्टमित्यवगम्यते, तदभावाप्रतिबन्धावस्थायां कार्यानुदयनप्रतिबन्धकाभावस्याभावादिति। ननु शक्तेर्विनाशे कारणाभावात् प्रतिबन्धकावगमेऽग्नेः स्फोटकार्याभावो गतिस्तम्भने च सर्पादेर्गमनाभावश्च प्रसज्यते, मन्त्रेण नष्टशक्तित्वादिति चेत् ? नैवम्, नष्टशक्तिज्वालानाशे पुनरुत्पद्यमानज्वालायाः शक्तिनाशाभावेन स्फोटोदयोपपत्तेः। सर्पस्य तु ध्यातभारवशात् गमनाभावः, न शक्तिनाशादिति पुनर्गमनोपपत्तेः। तस्माद् कार्यान्यथानुपपत्त्या शक्तिसद्भावसिद्धिः। तदुक्तं भट्टपादेन—

"शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः" इति।

सेयं परा शक्तिः परमेश्वरादभिन्ना। तस्या विकारा इच्छाद्याः शक्तयस्तदभिन्ना इति। तदुक्तं मातङ्गे—

पत्युः शक्तिः परा सूक्ष्मा जाग्रतो द्योतनक्षमा।
तया प्रभुः प्रबुद्धात्मा स्वतन्त्रः स सदाशिवः॥ (वि० ५।२०) इति।

अस्य शक्तितत्त्वस्य षडध्वव्याप्तिः—

अनन्तायेति पूर्वं यत् पदानां तु चतुष्टयम्।
तत्त्वशक्तिः कलातीता पूर्वस्मात्तु विशिष्यते॥ ७॥

**वृत्तिः**

इत्थं शिवतत्त्वं प्रसाध्य तत्कार्यभूतं शक्तितत्त्वमाह—चिदिति।

शिवो हि चितामात्मनामनुग्रहं मोक्षं कर्तुमिच्छुस्तेषां मलपाकाय कर्मभोगार्थं च सृष्ट्यादि कृत्वा पाशानामचितामनुग्रहं स्वव्यापारसामर्थ्योत्पादनं करोति। अत्र पाशानुग्रहे साध्ये प्रथमोपादानत्वाद् बिन्दुः साधनमित्युक्तम्। अतोऽयमर्थः पर्यवसन्नः—सिसृक्षोः परमेश्वरस्य चिदचिद्विषयो योऽनुग्रहः, तद्धेतोस्तत्साधनरूपस्य अस्य बिन्दोर्य आद्य उन्मेषः प्रथमः परिणामः शान्त्यादिभुवनात्मको नादात्मकश्च, तच्छक्तितत्त्वमुच्यते। नन्वेतच्छक्तितत्त्वं बिन्द्वादिवन्निरवयवमुत सावयवमत आह—अविभागापन्नमिति। विभज्यन्ते एभिः पदार्थाः परस्परं विविच्यन्त इति विभागा अवयवाः। अविभागापन्नं निरवयवस्वरूपम्, अस्यैव परमकारणस्य बिन्दोर्मायाया वा शक्तिरूपस्यैव परमकारणत्वात्। शान्त्यादीनि तु कार्यरूपाणि तत्त्वानि व्यक्तत्वेन भुवनाद्याधारत्वात् सावयवान्येव। ननु शिवतत्त्वेऽपि भुवनानि श्रूयन्ते ? सत्यम्,—न तु साक्षात्। किन्तु शान्तिकलामस्तक एव तानि स्थितानि, मायाभुवनानीव कलामस्तक इत्यविरोधः॥ २७॥

**ज्ञानक्रियाख्यशक्त्योरपकर्षोत्कर्षयोरभावेन।**
**यः प्रसरस्तं प्राहुः सदाशिवाख्यं बुधास्तत्त्वम्॥ २८॥**

**तात्पर्यदीपिका**

अथेदानीं सदाशिवादिशुद्धतत्त्वानां स्वरूपं निरूपयितुमाह—ज्ञानेति।

अयमभिप्रायः—पराशक्तिविकारभूतज्ञानेच्छाक्रियाशक्तीनां प्रसरावस्थायां ज्ञान-क्रियात्मकशक्तिद्वयसाम्ये सतीच्छोद्रेको यदा विवक्ष्यते, तदा शिवतत्त्वं सदाशिवाभिधान-मिति। तदुक्तं सिद्धान्तहृदये—

> ज्ञानक्रियाख्ये न्यक्तुल्ये शक्तीच्छोद्रेकमश्नुते।
> यदा सदाशिवाख्यस्तु तदासौ शिव उच्यते॥ इति।

तत् तत्त्वं स्फटिकनिभम्। तदुक्तं चन्द्रज्ञाने—

> सदाशिवाख्यं विमलं शुद्धस्फटिकसन्निभम्। इति।

अस्य सदाशिवतत्त्वस्य षडध्वव्याप्तिः—

> वर्णाध्वात्र ककारः स्याच्छाश्वतायादिकं त्रिकम्।
> पदाध्वा च स्वयं तत्त्वभुवने शान्तिरेव च॥ ८॥

### वृत्तिः

अथ सदाशिवतत्त्वमाह—ज्ञानेति।

सिसृक्षुत्वेन प्रागुक्तस्य परमशिवस्य ज्ञानक्रियाशक्त्योः साम्येनाधिष्ठानात् तस्यै-वोपादानतयोक्तस्य बिन्दोर्यो द्वितीयः प्रसरः परिणामः शक्तितत्त्वव्यवधानेन जायते, तत् सदाशिवतत्त्वमाहुः॥ २८॥

**न्यग्भवति यत्र शक्तिर्ज्ञानाख्योद्रिक्ततां क्रिया भजते।**
**ईश्वरतत्त्वं तदिह प्रोक्तं सर्वार्थकर्तृ सदा॥ २९॥**

### तात्पर्यदीपिका

ईश्वरतत्त्वनिरूपणार्थमाह—न्यगिति।

न्यग्भूतज्ञानेच्छात्मकशक्तिद्वयसाम्ये सति यदा क्रियोद्रेको भवति, तदा शिव-तत्त्वमीश्वराभिधानं भवति। तत् सर्वतत्त्वानां कर्तृस्वभावम्, क्रियोद्रेकात्। तत् पाव-काभम्। तदुक्तम्—

> [1]अत ऊर्ध्वं भवेदन्यदीश्वरावरणं महत्।
> दीप्तपावकवर्णाभं विद्येशास्तत्र संस्थिताः॥ इति।

ननु ज्ञानेच्छान्यग्भावे क्रियाशक्तेरसंभवः, तत्पूर्वकत्वात् क्रियाया इति चेत्, नैवम्, ज्ञानेच्छान्यग्भावस्य स्वविषयं प्रकाश्य तूष्णीम्भावरूपत्वेनासत्त्वरूपत्वाभावात्। तदुक्तं सिद्धान्तहृदये—

> ज्ञानेच्छे न्यक्समे शक्ती क्रियाधिक्यं यदाश्नुते।
> तदासावीश्वराख्यां तु लभते परमेश्वरः॥ इति।

---

१. श्लोकोऽयं चन्द्रज्ञानस्य स्यात्।

अस्य षडध्वव्याप्तिः—खकारो वर्णाध्वा। ध्यानाहारायेत्यादीनि त्रीणि पदानि। 'नं ईशानमूर्ध्ने', 'नमः शिवाय' इति मन्त्रौ। स्वयं तत्त्वाध्वा। अनन्तादिशिखण्ड्यन्तानि भुवनानि। विद्या कलाध्वा ॥ ९ ॥

### वृत्तिः

तृतीये तु प्रसरे—न्यगिति।

यत्र जगत्कर्त्रनन्ताद्यधिष्ठानेन क्रियाशक्तेर्व्यापारबाहुल्यम्, तत्सादाख्यतत्त्वाधस्तनं प्रसरमीश्वरतत्त्वमाहुः। तस्य च सर्वार्थिकर्तृत्वं क्रियाशक्त्यधिष्ठितत्वात्, सर्वकर्तॄणामनन्तादीनामत्रैवान्तर्भावस्य वक्ष्यमाणत्वाच्च ॥ २९ ॥

**न्यग्भवति कर्तृशक्तिर्ज्ञानाख्योद्रेकमश्नुते यत्र।**
**तत्तत्त्वं विद्याख्यं प्रकाशकं ज्ञानरूपत्वात् ॥ ३० ॥**

### तात्पर्यदीपिका

विद्यातत्त्वं वर्णयति—न्यगिति।

न्यग्भूतेच्छाक्रियाशक्तिसाम्ये सति यदा ज्ञानोद्रेको भवति, तदा शिवतत्त्वं विद्याख्यं भवति। तदप्युक्तम्—

उद्रिच्यते ज्ञानशक्तिः क्रियेच्छे न्यक्समे यदा।
तदासौ शुद्धविद्याख्यः सर्वविद्यानिधिः शिवः ॥ इति।

प्रयोजनमाह—प्रकाशकमिति। तत्र हेतुमाह—ज्ञानरूपत्वादिति। पद्मरागसमानवर्णा। तदुक्तम्—

[1]तद्बाह्ये शुद्धविद्या स्यात् कोटीनां शतलक्षका।
सुदीप्ता निर्मला सूक्ष्मा पद्मरागसमप्रभा ॥ इति।

अस्याः षडध्वव्याप्तिः—गकारो वर्णः। शिवायेत्यादीनि त्रीणि पदानि। 'मं तत्पुरुषवक्त्राय' इति, 'नमः शिवाय' इति मन्त्रौ। शुद्धविद्या तत्त्वम्। वामाद्या नव भुवनानि। प्रतिष्ठा कला ॥ १० ॥

### वृत्तिः

तथा—न्यगिति।

यस्त्वीश्वरतत्त्वाधस्तने बिन्दुपरिणामरूपे तत्त्वे सप्तकोटिमहामन्त्राधिष्ठानेन ज्ञानशक्तेरुद्रेको भवति, तत्तत्त्ववासिनां ज्ञानरूपत्वात् सर्वज्ञत्वप्रकाशहेतुत्वात् प्रकाशकं तद् विद्यातत्त्वमुच्यते ॥ ३० ॥

---

१. श्लोकोऽयं चन्द्रज्ञानस्य स्यात्।

**नादो बिन्दुः सकलौ सादाख्यं तत्त्वमाश्रितौ कथितौ।**
**विद्येशाः पुनरैशे मन्त्रा विद्याश्च विद्याख्ये ।। ३१ ।।**

**तात्पर्यदीपिका**

ननु नादबिन्दू शास्त्रान्तरे तत्त्वमध्ये कथितौ, अतस्तत्त्वाधिक्यमनयोरन्तर्भावो वा वक्तव्यः। तथाहि—

तदूर्ध्वं बैन्दवं तत्त्वं निर्मलं सर्वतोमुखम्।
परमं सर्वतत्त्वानामनन्तं ज्योतिरव्ययम्॥

इत्यादि। तथा विद्येश्वरविद्यामन्त्राणां सदाशिवे वृत्तिमन्ये मन्यन्ते। ततस्तन्निरासार्थं तयोरन्तभावार्थं चाह—नाद इति।

अयमभिप्रायः—नादबिन्दू कलावत्तया सकलौ सदा सर्वदा शिवाख्यं तत्त्वमाश्रितौ, तदभिन्नौ कथितावित्यर्थः। केचित् सदाशिवं तत्त्वमाश्रितावित्याहुः। विद्येशानन्तादय ईश्वरतत्त्वे वर्तन्ते। तदुक्तं सिद्धान्तागमे—

अनन्तसूक्ष्मौ शिवतमैकनेत्रैकरुद्रकाः।
त्रिमूर्तिपूर्वः श्रीकण्ठः शिखण्डी च ततोऽष्टमः॥
एते विद्येश्वरास्त्वष्टावीश्वरे संप्रकीर्तिताः॥ इति।

मन्त्राश्च विद्याश्च प्रकाशकतया प्रकाशकं विद्यातत्त्वमाश्रित्य वर्तन्त इति। तदुक्तम्—"मन्त्रा विद्याश्च विद्यायां बीजभूता भवन्ति हि" इति॥ ११॥

वृत्तिः

इत्थं शुद्धतत्त्वान्यभिधाय तेष्वेव वस्त्वन्तरस्यान्तर्भावमाह—नादो बिन्दुरिति।

तत्र परबिन्दोः शिवतत्त्वत्वेन तत्कार्यस्य सूक्ष्मनादस्य शक्तितत्त्वान्तर्भावेन चोक्त(तत्त्वा?त्वा)त् सकलो बिन्दुरक्षरबिन्द्वात्मको नादश्च स्थूलध्वनिरूपः। द्वौ च सदाशिवतत्त्वान्तर्भूतौ ज्ञेयौ। विद्येशानामनन्तादीनामीश्वरतत्त्वेऽन्तर्भावः। मन्त्राणां सप्तकोटिसंख्याकानां वाचिकशब्दानां च व्योमव्याप्यादीनां विद्यानां च कामिकाद्यष्टाविंशतितन्त्राणां विद्यातत्त्वेऽन्तर्भावः॥ ३१॥

**पञ्चानामप्येषां नहि क्रमोऽस्तीह कालरहितत्वात्।**
**व्यापारवशादेषां विहिता खलु कल्पना शास्त्रे।। ३२ ।।**

**तात्पर्यदीपिका**

ननु नित्यतया विभुत्वेन चैषां क्रमासंभवात् कथं तत्सद्भावप्रतिपादनमित्याशङ्क्याह—पञ्चानामिति।

अयमभिप्रायः—देशकालकृतस्य प्रथमचरमभावात्मकस्य क्रमस्यासंभवेऽपि शक्तिव्यापारभेदोन्नेयभेदवशादेषां तत्त्वानां सद्भाव आश्रीयत इति॥ १२॥

**वृत्तिः**

पञ्चेतीति काचिदार्या केषुचित्पुस्तकेषु दृश्यते, तदसत्, "द्वयोरप्यध्वनोरेवं क्रमप्रसवयोगिनोः। विलयः प्रातिलोम्येन शक्तितत्त्वद्वयावधिः ॥" (मृ० वि० १३।१७९) इत्यादिभिरेषां सृष्टिसंहारक्रमप्रतिपादकैस्तत्तद्भुवनवासिनामवस्थानभेदाभिधायिभिः शुद्धाध्वन्यपि शुद्धकालसङ्ख्या(वा?व)वेदिभिर्वाक्यैर्विरोधात्। सेयमशास्त्रज्ञैः प्रक्षिप्तेत्युपे-(क्षै?क्ष्यै)व ॥ ३२ ॥

**तत्त्वं वस्तुत एकं शिवसंज्ञं चित्रशक्तिशतखचितम्।**
**शक्तिव्यापृतिभेदात् तस्यैते कल्पिता भेदाः ॥ ३३ ॥**

**तात्पर्यदीपिका**

ननु किमर्थं परमेश्वरतत्त्वस्य स्वत एवामी भेदा नाभ्युपगम्यन्ते, येन शक्तिव्यापारोपाधिकृतभेदाश्रयणमित्याशङ्क्याह—तत्त्वमिति।

यतः शिवतत्त्वस्य परमार्थतो भेदासंभवस्ततः शक्तिव्यापारोपाधिकृता एवामी पञ्च भेदाः। तद्भेदासंभवश्च ईश्वरानेकत्वकल्पनासंभवादिति, भेदस्वरूपासंभवाद्वा। स चाश्रयासंभवात्। तथा हि—कोऽयं भेदाश्रयः ? भिन्नो वा स्यादभिन्नो वा ? यद्यभिन्ने वस्तुनि भेदस्य वृत्तिः, तदैकपदार्थाभावप्रसङ्गः, भेदसमावेशात्। यदि भिन्ने भेदस्य वृत्तिः, किं तर्हि भेदेन प्रयोजनम् ? वस्तुतः पूर्वमेव भिन्नत्वात्। अस्तु भेदवति भेदस्य वृत्तिः। तत्र यदि भेदान्तरेण भिन्ने तद्वृत्त्यभ्युपगमस्तदानवस्था, भेदान्तरस्यापि भिन्नवृत्तित्वात्। न च स्वेनैव भिन्ने स्वयं वर्तत इति वाच्यम्, आत्माश्रयप्रसङ्गात्। तस्मादभिन्न एव वस्तुनि भेदस्य वृत्तिरभ्युपगमनीया। तदा च तस्य चन्द्रभेदवदपरमार्थत्वम्, अभिन्नवृत्तित्वादिति। न च स्वरूपमेव भेदः, अयमस्माद्भिन्न इति सापेक्षस्य भेदप्रतिभासस्याभावप्रसङ्गात्। न च घट इत्यघटव्यावृत्तेरप्यवभास इति वाच्यम्, पदार्थेषु वर्तमानताद्यवभासेनावर्तमानतादिव्यावृत्त्या क्षणिकत्वादिप्रसङ्गात्। तत्त्वं वस्तुतः परमार्थत एकम् अभिन्नम् अद्वितीयम्। किं तदित्यत आह—शिवसंज्ञं शिवाख्यम्, "प्रमाता प्रमितं च विश्वं शिवः सदैको बहुधा चाकशीति" इति श्रुतेः। चित्रशक्तिशतखचितमिति नानारूपशक्तिसहस्रमुद्रितम्। तदुक्तमध्वसिद्धौ—

चित्रशक्तिसहस्राढ्यं शिवतत्त्वं समातिगम्।
विभक्तं पञ्चधा चैकं शक्त्युल्लासविभेदतः ॥ इति।

तस्माच्छक्तिव्यापारभेदादेव तस्य महेश्वरस्यैते सदाशिवादिभेदा इति ॥ १३ ॥

**वृत्तिः**

शिवस्यापि सदाशिवादिभेदः शास्त्रेषु श्रूयते, स किं परमार्थतो न वेत्यत आह—तत्त्वमिति।

परमार्थतः परमशिवाख्यमधिष्ठातृरूपं तत्त्वमेकमेव, तस्य कर्तृत्वेन चैतन्याव्यभिचारात्, चैतन्यस्य च विकारित्वाभावादित्युक्तम्। तच्च चित्रशक्तिशतखचितम्।

शक्तज्ञेयकार्यानन्त्यादौपाधिकानन्तभेदभिन्नया शक्त्या समवेतमित्यर्थः। ततश्चास्य शक्ति-व्यापारभेदादुपचारेण सदाशिवादिभेदाः काल्पनिका एव, न तु परमार्थतः। अधिष्ठेयस्य तु बिन्दोः शिवतत्त्वाद्यवस्थाभेदः सत्य एवेत्युक्तम्। यच्छ्रूयते—

किन्तु यः पतिभेदोऽस्मिन् स शास्त्रे शक्तिभेदतः।
कृत्यभेदोपचारेण तद्भेदस्थानभेदजः ॥ इत्यादि।
( मृ० वि० १३।१६४-१६५ )

लयादिभेदः प्रागुक्तो यदुपाधौ शिवस्य तु।
स बिन्दुरिति मन्तव्यः सैव कुण्डलिनी मता ॥ इति।

अत एव सदाशिवाद्याकारकल्पनमपि तस्य ध्यानार्थमेव, न तु परमार्थत इत्युक्तं श्रीमत्पौष्करे—

"साधकस्य तु लक्ष्यार्थं तस्य रूपमुदाहृतम्" इति।

श्रीमन्मृगेन्द्रेऽपि—

वपुषोऽविद्यमानत्वाद् यद्यत्कृत्यं करोति सः।
तत्र तत्रास्य तत्कर्तृवपुषाऽनुकृतं वपुः ॥ इति ॥ ३३ ॥
( क्रि० ३।४१ )

**चिदचिदनुग्रहहेतो रूपाण्येतानि स प्रभुः कृत्वा।**
**कुरुते चितामनुग्रहमनादिमलरुद्धशक्तीनाम् ॥ ३४ ॥**

### तात्पर्यदीपिका

ननु किमर्थमेतानि रूपाणि करोति भगवानित्याशङ्क्याह—चिदिति।

अनादिमलप्रच्छादितशिवस्वभावानां पशूनां पाशानां जडानां चानुग्रहं कर्तु-मेतानि रूपाणि स भगवान् करोतीत्यर्थः। तदुक्तम्—

शिवात्मकमिदं विश्वं शिव आधारकारणम्।
अस्य शक्तिर्विपक्त्री स्यान्नियन्ता च सदाशिवः ॥
ईशः कर्ता कारकश्च शुद्धविद्या प्रकाशिका।
एभिरीशोऽनुगृह्णाति क्लृप्तैर्भेदैश्चराचरम् ॥ इति ॥ १४ ॥

### वृत्तिः

एतदेवाह—चिदिति।

शिवो हि चिदनुग्रहार्थमेवैतानि रूपाणि करोति, सदाशिवादिध्येयाकारानधितिष्ठ-तीत्यर्थः। ततस्तानधिष्ठायाचिदनुग्रहोपचितानामात्मनामेवानुग्रहं करोति, तस्यापि चिदचिदनुग्रहार्थत्वेनोक्तत्वात्। अनादिमलरुद्धशक्तीनामित्येतदनुग्रहापेक्षायां विशेषण-द्वारा हेतुः ॥ ३४ ॥

**भुक्तिं मुक्तिमणूनां स्वव्यापारे समर्थताधानम् ।**
**जडवर्गस्य विधत्ते सर्वानुग्राहकः शम्भुः ॥ ३५ ॥**

## तात्पर्यदीपिका

चितामचितां च कीदृशमनुग्रहं करोति भगवानित्याशङ्क्याह—भुक्तिमिति ।

भुक्तिं सुखदुःखानुभवरूपाम्, मुक्तिं नित्यानन्दानुभवलक्षणां च अणूनां संसार्यात्मनाम् । स्वव्यापारे समर्थताधानं जडवर्गस्य पाशवर्गस्य विधत्ते करोति । सर्वानुग्राहकः, अतः कारणाच्छम्भुरिति । ननु सुखदुःखानुभवप्रदानस्य कथमनुग्रहरूपत्वम्, नित्यनिरतिशयानन्दे विद्यमाने विषदूषितमध्वन्नकल्पसुखलेशप्रदानस्यानुग्रहरूपत्वासम्भवात् । दुःखानुभवप्रदानस्याननुग्रहरूपत्वं सर्वेषां सम्मतमेवेति चेत् ? उच्यते, सुखानुभवस्य तथाभूतस्यापि नित्यसुखरागोत्पादद्वारेणापवर्गहेतुतयाऽनुग्रहरूपत्वम् । दुःखानुभवस्यापि संसारवैराग्योद्वेगजननद्वारेणापवर्गहेतुतयाऽनुग्रहरूपत्वमिति तत्प्रदातुरनुग्राहकत्वम् । ननु तथाप्यस्य न सर्वानुग्राहकत्वम्, दक्षाध्वरादौ दक्षादिनिग्रहश्रवणात् । घृणानिधित्वं च तेनैव बाधितम् । नहि घृणावतः कदाचिदपि प्राणिहिंसा दृष्टेति । रागादिमत्त्वं च तेनैवानुमितम् । नहि रागादिरहितस्य प्राणिहिंसा दृष्टेति । नैवम्, तन्निग्रहस्य दोषनिर्हरणार्थतया सर्वलोकपथ्यतया चानुग्रहरूपत्वात् । तदुक्तं श्रीवायवीये—

> ये के च निग्रहा लोके ब्रह्मादिषु निदर्शिताः ।
> तेऽपि लोकहितायैव कृताः श्रीकण्ठमूर्तिना ॥
> सदोषा एव देवाद्या निगृहीता यथोचितम् ।
> अतस्तेऽपि विपाप्मानः प्रजाश्च विगतज्वराः ॥ इति ।
> ( शि० वा० १।३१।२३,२५ )

अत्रेश्वरनिन्दा दक्षादीनां दोषः । तस्या दोषत्वम् "अथ य एनं द्वेष्टि, स एव पापीयान् भवति" इत्यादिश्रुतेरवगम्यते । एवेत्यवधारणा । अनन्तफलत्वं च तथा ।

> शिवनिन्दा गुरोर्निन्दा शिवज्ञानस्य दूषणम् ।
> देवद्रव्यापहरणं गुरुद्रव्यविनाशनम् ॥
> हरन्ति ये च संमूढाः शिवज्ञानस्य पुस्तकम् ।
> सुमहापातकान्याहुरित्यनन्तफलानि षट् ॥

इति शिवधर्मोत्तरागमाच्च तदवगमः । अतोऽनन्तफलस्य शिवनिन्दादोषस्य फलानुभवलक्षणेन यमदण्डेन विनाशासम्भवं मन्यमानो भगवान् करुणानुन्नहृदयो निग्रहेण दक्षादीन् स्ववशान् कृत्वा स्वप्रणामात्मकं स्वनिन्दाप्रायश्चित्तं कारयामास । नहि प्रायश्चित्तान्तरैः खद्योतकल्पैर्नैशतमःकल्पमहेश्वरनिन्दादोषपरिहारो घटते, तेषां परिमितविषयतया परिमितानामपरिमितमहेश्वरविषयापरिमितनिन्दापरिहारासंभवात् । यथा नैशतमसोऽनन्तस्याप्यनन्तादित्योदयेन प्रबलेन विनाशस्तथा महेश्वरप्रणामेनानन्तेनानन्ततन्निन्दाप्रतिक्षेप इति । तदुक्तं श्रीवायवीये—

निग्रहोऽपि स्वरूपेण विदुषां न जुगुप्सितः ।
अत एव हि दण्ड्येषु दण्डो राज्ञां प्रशस्तये ॥
सर्वोऽपि निग्रहो लोके न च विद्वेषपूर्वकः ।
नहि द्वेष्टि पिता पुत्रं यो निगृह्यापि शिक्षयेत् ॥
निदानज्ञस्य भिषजो रुग्णे हिंसां प्रयुञ्जतः ।
न किञ्चिदपि नैर्घृण्यं घृणैवात्र प्रयोजिका ॥ इति ।

( शि० वा० १।३१।२६,३४,३८ )

तस्मादुपपन्नं सर्वानुग्राहक इति ॥ १५ ॥

### वृत्तिः

तमेव चिदचिद्विषयमनुग्रहं दर्शयति—भुक्तिमिति ॥ ३५ ॥

**चिदनुग्रहस्त्वयं किल यन्मोक्षः शिवसमानतारूपः ।**
**सोऽनादित्वात् कर्मण इह भोगमृते न याति संसिद्धिम् ॥ ३६ ॥**

### तात्पर्यदीपिका

ननु तर्हि भुक्तिमुक्त्योरनुग्रहयोर्मुख्यतमं निःश्रेयसमेवासौ विदध्यात्, नामुख्यं भोगात्मकमित्याशङ्क्याह—चिदिति ।

सत्यं संसारनिवृत्त्यात्मकापवर्गप्रदानमेव मुख्यानुग्रहो न भोगप्रदानम्, तथापि जात्यायुर्भोगफलानां कर्मणामनादिभूतानां फलभोगं विना नाशासंभवात् तन्नाशं विना निःश्रेयसानुपपत्तेस्तदर्थमेव भोगप्रदानमाश्रयणीयम् । स मोक्षः किमात्मक इत्याशङ्क्याह—शिवसमानतारूप इति । शिवेन समानता निर्विशेषताविवेकता रूपं स्वरूपं यस्य स शिवसमानतारूपः, सायुज्यलक्षण इति यावत् ॥ ३६ ॥

### वृत्तिः

नन्वस्तु मोक्षोऽनुग्रहः, दुःखनिवृत्तिहेतुत्वात् । भोगस्तु सुखदुःखसंवेदनात्मकः, स कथमनुग्रहत्वेनोच्यते ? अत आह—

सत्यं पाशनिवर्तनेन सर्वार्थदृक्क्रियात्मकशिवत्वव्यक्त्या च शिवसाम्यरूपस्य मोक्षस्यैवानुग्रहत्वम्, भोगस्य तु [1]"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति न्यायात् कर्मक्षयहेतुतया परम्परयाऽनुग्रहहेतुत्वमित्यनुग्रहतयोक्तमित्यविरोधः ॥ ३६ ॥

---

१. महाभारतभाण्डारकरसंस्करणे त्रयोदशेऽनुशासनपर्वणि १५ परिशिष्टे २२०० पङ्क्त्यनन्तरं श्लोकार्धं एष दृश्यते ।

**तेन विभुस्तद्भुक्त्यै कुरुते तनुकरणभुवननिष्पत्तिम् ।**
**कर्त्रा विना न कार्यं न तथोपादानकरणाभ्याम् ।। ३७ ।।**

### तात्पर्यदीपिका

ननु तर्हि कर्मफलभोग एव विधातव्यः, न जगदारम्भ इत्याशङ्क्याह—तेनेति ।

यतो भोगं विना न कर्मनाशः, अतस्तद्भुक्त्यै भगवांस्तनुकरणभुवननिष्पादं करोति । तनुः शरीरम्, सूक्ष्मस्थूलात्मना द्विप्रकारम् । करणं च द्विविधं बाह्यमान्तरं चेति । तत्र बाह्यं कर्मेन्द्रियज्ञानेन्द्रियात्मना दशविधम् । अन्तःकरणं त्रिविधं मनोऽहङ्कारो बुद्धिश्चेति । भुवनशब्देन चतुर्विंशत्यधिकशतद्वयलोका उच्यन्ते । तान्येतानि भगवान् महेश्वरः करोति भोगार्थमिति । ननु कस्मान्महेश्वरस्तानि भुवनानि कृतवानित्युच्यते, भवतु तेषां सर्वेश्वरेण विनोत्पाद इत्यत आह—कर्त्रा विना न कार्यं न तथोपादानकरणाभ्यामिति । यतः कर्तुरभावे न कार्यसंभवोऽतो महेश्वरस्तनुकरणभुवनानि कृतवानित्युच्यते । तथा तद्वदुपादानकारणाभावे च न कार्यं जायेत, अतस्तत्रोपादानकारणमपि किञ्चिदाश्रयणीयम् । एवं करणाभावे न कार्यसंभव इति करणं चात्र किञ्चिदभ्युपेयमिति । तथाहि—घटाद्युत्पत्तौ तावत् कुलालादिः कर्ता, हस्तपादादिकं करणम्, मृदाद्युपादानम्, चक्राद्युपकरणमिति दृष्टम्; तेषामेकस्याप्यभावे कार्यस्य घटादेरुत्पादासंभवात् । अतोऽत्रापि तान्यवश्याश्रयणीयानि, अन्यथा जगदात्मकस्य कार्यस्योत्पादासंभवादिति । ननु किं जगत्कर्तृसद्भावे प्रमाणम् ? अनुमानागमावस्मदादीनाम्, अस्मद्विलक्षणानां योगिनां प्रत्यक्षमिति ब्रूमः । तथाहि—विमतं कालाद्यवनिपर्यन्तं कार्यंजातं बुद्धिमत्कारणकम्, कार्यत्वात्, यद्यत् कार्यं तत्तद् बुद्धिमत्कारणकं दृष्टम्, यथा घटः, तथेदं कालाद्यवनिपर्यन्तं कार्यम्, तस्माद् बुद्धिमत्कारणकमिति । न च क्षित्यादीनां कार्यत्वस्यानुपलम्भादनिश्चितपक्षवृत्तिरसिद्ध इत्यसिद्धत्वं हेतोरिति वाच्यम्, अनुमानागमाभ्यां तत्कार्यत्वसिद्धेः । तथाहि—क्षित्यादि कार्यम्, मूलोपादानव्यतिरिक्तजडत्वात्, यद्यन्मूलोपादानव्यतिरिक्तं जडं तत्तत् कार्यम्, यथा घटः, तथेदम्, तस्मात्तथेति । न च क्षित्यादेरेव परमाणुभावापन्नस्य मूलोपादानत्वाभ्युपगमादसिद्धमस्माकं मूलोपादानातिरेकित्वविशेषणमिति वाच्यम्, परमाणोर्मूलत्वप्रतिषेधस्य वक्ष्यमाणत्वात् । तथा क्षित्यादि कार्यम्, परतन्त्रत्वात्, त्रिगुणात्मकत्वात्, आत्ममूलान्यवस्तुत्वाच्च घटादिवदिति । तथा "आत्मन आकाशः संभूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" ( तै० उ० २।१।१ ) इत्यादिनागमेन क्षित्यादेः कार्यत्वमवगम्यते । तथा आत्मव्यतिरिक्तस्य सर्वस्य मायामूलत्वप्रतिपादनाच्च । तथाहीश्वरगीतायाम्—

> चतुर्विंशतितत्त्वानि मायाकर्मगुणा इति ।
> एते पाशाः पशुपतेः क्लेशाश्च पशुबन्धनाः ॥....
>
> एतेषामेव पाशानां माया कारणमुच्यते । ( ७।२१, ३० )

इति न स्वरूपासिद्धं क्षित्यादिषु कार्यत्वमिति ।

ननु विमतं जगत् सत्, भासमानत्वात्, शुक्तिरजतवदित्यनुमानेन क्षित्यादेरसिद्धत्वनिश्चयात्, शशशृङ्गं तीक्ष्णं शृङ्गत्वात्, गोशृङ्गवदिति वाऽस्याश्रयासिद्धतेति चेत्, नैवम्, भ्रान्तिज्ञानस्य शुक्तिविषयतया तदन्यासद्रूपरजतगोचरत्वानुपपत्तेः, असद्रजतासंभवेनास्य धर्म्यसिद्धदृष्टान्ततयाऽप्रमाणत्वात्, कार्यत्वहेतोरिवास्याप्याश्रयासिद्धत्वसाम्याच्च। प्रत्यक्षतः क्षित्यादेः सत्त्वावगमेन प्रत्यक्षविरोधाच्चास्याप्रमाणत्वमिति। न च नियतिकालाव्यक्तगुणाहङ्कारादेरसिद्धत्वादाश्रयैकदेशासिद्धिरिति वाच्यम्, तेषामागमादिसिद्धत्वस्योक्तत्वात्। न च कालाकाशादेर्नित्यत्वेन कार्यत्वस्याभावाद् भागासिद्धो हेतुरिति वाच्यम्, तत्कार्यत्वस्यानुमानागमाभ्यां साधितत्वात्।

नन्विदमनुमानं सिद्धसाध्यतालक्षणासिद्धत्वसद्भावादप्रमाणम्। तथाहि—बुद्धिमत्कारणवत्त्वं क्षित्यादेर्भवता साधितम्। तदस्माकमपि सिद्धम्, बुद्धिमतामस्मदादीनामप्यदृष्टद्वारेण कालादितत्त्वकलापं प्रति कर्तृत्वस्य सद्भावात्। न च पुण्यापुण्यात्मके कार्यान्तरे यत् कर्तृत्वं न तदेव जगदात्मके कर्तृत्वं भविष्यतीति वाच्यम्, कारणकारणतया तदुपपत्तेः। यथा पटकारणतन्तुसंयोगमात्रकर्तुः कुविन्दस्य पटकर्तृत्वम्, शरादिक्षेप्तुर्वा शत्रुहिंसाकर्तृत्वम्, एवं जगत्कारणकर्मकर्तुरेवास्मदादेर्जगत्कर्तृत्वोपपत्तेः सिद्धसाध्यताप्रसङ्ग इति। नैवम्, उपादानोपकरणसंप्रदानप्रयोजनविषयप्रत्यक्षबुद्धिमत्कारणवत्त्वस्य बुद्धिमत्कारणत्वशब्देन विवक्षितत्वात्। अतोऽस्मदादीनां तच्चतुष्टयविषयापरोक्षज्ञानाभावान्न सिद्धसाध्यतेति।

नन्वप्यंशे सिद्धसाध्यताप्रसङ्गः, त्र्यणुकादिजन्यकार्याणामुपादानं त्र्यणुकादिकम्, भूतादिजन्यकार्याणामुपादानं भूतादिकं वास्मदादिप्रत्यक्षम्। अदृष्टद्वारेण कर्तृत्वं चास्मदादीनां सिद्धम्। उपकरणं च कालादि किञ्चित् प्रत्यक्षम्। संप्रदानभूताश्च देवदत्तादयः प्रत्यक्षसिद्धाः। प्रयोजनं च स्थानासनादिकं प्रत्यक्षमिति भवेदेवांशे सिद्धसाध्यतेति। नैवम्, विमतस्यैव क्षित्यादेस्तथाविधकर्तृमत्तासाधनात्। यत्र द्व्यणुकत्र्यणुकादीनामुपादानादिकालादीनां वा न प्रत्यक्षम्, तत्र तथाविधकर्तृमत्तासाधनान्नोक्तदोषावकाश इति।

ननु च शक्यक्रियत्वमुपाधिः, तस्योपाधिलक्षणसद्भावात्। तथा हि—साधनाव्यापकः साध्यसमव्याप्तिरुपाधिरिति तस्य लक्षणम्। तदस्य घटादिषु सर्वेष्वनुगतत्वाद् मूलहेतुना कार्यत्वेनासाध्यत्वाच्चास्तीति सोपाधित्वेनाप्रयोजकत्वात् कार्यत्वस्य व्याप्यत्वासिद्धिरिति। नैवम्, शक्यक्रियत्वस्योपाधिलक्षणाभावेनास्य सोपाधित्वाभावात्। स च साधनव्यापकत्वात्। तथाहि—क्षित्यादि कस्यचित् शक्यक्रियं कार्यत्वाद् घटादिवदिति मूलसाधनेन साधयितुं शक्यत्वात् साधनव्यापकत्वमिति। न च क्षित्यादि कस्यचिच्छक्यक्रियं कार्यत्वाद् घटादिवदित्यस्यापि कर्तृमत्त्वोपाधिवशादप्रयोजकत्वमिति वाच्यम्, शक्यक्रियत्वकर्तृमत्त्वादि यद्यदुपाधितया भवता प्रतिपाद्यते, तस्य सर्वस्याप्येकेनैव प्रयोगेण साध्यतया साधनव्यापकत्वेनोपाधित्वासंभवात्, तथा सर्वानुमानेषु समानत्वाच्च। तथाहि—पर्वतोऽग्निमान् धूमवत्त्वाद् महानसादिवदित्यत्रापि जायमानभस्मवत्त्वस्योपाधेः सद्भावाद् धूमानुमानस्याप्यप्रयोजकत्वप्रसङ्गः। अथ तत्र धूमवत्त्वेनैव जायमानभस्मवत्त्वस्यापि साध्यतया नोपाधित्वमित्यस्य नाप्रयोजकत्वमिति चेत्? नैवम्,

तत्राप्यग्निमत्त्वस्यैवोपाधेः सद्भावेन तत्साधनासंभवात्। अथ धूमवत्त्वादेव जायमान-भस्मवत्त्वाग्निमत्त्वादिसर्वोपाधेः साध्यतया साधनव्यापकत्वसद्भावेनानुपाधित्वान्नात्र तद्दोष इति चेत्, तर्हि कार्यत्वेनैवात्रापि सर्वस्य शङ्कितस्योपाधेः साध्यतता सोपाधित्वा-संभवान्नोक्तदोषावकाश इति।

किञ्च, शक्या क्रिया चलनलक्षणा यस्य तच्छक्यक्रियम्, तस्य भावः शक्य-क्रियत्वमिति यद्यभ्युपगमः, तदा परमाणुमनसोरपि नित्ययोर्भवत्पक्षे शक्यक्रियत्वसद्भा-वात् साध्यसमव्याप्त्यभावेन तस्योपाधित्वाभावः। यदि शक्या क्रिया उत्पत्तिलक्षणा यस्य तच्छक्यक्रियं तस्य भावः शक्यक्रियत्वमित्यभ्युपगमः, तदाधिकविशेषणत्वापरनामकं व्यर्थविशेषणत्वं प्रसज्यते, उत्पत्तेरेव कर्तृमत्त्वप्रयोजकत्वेन शक्यपदवैयर्थ्यात्। न चाङ्कुरादेरप्युत्पत्तिसद्भावे कर्तृशून्यतया तद्व्यवच्छेदार्थं शक्यपदोपादानमिति वाच्यम्, तेषां च शक्योत्पादनतया व्यवच्छेदासंभवात् तथेतरेतराश्रयप्रसङ्गाच्च क्षित्यादेः कर्तृ-शून्यत्वे सिद्धे तद्व्यवच्छेदकशक्यविशेषणसार्थता, विशेषणोपाधिसद्भावेन कार्यत्वस्या-प्रयोजकत्वे सिद्धे कर्तृशून्यतासिद्धिरिति। तदुक्तम्—

निश्चिते तदकर्तृत्वे सोपाधित्वं भवेदिह।
सोपाधित्वेऽनुमानस्य कर्तृभावविनिश्चयः॥ इति।

न च करचरणादिनोदनीयत्वमुपाधिः, प्रासादप्राकारादौ तदभावात्, प्राणादौ तदसद्भावेन च साध्यसमव्याप्त्यभावात्। तथा क्षित्यादि कस्यचित् करचरणादिनोद-नीयम्, कार्यत्वात्, घटादिवदिति साधनव्यापकत्वाच्चास्य नोपाधित्वमिति। न च करादिजन्यत्वमुपाधिः, अधिकविशेषणत्वात्। न च क्षित्यादेर्व्यवच्छेद्यत्वम्, अन्योन्या-श्रयप्रसङ्गादित्युक्तमिति, सर्पाद्याकर्षणस्वदेहप्रेरणादौ सकर्तृके करजन्यत्वाभावेन साध्यसमव्याप्त्यभावाच्चेति। न च कार्यविशेषस्य कर्त्रा व्याप्तिरिति वाच्यम्, विशेषस्या-नुपलम्भात्।

ननु किञ्चित् कार्यमुपलभमानस्य सकर्तृकत्वबुद्धिर्भवति, किञ्चिदुपलभमानस्य न भवतीत्येतदन्यथानुपपत्त्या कार्यविशेषोऽभ्युपगन्तव्यः। स च विशेषो घटादिषु सकर्तृ-केष्वनुस्यूतस्तृणादिभ्यो ह्यकर्तृकेभ्यो व्यावृत्तः सन्नेव रसविशेषवदनिर्देश्यः। तदुक्तम्—

सकर्तृकेष्वनुस्यूतो व्यावृत्तोऽन्येभ्य एव सः।
किञ्चित्कार्यविशेषोऽन्यैः स्वीकार्यो मतिभेदतः॥
किंरूप इति वादोऽयमिक्षुक्षीरगुडादिषु।
माधुर्यभेदप्रत्यक्षदृष्टान्तादुपशाम्यति॥ इति।

तस्मात् स एव कर्त्रा व्याप्यते, न कार्यसामान्यमिति। नैवम्, गर्तोन्नयनादिकार्ये सकर्तृके तादृशबुद्ध्यभावेनानैकान्तात्। तदुक्तम्—

गर्तोन्नयनकार्यस्य चिरकालात्यये सति।
सकर्तृकत्वधीगम्यभावो नैवोपलभ्यते॥ इति।

प्रसिद्धानुमाने समानोऽयं पर्यनुयोगः। तथा हि—पर्वतादौ धूमदर्शिनोऽपि कस्यचिदग्निमत्त्वं नावगम्यते, असंभावनादिना प्रतिबन्धात्। अत एव हि पर्वतोऽग्निमान्

धूमवत्त्वादित्यादिपरोपदेशसापेक्षपरार्थानुमानोपन्यासः। तेन तत्रापि विशेषकल्पनया तस्यैवाग्निना व्यापकत्वादप्रयोजकं धूमानुमानमापद्यत इति। अथ यत्र धूमवानग्निमानिति सामान्यव्याप्तिग्रहणबलादनुमानं प्रवर्तत इति चेत्, अत्रापि तर्हि कार्यं कर्तृपूर्वकमिति सामान्यव्याप्तिग्रहणबलादनुमानप्रवृत्तिराश्रयणीया विशेषाभावादिति। न च घटत्वं कर्तृमत्त्वे प्रयोजकम्, परस्य तदभावेन कर्तृमत्त्वाभावप्रसङ्गात्। नापि पटत्वम्, घटादेस्तदभावेनाकर्तृमत्त्वप्रसङ्गात्। न च घटत्वपटत्वकुड्यत्वादयः सर्व एव कर्तृप्रयोजका इति वाच्यम्, प्रयोजकबहुत्वापातात्। न च तद् युक्तम्, व्यक्तीनामेव कर्तृप्रयोजकत्वप्रसङ्गेन घटान्तरस्याकर्तृमत्त्वप्रसङ्गात्, आनन्त्येन कर्त्रा सह व्याप्तिग्रहणासंभवस्योभयत्रापि तुल्यत्वात्। तथा महानसत्वशालात्वादेः प्रयोजकत्वापातेन धूमवत्त्वस्याप्रयोजकत्वप्रसङ्गः। तदुक्तम्—

> घटादिव्यक्तिमात्राणां कर्त्रा व्याप्तिर्न गृह्यते।
> यथानन्त्यं तथा ज्ञातुर्घटत्वादेः प्रतीयताम्॥ इति।

ननु तर्हि प्रमेयत्वादेत्राधिकव्याप्त्या कर्त्रा व्याप्तिराश्रयणीया, न कार्यत्वस्येति चेन्न, अन्यथासिद्धत्वात्। स्वगोचरज्ञानमात्रेण प्रमेयत्वं सत्त्वं च कर्त्रभावेऽपि पदार्थानामभ्युपगतं भवता। अस्मत्पक्षेऽपि मायापुरुषशिवानां कर्तृहीनानामपि प्रमेयत्वं सत्त्वं चाभ्युपगतम्। अतः प्रमेयत्वादेः कर्तृव्याप्त्यसंभव इति। कार्यत्वं तु कारणविशेषस्य कर्तुः कारणान्तरसम्पादकतया प्रधानभूतस्याभावे न संभवति। नहि मृद्दण्डचक्रादिसद्भावेऽपि तत्प्रयोक्तुः कुलालस्याभावे घटोत्पादो घटते। कुलालसद्भावे तु कारणान्तरनिष्पत्त्या कार्यजन्मोपपत्तिरिति कार्यत्वात् कर्तृसद्भावसिद्धिरिति। किञ्च, कार्यत्वं हि पदार्थानामुत्पत्तिः। सा च कारणक्रियामपेक्षते। सा च पुरुषव्यापारं विना न भवति। स तु प्रयत्नादृते न स्यात्। स चेच्छां विना न भवति। इच्छा चेष्टसाधनज्ञानं विना न स्यादिति कार्यत्वं बुद्धिमत्कारणाभावे न भवतीति तत्प्रयोजकत्वान्नास्यासिद्धत्वमिति। नापि विरुद्धोऽयं हेतुः, पक्षविपक्षयोरेव वर्तमानो विरुद्ध इत्युक्तविरुद्धलक्षणाभावात्। तथाहि—सपक्षे घटादौ कार्यत्वस्य वर्तमानत्वाद् विपक्षे चाकर्तृके मूलकारणशिवादौ कार्यत्वस्याभावादस्य पक्षविपक्षयोरेव वर्तमानत्वासंभवाद् विरुद्धत्वाभाव इति।

ननु सर्वज्ञकर्तृकत्वं क्षित्यादेः साध्यते, नान्यकर्तृकत्वम्, असर्वज्ञस्य प्रपञ्चकर्तृत्वासंभवात्। तथाहि—जगदुपादानादिचतुष्टयविनियोगक्रमविषयप्रत्यक्षज्ञानवत एव कर्तृत्वं साध्यते। ततस्तस्य सर्वज्ञत्वम्। सर्वज्ञनिर्मितस्य चान्यस्य संप्रतिपन्नस्याभावात् सपक्षाभाव इति सपक्षे सत्त्वाभावः। तेन कार्यत्वस्य क्षित्यादिकालान्ते पक्षे वर्तमानस्य सर्वज्ञनिर्मितत्वसाध्यरहिततया विपक्षभूतघटादौ च वर्तमानतया पक्षविपक्षयोरेव वर्तमानत्वाद् विरुद्धत्वमिति। तथा शरीरिकर्तृत्वस्याप्यङ्कुरादावसत्त्वेनाशरीरिकर्तृत्वमपीह साध्यते। तत्र च सपक्षाभावेन सपक्षे सत्त्वाभावात् कार्यत्वस्य पक्षविपक्षयोरेव वर्तमानत्वाद् विरुद्धत्वमिति। नैवम्, सर्वज्ञाशरीरिकर्तृकत्वस्य अत्रासाध्यत्वात्। तथाहि—विप्रतिपत्त्यनुरूपेणात्र साध्यनिर्देशाद् यदा किं सकर्तृकं क्षित्यादि अकर्तृकं वेति विप्रतिपत्तिः, तदा सकर्तृकं क्षित्यादीति साध्यनिर्देशः। यदा बुद्धिमत्पूर्वकं वा न

वेति, तदा बुद्धिमत्पूर्वकं क्षित्यादीति साध्यनिर्देशः। यदा सोपादानोपकरणादिप्रत्यक्षवता जन्यं वा न वेति, तदोपादानादिप्रत्यक्षवता जन्यमिति साध्यनिर्देशान्न विरुद्धत्वम्, घटादौ सपक्षे साध्यसाधनयोः सद्भावात्। न च कदाचिदपि सर्वज्ञाशरीरिकर्तृकं क्षित्यादीति साध्यनिर्देशः, तथा विप्रतिपत्त्यभावात्, (स च?) असर्वज्ञशरीरिकर्तृकत्वस्य क्षित्यादीनां भवद्भिरनाश्रितत्वादिति।

ननु तथा साध्यनिर्देशेऽपि तथाविधकर्तुरभिप्रेततया कार्यत्वस्य विरुद्धत्वमिति चेन्न, सर्वानुमानेषु समानत्वात्। तथा हि—पर्वतस्याग्निमत्त्वं यः साधयति, तस्याप्यतद्देशकालानुमेयसंप्रतिपन्नप्रत्यक्षाग्निनाग्निमत्त्वं नाभिप्रेतम्, किन्तु महानसादिगतवह्निव्यतिरिक्तपर्वतगततत्कालानुमेयविप्रतिपन्नाप्रत्यक्षापुरुषपूर्वकतरुसंघट्टजन्याग्निनाऽग्निमत्त्वमभिप्रेतम्। तस्य महानसादावभावाद् धूमानुमानमपि विरुद्धमापद्येत। अथ तथापि तत्साध्यस्य शब्देनानुपादानात् पर्वतस्य स्वगताग्निनाऽग्निमत्त्वस्य साधनाच्च न विरोध इति चेत्, तर्हि प्रकृतेऽपि सर्वज्ञाशरीरिकर्तृकत्वस्य शब्देनानुपादानात् क्षित्यादेः स्वोपादानसमर्थकर्तृमत्त्वस्य साधनाच्च नोक्तदोषावकाश इति। न चासर्वज्ञशरीरिव्याप्तत्वात् कार्यत्वमपि शरीरिसर्वज्ञविशेषं प्रतिक्षिपतीति वाच्यम्, कार्यत्वस्य शरीरिकर्तृव्याप्त्यभावात्। स च तृणादौ तथाविधकर्तुरभावेऽपि कार्यत्वोपलम्भादवगम्यते। तदुक्तम्—

परोऽपि न शरीरस्य व्याप्तिमिच्छति वस्तुतः।
प्रत्यक्षबाधया देही नाश्रितो यदिहाङ्कुरे॥

न च शरीरिकर्तुरभावे कर्तृमात्रस्यासत्त्वम्, तस्यायोग्यत्वात्। तदुक्तम्—

न चाशरीरिकर्तृत्वं बाध्यं देहे तु बाधिते।
शरीरस्येव योग्यत्वं यतो नास्ति परात्मनः॥ इति।

ननु न कार्यत्वं स्वव्यापकशरीरिकर्तृविरुद्धत्वान्नाशरीरिकर्तृनिषेधकम्, किन्तु स्वव्यापककर्तृसामान्यविरुद्धत्वादिति ब्रूमः। यत्र कुलालादौ कर्तृत्वं तत्र नाशरीरित्वम्। यत्र मुक्तात्मन्यशरीरित्वम्, तत्र न कर्तृत्वमिति कर्तृत्वाशरीरित्वयोः सहानवस्थानलक्षणविरोधसद्भावेन स्वव्यापककर्तृविरुद्धत्वादशरीरिकर्तारं कार्यत्वमेव प्रतिक्षिपति। धूमवत्त्वमिवाशीतभास्वराग्निव्याप्तं शीतान्धकाराग्निमिति चेत्, नैवम्, कार्यत्वस्य कर्तृसामान्येन व्याप्त्यभावे प्रतिक्षेपायोगात्। तथा च यदि कार्यत्वस्य कर्तृसामान्येन व्याप्तिः, तर्हि न कार्यत्वव्यापकः कर्ता। तेन तद्विरुद्धत्वेऽप्यशरीरित्वं न प्रतिक्षिपेत्, स्वाव्यापकाविरुद्धत्वात् तस्य। यदि कार्यत्वं कर्तृसामान्येन व्याप्तम्, तदा च न प्रतिक्षेपः, कर्तृसामान्यापर्यवसानलभ्यत्वाद् विशेषस्य। यथा पर्वते परिदृश्यमानधूमेनाग्निसामान्यमनुमाय तदपर्यवसानान्महानसादावपरिदृष्टोऽग्निविशेषः पर्वते कल्प्यते, तथैव प्रपञ्चे परिदृश्यमानं कार्यत्वं कर्तारं विनानुपपद्यमानं कर्तृसामान्यमवस्थापयत् तस्यापि विशेषणद्वारेण सम्बन्धसिद्ध्यर्थं शरीरिविशेषणमसंभवात् परिहृत्य तद्विपरीतं सर्वज्ञशरीरिविशेषं व्यवस्थापयत्येव, अन्यथा स्वव्यापककर्तृसामान्यव्यवस्थापनासंभवात्। न च तद् युक्तम्, व्याप्यसद्भावे व्यापकासत्त्वस्यानुपपन्नत्वात्। नहि धूमसद्भावेऽग्न्यभाव उपपद्यत इति।

न चाव्याप्तत्वेऽपि व्याप्त्युपलम्भमात्रेण प्रतिक्षेप इति वाच्यम्, तस्याप्रमाणत्वात्। नहि कृतकत्वं नित्यताव्याप्तमिति केनचिदुक्ताप्रमाणवाक्यसिद्धव्याप्त्यपेक्षया कृतकत्वेन तद्विरुद्धानित्यत्वप्रतिक्षेपो घटत इति। न च कर्तृत्वमदेहित्वप्रतिक्षेपकम्, कार्यत्वेन साधितस्य कर्तृत्वस्याशरीरिविशेषाभावेऽनुपपन्नतया तस्याक्षेप्यत्वात्। न च शरीरिविशेषाक्षेपेणाशरीरिविशेषप्रतिक्षेपः, तस्य योग्यानुपलम्भनिरस्ततयाक्षेपासंभवात्। न च साधितस्य कर्तृत्वस्य विशेषद्वयराहित्यं संभवतीत्यशरीरिकर्त्रभ्युपगम इति। नाप्यङ्कुरादावसाधितस्यादेहित्वप्रतिक्षेपकत्वम्, अविरोधादिति।

तथा मोक्षावस्थायां शरीरेन्द्रियाद्यभावेऽप्यात्मगुणनित्यसुखविषयबुद्धिसन्ततिसंभवं भगवान् भट्टपादो मन्यते। तेनादेहित्वबुद्धिमत्कारणत्वयोर्न विरोधः, पूर्वबुद्धिविशिष्टस्यात्मन उत्तरबुद्ध्युत्पत्तिहेतुत्वाभ्युपगमादिति। किञ्च, यदि जगत्कर्त्रनुमानस्यैवं विरोधोद्भावनम्, तदा परमाण्वनुमानस्यापि भवताऽभ्युपगतस्य विरोधप्रसङ्गः। तथाहि—आद्यं कार्यं स्वन्यूनानेकसमवायिकारणम्, कार्यद्रव्यत्वात्, घटादिवदिति परमाण्वनुमानम्। तेनाद्यकार्यकारणतया परमाणूनां नित्यत्वनिरवयवत्वकार्यत्वनिरतिशयाणुत्वादिकमर्थादवगम्यते। तत्राप्ययं दोषः सुव्यक्तः। यत्र भवत्पक्षे व्योमादौ नित्यत्वम्, तत्रासर्वगतद्रव्यपरिमाणलक्षणमूर्तत्वं नास्ति। यत्र पुनर्घटादौ मूर्तत्वम्, न तत्र नित्यत्वमिति मूर्तत्वनित्यत्वयोः सहानवस्थानलक्षणविरोधसद्भावात् परमाण्वनुमानमपि विरुद्धमापद्यत इति, तथा परात्मानुमानमपीति। तथाहि—परशरीरचेष्टा आत्मपूर्विका, जीवच्छरीरचेष्टात्वात्, अस्मच्छरीरचेष्टावदिति परात्मानुमानम्। तत्रापि यत्रात्मत्वं स्वात्मनि तत्र न परत्वम्, यत्र परत्वं घटादौ तत्र नात्मत्वमिति परत्वात्मत्वयोर्विरोधात् परात्मानुमानासंभव इति। अथ यदि द्रव्यसमवायिकारणस्य मूर्तस्य नित्यत्वमन्यत्र न दृष्टम्, तथाप्याद्यकार्यकारणतया नित्यत्वं तस्याभ्युपेयम्, अन्यथाऽनवस्थाप्रसङ्गात्। तस्य च नित्यत्वमर्थादवगम्यते। आद्यकार्यस्य स्वन्यूनसमवायिकारणकत्वमात्रसाधनान्नात्र विरोधः। तथा परात्मानुमाने परशरीरगतायाश्चेष्टाया आत्मपूर्वकत्वमात्रसाधनात् स्वव्यापारस्य तत्र योग्यानुपलम्भनिरस्तत्वात् परत्वमर्थादवगम्यते, न शब्दत इति न विरोध इति चेत्, एवं तर्हि जगत्कर्त्रनुमानेऽपि सकलविनाशे सत्याद्यकार्यकारणस्य बुद्धिमन्मात्रस्य साधने तस्यानित्यतायां कर्त्रन्तरकारणान्तरकल्पनयाऽनवस्थानप्रसङ्गेन तस्य नित्यत्वमर्थादवगम्यते न शब्दत इति। तथा कर्तृमात्रसाधने शरीरिणो योग्यानुपलम्भनिरस्तत्वेनाशरीरिणोऽर्थादवगम्यमानतया च न विरोध इति समानः पन्थाः।

ननु पक्षधर्मताव्याप्तिग्राहकप्रमाणाभ्यां प्राप्तयोर्विशेषयोर्विरोधे न कश्चिदर्थः सिद्ध्यति। तथाहि-व्याप्तिबलात् शरीर्यसर्वज्ञानीश्वरसंसारी कर्तावगम्यते, पक्षधर्मतया च कार्यस्य तदुत्पादनसमर्थः सर्वज्ञोऽशरीरी नित्यो नित्यमुक्तः सर्वेश्वरः कर्तावगम्यते। तदनयोरितरेतरसापेक्षयोर्विरोधे न किञ्चित् सिध्येत्। नैवम्, सर्वानुमानेषु समानत्वात्। तथाहि—धूमानुमाने तावद् दृष्टान्तभूमिगतप्रत्यक्षाननुमेयसंप्रतिपन्नापर्वतगताचन्दनेन्धनपुरुषजन्यत्वादिधर्मविशिष्टो वह्निविशेषो व्याप्तिग्राहकप्रमाणेनावगम्यते। पक्षधर्मतया तु पर्वतगतानुमेयविमततरुसंघट्टजन्याप्रत्यक्षचन्दनेन्धनत्वादिधर्मविशिष्टोऽव-

गम्यते। तत्रापि न किञ्चित् सिद्ध्येदिति। अथ धूमवानग्निमानिति सामान्येन व्याप्तिग्रहणं न विशेषत इत्यत्रानुमानप्रवृत्तिराश्रीयत इति चेत्, तर्हि प्रकृतेऽपि कार्यं बुद्धिमत्कारणकमिति सामान्येनैव व्याप्तिग्रहणं न विशेषतः, अङ्कुरादौ तथाविधकर्तृदर्शनादिति भवत्येवानुमानप्रवृत्तिरविशेषादिति।

ननु किं तर्हि दृष्टान्तदृष्टमाश्रयणीयं दार्ष्टान्तिके इति चेत्, अविरुद्धमिति ब्रूमः। न च शरीरकरणनिवृत्त्या कर्तृत्वनिवृत्तिरिति वाच्यम्, स्वशरीरप्रेरणाकर्षणादिष्विवेच्छात्मककरणान्तरसद्भावादपि कर्तृत्वोपपत्तेः। न च स्वशरीरप्रेरणे प्रेर्यस्य शरीरस्य करणत्वं संभवति, कर्मणः करणत्वासंभवात्। नह्यङ्गुल्यग्रेण तदग्रस्पर्शनमुपपद्यत इति। न च तत्र शरीरान्तरं करणमिति वाच्यम्, अनवस्थाप्रसङ्गात्। न च पक्षे देहसम्बन्धः सर्वत्राव्यभिचारेण करणमिति वाच्यम्, देहसम्बन्धस्य हस्ताङ्गुल्यादिप्रेरणे कर्त्रानपेक्षितत्वात्। तथाहि—हस्तस्योत्क्षेपणमवक्षेपणं वा कुर्वन्नात्मा तत्सम्बन्धमेवापेक्षते, न तु पुनर्देहसम्बन्धम्, तस्मिन् विद्यमाने हस्तसंबन्धविनाशे काष्ठीभूतेऽस्मिन् हस्तक्रियाकर्तृत्वादर्शनात्। अतः केवलव्यतिरेकात् साक्षादिच्छानुविधायिक्रियाश्रयत्वयोग्यत्वमेवात्र प्रयोजकम्। तत् प्रपञ्चे भगवतोऽनुमानसिद्धम्।

तथाहि—विमतं मूलकारणादि कस्यचित् साक्षादिच्छानुविधायिक्रियाश्रयत्वयोग्यम्, अचेतनत्वात्, देहवदिति। अत एवाशरीरित्वेऽपि पुराणोक्ताष्टमूर्तित्वविरोधः परिहृतः, साक्षादिच्छानुविधायिक्रियाश्रयतादेहलक्षणसद्भावेन मूलाद्यवन्यन्ततत्त्वजातस्य महेश्वरदेहतया मूर्तिमत्त्वोपपत्तेः। ननु कथं तर्ह्यदेहित्ववचनम्, उच्यते—यथोपादानभूतमृत्तत्त्वाद्यतिरिक्तं शरीरं कुलालकुविन्दादेरुपलब्धम्, तथा मूलकारणतत्कार्यव्यतिरिक्तमत्र शरीरं नास्ति भगवत इत्यदेहित्वोपपत्तिरिति। नाप्यनैकान्तिकत्वम्, पक्षत्रयवृत्तिरनैकान्तिक इत्युक्तलक्षणाभावात्। तथाहि—यदि कालाद्यवन्यन्तेषु विमत्यधिकरणतया सन्दिग्धसाध्येषु पक्षेषु घटादिषु च निश्चितसाध्यतया सपक्षभूतेषु कार्यत्वस्य वृत्तिः, तथापि निश्चितसाध्यव्यतिरेकतया विपक्षभूतेषु मायापुरुषशिवेषु कार्यत्वहेतोर्वृत्त्यभावात् पक्षत्रयवृत्त्यभाव इति। नन्वङ्कुरादिषु कर्तृशून्येषु कार्यत्वस्योपलम्भात् पक्षत्रयवृत्तित्वेन कार्यत्वस्यानेकान्तत्वमिति चेन्न, अङ्कुरादेः पक्षत्वेन विपक्षत्वाभावात्। ननु नाङ्कुरादेः पक्षत्वम्, सन्दिग्धकर्तृकत्वाभावात्। तथाहि—सन्दिग्धसाध्यः पक्ष इति हि पक्षलक्षणम्। तदङ्कुरादेर्नास्ति, निश्चितसाध्यव्यतिरेकतया विपक्षत्वादिति चेत्, नैवम्, परस्य बुद्धिमतः साध्यस्य प्रत्यक्षानर्हत्वेनासत्त्वानिश्चयादङ्कुरादेः सन्दिग्धसाध्यत्वोपपत्तेरिति। न च सन्दिग्धानैकान्तिकत्वं कार्यत्वस्याशङ्कनीयम्, विपर्यये बाधकतर्कस्योक्तत्वात्। तदुक्तम्—

> कारकाणां च सर्वेषां नियोक्तुर्यदि नास्तिता।
> वैयर्थ्यं स्यात् तदा तेषां सतामप्यसतामिव॥ इति।

नाप्यनध्यवसितत्वम्, साध्यासाधकपक्ष एव वर्तमानोऽनध्यवसित इति तल्लक्षणाभावात्। नहि नित्या भूः, गन्धवत्त्वादितिवत् कार्यत्वस्य पक्ष एव वृत्तिः, सपक्षे घटादौ च वर्तमानत्वादिति। न चासौ कालात्ययापदिष्टः, प्रमाणबाधिते प्रतिज्ञातार्थे वर्तमानो हेतुः

कालात्ययापदिष्ट इति प्रोक्तलक्षणाभावात् । न चानुष्णोऽग्निः कृतकत्वाज्जलवदिति-वदस्य प्रत्यक्षविरुद्धकालात्ययापदिष्टत्वम्, परात्मनो बुद्धिमत्कारणस्य प्रत्यक्षानर्हत्वात् । प्रत्यक्षानर्हस्यापि तदनुपलम्भेनासत्त्वाभ्युपगमे सर्वानुमानोच्छेदप्रसङ्गः । तथा घटादावपि कर्ता कुलालः प्रत्यक्षतो नावगम्यते, शरीरस्य करणभूतस्यैव प्रत्यक्षत्वात् । न तु शरीरस्य कर्तृत्वमचेतनत्वात् कुठारवदिति कुलालादिशरीरस्य कर्तृत्वे निषिद्धे तदात्मनः कर्तृत्वं शरीरस्य च करणत्वमवशिष्यत इति न क्वचिदपि कर्तुः प्रत्यक्षार्हत्वमिति न तदनुप-लम्भेनासत्त्वमिति केचित् । अन्ये तु शरीरत्वेऽपि कर्तुः सूक्ष्मत्वदूरत्वस्थत्वादिनाऽनु-पलम्भसंभवात् कार्यदेशे तदनुपलम्भो नासत्त्वादिति ब्रुवते । तदुक्तम्—

यतः कार्यस्य कर्त्रा तु विना भावो न विद्यते ।
अतो देशान्तरस्थोऽयमिच्छया कुरुते जगत् ॥ इति ।

द्विविधमिह कार्यम्—कायिकव्यापारजन्यमिच्छामात्रजन्यं चेति । तत्र कायिक-व्यापारजन्यं घटादि । तदेव शरीरसन्निधानमपेक्षते । इच्छामात्रजन्यं त्वाकर्षणादि । न तच्छरीरसन्निधानमपेक्षते । योजनशतव्यवहितसर्पाद्याकर्षणस्य दूरस्थैः क्रियमाणत्वा-दिति । अपरे तत्र वर्तमानस्य शरीरस्यायोग्यत्वात् प्रत्यक्षेणानुपलम्भो नाभावादिति ब्रुवते । तदुक्तम्—

अथवा दृश्यमेवास्तु शरीरं चक्षुरादिवत् ।
श्रुतिस्मृतिभ्यां तत् सिद्धं शशशृङ्गो न तादृशः ॥ इति ।

ननूक्तं शरीरस्यानित्यत्वे स्वयं निजशरीरस्य निर्माणमतिसाहसम्, कर्त्रन्तर-विनिष्पत्तावीश्वरानन्त्यमापतेदिति ? सत्यम्, बीजाङ्कुरवद् देहस्यानादित्वेन न विरोध इति केचित् । तदुक्तम्—

पूर्वसिद्धेन देहेन शरीरान्तरकर्तृता ।
तच्च पूर्वेण देहेनेत्यनादित्वमिहाश्रितम् ॥ इति ।

एकब्रह्माण्डतद्वर्तिसकलकार्यविनाशे ब्रह्माण्डान्तरसद्भावात् तत्र स्थित्वासौ कार्यं करोतीति न कश्चिद् दोषः । अण्डानां बहुत्वं श्रुतिस्मृतिसिद्धम्, "यथा खल्वलाबूलतायां विततानि फलानि, एवं महेश्वरशक्तौ ब्रह्माण्डसहस्राणि" इति श्रुतेः ।

ईदृशानां तथाण्डानां कोट्यो ज्ञेयाः सहस्रशः ।
तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः ॥

इति स्मृतेश्च तदवगमः । अन्ये नित्यं माहेश्वरं शरीरम्, अनादित्वात्, तच्चा-नादिसृष्ट्यादिकर्तुर्महेश्वरस्य देहानादित्वस्याभ्युपगमनीयत्वात् । तच्छरीरं मायेति चाहुः । अपरे शब्दब्रह्मतनुत्वं भगवतो मन्यन्त इति । अथ प्रत्यनुमानबाधितमिदमनु-मानम् । तथा हि—क्षित्याद्यसर्वज्ञकृतम्, कार्यत्वादित्यनुमानात् सर्वज्ञकर्तृकत्वानुमानस्य सप्रतिसाधनत्वमिति । तदसत्, विकल्पानुपपत्तेः । किं सर्वज्ञकर्तृनिषेधमात्रं विवक्षितम्, किं वा किञ्चिज्ज्ञकर्तृमत्त्वम्, किं वा कर्तृशून्यत्वम् ? नाद्यः पक्षः, असर्वज्ञकर्त्रभ्युपगम-प्रसङ्गात्, वामेनाक्ष्णा न पश्यतीति विशेषनिषेधवद् विशेषनिषेधस्य शेषाभ्यनुज्ञाविषय-त्वात् । अथ परस्य सर्वज्ञकर्तृकत्वमभिमतमिति तन्निषेधमात्रमत्र क्रियत इति चेन्नैवम्,

कर्तृमात्रनिषेधादेव सर्वज्ञकर्तृनिषेधसिद्धेस्तदेव निषेध्यं न विशेष इति। तथा घटादीनामप्यदृष्टादिप्रेरणद्वारेण सर्वज्ञजगत्कर्तृपूर्वकत्वस्याभ्युपगमनीयत्वात् साध्यविकलदृष्टान्तता च भवेत्। न च तत्रान्यः कर्ता, कर्तृभेदे प्रमाणाभावात्। न च कार्यमहत्त्वात् कर्तृबहुत्वकल्पनं कार्यमिति वाच्यम्, इच्छामात्रजन्ये कार्ये बहुत्वस्यानुपयोगित्वात्। कायिकव्यापारजन्ये तु तदुपादानादिनोदनमुपायान्तरेण यत्रैकस्यैव न स्यात् तत्रैव बहुत्वकल्पना। अथवा सर्वेष्वपि कार्येष्वेकस्यैव कर्तृत्वान्न क्वचिदपि बहुत्वकल्पना, एकाचार्यानुगमात्, बहुत्वेऽपीतरेषां वास्यादिवदकर्तृत्वाद्वा। आचार्यानेकतायां च ज्ञानाधिक्यवशादेकस्यैव कर्तृत्वम्, तत्साम्ये च कार्यभेदेन भागभेदेन वैककर्तृत्वोपपत्तिः। इतरथा तद्वैयर्थ्यापातादिति। तथा कार्यमहत्त्वस्य तु कर्तृमहत्त्वादप्युपपत्तेर्न बहुत्वकल्पनासंभवः, धर्मिकल्पनायां गौरवापातात्। तथा समाभिप्रायत्वे वैयर्थ्यम्, विरुद्धाभिप्रायत्वे कार्यवैशसप्रसङ्ग इति न सर्वथा कर्तृबहुत्वकल्पनोपपत्तिरिति। तथा घटाद्यदृष्टव्यापारः क्षितिकर्तृविनिर्मितः, अदृष्टव्यापारत्वात्, क्षित्याद्यदृष्टव्यापारवदित्येककर्तृत्वे सिद्धे तस्य सर्वज्ञसर्वेश्वरत्वादिसिद्धिः।

अथ किञ्चिज्ज्ञकर्तृमत्त्वं विवक्षितमिति चेन्न, अपसिद्धान्ततापसङ्गात्। नहि मीमांसकादयो जगतः कर्तृमत्त्वमभ्युपगच्छन्ति। अतो दूरनिरस्तं किञ्चिज्ज्ञकर्तृत्वमिति। तथा किञ्चित्त्वस्य कार्योत्पादानुपयोगित्वाद् वैयर्थ्यं च। तथासर्वज्ञस्य सर्वकर्तृत्वासंभवाद् माता मे वन्ध्येतिवत् प्रतिज्ञाविरोधप्रसङ्गः। यदि किञ्चिज्ज्ञस्यापि कर्तृत्वं साध्येत, तदा सिद्धसाध्यता, क्षेत्रज्ञानामप्यदृष्टद्वारेण जगत्कारणत्वाभ्युपगमात्। न च जीवानामेव कर्तृत्वसाधनात् परमेश्वरस्याकर्तृत्वमिति वाच्यम्, उपादानाद्यभिज्ञकर्तुः पञ्चरूपवतानुमानेन साधितत्वात्। न च जीवानां कर्तृत्वम्, हेतुत्वमात्रस्य विवक्षितत्वात्। अथाकर्तृत्वं विवक्षितमिति चेन्नैवम्, घटादेः कर्तृमत्त्वेन साध्यविकलदृष्टान्तत्वात्। मूलकारणदृष्टान्तत्वे साधनविकलमुदाहरणम्, तत्र हेतोरभावात्। सत्त्वप्रमेयत्वादिसाधनोपन्यासे घटादिभिर्व्यभिचारः, घटादेश्च पक्षतायां प्रत्यक्षविरोध इति धूमानुमानेऽप्ययं दोषः समानः। पर्वतो धर्मी अपर्वतगताग्निमानिति साध्यो धर्मः, धूमवत्त्वाद् महानसवदिति वक्तुं शक्यत्वादिति। ननु महेश्वरः क्षित्यादिकर्ता न भवति, अशरीरत्वात्, पुरुषत्वाद्वा, मुक्तात्मत्वाद्वाऽस्मदादिवच्चेत्यनुमानविरोध इति चेन्नैवम्, भवतां जगत्कर्तृत्वसिद्धेराश्रयासिद्धताप्रसङ्गात्। अथ भवत्पक्षे जगत्कर्ताऽसिद्ध इति नाश्रयासिद्धिदोष इति चेन्नैवम्, परसिद्धे प्रमाणमूलत्वे तेनैव धर्मिग्राहकेण प्रमाणेन बाध्यमानत्वात्। न च विपरीतानुमानस्यानुत्थानान्नानेन तस्य बाध इति वाच्यम्, तस्य तन्मूलतया तद्बाधकत्वासंभवात्। तथापि यदि बाधाभ्युपगमः, तदा महेश्वरस्याप्रसिद्धत्वादस्य आश्रयासिद्धत्वप्रसङ्गः। अथ न प्रमाणमूला परप्रसिद्धिरिति चेन्न, तर्हि विपरीतानुमानोपन्यासः कार्यः। प्रमाणाभावादेव प्रमेयासिद्धेरस्याश्रयासिद्धिदोषप्रसङ्गाच्चेति।

ननु प्रमाणसिद्धस्यापि तस्य पक्षत्वमुपपद्यते, सिद्धत्वादेवाश्रयासिद्धिदोषाभावादिति चेन्नैवम्, सुरभि गगनकुसुमं कुसुमत्वात् सम्प्रतिपन्नवदित्यस्यापि गगनकुसुमशब्दसिद्धतया आश्रयासिद्ध्यभावप्रसङ्गात्। न च पुरुषः क्षित्यादिकर्ता न भवति, पुरुषत्वात्, अस्मदादिवदिति वाच्यम्, सिद्धसाध्यताप्रसङ्गात्। विशिष्टपुरुषपक्षीकरणेऽपि

जगत्कर्तृत्वव्यतिरिक्तकर्तृविशेषणविशिष्टत्वे सिद्धसाध्यता। जगत्कर्तृत्वविशिष्टपुरुषपक्षीकरणे भवेदेवाश्रयासिद्धिः, धर्मिग्राहकप्रमाणबाधो वेति। न च सर्वे पुरुषाः क्षित्यादिकर्तारो न भवन्ति, पुरुषत्वात्, कुलालादिवदिति वाच्यम्, अंशे सिद्धसाध्यताश्रयासिद्धिधर्मिग्राहकप्रमाणबाधात्मकदोषत्रयापाताद् दृष्टान्ताभावाच्चेति।

ननु विमतः पुरुषः क्षित्यादिकर्ता न भवति, पुरुषत्वादित्यस्मिन् साध्ये न दोषत्रयावकाशः। न तावदाश्रयासिद्धिः, आत्मनः पुरुषस्य सिद्धत्वात्। नापि सिद्धसाध्यताविप्रतिपत्तिः, अन्यपुरुषव्यवच्छेदात्। नापि धर्मिग्राहकप्रमाणबाधः, तस्य जगत्कर्तृत्वानङ्गीकारेण सिद्धत्वादिति चेत्, नैवम्, पुरुषमात्रे विप्रतिपत्त्यभावात्। क्षित्यादिकार्यमधिकृत्य विप्रतिपत्तिर्न पुरुषे। अस्तु वा पुरुषे विप्रतिपत्तिः, तथापि न पुरुषमात्रे, तस्य जगत्कर्तृत्वानभ्युपगमात्। विशिष्टे चेत्, केन विशेषणेन। विशिष्टे यदि किञ्चिज्ज्ञत्वादिना विशिष्टे, तत्र च न विप्रतिपत्तिः। यदि सर्वज्ञत्वादिविशेषणविशिष्टे, तत्र च न विप्रतिपत्तिः, जगत्कर्त्रनुमानप्रवृत्तेः प्राक् तस्याप्रसिद्धत्वात्। नह्यप्रतिपन्ने धर्मिणि धर्ममूला विप्रतिपत्तिर्युक्ता, जगत्कर्त्रनुमानप्रवृत्त्युत्तरतश्च न विप्रतिपत्तिः, तस्य प्रमाणासिद्धत्वात्। तस्मान्न विप्रतिपत्तेर्व्यवच्छेदकत्वमिति। तथेश्वरः शरीरादिमान् कर्तृत्वादित्यादयश्च निरसनीयाः, उक्तन्यायसाम्यादिति।

अथ क्षित्यादि कर्तृशून्यम्, तद्व्यापकशरीररहितत्वात्, यद् यद् व्यापकरहितं तत् तद् व्याप्येनापि रहितम्, यथा जलं धूमव्यापकाग्निरहितं धूमेनापीत्यनुमानविरोधात्; इति चेन्न, अस्यानुमानस्य विशेषणासिद्धत्वेनाप्रामाण्यात्, शरीरकर्तृत्वयोर्व्याप्यव्यापकभावेन तद्व्यापकशरीररहितत्वस्यासिद्धत्वात्। अस्मदनुमानाप्रामाण्ये भवदनुमानासिद्धिपरिहारः, भवदनुमानबाधयाऽस्मदनुमानाप्रामाण्यमिति इतरेतराश्रयप्रसङ्गश्च। अस्मदनुमानस्य भवदनुमानस्याप्रामाण्यमन्तरेणापि रूपपञ्चकोपपत्तेर्निरपेक्षं प्रामाण्यमित्युभयोः परस्परविरुद्धयोर्बाध्यबाधकसाम्येऽपि भवदनुमानस्य विशेषणासिद्धिरूपदोषान्तरसद्भावादबाधकत्वमिति। अथ क्षित्यादि कर्तृशून्यं शरीररहितत्वादिति हेतूपन्यासादसिद्धिपरिहारो भवेदिति चेन्न, घटादिव्यभिचारात्। घटादयोऽपि शरीररहितास्तथापि कर्तृशून्या इति। अथ शरीराजन्यत्वं विवक्षितमिति चेन्न, शरीरविशेषणवैयर्थ्यात्, अजन्यत्वस्यैव कर्तृशून्यताव्याप्तत्वादिति। न च स एव हेतुरिति वाच्यम्, स्वरूपासिद्धताप्रसङ्गादिति। तथाग्नीषोमीयपशुहिंसा धर्मफला, हिंसात्वात्, ब्राह्मणहिंसावदितिवद् नास्यागमविरुद्धकालात्ययापदिष्टत्वम्, कर्तृभावप्रतिपादकागमानुपलम्भात्।

न च—"अकर्तालेपको नित्यो मध्यस्थः सर्वकर्मणाम्" इत्याद्यागमविरोधः, तस्य सव्यापारकर्तृत्वमात्रनिषेधत्वात्। तच्चागमान्तरैः—"न तं विदाथ य इमा जजान" ( ऋ० १०।८२।७; तै० सं० ४।६।२।२ ), "मा नो हिंसीज्जनिता यः पृथिव्याः" ( ऋ० १०।१२१।९ ) इत्यादिभिः परमेश्वरस्य जगत्कर्तृत्वप्रतिपादनादवगम्यते। तस्मादयस्कान्तवन्निर्व्यापारकर्तृत्वमस्येति सिद्धमिति। न चासौ प्रकरणसमः, "स्वपरपक्षसिद्धावत्रिरूपो हेतुः प्रकरणसमः" इत्युक्तलक्षणाभावात्। तथाहि—यथा क्षित्यादि बुद्धिमत्पूर्वकं कार्यत्वाद् घटवदित्यस्मिन् प्रयोगेऽस्य कार्यत्वस्य पक्षधर्मत्वसपक्षसत्त्वविपक्षव्यावृत्त्यात्मकरूपत्रयसद्भावः, न तथा क्षित्यादि बुद्धिमत्पूर्वं न भवति कार्यत्वान्मायावदिति

परपक्षसाधनेऽस्य रूपत्रयसद्भावः, मायादौ कार्यत्वस्याभावेन सपक्षे सत्त्वाभावाद् घटादौ विपक्षे कार्यत्वसद्भावेन विपक्षाद् व्यावृत्त्यभावाच्चेति। तस्माद् रूपपञ्चकसद्भावादिदमनुमानं जगत्कर्तुः परमेश्वरस्य सद्भावे प्रमाणमेवेति सिद्धम्।

आगमाश्च "विश्वतश्चक्षुः" ( श्वे० उ० ३।३ ) इत्याद्याः परमेश्वरस्य जगत्कर्तुः सद्भावं बोधयन्ति। न च तेषां विधिशेषत्वात् स्वार्थेऽप्रामाण्यमिति वाच्यम्, वेदवाक्यत्वाद् विधिवाक्यवदिति। न च "आदित्यो यूपः" (ऐ० ब्रा० ५।२७) इत्यादिवदौपचारिकत्वम्, स्वार्थे बाधाभावात्, तथा ब्राह्मणादौ "तदुक्तमृषिणा" इति मन्त्राणां स्वार्थे प्रामाण्यप्रतिपादनाच्चेति। तस्मादनुमानागमाभ्यामस्मदादीनां सिद्धो महेश्वर इति। योगिनां तु करतलामलकवदखिलमवलोकयतां प्रत्यक्षतोऽपि सिद्धः। तथाहि—परमेश्वरः केषाञ्चित् प्रत्यक्षसमधिगम्यः, प्रमेयत्वात्, करतलामलकवदित्यनुमानाद् महेश्वरस्य प्रत्यक्षगम्यत्वसिद्धिः। योगिनां सद्भावश्च अस्मदाद्यप्रत्यक्षा मूलकारणधर्माधर्मादयः प्रधानपुरुषप्रत्यक्षाः, प्रमेयत्वात्, करतलामलकवदित्यनुमानसिद्धः। तत्र प्रधानपुरुषो महेश्वरोऽप्रधानपुरुषा योगिन इति तत्सिद्धिरिति॥ १७॥

**इति तत्त्वप्रकाशतात्पर्यदीपिकायां शुद्धवर्गविनिर्णयो द्वितीयः परिच्छेदः॥**

### वृत्तिः

एवं पाशानुग्रहोऽपि भोगभोजनद्वारेण पश्वनुग्रहार्थमेवेत्यत आह—तेनेति।

तत्र तनुकरणशब्देनासाधारणी सूक्ष्मशरीरसृष्टिरुच्यते। भुवननिष्पत्तिशब्देन साधारणी भुवनाद्यात्मिका साधारणासाधारणी च भुवनजशरीरात्मिका सृष्टिरुच्यते। एतच्चानन्तादिद्वारेण करोतीत्युक्तम्। अत्र चोदयति—कर्त्रा विनेति। यथा कार्यस्य कर्तारं विना नोत्पत्तिर्दृष्टा तथोपादानकरणे अपि विनेति शिवस्यापि तनुकरणादेरशुद्धाध्वन्युत्पादे किमुपादानं किं वा करणमिति पूर्वः पक्षः॥ ३७॥

**शक्तय इहास्य करणं मायोपादानमिष्यते सूक्ष्मा।**
**एका नित्या व्यापिन्यनादिनिधना शिवासक्ता॥ ३८॥**

### तात्पर्यदीपिका

## अथ तृतीयः परिच्छेदः

अथेदानीं करणोपादानयोः स्वरूपनिरूपणार्थमाह—शक्तय इति।

अयमभिप्रायः—पराशक्तिविकारा इच्छाद्याः शक्तयः परमेश्वरस्य करणं हस्तादिस्थानीयम्। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वे० उ० ६।८) इति श्रुतेः शक्तिकरणसद्भावसिद्धिः। मायोपादानं मृत्तन्त्वादिस्थानीयमिति "मायां तु प्रकृतिं विद्यात्" ( श्वे० उ० ४।१० ) इति श्रुतेस्तदुपादानत्वसिद्धिः। तर्हि सा माया कस्मान्नोपलभ्यते घटवदित्यत आह—सूक्ष्मेति। सूक्ष्मत्वादनुपलम्भो मायाया नासत्त्वादित्यर्थः। तथाहि — अतिदूरत्वातिसामीप्येन्द्रियघातमनोऽनवस्थानसौक्ष्म्यव्यवधानाभिभवसमानाभिहारानुद्भवाः सत एवार्थस्यानुपलम्भकारणभूता लोके दृष्टाः।

उत्पतन् व्योम्नि पक्षी सन्नप्यतिदूरतया प्रत्यक्षतो नोपलभ्यते। अतिसामीप्याच्चक्षुस्थमञ्जनं सदपि नाध्यक्षतोऽवगम्यते। मनोऽनवस्थानात् कामाद्युपप्लुतचेताः परिषदादिकं न पश्यति। इन्द्रियघाताद् अन्धत्वबधिरत्वादेर्घटरूपशब्दाद्यनुपलम्भो भवति। सौक्ष्म्यात् परमाण्वादिकं प्रणिहितचित्तोऽपि न पश्यति। व्यवधानादन्तःस्थघटाद्यनुपलम्भः। आदित्यप्रभाभिभूतत्वाद् दिवा तारका नोपलभ्यन्ते। समानाभिहारात् तोयदमुक्तजलधाराणां जलाशयेऽनुपलम्भः। अनुद्भवात् क्षीराद्यवस्थायां दध्याद्यनुपलम्भ इत्येभिः कारणैः सत एवार्थस्यानुपलम्भदर्शनान्नानुपलम्भमात्रादसत्त्वनिश्चयः। सप्तमरसस्य प्रमाणाभावादसत्त्वेनानुपलम्भो नैभिः कारणैरिति। मायाया विद्यमानायाः सूक्ष्मतयाऽनुपलम्भः, कार्यस्य जगत उत्पादनकारणतया तत्सद्भावसिद्धेरिति। तदुक्तं सांख्याचार्यैः—

> अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।
> सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च॥
> सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः।
> (सा० का० ७-८)

कालाद्यवनिपर्यन्ततत्त्वजातं स्वात्यन्तसदृशोपादानकारणवत्, कार्यत्वात्, यद्यत्कार्यं तत्तत् स्वात्यन्तसदृशोपादानकारणवद् दृष्टम्, यथा घटशरावादयो मृण्मयाः स्वात्यन्तसदृशमृदुपादानजन्याः, तथेदं तत्त्वजातं कार्यम्, तस्मात् स्वात्यन्तसदृशोपादानकारणवदिति। यच्च सर्वेषां तत्त्वानां जडानां जडतया सदृशमुपादानं तन्मायाख्यं तत्त्वमिति तत्सिद्धिः। तदुक्तम्—

> "कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम्" इति।
> (सा० का० १४)

तथा कालाद्यवनिपर्यन्तानि तत्त्वान्यपरिमितैकोपादानानि, परिमितत्वात्, यद्यत् परिमितं तत्तदपरिमितैकोपादानं दृष्टम्, यथा घटशरावादयः परिमिता अपरिमितैकमृदुपादानाः, तथा कालादयः परिमिताः, तस्मादपरिमितैकोपादाना इति। यदत्रैकमेषामपरिमितमुपादानं सा मायेति। तथा कालादयः स्वाव्यक्तावस्थाकारणवन्तः, व्यक्तत्वात्, कूर्माद् व्यज्यमानतदङ्गवदिति सिद्धा माया। एका सा, अनेकत्वे प्रमाणाभावात्। नन्वेकत्वे च प्रमाणाभावादनेकत्वमिति चेत्, नैवम्, एकत्वस्य सत्त्वमात्रेणैव सिद्धत्वात्। अनेकत्वस्य पुनः प्रमाणान्तरापेक्षया सद्भावसिद्धिरपि। सा नित्या च, तस्या उपादानान्तराभावेनाकार्यत्वात्। तदभावे चानवस्थाप्रसङ्गः।

> एतेषामेव पाशानां माया कारणमुच्यते।
> मूलप्रकृतिरव्यक्ता

इति मायाया मूलप्रकृतित्वोपादानाच्च सिद्धा। व्यापिनी च सा स्वकार्येषु सर्वेष्वनुगमात्। अनादिनिधना उत्पत्तिनाशरहितेत्यर्थः। शिवा शुद्धा, गुणबन्धशून्यत्वात्। सैवमुक्ता तत्त्वविद्भिरिति।

अथवा एकेत्यनेकोपादानजन्यतां प्रपञ्चस्यारम्भवाद्यभ्युपगतां प्रत्याचष्टे। तथाहि—पृथिव्यप्तेजोवायुतदवयवादीनां चावयवविभागेनापरमाण्वन्तो विनाशः संहारः। न च परमाणोर्विनाशः संभवति, अवयवविभागासंभवात्। स चावयवाभावात्। स च परमाणुत्वात्। ततश्च सृष्टिदशायां परमाणुद्वयसंयोगादाद्यकार्यस्य द्व्यणुकस्योत्पत्तिः। तत्र परमाणुद्वयमुपादानकारणम्, कार्याश्रयत्वात्। तत्संयोगोऽसमवायिकारणम्, स्वाश्रये कार्यारम्भकत्वात्। शेषमदृष्टादि निमित्तकारणम्। ततो द्व्यणुकैस्त्रिभिस्त्र्यणुकस्योत्पत्तिः। तत्र च द्व्यणुकत्रयं समवायिकारणम्। तत्संयोगोऽसमवायिकारणम्। शेषं निमित्तकारणमिति। तावदेवमवगन्तव्यम्, यावदन्त्यावयव्युत्पत्तिरित्यारम्भवादिनो वैशेषिकनैयायिकभाट्टप्राभाकरादयः। पटादिषु स्वन्यूनानेकोपादानत्वोपलम्भात् प्रपञ्चस्यापि स्वन्यूनमनेकमुपादानमिति प्राहुः। तत् प्रत्याचष्टे—एकेति। एकस्मात् मृत्पिण्डोपादानादनेकघटशरावकुम्भमृदङ्गादयः, रुचकस्वस्तिकाङ्गुलीयकादयो वा स्वर्णपिण्डात्, वृक्षाद्वा मञ्जूषाफलकादयः। यतोऽध्यक्षेणैव जायमाना उपलभ्यन्ते, अतो जगतः कार्यत्वेनोपादानकारणकल्पनायां गौरवपरिहाराय तदेकत्वं कल्पनीयमिति नानेकत्वं मूलोपादानस्येति। तदुक्तं भगवता वेदव्यासेन—[1]"एकस्माद् वृक्षाद् यज्ञपात्राणि [2]तक्ष्यात् स्रुक् च द्रोणी बोडनी पीडनी च" इत्यादि। नित्या विनाशरहिता। व्यापिनी घटशरावकुम्भादिषु मृद्वत् स्वकार्येषु कालाद्यवन्यन्तेषु जडतयाऽनुस्यूतेति। अनादिनिधना वृद्धिव्ययशून्या। अवयवोपचयो वृद्धिः, तदपचयो व्ययः। तद्द्वयरहितेत्यर्थः। एकत्वान्नित्यत्वात् सर्वगतत्वाच्चेति। शिवासक्तेति केचित् पठन्ति। तदा शिवे आसक्ता आभीक्ष्ण्येन संबद्धा, शिवस्य विग्रहत्वेनावस्थितेत्यर्थः॥ १॥

### वृत्तिः

सिद्धान्तस्तु—शक्तय इति।

प्राग्वदुपाधिभेदभिन्ना शक्तिरेवेहाशुद्धाध्वन्यपि तस्य करणम्। उपादानं तु माया। सा च सूक्ष्मा अमूर्ता, परमकारणत्वेन शक्तिरूपत्वात्। सा च एका। अचैतन्ये सत्यनेकत्वेऽनित्यत्वं सिद्धमित्यत एकेति भावः। नित्या आद्यन्तरहितत्वात्, सृष्टिसंहारप्रबन्धस्य नित्यत्वेनावस्थानात्, तस्याप्याद्यन्तविरहात्। अतो व्यापिनी सर्वस्य कलादेः स्वकार्यस्य च। उत्पत्तिविनाशशून्यत्वादनादिनिधना, शिवे त्वसक्ता असमवेता, उपादानत्वेन बिन्दुवत् परिग्रहशक्तित्वात्॥ ३८॥

**साधारणी नराणां कारणमपि चेयमखिलभुवनानाम्।**
**निखिलजनकर्मखचिता स्वभावतो मोहसंजननी॥ ३९॥**

### तात्पर्यदीपिका

तस्या रूपमाह—साधारणीति।

---

१. वचनमेतद् भाण्डारकरसंस्करणे महाभारतस्य उद्योगपर्वणि (विदुरनीतौ) १६९ संख्याके ताराङ्किते पाठे समुपलभ्यते।

२. राजन्निति तत्रत्यः पाठः।

अयमभिप्रायः—सकलजीवसाधारणी समाना। यतः सर्वजन्तुशरीरेन्द्रियविषयात्मना परिणममाना सर्वपुरुषोपभोग्या माया, अतोऽस्याः सर्वपुरुषसाधारण्यमिति। ननु सर्वपुरुषसाधारण्ये मुक्तस्यापि पुरुषस्य शरीराद्यारम्भप्रसङ्ग इत्याशङ्क्याह—निखिलजनकर्मखचितेति। सकलामुक्तजन्तुपुण्यापुण्यमुद्रिता। तेन मुक्तानां कर्माभावात् तन्निमित्तशरीराद्यारम्भाभाव इति भावः। अथवा प्रलयावस्थायां कर्मणां कुत्र वृत्तिरिति वाच्यम्? न तावदात्मनि, तस्य स्वच्छचैतन्यरूपतया निरञ्जनस्य तदाश्रयत्वानुपपत्तेः। तदुक्तम्—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते॥ ( भ० गी० १३।३२ )
यथा हि धूमसंपर्कान्नाकाशो मलिनो भवेत्।
अन्तःकरणजैर्भावैरात्मा तद्वन्न लिप्यते॥ इति।
( ई० गी० २।२४ )

न च तदा सूक्ष्मदेहाश्रितं कर्मेति वाच्यम्, तस्य तदानीं प्रकृतौ निलीनतयाऽसत्त्वात्। न च तदानीं कर्मणामसत्त्वेनाश्रयत्वस्यानिरूपणीयतेति वाच्यम्, कर्मणामसत्त्वे निमित्ताभावेन पुनः सृष्ट्यभावप्रसङ्गात्। तस्मात् क्व तदानीं कर्मणां वृत्तिरित्याशङ्क्याह—निखिलजनकर्मखचितेति। स्वभावतो मोहसंजननीति। स्वीयेन जडत्वभावेनात्मप्रच्छादनं कृत्वा स्वस्मिन्नात्मबुद्धिं कुर्वती पशून् मोहयतीति। तदुक्तं किरणे—

माया विमोहिनी प्रोक्ता विषयास्वादभोगतः।
यत्र तत्र स्थितस्यास्य स्वकर्ममलहेतुतः॥ इति।
( वि० २।१६-१७ )

नन्वव्यक्तं सकलकार्योपादानकारणम्, अतस्ततोऽन्या माया न कल्पनीयेति चेत्, नैवम्, तस्य त्रिगुणात्मतया कार्यत्वेन तत्कारणभूतनित्योपादानान्तरस्यावश्यमाश्रयणीयत्वात्। तथाहि—प्रधानं कार्यं त्रिगुणात्मकत्वाद् घटादिवदिति तस्य कार्यत्वसिद्धिः। न चाव्यक्तस्य त्रिगुणात्मकत्वमसिद्धमिति वाच्यम्, सत्त्वरजस्तमसां साम्यावस्थारूपतया तस्य त्रिगुणात्मकत्वसिद्धेः। तथा "अजामेकां लोहितशुक्लकृष्णाम्" (श्वे०उ० ४।५) इत्यादिश्रुतेश्च तत्सिद्धिः। ननु—

प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम।

इत्याद्यागमबाधादयुक्तमेतदिति चेत्, नैवम्, "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" ( श० ब्रा० २।५।४।१) इति वाक्यबोधितसुकृताक्षय्यत्ववन्महदादिकालापेक्षयाधिककालसम्बन्धस्य विवक्षितत्वात्। ननु तत्र अनित्यं चातुर्मास्यफलं कार्यत्वाद् इतरकर्मफलवदित्यनुमानादिना प्रमाणान्तरेण तदनित्यत्वसिद्धेर्युक्तमक्षय्यपदस्य दीर्घकालसम्बन्धपरत्वकल्पनमिति चेन्न, अत्राप्यव्यक्तानित्यत्वबोधकस्यानुमानस्योक्तत्वात्, आगमस्य सद्भावाच्च। तथा—

अव्यक्तादभवत् कालः प्रधानं पुरुषः परः।
तेभ्यः सर्वमिदं जातम्" (३।१)

इतीश्वरगीतायां प्रधानोत्पादप्रतिपादनात् तदनित्यत्वसिद्धिः, श्रीविष्णुपुराणे च प्रधानपुरुषकालानामुत्पादप्रतिपादनाच्च । तथाहि—

विष्णोः स्वरूपात् परतो हि ते द्वे रूपे प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्येन धृते वियुक्ते रूपं तु यत्तद् द्विज कालसंज्ञम् ॥ इति ।
( वि० पु० १।२।२४ )

"मायां तु प्रकृतिं विद्यात्" (श्वे० उ० ४।१०) इति मायामूलोपादानत्वप्रतिपादनाच्च तत्सिद्धिरिति । तस्मान्माया जगन्मूलोपादानमिति सिद्धम् । सा माया हरितालनिभा । तदुक्तम्—

[1]"तद्बाह्ये तु भवेन्माया हरितालाभसन्निभा" इति ।

अस्या षडध्वव्याप्तिः—घकारो वर्णः । अघोरहृदयायेत्यादीनि त्रीणि पदानि । शिम् अघोरहृदयाय पञ्चार्णौ मन्त्रौ । माया तत्त्वम् । महातेजादि सप्त भुवनानि । निवृत्तिः कला ॥ २ ॥

### वृत्तिः

आत्मनां च साधारणी कारणमखिलभुवनानामित्युपलक्षणं देहादेरपि । प्रलयकाले च बुद्धेरपि तत्रैव लयाद् बुद्धिगुणरूपैर्निखिलात्मकर्मभिरुपेता । कर्म हि कृष्यादिवत् प्रकृतिसंस्काररूपत्वाद् बुद्धिगुणत्वेनैवेष्यते, नात्मगुणत्वेन, तस्य विकारित्वप्रसङ्गात् । मोहिका चेयम्, अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मप्रतिपत्तिहेतुत्वात् ॥ ३९ ॥

**कर्माण्यवेक्ष्य शम्भुर्मायां विक्षोभ्य शक्तिभिः स्वाभिः ।**
**प्रतिपुरुषं भोगार्थं वपूंषि करणानि चाधत्ते ॥ ४० ॥**

### तात्पर्यदीपिका

ननु कथं भगवान् जगत् सृजति, कैः करणैः, किमर्थं चेत्याशङ्क्याह–कर्माणीति ।

कर्मानुरूपेण प्रतिपुरुषं शरीरेन्द्रियाणि च शब्दादिविषयांश्च भोगार्थं शम्भुरिच्छाभिः स्वाभिः शक्तिभिर्मायां विक्षोभ्य विविधं क्षोभं विकारं कृत्वेति । नह्युपादानादिकं कारणं कर्त्राऽप्रेरितं कार्योत्पादने पर्याप्तमिति क्षोभसिद्धिरिति ॥ ३ ॥

### वृत्तिः

ततश्च—कर्माणीति ।

शिवोऽप्यात्मनां कर्माणि प्रलये पक्वानि बुद्ध्वा तद्भोगार्थं स्वशक्त्याधिष्ठिताभिरनन्तशक्तिभिर्मायां विक्षोभयति प्रसवाभिमुखीं करोति । तदुक्तं श्रीमद्रौरवे—"वामादिशक्तिभिर्युक्तः शिवेच्छाविधिचोदितः । विद्याराजाधिराजेशो मायां विक्षोभ्य मन्त्रराट् ॥ कलामुत्पादयामास" (१।६-७) इति । विक्षोभ्य तदधिष्ठानेनैव प्रतिपुरुषं भिन्नानि वपूंषि स्थूलशरीराणि, करणोपलक्षितांश्च सूक्ष्मदेहान्, चशब्दात् साधारणानि भुवनादीनि च सृजति ॥ ४० ॥

---

१. वचनमिदं चन्द्रज्ञानस्य स्यात् ।

**नानाविधशक्तिमयी सा जनयति कालतत्त्वमेवादौ ।**
**भाविभवद्भूतमयं कलयति जगदेष कालोऽतः ।। ४१ ।।**

### तात्पर्यदीपिका

अथेदानीं सर्वकार्यकारणतया तेषु प्रथमोद्दिष्टं कालतत्त्वं लक्षयति—नानेति ।

इच्छादिबहुविधशक्तिप्रेरिता माया जनयति कालाख्यं तत्त्वम् । आदौ प्रथमम्, कालजन्यानां तत्त्वान्तराणां कालानुत्पत्तौ जननासंभवात् । ततस्तत्त्वान्तराणि तज्जन्यानीति । यथा घटोत्पादनाय तत्कारणभूतचक्रादिकं कुलालः प्रथममुत्पादयति, तदनुत्पत्तौ घटोत्पादनासंभवात्; तथा कालं प्रथमं सृजति माया, तस्य स्वव्यतिरिक्तसर्वकारणत्वादिति । कालस्य तु स्वोत्पत्तौ कालापेक्षायां कालान्तराभ्युपगमेनानवस्थाप्रसङ्गात् तदुत्पत्तौ न कालापेक्षेति शिवशक्तिकर्ममायात्मकचतुष्कजन्यः काल इति । तस्य लक्षणमाह—भाविभवद्भूतरूपं कलयति जगदेष कालोऽत इति । यत् तत्त्ववशात् पदार्थेषु भाविभवद्भूतरूपावभासं तत् कालाख्यं तत्त्वम् । अथवा यत् तत्त्वं भाविभवद्भूतरूपं जगत् कलयति बध्नाति, क्षणलवादिरूपेण संख्यापयति वा, तत् कालाख्यं तत्त्वमिति । तथा वैशेषिकादिभिरप्युक्तम्—"परापरव्यतिकरचिरक्षिप्रादिप्रत्ययहेतुः कालः" इति । यूनि दिक्कृतपरत्वाश्रयेऽपरत्वावभासः, स्थविरे च स्वकृतापरत्वाश्रये परत्वावभासः परापरव्यतिकरः, तस्य चिरव्यवहारस्य क्षिप्रव्यवहारस्य च, आदिशब्देन युगपत् करोति क्रमेण करोतीत्यादिव्यवहारस्य च यो हेतुः, स काल इति । अनेनैव लक्षणवाक्येन कालतत्त्वे प्रमाणं चोपन्यस्तम् । तथाहि—भूतत्वादिविशिष्टा बुद्धिर्विशेषणपूर्विका, विशेष्यज्ञानत्वात्, यद्यद् विशेष्यज्ञानं तत्तद् विशेषणपूर्वकम्, यथा दण्डी कुण्डली छत्रीत्यादिविशेष्यज्ञानं दण्डादिविशेषणपूर्वकम्, तथा चेदं विशेष्यज्ञानम्, तस्माद् विशेषणपूर्वकम् । यदत्र विशेषणं नियत्याद्यवनिपर्यन्ततत्त्वव्यतिरिक्तम्, तत् कालतत्त्वमिति तत्सिद्धिः । तस्य चित्रं वर्णम् । तदुक्तम्—

[1]ततः कालनियत्याख्यः सम्पुटो व्याप्य चावृतः ।
शितिः श्यामोऽरुणः शुक्लः क्वचिद् व्यामिश्रकस्तथा ।। इति ।

अस्य षडध्वव्याप्तिः—ङकारो वर्णः । ॐ नमो नम इत्यादि द्वे पदे । वां वामदेवगुह्याय पञ्चार्णौ मन्त्रौ । सुखदैकवीरौ भुवने । शान्त्यतीता कला ।। ४ ।।

### वृत्तिः

अत्र कालादिपृथिव्यन्तत्रिंशत्तत्त्वानां सूक्ष्मदेहोपकारितां दर्शयितुं तत्सृष्टिक्रमः कथ्यते—नानेति ।

सत्कार्यवादाभ्युपगमेन महाप्रलये कार्याणां शक्तिरूपेण तत्रावस्थानाच्छक्तिसमाहारात्मिका मायाऽनन्तक्षोभिता कालतत्त्वं जनयति । एष चास्य बिन्दोः परिणामः क्षीरदधिन्यायेन न सर्वात्मना, अपि तु घृतकीटन्यायेन एकदेशेनेति मन्तव्यम् । ननु

१. श्लोकोऽयं चन्द्रज्ञानस्य स्यात् ।

श्रीमन्मतङ्गादौ कलाविद्यारागेभ्योऽनन्तरमस्य व्यापारः श्रूयते, सत्यं कालादीनामुत्तरोत्तरस्यैव तत्र प्रवृत्तिक्रमो दर्शितः, अत्र तु सृष्टिक्रम इत्यविरोधः। नन्वेष कालो नैयायिकादिभिर्नित्योऽभ्युपगतः। अत आह—भावीति। तस्य भूतादिरूपेण त्रिविधत्वादचैतन्ये सत्यनेकत्वेनास्यानित्यत्वं सिद्धमिति भावः। केन कार्येणास्य सिद्धिरित्याह—कलयतीति। चिरक्षिप्रादिप्रत्ययोपाधिद्वारेण कलयतीति, आक्षिपतीत्यर्थः। यदाहुः—"कालो धिया विभज्यते" इति ॥ ४१ ॥

**नियतिर्नियमनरूपा मायातः साऽप्यनन्तरं भवति ।**
**नियमयति येन निखिलं तेनेयं नियतिरित्युक्ता ॥ ४२ ॥**

### तात्पर्यदीपिका

अथ नियत्या लक्षणमाह—नियतिरिति।

मायातत्त्वादेव नियतितत्त्वं कालतत्त्वादनन्तरमुत्पद्यते, कालस्यापि नियत्युत्पत्तौ कारणत्वात्। तस्या निरुक्तिपूर्वकं लक्षणमाह—नियमयतीति। येन नियमयति व्यवस्थापयति निखिलम्, तेनेयं नियतिसंज्ञयोद्दिष्टा। अनेनैव वाक्येन तस्याः प्रमाणमप्युक्तम्। तथाहि—लोके तावत् तिलेषु तैलम्, न सिकतासु; व्रीहिषु तण्डुलाः, न मुद्गादिषु; एवमूधसि पयो नान्यावयवेष्वित्यादिर्नियमो नियामकेन विना न संभवतीति तन्नियामकं किञ्चिदभ्युपगन्तव्यम्, अन्यथा तन्नियमासंभवप्रसङ्गात्। यदत्र तन्नियामकं तन्नियतितत्त्वमिति तत्सिद्धिः। तदुक्तं पारमेश्वरे—

अथेदानीं मुनिव्याघ्र कारणस्यामितद्युतेः।
शक्तिर्नियामिका पुंसो महासत्त्वेन सर्पिता ॥
नियामकेन भावेन नियमस्थितिहेतुना।
ययाऽणुर्भोगसन्ताने नियम्य विनिवार्यते ॥....
व्यवस्थाकारिणी नान्या विद्यते तत्त्वसन्ततौ।
कोटिद्वयमसंख्यातं धर्माधर्मात्मकं पशोः ॥
यदर्थं व्यक्तिमायाति शरीरं सर्वदेहिनाम्।
तद्विपाकेष्वनायासं क्षेत्रज्ञं सुनिरूप्य तु ॥
नियामयति यस्माद् वै तस्मान्नियतिरुच्यते।
तयोरभ्यधिकं यच्च दुःखं वाप्यथवा सुखम् ॥
न ददाति समं धत्ते स्ववीर्येणैव नान्यथा। इत्यादि।
(म० पा०, वि० १३।१-२, ५-८)

नियतेश्च कालवद् वर्णम्। अस्याः षडध्वव्याप्तिः—चकारो वर्णः। गोप्त्रे निधनायेति द्वे पदे। यं सद्योजातमूर्तये पञ्चार्णौ मन्त्रौ। नियत्याख्यं तत्त्वम्। संवर्तज्योतिषी भुवने। शान्तिः कला ॥ ५ ॥

### वृत्तिः

किञ्च—नियतिरिति।

अयमभिप्रायः—नियत्यभावेऽन्यैरुपार्जितान्यपि कर्माण्यन्ये भुञ्जीरन्, राजनियमाभावे कृष्यादिफलानीव दस्यवः, अतस्तन्नियामकत्वेनेयं सिद्धा। न च कर्मणो नियामकत्वम्, तस्य फलजनन एव चरितार्थत्वात्, कार्यान्तरहेतुत्वे प्रमाणाभावात्, अनेकतत्त्वपरिकल्पनाभयप्रसङ्गाच्च। शिवशक्तिर्नियामिकास्त्विति चेत्, तन्न, तस्यास्तत् तत्त्वान्तरव्यवधानेनैव भोगविषये कार्यकरणात्, अन्यथा सर्वतत्त्वाभावप्रसङ्गाच्च ॥४२॥

**मायातस्तदनु कला मलं नृणामेकतस्तु कलयित्वा।**
**व्यञ्जयति कर्तृशक्तिं कलेति तेनेह कथितेयम् ॥ ४३ ॥**

### तात्पर्यदीपिका

अथ कलातत्त्वं निरूपयति—मायात इति।

कालनियतितत्त्वादनन्तरं कलातत्त्वं मायात एवोत्पद्यते। येन पशूनामाणवं मलमेकस्मिन् प्रदेशे संकुचय्य तेषां कर्तृशक्तिर्व्यक्तीक्रियते, तत् कलातत्त्वम्। यतः कर्तृशक्तिरनेन व्यक्तीक्रियते, ततोऽस्याः सद्भावसिद्धिः। तदुक्तम्—

कलां तदनु माया सा कलयित्वैकतो मलम्।
कर्तृत्वव्यञ्जिकां नर्ते कर्तारं हि जडोद्भवः॥

मातङ्गे च—

यथाग्नितप्तं मृत्पात्रं जतुनालिङ्गने क्षमम्।
तथाऽणुं कलया विद्धं भोगः शक्नोति वासितुम्॥....
भोगधात्री कला ज्ञेया तदाधारश्च पुद्गलः।....
भोगानामपि नान्योऽस्ति कलां त्यज्य समाश्रयः॥
ततोऽयं नियतः स्पष्टः संसारोऽतिदुरुत्तरः। इत्यादि।
( वि० ९।२८,३१,३३ )

तस्मात् कलाख्यं तत्त्वमभ्युपेयमिति ॥ ६ ॥

### वृत्तिः

मायातस्तदनु कला भवतीति प्राक्तनेन संबन्धः। सा आत्मनां मलावृतत्वेन भोगासंभवात् तदर्थमेतेषां मलमेकदेशे कलयित्वा क्षिप्त्वा कर्तृशक्तिं व्यनक्ति। शक्तेरेकत्वाद् ज्ञानक्रियाशक्तिं किञ्चित्प्रकटयति। ततस्तेन कार्येण कलासिद्धिरित्यर्थः ॥ ४३ ॥

**कालेन नियत्या चाप्युपसर्जनतामुपेतया सततम्।**
**विदधाति व्यापारं निजमेषा ह्यवनिपर्यन्तम् ॥ ४४ ॥**

### तात्पर्यदीपिका

तत्त्वत्रयं सर्वत्रोपयुज्यत इत्याह—कालेनेति।

यया कालनियतिसहितया मायामात्रावस्थानाद्यवन्यन्तकार्यजातं विदधाति करोति, सेयं कलेति। वर्णश्चास्याः श्वेतपीतारुणकृष्णमिश्रात्मकः। तदुक्तम्—

[1]कला तत्त्वं परं तस्माद् विद्यातत्त्वादशोभनम्।
श्वेतपीतारुणं कृष्णं मिश्रवर्णं क्वचित् तथा॥ इति।

अस्याः षडध्वव्याप्तिः—एकारो वर्णः। सर्वयोगाधिगतायेत्यादि द्वे पदे। यं अस्त्राय पञ्चार्णौ मन्त्रौ। कलाख्यं तत्त्वम्। पञ्चान्तकसूकरौ भुवने। विद्या कला॥ ७॥

### वृत्तिः

ततश्च—कालेनेति।

कला हि भोक्तृस्वरूपोपकारकत्वेनान्तरङ्गत्वात् प्रधानम्, कालादिस्तु बहिरङ्गत्वादप्रधानमिति भावः॥ ४४॥

**उद्बुद्धकर्तृशक्तेः पुंसो विषयप्रदर्शननिमित्तम्।**
**विद्यातत्त्वं सूते प्रकाशरूपं कलैवैषा॥ ४५॥**

### तात्पर्यदीपिका

इदानीमशुद्धविद्यास्वरूपमाह—उद्बुद्धेति।

कलयाऽभिव्यक्तकर्तृशक्तेः पुरुषस्य विषयानुभवार्थं कला विद्यातत्त्वं जनयति। तस्याः प्रकाशरूपत्वेन विषयप्रदर्शनहेतुत्वसम्भव इति। अन्ये तु मायात एव विद्योत्पत्तिं ब्रुवते। तदुक्तं शैवरहस्ये—

सुखदुःखमोहवपुषो भोग्या या व्यञ्जिका च सा बुद्धेः।
मायात एव विद्या प्रकाशरूपा समुद्भवति॥ इति॥ ८॥

### वृत्तिः

एवं च—उद्बुद्धेति।

यदुक्तं श्रीमद्रौरवे—"कलातत्त्वाद्रागविद्ये द्वे सत्त्वे संबभूवतुः। अव्यक्तं च" (वि० २।१५) इति॥ ४५॥

**आवरणं भित्त्वैषा ज्ञानाख्यायाः स्वकर्मणा शक्तेः।**
**दर्शयति विषयजातं करणं सेहात्मनः परमम्॥ ४६॥**

### तात्पर्यदीपिका

तस्या विषयप्रदर्शनप्रकारमाह—आवरणमिति।

---

१. श्लोकोऽयं चन्द्रज्ञानस्य स्यात्।

एषा विद्या स्वसामर्थ्येनैव पुद्गलस्य ज्ञानशक्तेस्तिरोधानं संभिद्य विषयसमूहं दर्शयतीति सा विद्येह संसारमार्गे पशोरात्मनः प्रकृष्टं करणमिति ॥ ९ ॥

वृत्तिः

विषयप्रदर्शननिमित्तत्वमेव प्रकटयति—आवरणमिति ।

ननु कलयैव मलविदारणेन ज्ञत्वमपि प्रदर्शितम् । सत्यम् । अभिव्यक्तस्वरूपमपि तत्करणं विना विषयं गृहीतुमशक्तम्, अतश्चेयं विद्या स्वव्यापारेण ज्ञानशक्तेर्विषयग्रहणाक्षमत्वलक्षणमावरणं मलरोधं व्यपोह्य विषयं प्रकाशयति । ननु विषयग्रहणे बुद्ध्यादीनि करणानि सन्ति । सत्यम् । यथा घटादिज्ञानं चक्षुरादिव्यतिरेकेण न संभवति, तथा सुखादिविषयग्रहणं करणसापेक्षम् । अत एवेयमात्मनः परममन्तरङ्गकरणम्, तेषां बहिरङ्गत्वात् । एतदुक्तं भवति—अश्वेन पथा दीपिकया यातीत्यादाविवात्रानेककरणसाध्येऽपि फले विद्यैव परमं करणमिति ॥ ४६ ॥

**बुद्धिर्यदास्य भोग्या सुखादिरूपा तदा भवेत् करणम् ।**
**विद्यैवं करणं स्याद् विषयग्रहणे पुनर्बुद्धिः ॥ ४७ ॥**

**तात्पर्यदीपिका**

ननु शब्दादिविषयाध्यवसायो बुद्धिः, अतस्तयैव विषयप्रदर्शने सिद्धे किमर्थं विद्यातत्त्वपरिकल्पनमित्याशङ्क्याह—बुद्धिरिति ।

यदा सत्त्वरजस्तमोगुणात्मिका बुद्धिः सुखःदुखमोहनरूपेण परिणता भोक्तुरात्मनो भोग्या भवति, तदेयं विद्या करणं भवेत् । विषयग्रहणे तु बुद्धिरेव करणं भविष्यतीति बुद्ध्याऽध्यवसितमर्थं पुरुषश्चेतयतीति । तदयुक्तम्, पुरुषस्य चितेरक्रियात्मकत्वाद् विरुद्धक्रियत्वाच्चेति । तस्माद् बुद्ध्याध्यवसितमशुद्धविद्ययानुभवति पुरुष इति युक्तम्, पुरुषाद् भिन्नत्वान्मायाकार्यत्वाच्चाशुद्धविद्यायाः परिणामादिसंभवादिति । न च बुद्धिः स्वप्रकाशात्मिका कार्यत्वात् सगुणत्वाद् घटादिवदिति बुद्धेः स्वव्यतिरिक्तप्रकाश्यत्वसिद्धिः, तथा बुद्धिः प्रकाश्या जडत्वात्, जडा च सा कार्यत्वाद् घटादिवदिति । न च बुद्ध्यन्तरग्राह्या बुद्धिः, तदभावात् । न च वृत्त्यन्तरेण तद्ग्रहणम्, बुद्धेरेकदैव वृत्तिद्वयासम्भवात् । न चाशुद्धं शुद्धविद्या वेदयतीति । यदशुद्धावेदकं परं तदशुद्धविद्याख्यं तत्त्वमिति तत्सिद्धिः । तदुक्तं पारमेश्वरे—

प्रतिपत्त्यागतान् भोगान् क्रमशो व्यूढगोचरान् ।
भोगभुक् प्रतिजानाति विद्ययात्मनिषण्णया ॥····
ख्यातिः प्राधानिकान् भावान् विवेचयितुमुद्यता ।
यदा तदात्मवर्तिन्या विद्यया सुनिरूप्यताम् ॥ इति ।

(वि० १०।१३-१४, १८-१९)

अशुद्धं बुद्धितत्त्वं वेदयतीत्यशुद्धविद्या, अशुद्धा चासौ विद्येति वा, मलादिनाऽशुद्धस्य क्षेत्रज्ञस्य विद्येति वा । तस्याः सिद्धिः शुद्धविद्यातः, शुद्धविद्यायाः शिवाव्यति-

रिक्तया स्वयम्प्रकाशया परमशक्त्येति शैवसिद्धान्तः,

विद्येयं सर्वभावानामशुद्धार्थप्रदायिका ।
शिवसद्भावकुशला विद्यान्या शुद्धगोचरा ॥

इत्याद्युक्तत्वात् । तस्या वर्णमिन्द्रगोपनिभम् । तदुक्तम्—

[1]विद्यातत्त्वं परं रागादशुद्धं पशुमोहनम् ।
इन्द्रगोपकसंकाशं क्वचिच्चामीकरप्रभम् ॥ इति ।

अस्याः षडध्वव्याप्तिः—जकारो वर्णः । ज्योतीरूपायेत्यादि द्वे पदे । वां नेत्रत्रयाय पञ्चार्णौ मन्त्रौ । अशुद्धविद्याख्यं तत्त्वम् । चण्डक्रोधौ भुवने । प्रतिष्ठा कला ॥ १० ॥

### वृत्तिः

तदेव दर्शयति—बुद्धिरिति ।

मनोऽधिष्ठितैरिन्द्रियैरुपस्थापितं वस्तु बुद्धिरध्यवस्यति, तदध्यवसितमर्थं पुरुषो गृह्णाति । यदाहुः[2]—"बुद्ध्यवसितमर्थं पुरुषश्चेतयति" इति । तत्र च ग्रहणे ग्राह्यतापन्नमात्मानं बुद्धिः करणत्वेन ग्राहयितुं न क्षमा । ततस्तद्ग्रहणे विद्या करणमिति विद्यासिद्धिः । यदुक्तं तत्त्वसंग्रहे—"रविवत् प्रकाशरूपो यदि नाम महांस्तथापि कर्मत्वात्" (श्लो० १४) इत्यादि ॥ ४७ ॥

**रागोऽभिष्वङ्गात्मा विषयच्छेदं विनैव सामान्यः ।**
**पुरुषप्रवृत्तिहेतुर्विलक्षणो बुद्धिधर्मेभ्यः ॥ ४८ ॥**

### तात्पर्यदीपिका

इदानीं रागतत्त्वं निरूपयति—राग इति ।

अभिष्वङ्गात्मा रागो विषयमन्तरेण पुरुषप्रवृत्तेः सामान्यो हेतुः । केचिद् रागतत्त्वस्य बुद्धिधर्मत्वमिच्छन्ति । तन्निरस्यति—विलक्षणो बुद्धिधर्मेभ्य इति । विषयप्रदर्शनद्वारेण पुरुषप्रवृत्तिहेतुभूतो बुद्धिधर्मो रागः । अस्य विषयावभासेन विना पुरुषप्रवृत्तिहेतुत्वाद् बुद्धिधर्मवैलक्षण्यसिद्धिः । मुमुक्षोर्विषयवितृष्णस्य तत्साधने विषयावभासेन विना प्रवृत्तिर्दृष्टा । अतस्तत्प्रवृत्तिहेतुभूतं रागतत्त्वमभ्युपेतव्यम् । तदुक्तं मतङ्गपारमेश्वरे—

अथाणोर्विसृतस्यास्य कलाविद्धस्य वेगतः ।
प्रवृत्तस्याभिलाषेण विद्ययोन्मीलितस्य च ॥.... (११।१)
येनासौ रञ्जितः क्षिप्रं भोगभुग् भोगतत्परः ।.... (११।२)
रागोऽन्योऽपि परः सूक्ष्मो विशिष्टोऽस्मान्मदात्मकात् ॥ (११।३०)

---

१. चन्द्रज्ञानस्य वचनमिदं प्रतीयते ।

२. स्याद्वादरत्नाकरे ३५ तमे पृष्ठे समुद्धृतमिति म० पा० वृ० (पृ० ३१४, टि० २१) द्रष्टव्या ।

येन नैःश्रेयसे पुंसां प्रवृत्तिरुपजायते ।
दृश्यते च विरक्तानां नराणां बन्धगोचरात् ॥ (११।२१)
आचार्यान्वेषणे रागः शिवमुद्दिश्य सादरम् ॥ इत्यादि । (११।३२)

किरणे च—

रागरञ्जितचिद्धर्मः संयुक्तश्च त्रिभिर्गुणैः ।
बुद्ध्यादिकरणानीकसम्बन्धाद् बध्यते पशुः ॥ इत्यादि ।
(कि० १।१७)

तस्माद् रागतत्त्वसद्भावः सिद्धः । तस्य वर्णं कुङ्कुमाभम् । तदुक्तम्—

[1]"तद्बाह्ये रागतत्त्वं तु कुङ्कुमोदरसन्निभम्" इति ।

अस्य षडध्वव्याप्तिः—झकारो वर्णः । परमात्मन्नित्यादि द्वे पदे । शिं कवचाय पञ्चार्णौ मन्त्रौ । रागाख्यं तत्त्वम् । प्रचण्डादीनि पञ्च भुवनानि । निवृत्तिः कला ॥११॥

## वृत्तिः

रागतत्त्वसिद्धिमाह—राग इति ।

अभिष्वङ्गोऽभिलाष आत्मा कार्यत्वेन यस्य स रागः । अभिलाषात्मना कार्येण रागतत्त्वसिद्धिरित्यर्थः । ननु विषयगुण एव पुंसोऽभिलाषहेतुरस्तु, अवैराग्यलक्षणो बुद्धिधर्मो वा, तत् किमन्येनात आह—विषयच्छेदमिति । विषयावच्छेदमात्रस्यैवा-भिलाषहेतुत्वे वीतरागाभावप्रसङ्गः, तेषामपि विषयावच्छेदसंभवात् । ततस्तं विनैव पुरुषप्रवृत्तिहेतुरत्र रागः सिद्धः । अवैराग्यस्य च बुद्धिधर्मत्वेन वासनारूपत्वान्न पुरुषो-पकारः संभवति, अन्यथा बुद्धेरनन्तवासनायोगेन पुंसो युगपद्विरुद्धानन्तप्रतिपत्तिवैशस-प्रसङ्गादित्युक्तमस्माभिर्मृगेन्द्रवृत्तिदीपिकायामिति तत एवावधार्यम् । तस्मादपि विलक्षणः सामान्यः सर्वविषयाभिलाषहेतुरेवायं राग इति ॥ ४८ ॥

**तत्त्वैरेभिः कलितो भोक्तृत्वदशां यदा पशुर्नीतः ।**
**पुरुषाख्यतां तदाऽयं लभते तत्त्वेषु गणनां च ॥ ४९ ॥**

## तात्पर्यदीपिका

अथेदानीं पुरुषतत्त्वस्वरूपमाह—तत्त्वैरिति ।

यदायमीश्वर एभिः कालनियतिकलाविद्यारागाख्यैः पञ्चभिस्तत्त्वैः सम्बन्धात् पशुभावं प्राप्य भोक्तृत्वावस्थां प्राप्नोति, तदा व्यक्तादिचतुर्विंशतितत्त्वमये पुरि शयनात् पुरुषसंज्ञां च लभते, शिवतत्त्वव्यतिरेकेण तत्त्वेषु गणनां चेति । तस्य वर्णः स्वतः शुद्धः, उपाधितोऽनेकवर्णः । अस्य षडध्वव्याप्तिः—ञकारो वर्णः । व्योमिन्नित्यादि द्वे पदे । मं शिखायै पञ्चार्णौ मन्त्रौ । पुरुषाख्यं तत्त्वम् । वामादीनि षड् भुवनानि । शान्त्यतीता कला ॥ १२ ॥

**इति तत्त्वप्रकाशतात्पर्यदीपिकायां शुद्धाशुद्धविनिर्णयः तृतीयः परिच्छेदः ॥**

---

१, वचनमिदं चन्द्रज्ञानस्य स्यात् ।

### वृत्तिः

ननु पुरुषस्याजडत्वात् शिववज्जडरूपेषु तत्त्वेषु तत्त्वतया गणना न संभवति। तत्त्वेषु व्यापकत्वाद् रागतत्त्वानन्तरं शास्त्रेषु पाठोऽप्ययुक्तोऽत्र आह—तत्त्वैरिति।

कलादिपञ्चतत्त्वोपबृंहितोऽणुर्भोक्तृत्वेन पुंस्तत्त्वनिर्देशं याति। न तु परमार्थतस्तस्य तत्त्वं भुवनाधारत्वं च विद्यते। अत एव तद्भुवनानां रागतत्त्व एव स्थितिरित्युक्तं श्रीमन्मतङ्गादौ। तस्य च दीक्षायां प्रकृतितत्त्वशुद्ध्यनन्तरमत्रैव पुंस्त्वमलशुद्ध्यर्थं पाठ इति न दोषः क्वचित् ॥ ४९ ॥

**पुरुषस्य हि भोगार्थं कलैव तस्मात् प्रसूयतेऽव्यक्तम् ।**
**अनभिव्यक्तगुणत्वादव्यपदेश्यं तदव्यक्तम् ॥ ५० ॥**

### तात्पर्यदीपिका

## अथ चतुर्थः परिच्छेदः

अथेदानीमव्यक्तस्वरूपनिरूपणार्थमाह—पुरुषस्येति।

पुरुषस्य सुखाद्यनुभवाय मायातत्त्वादेवाव्यक्तमुत्पद्यते। अव्यक्तपदप्रवृत्तिनिमित्तमाह—अनभिव्यक्तसत्त्वादिगुणवत्त्वादिदं तत्त्वमव्यक्तमित्युच्यते। [1]"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" इति सांख्याचार्या आहुः, अतोऽनभिव्यक्तगुणत्वमस्य सम्भवति। भूततन्मात्रेन्द्रियमनोऽहङ्कारबुद्धीनामव्यक्तकार्याणां सुखदुःखमोहहेतुतया त्रिगुणात्मकत्वात् तत्कारणस्याव्यक्तस्य त्रिगुणात्मकत्वसिद्धिः। तस्य स्वरूपमप्रतर्क्यम्। तदुक्तम्—

[2]तद्बाह्ये तु भवेदन्यदव्यक्तं तत्त्वमुत्तमम्।
अप्रतर्क्यमविज्ञेयं निर्वाणवदवस्थितम् ॥ इति।

अस्य षडध्वव्याप्तिः—टकारो वर्णः। अरूपिन्नित्यादि द्वे पदे। नं शिरसे पञ्चार्णौ मन्त्रौ। गुणप्रकृत्याख्यं तत्त्वम्। कृताकृतादीन्यष्टौ भुवनानि। शान्तिः कला ॥ १ ॥

### वृत्तिः

एवं भोक्तृत्वं प्राप्तस्य पुंसो भोगार्थं भुज्यन्ते एभिरिति भोगा भोगसाधनानि गुणादीनि तत्त्वानि, तत्सिद्ध्यर्थं तत्कारणत्वेनाव्यक्तम्। तस्मात् प्रागुक्ताद्रागतत्त्वादनन्तरं कलैवोत्पादयति। ननु गुणा एवाव्यक्तं बुद्ध्यादिकारणमिति सांख्याः, तदयुक्तमित्याह—अनभिव्यक्तेति। गुणानामचैतन्ये सत्यनेकत्वात् कारणपूर्वकत्वमित्युक्तम्, अतोऽनभिव्यक्तगुणरूपकार्यत्वादेव तदव्यक्तमित्युच्यते। यद्येवं सांख्याभ्युपगतप्रकृतिवन्नित्यमेवेदमस्तु, तन्न। प्रकृतेश्च प्रतिपुरुषं भेदेन जडत्वे त्वनेकत्वात् कार्यत्वं सिद्धम् ॥ ५० ॥

---

१. सांख्यसूत्रमेतत् सांख्यप्रवचनभाष्ये ( १।६१ ) व्याख्यातं द्रष्टव्यम्।
२. वचनमिदं चन्द्रज्ञानस्य स्यात्।

**अव्यक्ताद् गुणतत्त्वं प्रख्याव्यापारनियमरूपमिह ।**
**सत्त्वं रजस्तमोऽपि च सुखदुःखे मोह इत्यपि च ।। ५१ ।।**

### तात्पर्यदीपिका

गुणतत्त्वं लक्षयति—अव्यक्तादिति ।

गुणसाम्यस्वभावादव्यक्ताद् गुणतत्त्वं वैषम्यात्मकं जायते । प्रख्याव्यापारनियमरूपं तद्वृत्तिकम् । प्रख्या प्रकाशो ज्ञानं वृत्तिः सत्त्वगुणस्य, निर्मलत्वात् । व्यापारः क्रिया रजसो वृत्तिः, चलत्वात् । नियमो नियमनं वृत्तिस्तमसः, गुरुत्वादिति सत्त्वरजस्तमोनामकं च सुखदुःखमोहस्वरूपकं च गुणतत्त्वमिति । तदुक्तं सांख्यैः—

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ ( सा० का० १३ )

अस्य गुणतत्त्वस्य वर्णं शुक्लरक्तकृष्णात्मकम् । तदुक्तम्—

[1]तद्बाह्ये तु भवेदन्यद् गुणावरणसंज्ञितम् ।
इन्द्रनीलमहारत्नशुद्धस्फटिकसन्निभम् ॥ इति ॥ २ ॥

### वृत्तिः

ततश्च—अव्यक्तादिति ।

प्रकाशप्रवृत्तिनियमाख्यैस्त्रिभिः कार्यैरेतत्सिद्धम् । किञ्च, ते गुणाः सत्त्वादयः सुखादिजनकत्वात् क्रमेण सुखदुःखादय उच्यन्ते । एषां च सर्वेषां तत्त्वानां विस्तरेण साधनं श्रीमन्मतङ्गादौ[2] द्रष्टव्यम् । नात्र विस्तरभयाल्लिखितम् ॥ ५१ ॥

**भवति गुणत्रयतो धीर्विषयाध्यवसायरूपिणी चेह ।**
**सापि त्रिविधा गुणतः प्रोक्ता कर्मानुसारेण ।। ५२ ।।**

### तात्पर्यदीपिका

इदानीं बुद्धितत्त्वं निरूप्यते—भवतीति ।

गुणानां सत्त्वरजस्तमसां त्रयं गुणत्रयम्, तस्माद् बुद्धिरुत्पद्यते । तस्या लक्षणमाह—विषयाध्यवसायरूपिणी चेति । विषयेषु शब्दादिष्वध्यवसायो निश्चयो रूपं वृत्तिर्यस्याः सा तथोक्ता । चकाराद् धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यात्मनाऽष्टविधवृत्तिमत्त्वं बुद्धेः सूचितम् । तदुक्तम्—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद् विपर्यस्तम् ॥ ( सा० का० २३ )

---

१. श्लोकोऽयं चन्द्रज्ञानस्य स्यात् ।

२. मतङ्गपारमेश्वरे विद्यापादे ३-२३ पटलेषु तत्त्वप्रपञ्चो द्रष्टव्यः ।

तत्राभ्युदयनिःश्रेयसयोर्यो हेतुः, स धर्मः। तत्र कामनापूर्वयागाद्यनुष्ठानजनितो धर्मोऽभ्युदयस्य स्वर्गादिसुखस्य हेतुः। तद्रहितयागाद्यष्टाङ्गयोगानुष्ठानजनितो धर्मो निःश्रेयसस्य हेतुः। योगलक्षणमुपरिष्टाद् वक्ष्यामः। ज्ञानं सम्यग्ज्ञानम्। तद् द्विविधम्—प्रमाणं च स्मृतिश्चेति। अनुभूतविषयासंप्रमोषः स्मृतिः। तद्यथा—सा मे माता, स मे पिता, तद् गृहमित्यादि हि ज्ञानं पूर्वानुभवजनितसंस्कारमात्रमुद्भवति। सम्यगनुभवः प्रमाणम्। तदुक्तम्—

अनुभूतिः प्रमाणं सा स्मृतेरन्या तु सा स्मृतिः।
पूर्वानुभवसंस्कारमात्रजं ज्ञानमुच्यते॥ इति।

सम्यक्पदेनात्र विकल्पविपर्ययादिव्युदासः क्रियते। अनुभवपदेन स्मरणं व्युदस्तम्। तद् द्विविधम्—तत्त्वावेदकमतत्त्वावेदकं चेति। तत्रात्मानात्मविवेकज्ञानं तत्त्वावेदकम्। तदुक्तं लैङ्गे—

अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिन्नचेतने।
चेतनाचेतनान्यत्वविज्ञानं ज्ञानमुच्यते॥ इति।

अनात्मविषयं प्रमाणज्ञानमतत्त्वावेदकम्। तदुक्तम्—

द्वे विद्ये वेदितव्येऽत्र परा चैवापरा तथा।
कर्मादिविद्या ह्यपरा परा चोपनिषद्गता॥ इति।

तदेतत् प्रत्यक्षमेवेति चार्वाकः। स्पष्टास्पष्टात्मना द्विविधमित्यार्हताः। प्रत्यक्षानुमानात्मना द्विविधं प्रमाणमिति बौद्धवृद्धवैशेषिकौ। तत्रागमस्याप्रामाण्याद् द्वैविध्यं बौद्धैः कल्पितम्। शब्दादीनामप्यनुमानेऽन्तर्भावाद् द्वैविध्यमितरो ब्रूते। सशाब्दं चैतत् प्रमाणमिति सांख्यनूतनवैशेषिकभूषणकाराः। तत्त्रयमुपमानसहितं वृद्धनैयायिकः, सार्थापत्ति तच्चतुष्कं प्रभाकराचार्यो ब्रूते। साभावं तत्पञ्चकं भट्टपादोपनिषदः। ऐतिहासिकपौराणिका ऐतिह्यसम्भवचेष्टाविरोधसहितं तत्षट्कमाहुः। तदुक्तम्—

चार्वाकोऽध्यक्षमेकं सुगतकणभुजौ सानुमानं सशाब्दं
तद्द्वैतं पारमर्षः सहितमुपमया तत्त्रयं चाक्षपादः।
सार्थापत्ति प्रभाकृद् वदति तदखिलं पञ्चकं तच्च भाट्टः
साभावं द्वे प्रमाणे दिनपतिसमये स्पष्टताऽस्पष्टता च॥ इति।

"अन्यथाख्यामुपाश्रित्य सांख्यवच्छिवशासनम्।"

इति वचनादस्माकं तत् त्रिविधमेव प्रत्यक्षमनुमानमागम इति। परे चाहुः—तत्त्रैविध्यमैन्द्रियकं लैङ्गिकं शाब्दं चेति। अर्थेन्द्रियसंप्रयोगात् संप्रयुक्तेऽर्थे विज्ञानं प्रत्यक्षम्। विज्ञानं प्रत्यक्षमित्युक्ते विकल्पे व्यभिचारः। तन्निवृत्त्यर्थमर्थ इति पदम्। अर्थे ज्ञानमित्युक्ते विपर्यये व्यभिचारः। तन्निवृत्त्यर्थं संप्रयुक्त इति पदम्। अनुमानादिव्यवच्छेदार्थमर्थेन्द्रियसंप्रयोगादिति पदम्। तद् द्विविधम्—निर्विकल्पकं सविकल्पकं चेति। तत्र नामजात्युल्लेखशून्यं प्रत्यक्षज्ञानं निर्विकल्पकम्, यथा प्रथमाक्षसन्निपातजं वस्तुमात्रावभासकं विज्ञानम्। तदुक्तम्—

अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
( श्लो० वा०, प्र० ११२ ) इति ।

नामादिसम्बन्धोल्लेखि प्रत्यक्षज्ञानं सविकल्पकम् । तद्यथा—देवदत्तेति नामविकल्पः । दण्डी कुण्डलीत्यादयो द्रव्यविकल्पाः । शुक्लः कृष्णो महानित्यादयो गुणविकल्पाः । गच्छत्यागच्छति पततीत्यादयः क्रियाविकल्पाः । मनुष्यः पशुर्घट इत्यादयो जातिविकल्पाः । इति पञ्चविधं सविकल्पकमिति । तत् पुनर्द्विविधम्—योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति । देशकालस्वभावविप्रकृष्टार्थविषयमपरोक्षज्ञानं योगिप्रत्यक्षम् । तद्विपरीतमयोगिप्रत्यक्षम् । तद्यथा—देशविप्रकृष्टा मेर्वादयः । कालविप्रकृष्टा रावणादयः । स्वभावविप्रकृष्टा मूलकारणेन्द्रियादयः । तेषु यदपरोक्षं विज्ञानं योगिनाम्, तद् योगिप्रत्यक्षम् । इतरस्योदाहरणमुक्तमिति । लिङ्गादुपजायमानं लिङ्गिविज्ञानमनुमानम् । निरुपाधिकसाध्यसंबन्धि लिङ्गम् । तत् त्रिविधम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं चेति । कारणेन कार्यानुमानं पूर्ववत्, यथा विशिष्टमेघोन्नत्या भविष्यति वृष्टिरिति विज्ञानम् । तदुक्तं न्यायविद्भिः—

सविद्युतां विदधतां गर्जाडम्बरमम्बरे ।
घनानामुन्नतिर्दृष्टा न वृष्टिव्यभिचारिणी ॥
त्वङ्गत्तडिल्लतासङ्गपिशङ्गोत्तुङ्गविग्रहाः ।
वृष्टिं व्यभिचरन्त्येते नैवंप्रायाः पयोमुचः ॥

तथा—

शिखण्डिमण्डलारब्धचण्डताण्डवडम्बरैः ।
प्रावृडाख्यायते मेघमेदुरैर्मेदिनीधरैः ॥ इति ।

कार्येण कारणानुमानं शेषवत् । तद्यथा—नदपूरणेनोपरिष्टाद् वृष्ट्यनुमानम् । तदन्यत् सामान्यतोदृष्टम् । तद्यथा—रसाद् रूपविषयं विज्ञानमिति । अपरे दृष्टस्वलक्षणसामान्यविषयं पूर्ववत् । तद्यथा—धूमादिलिङ्गदर्शनादध्यक्षयोग्येऽग्नावनध्यक्षे संजायमानं विज्ञानम् । सामान्यतोदृष्टम् अदृष्टस्वलक्षणसामान्यविषयम् । तद्यथा—रूपाद्युपलब्धिः करणजन्या क्रियात्वात् छिदिक्रियावदितीन्द्रियसाधकमनुमानम् । इन्द्रियत्वस्यानुमानविषयस्य स्वलक्षणं पूर्वं न प्रसिद्धमिति नास्य पूर्ववत्त्वम् । अनयोरन्वयमुखेन प्रवर्तमानत्वाद् वीतत्वम् । व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम् । तदेव शेषवदनुमानम् । शिष्यत इति शेषः । स विषयतयास्त्यस्यानुमानस्येति शेषवदिति । तदुक्तम्—"प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाद् शिष्यमाणे संप्रत्ययः" ( न्या० भा० १।१।५ ) तच्छेषवदनुमानमिति । तद्यथा—सर्वं कार्यं सर्वज्ञनिर्मितम्, कादाचित्कत्वात्, यद्यत् सर्वज्ञनिर्मितं न भवति तत्तत् कादाचित्कमपि न भवति, यथा मायादि, न च तथेदमकादाचित्कम्, तस्मात् सर्वज्ञानिर्मितमपि न भवतीति । तत् पुनर्द्विविधं स्वार्थं परार्थं चेति । तदुक्तम्—

परोपदेशानपेक्षं स्वार्थं स्वस्यानुमापकम् ।
परोपदेशसापेक्षं परार्थमभिधीयते ॥ इति ।

परोपदेशः पञ्चावयवं वाक्यम्। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः पञ्चेति तार्किकाः। प्रतिज्ञाहेतूदाहरणाख्यास्त्रय इति मीमांसकाः। उदाहरणोपनयौ द्वाविति बौद्धः। तत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा, यथाग्निमान् पर्वत इति। साधनत्वख्यापकं लिङ्गवचनं हेतुः, यथा धूमवत्त्वादिति। स त्रिविधः—अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति। तत्र पञ्चरूपोऽन्वयव्यतिरेकी। रूपाणि तु पक्षधर्मत्वम्, सपक्षे सत्त्वम्, विपक्षाद् व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति। तत्र साध्यधर्मविशिष्टो धर्मी पक्षः। तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वम्। साध्यसमानधर्मा धर्मी सपक्षः। तत्र सर्वस्मिन्नेकदेशे वा हेतोर्वृत्तिः सपक्षे सत्त्वम्। साध्यव्यावृत्तधर्मा धर्मी विपक्षः। तत्र हेतोरवृत्तिर्विपक्षाद् व्यावृत्तिः। प्रमाणाविरोधिनी प्रतिज्ञातार्थे हेतोर्वृत्तिरबाधितविषयत्वम्। स्वपरपक्षसिद्धावत्रैरूप्यमसत्प्रतिपक्षत्वम्। तद्यथा—क्षित्यादि बुद्धिमत्पूर्वं कार्यत्वाद् घटादिवदित्यादि। पक्षसपक्षवृत्तिरविद्यमानविपक्षः केवलान्वयी। तद्यथा—विवादास्पदमदृष्टादि कस्यचित् प्रत्यक्षं प्रमेयत्वात् करतलादिवदिति। पक्षवृत्तिरविद्यमानसपक्षो विपक्षाद् व्यावृत्तः केवलव्यतिरेकी। तस्योदाहरणमवीतानुमानमिति। तथाहि—विमतं कालादिकं मायातो न भिद्यते, मायाकार्यत्वात्, यत्तु भिद्यते न तन्मायाकार्यम्, यथा पुरुषशिवौ, न तथा न मायाकार्यं कालादि, तस्मान्न मायातो भिद्यत इति। एवं हेतुलक्षणोक्त्या हेत्वाभासा निराकृताः। ते चासिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः पक्षधर्मत्वादिरूपाभावाद् भवन्ति। तत्रानिश्चितपक्षवृत्तिरसिद्धः। यथा—शब्दो नित्यश्चाक्षुषत्वादित्यादि। पक्षविपक्षयोरेव वर्तमानो विरुद्धः। यथा—आकाशविशेषगुणः शब्दः प्रमेयत्वादित्यविद्यमानसपक्षः। क्षित्यादिकालान्तं नित्यं कार्यत्वादिति विद्यमानसपक्षः। पक्षत्रयवृत्तिरनैकान्तिकः। यथा—नित्यः शब्दः प्रमेयत्वादिति साध्यासाधकः। पक्ष एव वर्तमानोऽनध्यवसितः। तद्यथा—नित्या भूर्गन्धवत्त्वादिति विद्यमानसपक्षः। सर्वं क्षणिकं सत्त्वादित्यविद्यमानसपक्षः। प्रमाणबाधिते प्रतिज्ञातार्थे वर्तमानो हेतुः कालात्ययापदिष्टः। शुचि नरशिरःकपालं प्राण्यङ्गत्वात् शङ्खवदित्यागमविरुद्धः। उलूको दिवा रूपं पश्यति, चक्षुष्मत्त्वादित्यनुमानविरुद्धः, रूपदर्शनाविनाभाविचेष्टाभावेन रूपदर्शनाभावानुमानादिति। अनुष्णोऽग्निर्मथनजन्यत्वाद् नवनीतवदिति प्रत्यक्षविरुद्धः। स्वपरपक्षसिद्धावभिरूपो हेतुः प्रकरणसमः। तद्यथा—अनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वाद् घटादिवदित्यस्य नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वाद् मायावदित्यत्रापि त्रैरूप्यसद्भावादिति। सम्यग्दृष्टान्ताभिधानमुदाहरणम्। व्याप्तिग्रहणभूमिर्दृष्टान्तः। तद्यथा—यो यो धूमवान् स सोऽग्निमान् यथा महानस इति साधर्म्योदाहरणम्, अन्वयमुखेन दृष्टान्ताभिधानत्वात्। यस्त्वग्निमान्न भवति स धूमवानपि न भवति, यथा जलमिति वैधर्म्योदाहरणम्, व्यतिरेकमुखेन दृष्टान्ताभिधानत्वात्। अनेनोदाहरणाभासा व्युदस्ताः। तथा च नित्यं मनो मूर्तत्वाद् यद् यद् मूर्तं तत्तन्नित्यं यथा घट इति साध्यविकलः, यथात्मेति साधनविकलः, यथा कर्मेत्युभयविकलः, यथा खपुष्पमित्याश्रयहीनः। यन्नित्यं न तन्मूर्तं यथात्मेति साध्याव्यावृत्तः। यथा घट इति साधनाव्यावृत्तः। यथा मायेत्युभयाव्यावृत्तः। शिवतत्त्वाद् न्यूनतया मायाया मूर्तत्वम्। व्याप्तिस्तु स्वकार्यव्याप्ततयैवोच्यते। यथा खपुष्पमित्याश्रय-

हीनः, असौ महाराज्यं करिष्यति सोमवंशोद्भूतत्वाद् भविष्यद्राजपुत्रवदिति सन्दिग्धाश्रय इत्यादि। दृष्टान्ते प्रसिद्धव्याप्तिकस्य हेतोर्दृष्टान्तोपमानेन पक्षे व्याप्तिव्यापकं वचनमुपनयः। तथा चायं धूमवानिति साधर्म्योपनयः। न च तथा धूमवानयं पर्वत इति वैधर्म्योपनयः। उपनयानन्तरं सहेतुकं प्रतिज्ञावचनं निगमनं तस्मादग्निमानेवेति। तदुक्तं भगवता वेदव्यासेन—

[1]पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित्।
उत्तरोत्तरवक्ता च ब्रुवतोऽपि बृहस्पतेः॥ इति।
( म० भा० २।१।७-८ )

अन्ये तु पक्षधर्मत्वसपक्षसत्त्वविपक्षाद्व्यावृत्त्यात्मकरूपत्रयवानन्वयव्यतिरेकी। पक्षादिलक्षणं च सन्दिग्धसाध्यः पक्षः। सन्देहश्च विप्रतिपत्तेः। निश्चितसाध्यः सपक्षः। निश्चितसाध्यव्यतिरेको विपक्ष इत्यतोऽग्न्यनुष्णतासाधकस्य कृतकत्वस्य विपक्षाद्व्यावृत्तिरूपाभावेनागमकतया बाधितविषयत्वस्य विपक्षाद्व्यावृत्तावन्तर्भावः। स्वपरपक्षसिद्धावेकस्य त्रैरूप्यासंभवादसत्प्रतिपक्षत्वरूपाभावः, पक्षसपक्षयोरन्यतरत्वस्य चैकस्यासंभवात्। तदुक्तम्—

यच्चानुमेयसम्बन्धं प्रसिद्धं च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥
विपरीतमतो यत् स्यादेकेन द्वितयेन वा।
विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्॥

एवं केवलान्वयी च रूपद्वयवान्, विपक्षाद् व्यावृत्तिरूपाभावात्। व्यतिरेकी च तथा, सपक्षाभावेन सपक्षे सत्त्वरूपाभावादिति मन्यन्त इति। शब्दजन्यं सम्यग्ज्ञानमागमः। स द्विविधः—पौरुषेयवाक्यजन्योऽपौरुषेयवाक्यजन्यश्चेति। तत्र तन्त्रेतिहासपुराणमन्वादि वाक्यानि पौरुषेयाणि। वेदवाक्यान्यपौरुषेयाणि इति। ननु वेदवाक्यानि पौरुषेयाणि वाक्यत्वाद् भारतादिवाक्यवदित्यनुमानात् तेषां पौरुषेयत्वसिद्धिरिति चेत्, नैवम्, "तस्मै नूनमभिद्यवे वाचा विरूपनित्यया" ( ऋ० ८।७५।६ ) इत्यागमेन वेदनित्यत्वसिद्धेरस्य कालात्ययापदिष्टतयाऽप्रामाण्यात्।

प्रलये समनुप्राप्ते नष्टे स्थावरजङ्गमे।
एकोऽहं संस्थितो देवि न द्वितीयोऽस्ति कुत्रचित्॥
तस्मिन् वेदाश्च शास्त्राणि मन्त्रे पञ्चाक्षरे स्थिता।
ते नाशं नैव सम्प्राप्ता मच्छक्त्या ह्यनुपालिताः॥

इति लैङ्गागमविरोधाच्चेति। न च प्रत्युच्चारणं वेदस्योत्पत्तिनाशोपलम्भादनुपपन्नं तन्नित्यत्वमिति वाच्यम्, उच्चारणाया अभिव्यञ्जकत्वेन तदुभयाभावात्। तच्च स एवायं वेद इति स एवायं स्तम्भ इतिवत् प्रत्यभिज्ञाप्रत्यक्षेण प्रागपीदानीमुपलभ्यमानस्य वेदस्य सत्त्वावगमादवगम्यते। न च प्रलयावस्थायां वेदधारणसमर्थपुरुषाभावेन

१. महाभारतस्य भाण्डारकरसंस्करणे सभापर्वणि प्रथमे परिशिष्टे वचनमेतद् दृश्यते।

वेदस्य विनाशे पुनः सर्गादौ वेदानां परमेश्वररचितत्वेनानित्यत्वमिति वाच्यम्, द्विजातीनां वेदधर्तॄणामभावेऽपि परमेश्वरस्य वेदधर्तुः सद्भावात्। तथाहि—सर्गादावुत्पन्नस्य वेदस्य यावत्प्रलयमवस्थानं वैशेषिकादिभिर्वेदानित्यत्ववादिभिरभ्युपगम्यते। ततस्तत्र न विवादः। प्रलयकाले तु सद्भावः साध्यते। तथाहि—प्रलयकालो वेदवित्पुरुषसमन्वितः, कालत्वादितरकालवदिति। न च भूभूधरादिसत्त्वमपि तेनैव न्यायेनानुमातुं शक्यत्वादतिप्रसङ्ग इति वाच्यम्, भूभूधरादिशून्यकालस्य प्रलयत्वेन तस्य तद्वत्तासाधने माता मे वन्ध्येतिवत् प्रतिज्ञाविरोधप्रसङ्गात्। एकब्रह्माण्डवर्तिसकलवैदिकपुरुषविनाशेऽपि ब्रह्माण्डान्तरवर्त्यनन्तवैदिकपुरुषसद्भावाच्च वेदनित्यत्वम्। ब्रह्माण्डान्तराण्यप्येतद्वेदवन्ति ब्रह्माण्डत्वात् सम्प्रतिपन्नवदिति सर्वत्र वेदैकत्वम्। वेदानित्यत्वपक्षेऽनन्तशाखावितताननन्तवेदजननाशतत्कारणकल्पनायां कल्पनागौरवप्रसङ्गः। नित्यत्वे तु सिद्धस्य वेदस्य नित्यत्वमात्रकल्पनाया लाघवान्न कश्चिद् दोष इति। तथा वेदकर्तुरसम्भवाच्च न वेदपौरुषेयत्वम्। तथा हि—नेश्वरः कर्ता वेदस्य, पूर्ववेदपरित्यागे कारणाभावात्। न च पूर्वकल्पे वेदाभाव इति वाच्यम्, पूर्वकल्पे वेदसद्भावस्यानुमानसिद्धत्वात्। तथाहि—पूर्वः सर्वोऽपि कल्पो वेदवैदिकयुक्तः कल्पत्वादिदानीन्तनकल्पवदिति। न चेदानीन्तनकल्पवदेव भावानामद्यतनानामपि कल्पान्तरे सद्भावानुमानादतिप्रसङ्ग इति वाच्यम्, प्रमाणाविरुद्धभावसद्भावस्येष्टत्वात्। तदुक्तं भगवता मनुना—

> यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये।
> दृश्यन्ते तानि तान्येव तथा ब्रह्महरादिषु॥ इति।

तस्मादपौरुषेयो वेदराशिरिति सिद्धम्। वेदाः प्रमाणम्, अनाप्तकृतशब्दत्वात्, सम्प्रतिपन्नवत्। विमतं वेदाध्ययनं तद्वेदाध्ययनपूर्वकम्, वेदाध्ययनत्वात्, इदानीन्तनवेदाध्ययनवदिति।

उपमोपमानम्। गोसदृशो गवय इति वाक्यं तज्जनितं वा विज्ञानं यद्युपमानम्, तदागम एव न प्रमाणान्तरम्। योऽयमस्य गोसदृशस्य गवयशब्दो वाचक इति संज्ञासंज्ञिसम्बन्धविषयः प्रत्ययः, स चानुमानमेव। तथा हि—गोसदृशस्यास्य गवयशब्दो वाचकः, तत्र वृद्धैः प्रयुज्यमानत्वात्, यो हि शब्दो यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वे प्रयुज्यमानस्तस्य वाचकः, तथा प्रयुज्यते चायं गवयशब्दो गोसदृशे, तस्मात् तस्य वाचक इति ज्ञानमनुमानान्न भिद्यत इति। यश्च प्रत्यक्षे गवये गोसादृश्यप्रत्ययः, सोऽक्षसंयोगजत्वात् प्रत्यक्षान्तर्भूतः। तथैव प्रत्यक्षमेव स्मर्यमाणायां गवि गवयसादृश्यज्ञानम्, तस्यैकतया प्रत्यक्षगम्यत्वाविरोधात्। तथाहि—भूयोऽवयवसामान्ययोगो जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते। तस्यैकतया गवये प्रत्यक्षगम्यस्य गोस्मरणानन्तरं गवि प्रत्यक्षत्वाविरोध इति पूर्ववन्निर्विकल्पकानुभूतत्वेन स्मर्यमाणं वा गवि गवयसादृश्यमिति नोपमानवेद्यं किञ्चिदस्तीति न प्रमाणान्तरमिति।

एवं जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्य प्रमाणान्तरानवगतस्य परिकल्पनात्मिकाऽर्थापत्तिरपि न प्रमाणान्तरम्, अनुमानत्वात्। सदेव यदेकत्र नास्ति, तदन्यत्रास्ति। सन्नेवाव्यापको यदेकत्र नास्ति, तदन्यत्रास्तीति स्वशरीर एव व्याप्ति-

ग्रहणसंभवात्। तथा च देवदत्तो बहिर्देशसंबन्धी, सत्त्वे सति गृहेऽविद्यमानत्वात्, बहिःस्थवृक्षादिवदिति गृहाभावलिङ्गेन बहिर्भावज्ञानमनुमानमेवेति। न च सत्त्वमात्रा-वेदकगृहासत्त्वावेदकप्रमाणयोर्ज्योतिःशास्त्रप्रत्यक्षयोः परस्परविरोधादेकविषयव्यवस्थयाऽर्थापत्तिरिति वाच्यम्, अनवच्छिन्नावच्छिन्नयोः सत्त्वमात्रगृहासत्त्वयोर्विरोधाभावेनाविरोधापादनासंभवात्। नहि यत्र क्वचन सत्त्वस्य गृहासत्त्वेन विरोधः संभवति, भिन्न-विषयत्वात्। न च निश्चितो गृहाभावः पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षिप्यते, प्रबलत्वादसत्त्वस्य। न च देशसामान्येन पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् गृहाभावः सत्त्वमात्रं प्रतिक्षेप्तुं सांशयिकत्वं वा नेतुं शक्नोति, तस्य तत्रौदासीन्यादिति। सत्त्वमात्र-गृहासत्त्वयोर्विरोधाभावादविरोधापादनं नार्थापत्त्या क्रियत इति न सा प्रमाणान्तर-मिति।

न च भावान्तरादन्योऽस्त्यभावः, यत्सिद्ध्यर्थमभावाख्यं प्रमाणमाश्रीयेत। नहि भूतलपरिणामविशेषात् कैवल्यक्षणादन्यो घटाभावो नाम। प्रतिक्षणपरिणामिनो हि सर्वे भावा ऋते चितिशक्तेः परमेश्वरादिति स परिणामभेद इन्द्रियसिद्ध इति। अथवा भवतु भावान्तराद् व्यतिरिक्तोऽभावः, तथापि प्रत्यक्षादिप्रमाणसिद्धत्वात् तत्सिद्ध्यर्थं न प्रमाणान्तरमभ्युपगन्तव्यम्। तथाहि—चक्षुर्विष्कारणान्वयव्यतिरेकानुविधानादिह भूतले घटो नास्तीत्यभावज्ञानस्यैन्द्रियकत्वम्। तथा बहिःस्थत्वेन घटादीनां गृहासत्त्वं स्वशरीरवदनुमीयते। तथा भारतपुरुषाणामभावो भारतागमेनावगम्यत इति। तस्मा-न्नाभावाख्यं प्रमाणान्तरमस्तीति।

सम्भवस्तु खार्यां द्रोणाढकप्रस्थावगमः। स चानुमानम्, खारीत्वस्य द्रोणादि-व्याप्ततया तेन तदनुमानादिति।

यच्चानिर्दिष्टप्रवक्तृकं प्रवादमात्रमिति होचुर्वृद्धा इत्यैतिह्यम्, यथेह वटे यक्षः प्रतिवसतीत्यादि। इदं न प्रमाणान्तरम्, आप्तोक्त्यनिश्चयेन सांशयिकत्वात्। आप्तवक्तृ-निश्चये त्वागम एवेति न प्रमाणान्तरमिति।

चेष्टा चाभिनयः। स च समयबलेन परोक्षानुभवसाधनत्वादागम एवेति न प्रमाणान्तरमिति।

एवं विरोधोऽपि। ह्रदमध्येऽग्न्यभावज्ञानं तदनुमानमेव, जलाग्न्योः परस्पर-विरुद्धयोरेकत्रासम्भवेनेतरेतराभावव्याप्तत्वादिति त्रीण्येव प्रमाणानीति। तदुक्तम्—

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि॥
प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं च।
सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रसिद्धिरनुमानात्।
तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम्॥ इति।

(सा० का० ४-६)

ऐहिकामुत्रिकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्, न रागाभावः। तदैहिकामुत्रिकविषयाणामनित्यत्वसातिशयत्वादिदोषदर्शनादुपजायत इति। अविघातकरणमैश्वर्यम्। तदष्टविधम्—

अणिमा महिमा चैव लघिमा गरिमा तथा।
ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च ॥

तत्राणुत्वम् अणिमा परमाणुवदवस्थानम्। महत्त्वं महिमा यावदिच्छं स्थूलीभावः। लघिमा लघुत्वम्, यतः सूर्यमरीचीन् आलम्ब्य सूर्यलोकं गच्छति। गुरुत्वं गरिमा अन्यैरचाल्यत्वेनावस्थानम्। ईशित्वमीशभावो भूतभौतिकानां प्रभवादिहेतुत्वम्। वशित्वं वशीकरणभावः सर्वस्य स्वेच्छावशवर्तित्वम्। प्राप्तिः प्रापणम्, येनाङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। प्राकाम्यमिच्छानभिघातः, भूमौ चोन्मज्जति निमज्जति यथोदक इति। सत्यसङ्कल्पतेत्यपरे। यथास्य सङ्कल्पो भवति, तथैव भूतानि भवन्तीति। अस्मदादीनां निश्चयाः पदार्थानुरूपाः, योगिनां तु निश्चयानुविधायिनः पदार्था इत्येतच्चतुष्कं समासतः सात्त्विकम्, सत्त्वादुत्पन्नं रूपमिति। चत्वारस्तामसाश्च विपरीता अधर्माज्ञानावैराग्यानैश्वर्याभिधाना इति। तामसास्तमस उत्पन्नाः। अधर्मोऽनभ्युदयानिःश्रेयसहेतुः। अज्ञानं ज्ञानविपर्ययः, असम्यग्ज्ञानमिति यावत्। तत् त्रिविधम्—विपर्ययो विकल्पो निद्रा चेति। विपर्ययो मिथ्याज्ञानतद्रूपप्रतिष्ठं शुक्तिकादौ रजतादिज्ञानम्। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। तद्यथा—शशविषाणादिशब्दश्रवणानन्तरं तदर्थविषयज्ञानमिति। जाग्रत्स्वप्नप्रत्ययाभावहेतुतमःप्रकर्षमवलम्ब्य या बुद्धिवृत्तिरुद्भवति, सा निद्रा। तदुक्तं पतञ्जलिना भगवता—"अभावप्रत्ययालम्बना निद्रा" (१।१०) इति सूत्रेण। अवैराग्यं च दृष्टानुश्रविकविषयरागः। अणिमादिप्रादुर्भावविरोधी बुद्धिधर्मोऽनैश्वर्यमिति। अन्ये तु परमेश्वरतत्त्वावेदकं ज्ञानम्, तदन्यदज्ञानमिति ब्रुवते। एतदुक्तं सांख्यैः—

धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥

वैराग्यात् प्रकृतिलयः संसारो राजसाद्भवति रागात्।
ऐश्वर्यादविघातो विपर्ययात् तद्विपर्यासः ॥ इति।

( सा० का० ४४-४५ )

विषयाध्यवसायरूपिणीत्यनेन बुद्धेः सद्भावश्च प्रतिपादितः। तथाहि—विषयाध्यवसायादिवृत्तेः परिदृश्यमानाया मूलभूतं वृत्तिमद्बुद्धितत्त्वमभ्युपगन्तव्यम्, अन्यथा वृत्त्यभावप्रसङ्गादिति। तदुक्तं पारमेश्वरे—

अथ बुद्धेर्विकासो यः स्वधर्मेणानुमीयते।
क्षुब्धेभ्यः सहसा पूर्वं गुणेभ्यो भूतगोचरा ॥
बुद्धिरध्यवसायेन भावानां जननी शुभा।
वर्ण्यतेऽष्टगुणोपेता संविभज्य यथाक्रमम् ॥ इत्यादि।

( वि० १७।१-२ )

तस्या विभागमाह—सापि त्रिविधेति। सा बुद्धिस्त्रिप्रकारा। कुत इत्यत आह—गुणतः प्राक्तनकर्मानुसारेणेति। पुरुषस्य पूर्वजन्मनि कृतपुण्यापुण्यात्मककर्मानुसारेण गुणभेदादिति। तदुक्तम्—"बुद्धिः कर्मानुसारिणी" इति। तथाहि—पुण्येनैकेन सात्त्विकी बुद्धिरपुण्येन तामसी मिश्रेण राजसीति। तथा जाग्रत्स्वप्नसुषुप्त्यात्मना च कर्मानुसारेण गुणभेदात् त्रिविधा बुद्धिरिति वा। तथा हि—स्थूलकर्मनिमित्तं सात्त्विकी बुद्धिर्जागर्ति। सूक्ष्मकर्मवशाद् राजसी स्वप्नं गच्छति। जाग्रत्स्वप्नवृत्त्यभावहेतुभूततमःप्रकर्षमवलम्बमाना बुद्धिः सुषुप्तिमुपगच्छति। विश्रमार्थमात्मनः सर्वदैकस्वभावस्य सर्वगतस्य चिन्मात्रस्य जागत्स्वप्नसुषुप्तिसाक्षिणो जाग्रदादित्रयाभावाद् बुद्धेर्विकारवतोऽवस्थात्रयवत्त्वमिति। तस्या वर्णमादित्योदयनिभम्। तदुक्तम्—

[1]अहङ्कारस्य बाह्येऽपि बुद्धितत्त्वं व्यवस्थितम्।
आदित्योदयसंकाशं बोधयन्तमिवाखिलम्॥ इति।

तस्याः षडध्वव्याप्तिः—ठकारो वर्णः। तेजस्तेज इत्यादि द्वे पदे। तारहृदयपञ्चार्णमन्त्रः। बुद्ध्याख्यं तत्त्वम्। पैशाचाद्यष्टभुवनानि। विद्या कला॥ ३॥

## वृत्तिः

अयं घट इत्याद्यध्यवसायात्मना कार्येण बुद्धिः सिद्धा। सापि पुंसः कार्यवशात् सत्त्वादिगुणबाहुल्येन सात्त्विकादिरूपा जायते, गुणानां सर्वत्र व्यापारदर्शनात्। अस्याश्च बुद्धेर्धर्माद्यष्टगुणत्वं सिद्ध्यादिप्रत्ययभेदश्च श्रीमन्मतङ्गादाववधेयः॥ ५२॥

**स्यात् त्रिविधोऽहङ्कारो जीवनसंरम्भगर्वरूपोऽयम्।**
**संभेदादस्य सतो विषयो व्यवहार्यतामेति॥ ५३॥**

## तात्पर्यदीपिका

इदानीमहङ्कारतत्त्वं निरूपयति—स्यादिति।

बुद्धितत्त्वादहङ्कारात्मकं तत्त्वमुत्पद्यते। अहङ्कृतिरहङ्कारः। अहमित्येवंरूपव्यापारवानित्यर्थः। विभागमाह—त्रिविध इति। केन रूपेणेत्याशङ्क्याह—जीवनसंरम्भगर्वरूपोऽयमिति। जीवनाहङ्कारः, संरम्भाहङ्कारः, गर्वाहङ्कारश्चेति। तत्र जीवामीत्याकारो जीवनाहङ्कारः। अहं करोमीति संरम्भाहङ्कारः। प्रबलोऽस्मि रूपवानित्यादि गर्वाहङ्कारः। एतानि रूपाणि यस्य स तथोक्त इति। प्रमाणमाह—संभेदादित्यादि। अहङ्कारसम्बन्धात् शब्दादिविषयो व्यवहार्यतामनुभवार्हतां यातीति। तथाहि—आत्मा तावन्निर्गुणो निष्क्रियश्चिन्मात्र उदासीनस्वभावः। तस्मादसौ न शृणोति, न पश्यति, न च करोतीत्ययमहङ्कारः श्रोत्रादिकृतश्रवणादिकं वागादिकृतवचनादिकं बुद्धिकृताध्यवसायादिकं चित्तकृतसंशयादिकं चाहं शृणोमीत्यादिभिरहं वच्मीत्यादिभिरहमध्यवस्यामीत्यादिभिश्च वृत्तिभिरात्मनि साक्षिणि सम्बध्नाति। तेनाहङ्काराख्यं तत्त्व-

१. श्लोकोऽयं चन्द्रज्ञानस्य स्यात्।

मभ्युपगन्तव्यम्। अन्यथा देवदत्तकृतस्य यज्ञदत्त इव श्रोत्रादिकृतस्य श्रवणादेरात्मनि सम्बन्धाभावप्रसङ्ग इति। तदुक्तं शैवरहस्ये—

संबन्धप्रतिभासो ज्ञातुर्ज्ञेयेन देशकालाभ्याम्।
सुलभोऽभिमाननामा व्यापारोऽहङ्कृतेरस्याः॥ इति॥ ४॥

### वृत्तिः

तस्याश्च—स्यादिति।

आहङ्कारिको हि प्रयत्नात्मकः संरम्भः। यदुक्तम्—"संरम्भोऽहङ्कृतेर्वृत्तिः" ( भो० का० ३३ ) इति। किञ्च, प्राणादिवायुप्रवृत्तिहेतुत्वेन जीवनमपि तद्धेतुकमेव। तदुक्तम् —"संरम्भाद्यस्य चेष्टन्ते शारीराः पञ्च वायवः" ( मृ० वि० ११।२० ) इति। तथा गर्वोऽपि। ग्राह्याध्यवसायाद् बुद्धिकार्याद् भिन्नोऽहमिति ग्राहकाध्यवसायोऽपि तत्कार्यमेव। अत एतैस्त्रिभिरहङ्कारसिद्धिः। ततश्चैतत्संबन्धादेव घटमहं जानामीति व्यवहार इत्याह—संभेदादिति। स च बुद्धेरुत्पन्नः। यदुक्तं सांख्यैरपि—"महतोऽहङ्कारः" ( सां० का० २३ ) इति॥ ५३॥

**सात्त्विकराजसतामसभेदेन स जायते पुनस्त्रेधा।**
**स च वैकारिकतैजसभूतादिकनामभिः समुच्छ्वसिति॥ ५४॥**

### तात्पर्यदीपिका

तस्यैव प्रकारान्तरेण त्रैविध्यमाह—सात्त्विकेति।

सत्त्वरजस्तमोविकारतया सात्त्विकराजसतामसभेदवानहङ्कारस्त्रिविधो भवति। स पुनरहङ्कारो वैकारिकतैजसभूतादिकनामभिस्त्रिविधो भवतीति। सत्त्वोद्रिक्तः सात्त्विको वैकारिकाख्यः। रजोद्रिक्तस्तैजसः। केचिद् वैपरीत्यमिच्छन्ति, स च तैजसवैकारिकभूतादिकेति ग्रन्थपाठश्च इत्याहुः। तमोद्रिक्तः तामसः। स भूतादिनामेति गुणतो नामतश्च त्रैविध्यमहङ्कारस्य भवतीति॥ ५॥

### वृत्तिः

किञ्च—सात्त्विकेति। सात्त्विकादीनामहङ्कारस्कन्धानां तैजसादीनि क्रमान्नामानि भवन्तीत्यर्थः॥ ५४॥

**तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि।**
**भूतादेस्तन्मात्राण्येषां सर्गक्रमोऽयमेतस्मात्॥ ५५॥**

### तात्पर्यदीपिका

कार्यमाह—तैजसत इति।

एतस्मादेव त्रिविधादहङ्कारादेषां ज्ञानकर्मेन्द्रियतन्मात्रमनसां षोडशानां सर्गः । किमात्मकान्मनस उत्पत्तिः, किंरूपादिन्द्रियाणाम्, कथंभूतात् तन्मात्राणामित्याशङ्क्य तेषामुत्पत्तिं विभागेनाह—तैजसत इत्यादि । तैजसाख्यादहङ्काराद् राजसात् चलस्वभावं मन उत्पद्यते, वैकारिकात् सात्त्विकात् प्रकाशलाघवोपेतमिन्द्रियदशकम् । भूतादेस्तामसात् तमोबहुलानां तन्मात्राणामुद्भव इति । तैजसात् सात्त्विकात् स्वच्छं लघूत्पद्यते मन इत्यन्ये । सात्त्विकसहकृताद् वैकारिकाद् राजसाद् बुद्धीन्द्रियाणामुत्पत्तिः, ज्ञानसाधनत्वात् । तामससहकृताद् वैकारिकात् कर्मेन्द्रियाणामिति । सांख्याः सात्त्विकादेवाहङ्कारादेकादशेन्द्रियाणाम्, तामसात् तन्मात्राणामुत्पत्तिं मन्यन्ते । सत्त्वतमसोर्निष्क्रियतया स्वयमुत्पादनासामर्थ्यात् चलस्वभावेन रजसा प्रेरितयोस्तयोः कारणत्वमित्युभयमपि रजसा निमित्तेनोत्पद्यत इति, न तु तस्योपादानत्वम्, तत् सत्त्वतमसोरेवेति ब्रुवते । तथाहि—

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ इति ।
( सां० का० २५ )

एषां सर्गक्रमोऽयमेतस्मादित्यनेन पुनरुक्तेन पञ्चभूतेभ्यः पञ्चानां बुद्धीन्द्रियाणामुद्भवं तार्किकाद्यभिमतं निरस्यति । तथा हि—"घ्राणरसनचक्षुस्त्वक्श्रोत्रेन्द्रियाणि भूतेभ्यः" (१।१।१२) इति न्यायसूत्रम् । "भूतानां बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वेन्द्रियप्रकृतित्वे साधर्म्यम्"[1] इति प्रशस्तपादीयं वैशेषिकभाष्यं च पृथिव्यादिभ्य इन्द्रियाणां घ्राणादीनां शब्दादीनां च समुद्भवमभिधत्ते । मनश्च नित्यमिति तार्किकमीमांसका आहुः । तदेतदागमविरुद्धत्वादनुपपन्नम् । तथा हि पारमेश्वरे तावत्—

सत्त्वधर्मस्त्रिधा तावदहङ्कारस्य सुव्रत ।
वैकारिकस्तैजसश्च भूतादिश्चेति स त्रिधा ॥
सत्त्वेनोत्कृष्टवीर्येण गर्वो वैकारिकः स्मृतः ।
रजसा भूरिसंपृक्तस्तैजसः परिकीर्तितः ॥
भूतादिस्तमसोत्कृष्टस्तेषां वक्ष्यामि वृत्तयः ।....
वैकारिकोऽक्षसेनायाः कारणं योनिरुच्यते ॥....
मिथुनाज्जायते गर्वान्मनश्चैवोभयात्मकम् ।....
तस्माद् वैकारिकादेव गर्वात् कर्मेन्द्रियाण्यपि ॥
व्यक्तिमायान्ति संक्षोभात् सिसृक्षोः कारणात्मनः ।....
भूतादेरप्यहङ्कारात् तन्मात्राणि भवन्ति हि ॥ इत्यादि ।
( वि० १८।४३-४५,४६,५०,६८-६९,९८ )

शिवधर्मोत्तरे च—

प्रधानादभवद् बुद्धिर्जगद्धेतुः शिवेच्छया ।
बुद्धेरपि च संक्षोभादहङ्कारस्त्रिधाऽभवत् ॥

---

१. "पृथिव्यादीनां पञ्चानामपि भूतत्वेन्द्रियप्रकृतित्वबाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानि" इति साधर्म्यवैधर्म्यप्रकरणीयं प्रशस्तपादभाष्यम् ।

अहङ्काराच्च सूक्ष्माणि तन्मात्राणीन्द्रियाणि च । इति ।

अनुमानाच्च । तथाहि—विमतानीन्द्रियाणि भौतिकानि न भवन्ति, इन्द्रियत्वान्मनोवदिति । अनित्यं मनः, इन्द्रियत्वाच्चक्षुरादिवत् । सर्वाणीन्द्रियाणि जन्यानि, आत्ममूलकारणव्यतिरिक्तवस्तुत्वात्, मूलकारणातिरेकिजडत्वात्, सगुणत्वात्, मूर्तत्वाद्वा, घटादिवदित्याद्यनुमानादभौतिकत्वकार्यत्वसिद्धौ इन्द्रियाणां कारणापेक्षायामागमबलादहङ्कारस्य कारणत्वमाश्रीयत इति । अत एव नाहङ्कारिकाणीन्द्रियाणि, इन्द्रियत्वात्, मनोवदित्यनुमानस्य कालात्ययापदिष्टत्वात् साध्यवैकल्याच्चाप्रामाण्यमिति । तथा पृथिव्यप्तेजोवायवो गन्धरसरूपस्पर्शोपादाना न भवन्ति, भूतत्वात्, व्योमवत्; व्योम च न शब्दोपादानं भूतत्वात् पृथिवीवदिति; शब्दादीन्युपादानकारणवन्ति कार्यत्वात्; कार्याणि च मूलकारणातिरिक्तानि जडत्वाद् घटादिवदित्यनुमानाद् भूतव्यतिरिक्ततदुपादानाहङ्कारसद्भावसिद्धिः । तस्य वर्णं पावकनिभम् । तदुक्तम्—

[1]तद्बाह्ये तु भवेत् तत्त्वमहङ्काराख्यमव्ययम् ।
दीप्तपावकसंकाशं भीमरूपं दुरासदम् ॥ इति ।

अस्य षडध्वव्याप्तिः—धकारो वर्णः । अरूपेत्यादि द्वे पदे । ईशानपञ्चार्णौ मन्त्रौ । अहङ्काराख्यं तत्त्वम् । छगलण्डद्विरण्डौ भुवने । प्रतिष्ठा कला ॥ ६ ॥

## वृत्तिः

तत्र तेषु मध्यात् तैजसाऽहङ्कारान्मनोबुद्धीन्द्रियाणि जायन्ते, वैकारिकात् कर्मन्द्रियाणि, भूतादेरपि तन्मात्राणीत्यर्थः । न च तैजसतो मन एव वैकारिकादुभयरूपाणीन्द्रियाणीति व्याख्येयम्, मूलवचनविरोधाद् युक्तिविरोधाच्च । सत्त्वस्य प्रकाशरूपत्वेन बोधहेतुत्वम्, रजसः क्रियाहेतुत्वं युक्तम् । उक्तं च श्रीमन्मृगेन्द्रे—

श्रोत्रं त्वक्चक्षुषी जिह्वा नासा च मनसा सह ।
प्रकाशान्वयतः सात्त्वास्तैजसश्च स सात्त्विकः ॥
वाणी पाणी भगः पायुः पादौ चेति रजोद्भवाः ।
कर्मान्वयाद् रजोभूयान् गणो वैकारिकोऽत्र यः ॥(वि० १२।३-४) ५५॥

**इच्छारूपं हि मनो व्यापारस्तस्य भवति सङ्कल्पः ।**
**बुद्धचक्षाणि श्रोत्रं त्वग् दृग् जिह्वा च नासा च ॥ ५६ ॥**

## तात्पर्यदीपिका

अथ मनःपूर्वाणामिन्द्रियाणां स्वरूपमाह—इच्छेति ।

इच्छारूपं प्रार्थनारूपं मन इति । व्यापारः वृत्तिः, तस्य मनसः सङ्कल्पोऽनिर्धारितविशेषरूपः, संशयरूप इति यावत् । अनेन लक्षणमुक्तम् । सद्भावश्च संशयात्मिकया वृत्त्या वृत्तिमतोऽनुमानादिति । तथा चक्षुरादिकरणसम्बन्धेष्टविषयेषु युगपज्ज्ञानानुत्पा-

१. श्लोकोऽयं चन्द्रज्ञानस्य स्यात् ।

दनात् चक्षुरादिव्यतिरिक्तं करणान्तरमस्तीत्यवगम्यते । यदि तन्न स्याद् युगपद् रूपादिज्ञानं जायेत । अतः करणान्तरमस्तीति तन्मन इति तत्सिद्धिः । तस्याणुकल्पत्वं त्वयुगपद् ज्ञानादेवावगम्यत इति विभुत्वानुमानं कौमारिलोक्तं धर्मिग्राहकप्रमाणविरुद्धत्वादप्रमाणमिति । बुद्ध्यक्षाणि बुद्धिवृत्तिसाधनानीन्द्रियाणि । कानि तानीत्यत आह—श्रोत्रं त्वग् दृग् जिह्वा च नासा चेति ॥ ७ ॥

### वृत्तिः

मनःसिद्धिमाह—इच्छेति ।

सङ्कल्पोऽवधानमेकाग्रता । तेन व्यापारेणेच्छारूपं मनः सिद्ध्यतीत्यर्थः । अयं तत्राऽभिप्रायः—आत्मन इन्द्रियार्थसन्निकर्षेऽप्यन्यपरस्य यदधिष्ठानं विना बाह्येन्द्रियाणि न प्रवर्तन्ते तन्मन इति । बुद्धीन्द्रियाण्याह—बुद्ध्यक्षाणीति ॥ ५६ ॥

**ग्राह्यास्तेषां शब्दः स्पर्शो रूपं रसश्च गन्धश्च ।**
**इत्येतेषां विषयाः क्रमेण पञ्चापि पञ्चानाम् ॥ ५७ ॥**

### तात्पर्यदीपिका

तेषां विषयमाह—ग्राह्या इति ।

बुद्धीन्द्रियाणां श्रोत्रादीनां पञ्चानामेते पञ्च शब्दादयो विषया यतो ग्राह्याः, अतस्ते विषयाः । तान् क्रमेण दर्शयति– शब्दः स्पर्शो रूपं रसश्च गन्धश्चेति ॥ ८ ॥

### वृत्तिः

अथ एषां ग्राह्यान् विषयानाह—ग्राह्या इति ।

**शब्दादीनां ग्रहणं व्यापारः कीर्तितः क्रमेणैषाम् ।**
**वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि स्युः ॥ ५८ ॥**

### तात्पर्यदीपिका

बुद्धीन्द्रियाणां स्वरूपं चाह—शब्दादीति ।

शब्द आदिर्येषां ते शब्दादयः, तेषां ग्रहणं तदाकारभजनम्, एषामिन्द्रियाणां व्यापार उक्तः, तत्त्वज्ञैरित्यर्थः । क्रमादित्यन्यस्यान्यग्रहणं न संभवति । अनेन लक्षणमुक्तं प्रत्येकं श्रोत्रादीनामिति । परीक्षापरं चेदं वाक्यम् । तथाहि—शब्दग्रहणं करणजन्यं क्रियात्वात् छिदिक्रियावदिति श्रोत्रसद्भावसिद्धिः । एवं स्पर्शरूपरसगन्धग्रहणकरणतया त्वगादीन्द्रियसिद्धिरवगन्तव्या । तथाहि–वर्णावर्णात्मना द्विविधशब्दग्रहणं श्रोत्रेण करणेन विना नोपपद्यते, बधिरस्य तद्ग्रहणादर्शनात् । एवं शीतोष्णमृदुकठिनद्रवतीक्ष्णादिस्पर्शग्रहणं च त्वगिन्द्रियेण विना न स्यात्, त्वग्दोषदूषितस्य तदनुपलम्भात् । तथाहि—श्वेतरक्तकृष्णपीतहरितधूम्रश्यामह्रस्वदीर्घादिभेदभिन्नरूपग्रहणं चक्षुःकरणं विना न संभवति,

अन्धस्य तद्दर्शनासंभवात् । एवं मधुराम्लतिक्तलवणकटुकषायात्मना षड्विधरसग्रहणमपि तत्प्रवर्तकरसनकरणेन विना न स्यात्, जाड्योपप्लुतरसनेन्द्रियवतस्तदनवगमात् । तथा सुरभ्यसुरभ्यात्मना द्विविधगन्धग्रहणं च तत्करणनासिकाकरणं विना न संभवति, अघ्रातृत्वदूषितेन्द्रियस्य तदनुपलब्धेरिति ॥ ९ ॥

### वृत्तिः

अतश्च शब्दादिग्रहणान्यथानुपपत्त्यैवैषां सिद्धिरित्याह—शब्दादीति ।

न चैषां नियतविषयत्वाद् भौतिकत्वं युज्यते, भूतान्तराणां तद्गुणानां कर्मसामान्यादेश्चक्षुरादीनां ग्रहणदर्शनात् । तदुक्तं सिद्धगुरुणा—

भौतिकत्वाच्च नियमे कर्मसामान्ययोः स्फुटम् ।
देवेभ्यो बुद्धयो न स्युः समवाये च देहिनाम् ॥ इति ।
( भो० का० ४० )

तत्र देवनाद् द्योतनाद् देवा इतीन्द्रियाण्युच्यन्ते । कर्मेन्द्रियाण्याह—वाक्पादेति ॥ ५८ ॥

## वचनादानविहरणोत्सर्गानन्दाश्च कर्मैषाम् ।
## अन्तःकरणं त्रेधा बुद्धिरहङ्कारचेतसी चेति ।। ५९ ।।

### तात्पर्यदीपिका

कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानीति पञ्च भवन्ति । तेषां व्यापारमन्तःकरणानां विभागं चोत्तरश्लोकेनाह—वचनेति ।

एषां कर्मसाधनतया कर्मेन्द्रियाणां वचनादीनि कर्माणि । परीक्षार्थं चेदं वाक्यम् । तथाहि—शब्दोच्चारणान्यथानुपपत्त्या तत्करणभूतवागिन्द्रियसद्भावोऽवगम्यते । न च तदधिष्ठानं वागिन्द्रियमिति वाच्यम्, मूकस्यापि शब्दोच्चारणप्रसङ्गादिति । एतदिन्द्रियान्तरेष्वप्यवगन्तव्यम्, अन्यथा कौण्यपङ्गुत्वोदावर्तक्लैब्यात्मकेन्द्रियवत आदानादिप्रसङ्गात् । तदुक्तं सांख्यैः—

[1]बाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमन्दताः ॥ इति ।

तस्मादधिष्ठानातिरिक्तानामतीन्द्रियाणामिन्द्रस्यात्मनश्चिह्नत्वेनेन्द्रियशब्दवाच्यानां सद्भावः सिद्ध इति । विमतानीन्द्रियाण्यतीन्द्रियाणि, इन्द्रियत्वात्, मनोवदिति च तेषामतीन्द्रियत्वसिद्धिरिति । आभ्यन्तरं करणमन्तःकरणं त्रिविधम्, केन रूपेणेत्यत आह—बुद्धिरहङ्कारचेतसी चेति । बुद्धिरहङ्कारो मनश्चेति । अथवा अन्तःकरणमेकैकं त्रिविधं भूतभविष्यद्वर्तमानविषयभेदात् । तदुक्तं मातङ्गे—

---

१. वचनमेतत् सांख्यतत्त्वकौमुद्यामेकादशेन्द्रियवधा (४९) इति कारिकाव्याख्यायामुद्धृतं समुपलभ्यते ।

यदन्तःकरणं नाम त्रिकालविषयात्मकम् ॥
यतोऽवसीयते तस्मात् चिरकालानुसञ्चितम् ।
वर्तमानमतीतं च यच्चैष्यदनुमानतः ॥ इति ।
( वि० १८।८६-८७,८८ )

तथा सांख्यैश्च—
"साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" इति ॥ १० ॥
( सां० का० ३३ )

### वृत्तिः

अथ व्यापारैः कैरेषां सिद्धिरित्यत आह—वचनेति ।

विहरणं गमनम्, उत्सर्गो मलापनयनम् । शेषं सुगमम् । अत एव कर्मेन्द्रियाणि ये नेच्छन्ति ते प्रतिक्षिप्ताः । नाकरणा कृतिर्दृश्यते यतः । नन्वेवं चेद् भ्रूक्षेपादीनामपि क्रियात्वादनन्तता कर्मेन्द्रियाणाम् । तन्न, त्वगिन्द्रियवत् सर्वशरीरव्यापकत्वेनैषामभ्युपगमात् । भ्रूक्षेपादि हस्तादेरेव व्यापार इत्यदोषः । तेषु चान्तःकरणबहिःकरणभेदमाह—अन्तःकरणमिति ॥ ५९ ॥

**बुद्धीन्द्रियकर्मेन्द्रियभेदाद् बाह्यं पुनर्भवेद् दशधा ।**
**तन्मात्रेभ्यः खपवनतेजोऽम्भःक्ष्मेति पञ्चभूतानि ॥ ६० ॥**

### तात्पर्यदीपिका

बाह्यकरणभेदं तन्मात्रवृत्तिं चाह—बुद्धीति ।

बाह्यं करणं दशविधम्—पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणीति । अथवा अन्तःकरणं बुद्ध्यहङ्कारमनोरूपम् । कर्मेन्द्रियबुद्धीन्द्रियात्मकं बाह्यं च कार्यभेदात् त्रिविधं च । अन्तःकरणस्य प्राणादिवृत्त्या शरीरधारणलक्षणम्, बुद्धीन्द्रियाणां प्रकाशः, कर्मेन्द्रियाणामाहरणमिति । तदुक्तम्—

"करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्" इति ।
( सां० का० ३२ )

मनःपूर्वाणामिन्द्रियाणां षडध्वव्याप्तिः क्रमेणोच्यते—उकारो वर्णः । आधूमेत्यादि द्वे पदे । तत्पुरुषपञ्चार्णौ मन्त्रौ । मनस्तत्त्वम् । माकोटाख्यं भुवनम् । निवृत्तिः कला । नकारो वर्णः । शर्वमहेश्वरौ पदे । कवचपञ्चार्णौ मन्त्रौ । श्रोत्राख्यं तत्त्वम् । मण्डलेश्वरं भुवनम् । शान्त्यतीता कला । पकारो वर्णः । महादेवेत्यादि द्वे पदे । शिखापञ्चार्णौ मन्त्रौ । त्वगात्मकं तत्त्वम् । कालञ्जरं भुवनम् । शान्तिः कला । ढकारो वर्णः । महातेजादि द्वे पदे । शिरःपञ्चार्णौ मन्त्रौ । चक्षुराख्यं तत्त्वम् । शङ्कुकर्णं भुवनम् । विद्या कला । बकारो वर्णः । मुञ्च मुञ्चेत्यादि द्वे पदे । हृदयपञ्चार्णौ मन्त्रौ । वागात्मकं तत्त्वम् । मण्डलेश्वरं भुवनम् । शान्त्यतीता कला । यकारो वर्णः । सर्वसान्निध्यकरणेत्यादि

द्वे पदे। अघोरपञ्चार्णौ मन्त्रौ। पाण्यात्मकं तत्त्वम्। कालञ्जरं भुवनम्। शान्तिः कला। र इति वर्णः। अर्नाचितेत्यादि द्वे पदे। वामदेवपञ्चार्णौ मन्त्रौ। पादात्मकं तत्त्वम्। शङ्कुकर्णं भुवनम्। विद्या कला। लकारो वर्णः। पूर्वस्थितेत्यादि द्वे पदे। सद्योजातपञ्चार्णौ मन्त्रौ। पाय्वात्मकं तत्त्वम्। स्थूलेशं भुवनम्। प्रतिष्ठा कला। वकारो वर्णः। तुरु तुर्वित्यादि द्वे पदे। अस्त्रपञ्चार्णौ मन्त्रौ। उपस्थात्मकं तत्त्वम्। स्थलेश्वरं भुवनम्। निवृत्तिः कला॥ ११॥

### वृत्तिः

अथ तन्मात्राणां भूतकारणतयैव सिद्धिरित्याह—तन्मात्रेभ्य इति। खं च पवनश्च तेजश्च खपवनतेजः। शेषं सुगमम्॥ ६०॥

**तन्मात्राण्यविशेषाः शब्दादीनां प्रकीर्तिताः पञ्च।**
**भूतानि पञ्च तेभ्यो भवन्ति तान्येकगुणवृद्धया॥ ६१॥**

### तात्पर्यदीपिका

तन्मात्रेभ्य इत्यत्र कानि तन्मात्राणि, तेभ्यः कथं भूतानामुत्पाद इत्यत आह—तन्मात्राणीति।

अविशेषाः सूक्ष्माः शब्दादयः पञ्च तन्मात्राणीत्युच्यन्ते। मात्रशब्देन भूतसंश्लेषो भूतभावेन परिणामो वा व्युदस्तः। केवलाः शब्दादयः सूक्ष्मत्वेनावस्थितास्तन्मात्राणीत्यर्थः। तेभ्यस्तन्मात्रेभ्यः पञ्चभ्यः पञ्च भूतानि एकैकगुणवृद्धया भवन्तीति। तथाहि—शब्दतन्मात्रात् शब्दैकगुणमाकाशमुत्पद्यते, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राच्छब्दस्पर्शगुणो वायुः, उक्ततन्मात्रद्वयसहिताद् रूपतन्मात्रात् शब्दस्पर्शरूपगुणं तेजः, उक्ततन्मात्रसहिताद् रसतन्मात्रात् चतुर्गुणा आपः, शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्रोपादानकारणात् शब्दस्पर्शरूपरसगन्धात्मकपञ्चगुणा पृथिवी समुत्पद्यत इति। अपरे केवलेभ्यस्तन्मात्रेभ्यः केवलानि भूतानीत्याहुः। अन्ये तु शब्दतन्मात्रादाकाशस्पर्शतन्मात्रावुत्पद्येते, स्पर्शतन्मात्राद् वायुरूपतन्मात्रौ, रूपतन्मात्रात् तेजोरसतन्मात्रौ, रसतन्मात्राद् जलगन्धतन्मात्रौ, गन्धतन्मात्रात् केवला पृथिवीति। तदुक्तम्—

> [1]तामसतो भूतादेरहङ्कृतेर्भवति शब्दतन्मात्रम्।
> तस्मादपि तन्मात्रादाकाशः स्पर्शतन्मात्रः॥
> रूपरसगन्धमात्रं पवनाद्यैः सह यथोत्तरं भवति।
> पूर्वस्मात् तन्मात्रात् केवलतो गन्धतः पृथिवी॥ इति।

परे शब्दतन्मात्रादाकाशः, तद्द्वयसहितात् स्पर्शतन्मात्राद् वायुः, तत्त्रयसहिताद रूपतन्मात्रात् तेजः, तच्चतुष्कसहिताद् रसतन्मात्रादापः, तत्पञ्चकसहिताद् गन्धतन्मात्रात् पृथिवीत्याहुः। अपरे शब्दतन्मात्रादाकाशः, तस्मात् स्पर्शतन्मात्रम्, तस्माद् वायुः,

---

१. शैवरहस्यस्य वचनं स्यात्।

तस्माद् रूपतन्मात्रम्, तस्मात् तेजः, तस्माद् रसतन्मात्रम्, तस्मादापः, ताभ्यो गन्धतन्मात्रम्, तस्मात् पृथिवीति ब्रुवत इति। तन्मात्राणां षडध्वव्याप्तिः—णकारो वर्णः। अनादेत्यादि द्वे पदे। अघोरपञ्चार्णौ मन्त्रौ। शब्दतन्मात्रं तत्त्वम्। मण्डलेश्वरं भुवनम्। शान्त्यतीता कला। तकारो वर्णः। धूत्रयादि द्वे पदे। वामदेवपञ्चार्णौ मन्त्रौ। स्पर्शतन्मात्रं तत्त्वम्। कालञ्जरं भुवनम्। शान्त्यतीता कला। थकारो वर्णः। ॐ भुव इत्यादि द्वे पदे। सद्योजातपञ्चार्णौ मन्त्रौ। रूपतन्मात्रं तत्त्वम्। शङ्कुकर्णं भुवनम्। विद्या कला। दकारो वर्णः। अनिधनादि द्वे पदे। अस्त्रपञ्चार्णौ मन्त्रौ। रसतन्मात्रं तत्त्वम्। स्थूलेशं भुवनम्। प्रतिष्ठा कला। धकारो वर्णः। निधनोद्भवेति पदम्। नेत्रपञ्चार्णौ मन्त्रौ। गन्धतन्मात्रं तत्त्वम्। स्थलेश्वरं भुवनम्। निवृत्तिः कलेति ॥ १२ ॥

### वृत्तिः

कानि पुनस्तन्मात्राणीत्यत आह—तन्मात्राणीति।

शब्दस्पर्शादीनां पञ्चानामविशेषा अनभिव्यक्तविशेषाणि सूक्ष्मरूपाणि पञ्चतन्मात्राणीत्युच्यन्ते, यदुक्तम्—"गुणाविशिष्टास्तन्मात्रास्तन्मात्रपदयोजिताः" ( मृ० वि० १२।५ ) इति। ततश्च सूक्ष्मेभ्यः कारणरूपेभ्यः पञ्चभूतान्यस्मदादिबाह्येन्द्रियपरिच्छेद्यगुणत्वात् स्थूलानि जातानीत्याह—भूतानीति। तानि चाकाशादीनि शब्दाद्येकोत्तरगुणानि भवन्ति। शब्दैकगुणमाकाशम्। शब्दस्पर्शगुणो वायुः। शब्दस्पर्शरूपगुणोऽग्निः। शब्दस्पर्शरूपरसगुणमम्भः। शब्दादिगन्धान्तपञ्चका पृथिवी इति। यच्छ्रूयते—"शब्दाद्येकोत्तरगुणमवकाशादिवृत्तिमत्" (मृ० वि० १२।२०) इत्यादि। ननु वैशेषिकादिभिराकाशविशेषगुणः शब्द इष्यते। तन्न, आश्रयादन्यत्राप्युपलब्धेः। यदुक्तम्—"अस्य हेतोः प्रत्यक्षागमविरुद्धत्वेन कालात्ययापदिष्टत्वात्" इति। तथाह्याकाशे तावत्प्रतिशब्दः श्रूयते, वायोः सकसकादिः, अग्नेर्धमधमादिः, चलचलादिकमम्भसि, कटकटादिः पृथिव्यामिति। उक्तं च श्रीमन्मृगेन्द्रे—

इति पञ्चसु शब्दोऽयं स्पर्शो भूतचतुष्टये ॥
अशीतोष्णो महीवाय्वोः शीतोष्णौ वारितेजसोः।
भास्वदग्नौ जले शुक्लं क्षितौ शुक्लाद्यनेकधा ॥
रूपं त्रिषु रसोऽम्भस्सु मधुरः षड्विधः क्षितौ।
गन्धं क्षितावसुरभिः सुरभिश्च मतो बुधैः ॥ इति ॥ ६१ ॥
( वि० १२।२७-२९ )

**अवकाशव्यूहनपाचनसंग्रहधारणं क्रमादेषाम्।**
**व्यापारो भूतानां व्योमादीनां समुद्दिष्टः ॥ ६२ ॥**

### तात्पर्यदीपिका

अथ पञ्चभूतानां व्यापारमाह—अवकाशेति।

अवकाशः स्थानप्रदानं व्योम्नो व्यापारः, भेदकारणत्वात्। व्यूहनं विविधवहनं वायोर्व्यापारः पुञ्जीकरणं वा। पाचनं परिपाककरणं तेजसो व्यापारः। संग्रहः

संश्लेषणमपां व्यापारः, क्लेदनं वा । धारणं सम्भरणं पृथिव्या व्यापार इति । तदुक्तम्—

[1]व्योम्नोऽवकाशदानं व्यूहो वायोर्हविर्भुजः पाकः ।
संग्रहणमपां धारणमुर्व्याः सर्वात्मना वृत्तिः ॥

आकाशमत्र परमं भूतम् । तच्छब्दगुणम्, शब्दतन्मात्रादुत्पन्नत्वात् । यथा मृदुत्पन्नो घटो मृद्गुणः, कार्पासादुत्पन्नस्तन्तुः कार्पासगुणः, एवं शब्दादुत्पन्न आकाशः शब्दगुण इति । तदिदं भूतमवश्याश्रयणीयम्, अन्यथा मूर्तवस्तुनो गमनागमनवृद्धिसंरोहणव्यायामादिसर्वव्यापाराभावप्रसङ्गादिति । तदुक्तं पारमेश्वरे—

आकाशं शब्दतन्मात्रादवकाशत्वलक्षणम् ।
व्यक्तं व्यक्तिकरं विप्र ! पृथक्संस्थानसिद्धये ॥ इति ।
( वि० १९।६-७ )

तदेकममू(र्त?र्तं) मूर्तघटकुम्भमठकूपाद्युपाधिभेदादनेकभेदभिन्नम् । तस्य वर्णमनिर्देश्यं शुद्धस्फटिकसन्निभमिति । अपरे चन्द्रमण्डलाकारं मण्डलमिति । तदुक्तम्—

[2]तद्बाह्ये तु भवेद् व्योम भूतत्त्वे संव्यवस्थितम् ।
अप्रतर्क्यमविज्ञेयं मोक्षस्थानमिवापरम् ॥ इति ।

अस्य षडध्वव्याप्तिः—शकारो वर्णः । पिङ्गपिङ्गेत्यादि द्वे पदे । नेत्रपञ्चार्णौ मन्त्रौ । आकाशात्मकं तत्त्वम् । वस्त्रापदाद्यष्टौ भुवनानि । शान्त्यतीता कला । नीरूपस्पर्शवान् वायुः । स शब्दस्पर्शगुणः । "आकाशाद् वायुः" ( तै० उ० २।१ ) इत्यागमबलात् परमाणोरुत्पत्तिर्बाधिता । स त्रिविधः—शरीरं प्राणो विषयश्चेति । यातनादेः शरीरस्य वायवीयत्वं तदाधिक्यात्, न तावन्मात्रत्वात् । प्राणः शरीरस्थोऽन्तःकरणसामान्यवृत्तिरूपः । तदुक्तम्—

स्वालक्षण्या वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्याः वायवः पञ्च ॥ इति ।
( सां० का० २९ )

इतरो विषयवायुः । तदुक्तं मातङ्गे—

येनाविष्टं जगत् कृत्स्नं स्फुरते वृद्धिमेति च ।....
यत्र बद्धा विमानानां कोटयोऽष्टौ च विंशतिः ।
भ्रमन्ति चक्रवत् सोऽयं वायुः प्राणभृतां वरः ॥ इति ।
( वि० २०।३,४ )

अस्याञ्जननिभं वर्णं वृत्तं षड्बिन्दुमण्डलम् । तदुक्तम्—

[3]तद्बाह्ये वायुतत्त्वं तु भिन्नाञ्जनसमप्रभम् ।
घर्घरारावमुखरं महाबलजनाकुलम् ॥ इति ।

---

१. शैवरहस्यस्य वचनं स्यात् ।

२. चन्द्रज्ञानस्य श्लोकोऽयं प्रतीयते ।

३. चन्द्रज्ञानस्य श्लोकोऽयं स्यात् ।

अस्य षडध्वव्याप्तिः—षकारो वर्णः। शब्दशब्देत्यादि द्वे पदे। कवचपञ्चार्णौ मन्त्रौ। वाय्वात्मकं तत्त्वम्। गयाद्यष्टौ भुवनानि। शान्तिः कला। भास्वररूपं तेजः। तद् द्विविधम्—आभ्यन्तरं बाह्यं चेति। शरीरान्तर्वर्तिभुक्ताहारपाकसाधनमाभ्यन्तरम्, इतरद् बाह्यम्। तच्च द्विविधम्—शरीरं विषय इति। देवर्षीणां देहस्तैजसः,

"तैजसानि शरीराणि भवन्त्यद्भुतकर्मणाम्"[1]

(म० भा० ३।२६१।१३)

इति वचनात्। इतरत् सूर्यसोमवह्निविद्युदादि। तस्य वर्णं विद्युन्निभम्। तदुक्तम्—

[2]तेजस्तत्त्वं तु तद्बाह्ये विद्युत्कोटिसमप्रभम्।
मेघस्तनितनिर्घोषं तेजोरूपं जनाकुलम्॥ इति।

मण्डलं स्वस्तिकलाञ्छितं त्रिकोणम्। अस्य षडध्वव्याप्तिः—शिवशर्वेति पदम्। शिखापञ्चार्णौ मन्त्रौ। तैजसं तत्त्वम्। श्रीशैलाद्यष्टौ भुवनानि। विद्या कला। स्वतो द्रवा आपः शब्दस्पर्शरूपरसगुणाः। तत्र स्वकीयो रसगुणः। त्रयोऽन्ये सङ्करजाः। तदुक्तं पारमेश्वरे—

"रसः स्वाक्योऽत्र बोद्धव्यस्त्रयोऽन्ये संकरोद्भवाः" इति।

(वि० २२।२)

तद् द्विविधम्—शरीरं विषय इति। शरीरं वरुणलोकस्थानम्। विषयभूतमितरत्, भोग्यत्वात्। स्फटिकवर्णं चैतत्। तदुक्तं चन्द्रज्ञाने—

पृथिवीतत्त्वमाक्रम्य जलं दशगुणं बहिः।
ब्रह्माण्डाधारभूतं तु शुद्धस्फटिकसन्निभम्॥ इति।

अस्य षडध्वव्याप्तिः—हकारो वर्णः। सर्वदादि द्वे पदे। शिरःपञ्चार्णौ मन्त्रौ। अबात्मकं तत्त्वम्। अमरेशाद्यष्टौ भुवनानि। प्रतिष्ठा कला। गन्धवती पृथिवी, पञ्चगुणा च। तदुक्तं पारमेश्वरे—

संक्षुब्धाद् गन्धतन्मात्राद् गुणैः पञ्चभिरन्विता॥
स्वाक्योऽस्या गन्ध एवोक्तश्चत्वारोऽन्येऽनुषङ्गजाः।....
सारं तावत् परा काष्ठा नखदन्तास्थिजातयः॥ इत्यादि।

(वि० २३।१-२,५)

सा चेयं शरीरं विषय इति द्विविधा। शरीरं च स्थावरजङ्गमात्मना द्विविधम्। स्थावरं तृणादिवृक्षान्तम्। जङ्गमं चतुर्विधम्—जरायुजमण्डजं स्वेदजमयोनिजं चेति। मनुष्यपशुमृगाणां जरायुजम्। पक्षिसरीसृपाणामण्डजम्। यूकमत्कुणपतङ्गादीनां स्वेदजम्। भुवनेशदेवर्षीणाम् अयोनिजं चेति। ब्रह्माण्डतदन्तर्वर्तिसप्तद्वीपपातालाष्टा-

---

१. भवन्त्यत्रोपपद्यतामिति तत्रत्यः पाठः।

२. चन्द्रज्ञानस्य श्लोकोऽयं स्यात्।

विंशतिकोटिनरकतावत्संख्यविमानादयः पुराणशतेतिहाससिद्धा विषयाः, भोग्यत्वादिति। अण्डात्मकं क्षितितत्त्वं शतकोटियोजनविस्तृतम्। तदुक्तं शैवरहस्ये—

पार्थिवमन्तिमतत्त्वं ब्रह्माण्डात्मकमखण्डमपि तावत्।
विस्तारायामाभ्यामुक्तं　　शतकोटियोजनम्॥ इति।

मतङ्गपारमेश्वरे च—

एवं कोटिशतं पूर्णं पार्थिवं तत्त्वमत्र तु।
अस्माद् दशगुणं तोयं तोयादग्निस्ततोऽनिलः॥
वायोः खं खादहङ्कारस्तस्माच्च परतो महान्।
महतः परतो ज्ञेयं गुणानां त्रितयं मुने॥
गुणत्रयात् प्रधानाख्यं तत्त्वं दशगुणोत्तरम्।
शतोत्तरगुणानि स्युर्मायान्तान्यपि रागतः॥
सहस्रवृद्धं विद्याख्यं लक्षमैशं ततस्ततः।
कोट्या विवर्धितं भूयः शिवतत्त्वं प्रकीर्तितम्॥
अनन्तरमनन्तं स्यादप्रमेयं च शाश्वतम्। इति।
(वि० २४।४१-४५)

एतत् क्षितितत्त्वं स्वर्णनिभम्। तदुक्तं चन्द्रज्ञाने—

सौवर्णं पृथिवीतत्त्वं सूर्यकोटिसमप्रभम्।
कुक्कुटाण्डनिभं चैतद् ब्रह्माण्डं परिकीर्तितम्॥ इति।

चतुरस्रं वज्रलाञ्छितं चन्द्रमण्डलम्।

ब्रह्माद्या देवता ज्ञेयाः क्ष्मादीनां पञ्च वै क्रमात्।
शिवादिपृथिव्यन्तेषु तत्त्वेषु सकलेष्वपि॥
भुवनानि चतुर्विंशत्यधिकं तु शतद्वयम्।

अस्याः षडध्वव्याप्तिः—क्षकारो वर्णः। शिवायों नमो नम इति पदम्। हृदयपञ्चार्णौ मन्त्रौ। पार्थिवं तत्त्वम्। कालाग्न्यादिभद्रकाल्यन्तान्यष्टोत्तरशतं भुवनानि। निवृत्तिः कला इति॥ १३॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायामशुद्धवर्गविनिर्णयः
चतुर्थः परिच्छेदः

●

## वृत्तिः

अथैषां व्यापारमाह—अवकाशेति।

अवकाशदानमाकाशस्य व्यापारः, व्यूहनमवयवघटनं वायोः, पाकोऽग्नेः, संग्रहोऽवष्टम्भोऽम्भसः, धारणं भूमेरिति। अत्र चाकाशस्यावकाशमात्रादन्यत्वमनित्यत्वं चास्माभिर्मृगेन्द्रवृत्तिदीपिकायां विस्तरेण दर्शितमिति ततोऽवधार्यम्॥ ६२॥

**कार्यमिदं दशधा यत् तत्करणैः कार्यते समाविश्य ।**
**करणान्यसमर्थत्वात् कार्यं संश्रित्य चेष्टन्ते ।। ६३ ।।**

### तात्पर्यदीपिका

## अथ पञ्चमः परिच्छेदः

अथैवं गुणसाम्यात्मकात् प्रधानादुत्पन्नानि त्रयोविंशतितत्त्वानि कार्यकरणात्मना द्विविधानि । तत्र तन्मात्रापञ्चकभूतपञ्चकात्मना दशविधं कार्यम् । बाह्याभ्यन्तरभेदेन त्रयोदशविधं करणम् । तयोर्विनियोगं दर्शयति—कार्यमिति ।

अयमभिप्रायः—दशविधं यत् कार्यं तत् करणैः कार्यते स्वीक्रियते, गृह्यत इति यावत् । कार्यं शरीरं सूक्ष्मस्थूलात्मना दशविधम् । समाविश्य संश्रित्य, आश्रयं विना तेषां चेष्टितुमशक्यत्वादित्यर्थः । अथवा कार्यं विषयम् । दशविधमिदम् । तत् करणैर्विषयीक्रियते । समाविश्य सम्बध्येति ॥ १ ॥

### वृत्तिः

अथैषां दशानां कार्यत्वमिन्द्रियाधारत्वं चाह—कार्यमिति ।

कार्यात्मकमेतत् तन्मात्रभूतात्मकं तत्त्वदशकं करणैराविश्य चेष्टां कार्यते । तानि चाविभुत्वात् कार्यमधिष्ठायैव चेष्टन्त इति तत्त्वसंग्रहेऽप्युक्तम्—

एतत्कार्यं दशधा करणैराविश्य कार्यते चेष्टाम् ।
अविभुत्वात् करणानि तु कार्यमधिष्ठाय चेष्टन्ते ॥ इति ।
( त० सं० ४ )

ननु भूतान्येवोभयवादिसिद्धानीन्द्रियाधाराणि भवन्तु, किमन्तर्गडुना निरर्थकेन तन्मात्रपञ्चकेन ? तदयुक्तम्, स्थूलसूक्ष्मतया तानीन्द्रियाधाराणि स्थितानीति श्रूयन्ते । यदुक्तं श्रीमन्मृगेन्द्रे[1]—"तन्मात्राणीह घटवन्महाभूतानि लेपवत्" (म०पा०, वि० १९।२१) इति ॥ ६३ ॥

**पञ्चानामाद्यानां चिद्रूपतयाऽन्वयः परेषां तु ।**
**मायाद्यानां द्वेधा सप्तानां कीर्तितः शैवे ।। ६४ ।।**
**अव्यक्तप्रभृतीनां गुणैश्च सुखदुःखमोहरूपतया ।**
**अन्वय इह निखिलानां दशके ह्यन्ते विशेषोऽयम् ।। ६५ ।।**

### तात्पर्यदीपिका

तदेवं षट्त्रिंशत्तत्त्वानां स्वरूपमभिधाय साम्प्रतं शुद्धानीत्यादिना सूचितं शुद्धत्वं शुद्धाशुद्धत्वमशुद्धत्वं च प्रतिपादयितुं तद्धेतुमाह—पञ्चानामिति ।

---

१. मतङ्गपारमेश्वरे ( वि० १९।२१ ) वचनमिदं दृश्यते, न मृगेन्द्रे ।

अयमभिप्रायः—एकजातिसमावेशोऽन्वयः समानरूपत्वम्, ऐकात्म्यमिति यावत्। तत्र पञ्चानामाद्यानां शिवशक्तिसदाशिवेश्वरविद्यातत्त्वानां चिद्रूपतयाऽन्वयः। तेन कारणेन तेषां शुद्धत्वम्, ज्ञानरूपस्याज्ञानमलसम्बन्धासम्भवात्। मायाकालनियतिकला-विद्यारागपुरुषाणां सप्तानां द्वेधा चिदचिद्रूपतयाऽन्वयः। चिदनुविद्धाचिद्रूपत्वाद् माया-दीनां पुरुषव्यतिरिक्तानां द्वेधा समन्वयः, पुरुषस्य चित्स्वभावस्योपाधिकृताचिद्रूपत्वा-दिति। यथा जपासन्निधानात् स्वतः शुद्धस्य स्फटिकस्य रागः, तथा पुरुषस्याप्युपाधि-धर्माध्यारोपादचिद्रूपत्वमिति। तेन सप्तानां मायादीनां शुद्धाशुद्धत्वमिति। अव्यक्तादीनां बाह्यतया चित्सम्बन्धरहितानां सुखदुःखमोहरूपत्वेन गुणैरन्वयः, तेन तेषां केवलाशुद्धत्व-मिति ॥ २–३ ॥

### वृत्तिः

इत्थं तत्त्वलक्षणमुक्त्वा केषु केषां कथमन्वय इत्यत आह—पञ्चानामिति।

इयं गौः, इयं गौरित्याद्यनुवृत्तिप्रत्ययहेतुरन्वयः। स चास्मिन् शैवे शास्त्रे व्यक्ति-व्यतिरिक्तजात्यनभ्युपगमेऽपि कथञ्चित् सादृश्यमात्रेणोच्यते। ततश्चाद्यानां शुद्धानां पञ्चानां तत्त्वानां सर्वज्ञत्वसर्वकर्तृत्वोपोद्बलनहेतुत्वात् चिद्रूपतया चिदुपकारितयाऽन्वयः। न तु तेषां चैतन्याभ्युपगमो युक्तः, अचेतनत्वस्य प्रागेव साधितत्वात्। परेषां त्वशुद्धानां मायाद्यानां पुंस्त्वान्तानां किञ्चिज्ज्ञत्वाद्युपोद्बलनहेतुत्वाच्चिदुपकारितया सूक्ष्मदेहद्वारेण गुणसम्बन्धात् सुखदुःखमोहजनकतया च द्विविधश्चिदचिदन्वयः ॥ ६४ ॥

अव्यक्तेति। प्रकृत्यादिपृथिव्यन्तानां गुणसम्बन्धात् सुखदुःखमोहरूपतयाऽन्वयः। दशके ह्यन्त इति ॥ ६५ ॥

**शब्दादेर्गुणसाम्ये तुल्यत्वेनान्वयोऽत्र विज्ञेयः।**
**अङ्गाङ्गिभावविहितो भवति विशेषस्तु केषाञ्चित् ॥ ६६ ॥**

### तात्पर्यदीपिका

अन्ते दशके भूततन्मात्रात्मके वक्ष्यमाणो यो विशेषः, स किंलक्षण इत्यत आह—शब्दादेरिति।

शब्दादीनां सगुणत्वसाम्ये सत्यप्यसमतया सम्बन्धो वेदितव्यः। अङ्गाङ्गिभावः कार्यकारणभावः, तेन विहितः प्रतिपन्नो भावसर्गाख्यो विशेषः केषाञ्चित् कार्यरूपाणां कालाद्यवन्यन्तानां विज्ञेय इति। कार्याणां स्वसाधारणकारणेषु सत्त्वं भावसर्गः। तदुक्तं शैवरहस्ये—

प्रातिस्विकेषु हेतुषु तत्तत्तत्त्वात्मकस्य सूक्ष्मस्य।
कार्यस्यावस्थानं भावः सत्कार्यवादिमते ॥ इति।

सोऽयं भावसर्गः कार्यकारणभावेनावगम्यते। तथाहि—कार्यकारणभावसम्बन्धो नासति सम्बन्ध्यन्तरे कार्ये सम्भवतीति, असतः खरविषाणादेरदर्शनात्। विमतानि कार्याणि कारणेषु सन्त्येव, उत्पत्तिमत्त्वात्। यत् कारणेष्वविद्यमानं न तदुत्पत्तिमत्, यथा

खरविषाणम्, न च तथैतानि नोत्पत्तिमन्ति, तस्मात् कारणेषु सन्त्येवेति। तथा उपादानकारणस्वीकाराच्च। यदि तिलेषु तैलं न स्यात्, तर्हि तैलार्थिनः सिकतास्विव तिलेष्वपि स्वीकारो न स्यात्, न तदस्तीति तिलेषु तैलसद्भावसिद्धिः। एतस्मादेव कारणात् सर्वसद्भावाच्च सदेव कार्यम्। यदि कारणेष्वसत् कार्यं जायेत, तर्हि तस्मादेवाखिलकार्यसंभवप्रसङ्गः, असत्त्वस्य सर्वत्राविशेषात्। न च तदस्तीति सदेवोत्पद्यत इति। शक्तात् कारणाच्छक्यकार्यजननाच्च। यदि कारणेष्वविद्यमानं कार्यं जायेत, तर्ह्यशक्तादपि तदुद्भवप्रसङ्गः, असत्त्वे शक्तिकल्पनावैयर्थ्यात्। तथा शक्तेः कार्यसूक्ष्मावस्थारूपत्वाच्च सत् कार्यम्। तथा यद्यसत् कार्यम्, अशक्यमपि तदा कार्यं जायेत, कारणस्य शक्तत्वात्। न चासति कार्ये तत्रैव शक्तिरिति वक्तुं न शक्यते, असत्त्वेनाविशेषादिति। कारणत्वाच्च सत् कार्यम्। यदि कार्यं कारणे न स्यात् तदास्य कारणत्वमपि न स्यात्, इतरसाधारण्यात्। तद् दृष्टमतः सत् कार्यमिति। तदुक्तम्—

असदकरणादुपादानग्रहणात् सर्वसंभवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम्॥ इति।
( सां० का० ९ )

न च सत्कार्यवादे कारणवैयर्थ्यप्रसङ्ग इति वाच्यम्, कारणानामभिव्यक्त्यर्थत्वात्। यथावघातदोहनापीडनैस्तण्डुलक्षीरतैलानामुत्पत्तिः, तथा कालाद्यवन्यन्ततत्त्वानां तद्विकारभूतघटादीनां चोद्भव इति। विनाशश्च तेषां तिरोभाव एव, नासत्त्वमिति। न चाभिव्यक्तेरभिव्यक्त्यन्तराभ्युपगमेऽनवस्थेति वाच्यम्, उत्पत्तेरपि समानत्वात्। तथा पटोत्पत्तिः स्वकारणसमवायः स्वसत्तासमवायो वा नोत्पद्यते, तथापि तदर्थानि कारकाणि व्यापार्यन्ते। एवं सत एव घटादेः स्वत एवाविर्भावाय कारणापेक्षेति युक्तम्। तदुक्तं भगवता विष्णुना—

"नासतो विद्यते भावो नाभावो विद्यते सतः" इति।
( भ० गी० २।१६ )

श्रीविष्णुपुराणे च—

तदेतदक्षयं नित्यं जगुर्मुनिवराखिलम्।
आविर्भावतिरोभावजन्मनाशविकल्पवत्॥ ( १।२२।६० )

अथवाऽङ्गाङ्गिभावविहितः कल्पितो विशेषः, हेतुमत्त्वा(न्नि?ऽनि)त्य(त्वात्?ऽत्वाऽ)-व्यापित्वसक्रियत्वानेकत्वाश्रितत्वलिङ्गत्वसावयवत्वपरतन्त्रत्वादिधर्मः कालाद्यवन्यन्तानां व्यक्तानां विद्यत इति त्रिगुणत्वाविवेकित्वविषयत्वसामान्यत्वाचेतनत्वप्रसवधर्मित्वान्यव्यक्ताख्यस्य मायातत्त्वस्यापि सन्ति। चिन्मात्रस्य शिवस्य पुंसो हेतुमत्त्वादिकं त्रिगुणत्वादिकं च नास्ति, तयोः कार्यकारणभावविहितयोः कार्यकारणत्वशून्ये पुरुषेऽसंभवादिति केषाञ्चिदेवायं धर्म इति। तदुक्तम्—

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥

त्रिगुणमविवेकि विषयं सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ इति ।
( सां० का० १०-११ )

अथवा अङ्गमचेतनं चेतनार्थत्वात् । तस्याङ्गी चेतनः शेषित्वात् तस्य । तयोर्भावः सम्बन्धः । तद्विपरीतो विशेष इतरेतराध्यासोऽङ्गाङ्गिभावविहितो विशेष इति । तदुक्तम्—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ इति ।
( सां० का० २० )

अथवा अङ्गाङ्गिभावः प्रधानाप्रधानभावः । बुद्धिः प्रधानभूता, पुरुषस्यातिसन्निकृष्टत्वात् तस्यास्तेनाङ्गित्वम् । बाह्येन्द्रियाण्यङ्गान्यप्रधानानि, तत्साध्यत्वात् । तयोर्भावविहितो विशेषः केषाञ्चित् कारणानामस्तीति । तदुक्तम्—

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥
सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ इति ।
( सां० का० ३६-३७ )

तस्मादेव तत्त्वानामुत्पत्तिरिति ॥ ४ ॥

### वृत्तिः

कोऽसावित्याह—शब्दादीति ।

तन्मात्रभूतवर्गयोः शब्दादिगुणसाम्ये कार्यशब्दवाच्यतया तुल्यत्वेन च द्विविधोऽन्वयो विज्ञेयः । एषां च सर्वेषां तत्त्वानां मध्यात् केषाञ्चिद् बिन्दुमायादीनां कारणत्वेनाङ्गितया शक्त्यादीनां कार्यत्वेनाङ्गतया च विशेषो भवतीत्याह—अङ्गाङ्गीति ॥ ६६ ॥

**तत्त्वानां स्थितिरेषा कथिता सृष्टिक्रमेण सर्वेषाम् ।**
**प्रतिलोमं परिणामाद् मायायां तानि लीयन्ते ॥ ६७ ॥**

### तात्पर्यदीपिका

एवं तत्त्वानां सृष्टिक्रमं स्थितिं चोक्त्वा संहारक्रममाह—तत्त्वानामिति ।

एतेषां तत्त्वानामुक्तेन प्रकारेण सृष्टिः, स्वे स्वे कारणे स्थितिश्च कथिता । परिणामप्रतिलोमेन मायायां तानि स्वे स्वे कारणे लयं प्राप्य लीयन्त इति ॥ ५ ॥

### वृत्तिः

अथ तत्त्वलक्षणमुपसंहरति—तत्त्वानामिति ।

संहारमाह—प्रतिलोममिति । पृथिव्यादेस्तत्त्वगणस्य स्वकारणलयक्रमेण मायायामुपसंहारः ॥ ६७ ॥

**मायायाः परतोऽध्वा शुद्धः शक्तौ निलीयते सकलः।**
**परमात्मनि सापि शिवे तिष्ठत्यविभागमापन्ना ।। ६८ ।।**

### तात्पर्यदीपिका

मायायाः परस्ताद् यानि तत्त्वानि तेषां कुत्र लय इत्याशङ्क्याह—मायाया इति।

मायायाः परतो यस्तत्त्वाध्वा शुद्धाख्यः, स सर्वोऽपि शक्तितत्त्वे लयं याति। सा शक्तिः शिवेनैक्यं प्राप्य तिष्ठति निलीयत इति, "आनीदवातं स्वधया तदेकम्" (ऋ० १०।१२९।२) इति श्रुतेस्तदवगमात् ॥ ६ ॥

### वृत्तिः

मायाया इति। शुद्धविद्यादेस्तु शक्तौ महामायाख्यायाम्। सकलः कालोपबृंहितोऽध्वा शुद्धः संलीयते। तदुक्तमस्माभिः—

गन्धे भूः सलिलं रसे हुतवहो रूपे मरुत् स्पर्शने
शब्दे स्यात् खमहङ्कृतौ पुनरिमास्तन्मात्रिकास्तामसे।
कर्माक्षाणि च राजसे सह मनोबुद्धीन्द्रियैः सात्त्विके
बुद्धौ तच्च गुणेषु सो गुणगणोऽव्यक्ते लयं गच्छति ॥

तद्रागविद्ये च कलां प्रयान्ति
पुंस्त्वं च कालो नियतिः कला च।
मायासु विद्येशमसौ सदेशं
स शक्तिमेषा शिवमेष बिन्दुः ॥ इति।

तत्र च शिवशब्देन शान्तिकलामस्तकस्थं शान्त्यतीतभुवनमुच्यते। तदानीं च परमात्मनीति सा महामाया, अपिशब्दाद् मलावृतात्मनि चिताम्। माया च शिवे निमित्तभूते अधिष्ठातरि सति परं केवलमात्मन्येव कार्यरूपे विभागरहिता कारणस्वरूपैव तिष्ठति, न तु शिवेऽविभागमापन्ना समवायं प्राप्नोतीति व्याख्येयम्, तस्याश्चित्समवाये परिणामित्वादिदोषप्रसङ्गात्। तदुक्तं श्रीमन्मृगेन्द्रे—

स्वापेऽप्यास्ते बोधयन् बोधयोग्यान्
रोध्यान् रुन्धन् पाचयन् कर्मिकर्म।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्
पश्यन् सर्वं यद्यथा वस्तुजातम् ॥ इति।

( वि० ४।१५ )

तच्च सात्मकमाश्रित्य विश्वमायावतिष्ठते।
भविनां भवखिन्नानां सर्वभूतहितो यतः ॥ इति ॥ ६८ ॥

( वि० ४।१३-१४ )

**माया पुरुषः शिव इत्येतत्त्रितयं महार्थसंहारे ।**
**अवशिष्यते पुनस्तत्प्रवर्तते पूर्ववत् सृष्टौ ॥ ६९ ॥**

### तात्पर्यदीपिका

ननु संहारदशायां सकलस्य विनाशेन पुनरुत्पादासंभव इत्याशङ्क्याह--मायेति ।

महार्थानां कालाद्यवन्यन्ततत्त्वानां शुद्धानां च विद्येशसदाशिवानां संहारे माया-पुरुषशिवानां जगत्कारणानां सद्भावात् पुनरपि जगदुत्पत्तिः संभवत्येव पूर्ववदिति ॥ ७ ॥

### वृत्तिः

ततश्च—मायेति ।

अयं त्रैलोक्यान्तस्य मध्यमस्य च गुणान्तस्य प्रलयस्य सद्भावान्महाप्रलयो ह्यशेषसंहारः, तत्र विद्येशानामपि मोक्षप्राप्तेः । मायादिकं त्रितयमवशिष्यते । तत्र मायाशब्देन तन्त्रोच्चारान्मायामहामायात्मकमुपादानद्वयमुच्यते । पुरुषशब्देन जात्येक-वचनेन मलयुक्ताः सर्वे बद्धात्मानः, शिवशब्देन समवेतशक्तियुक्तः शिवः, मुक्तात्मानश्च । पुनः संहारान्ते तच्छिवादिवस्तुसृष्ट्यर्थं प्रागुक्तवत् प्रवर्तते ॥ ६९ ॥

**संसारे खिन्नानां निखिलानां प्राणिनां प्रभुः कृपया ।**
**कुरुते महार्थसंहृतिमेतेषामेव विश्रान्त्यै ॥७०॥**

### तात्पर्यदीपिका

ननु तर्हि किं प्रलयेनेत्याशङ्क्याह—संसार इति ।

अनवरतमुपजायमानशरीरेन्द्रियविषयसंपर्कजातसुखदुःखानुभवव्यापारसंजातश्र-माणां प्राणिनां विश्रान्त्यर्थं करुणानुन्नहृदयः प्रभुर्महार्थसंहारं करोतीति । तदुक्तम्—

कार्यव्यासक्तचित्तानां विश्रान्त्यै रजनी यथा ।
संहारं भवखिन्नानां कृपया कुरुते शिवः ॥ इति ॥ ८ ॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायां सामान्यवादः
पञ्चमः परिच्छेदः ॥

### वृत्तिः

अथास्य महासंहारस्य प्रयोजनमाह—संसार इति ॥ ७० ॥

**कर्मविपाचनहेतोः पशुदयया पुनरपीह परमेशः ।**
**सृष्टिं विधाय तेषां कर्म विपाचयति देहभृताम् ॥७१॥**

### तात्पर्यदीपिका

### अथ षष्ठः परिच्छेदः

अथ तर्हि पुनः सर्गकरणमयुक्तम्, विश्रामस्यैव पुरुषार्थत्वादित्याशङ्‌क्याह—कर्मेति । अयमभिप्रायः—निःशेषदुःखनिवृत्तिनित्यनिरतिशयानन्दात्मकापवर्गविहीनान् पशुतयाऽनधिगतपुरुषार्थान् कर्मबद्धान् दयार्हान् पशूनवलोकयन् भगवान् भोगेन कर्मबन्धविनिवृत्तये तत्साधनदेहेन्द्रियविषयसृष्टिं विधत्ते । तेषां कर्मबन्धविनिवृत्तिश्च मोक्षार्थेति मोक्षार्था सृष्टिरुपपन्नेत्यर्थः ॥ १ ॥

### वृत्तिः

कर्मेति । विश्रमायाखिलात्मनां कर्मणां च पाकार्थम्, उपलक्षणत्वादस्यानवरतमनन्तशरीरादिजननेनापचितशक्तेर्मायायाश्च सामर्थ्योत्पादनार्थं संहार इत्यर्थः । सृष्टिरपि मोक्षायेत्याह—पशुदययेति । कर्म विपाचयति विशेषेण पाचयति, प्रागर्जितानि कर्माणि पाकक्रमेण कर्मार्थिं भोग्यतयोपस्थापयतीत्यर्थः ॥ ७१ ॥

**भोगेन कर्मपाकं विधाय दीक्षाख्यया शक्त्या ।**
**मोचयति पशूनखिलान् करुणैकनिधिः सदा शम्भुः ॥७२॥**

### तात्पर्यदीपिका

ननु केन तर्हि कर्मपाकः, कथं वा मोक्षसंभव इत्यत आह—भोगेनेति ।

अयमाशयः—भोगेन कर्मणः पाकं विनाशं कुर्वन् भगवान् कालं प्रतीक्षमाणः कर्मसाम्ये सति शक्तिं मोचिकां पाचयित्वाऽऽचार्यो भूत्वा दीक्षां विधाय अपवर्गार्हान् पशूनखिलान् सर्वदा सदा परमकारुणिकः शम्भुर्मोचयतीति । ननु न मोक्षाख्यः पुरुषार्थोऽस्ति, नापि स्वर्गाख्यः, तयोः सद्भावे प्रमाणाभावात् । न चानुमानागमाभ्यां तयोः सद्भावसिद्धिरिति वाच्यम्, अनुमानागमयोरप्रामाण्यात् । तत्रानुमानस्याप्रामाण्यं व्याप्तिग्रहणसापेक्षस्यानुमानस्य तदसंभवात् । स च देशान्तरकालान्तरगततयाऽनध्यक्षयोः साध्यसाधनयोः, साहित्यनियमात्मकस्याविनाभावस्याध्यक्षतो ग्रहणासंभवात् । न चानुमानात् तदविनाभावग्रहणमिति वाच्यम्, अन्योन्याश्रयप्रसङ्गात्–व्याप्तिग्रहणे सत्यनुमानप्रवृत्तिः, अनुमानप्रवृत्तौ व्याप्तिग्रहणमिति । न चानुमानान्तरेण व्याप्तिग्रहणम्, अनवस्थाप्रसङ्गात् । न चागमाद् व्याप्तिग्रहणम्, तस्य सन्दिग्धत्वात् तदनुपलम्भाच्चेति । न चागृहीताविनाभावात् साधनात् साध्यसिद्धिरिति वाच्यम्, अतिप्रसङ्गात् । तस्मात् प्रत्यक्षमेव प्रमाणम् । तच्च स्वर्गापवर्गौ नावगमयतीति काम एव मुख्यः पुरुषार्थः, अर्थश्च तत्साधनत्वादिति । तदुक्तम्—"वृत्तिसाध्या प्रीतिः पुरुषार्थः, स काम एव नान्यो मोक्षादिः, दृष्टहान्यदृष्टकल्पनाप्रसङ्गात्" इति । तथा पृथिव्यप्तेजोवायव एव तत्त्वानि,

शरीरेन्द्रियविषयाणां तत्समुदायरूपतया तत्त्वान्तराभावात्। न च ज्ञानं तत्त्वान्तरम्, तस्य रजनीचूर्णसम्बन्धादुपजायमानरागवद् भूतसमवायजन्यतया तद्धर्मत्वनिश्चयादिति चार्वाकः। तदयुक्तम्, अनुमानागमाप्रामाण्ये सन्दिग्धं विपर्यस्तं वा प्रतिपाद्यं प्रति प्रतिपादकस्य शब्दप्रयोगासम्भवप्रसङ्गात्। तथाहि—अस्याज्ञानं सन्देहो विपर्यासो वा विद्यत इति प्रतिपाद्यशब्दादिना लिङ्गेनानुमाय मयोच्चारितेन शब्देनास्य यथार्थप्रतिपत्तिर्भविष्यति। सा तदज्ञानादिकं निर्णुदस्यतीत्याद्यनुमानपूर्वको हि परं प्रतिपाद्यं प्रति प्रतिपादकस्य शब्दप्रयोगः। अतत्पूर्वकत्वे शब्दप्रयोक्तुरुन्मत्तवदुपेक्षणीयताप्रसङ्गेन च परगताज्ञानसन्देहविपर्यासाः प्रत्यक्षतोऽवगन्तुं शक्यन्ते। अतोऽनिच्छतापि चार्वाकेणानुमानस्य चागमस्य च प्रामाण्यमभ्युपेतव्यम्, शब्दस्याप्रमासाधकत्वे प्रयोगासम्भवप्रसङ्गात्। न च व्याप्तिग्रहणासंभवादनुमानाप्रामाण्यम्, सामान्योपग्राहकवशादखिलव्यक्तिषु सम्बन्धग्रहणवत् तदुपपत्तेः। तथाहि—व्याप्तिग्रहणवेलायामल्पत्वादिविशेषं परित्यज्य धूमजातीयमग्निजातीयं न व्यभिचरतीति सामान्योपग्राहकवशादजाताऽतिवृत्तप्रत्युत्पन्नाखिलव्यक्तीनां तत्तज्जातीयतया तथा व्याप्तिग्रहणे व्याप्तेर्गृहीतत्वान्न व्याप्तिग्रहणासंभव इति सामान्ययोरेव व्याप्तिग्रहणम्, अधिकरणसिद्धान्तन्यायेन विशेषसिद्धेरिति तदपास्तम्—

> विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात्।
> तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः॥ इति।

यतो व्याप्तिग्रहणादिसंभवस्योक्तत्वात्। तथा भोजनादिसर्वक्रियासंभवश्च, तासामनुमानपूर्वकत्वात्। किञ्च, अवगताविनाभावस्य पुरुषस्य धूमदर्शनादग्निज्ञानमुपलभ्यते। तत् किंरूपमास्थेयम्? न तावद् विपर्ययरूपम्, बाधकाभावात्, प्रत्यक्षसम्भवाच्च। नापि विकल्परूपम्, "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" (यो० सू० १।९) इत्युक्तलक्षणाभावात्। नापि निद्रा, सुषुप्त्यभावात्। न च स्मृतिरूपम्, धूमादिसंभवसंस्कारमात्रजन्यत्वाभावात्, इदन्तया भासमानत्वात्, तथाविधपूर्वानुभवाभावाच्चेति। नापि संशयरूपम्, अनवधारणज्ञानं संशय इत्युक्तसंशयलक्षणाभावात्। तस्मादेतज्ज्ञानं प्रमाणमेव। न च तत् प्रत्यक्षम्, अर्थेन्द्रियसंप्रयोगाजन्यत्वात्। न चाग्नेरर्थस्य चक्षुरादिना सम्प्रयोगोऽस्ति, आवृतत्वादित्यग्निज्ञानकारणधूमज्ञाननिष्पादनार्थं चक्षुर्विज्ञानमग्निज्ञानार्थम्, स्वर्गादिज्ञानकारणशब्दज्ञानार्थश्रोत्रव्यापारवदिति। न चानुमितानुमानादौ चक्षुराद्यपेक्षेति प्रमाणान्तरमेवानुमानाख्यमिति सिद्धमनुमानमिति। आगमप्रामाण्यं च पूर्वमुपवर्णितमित्यलमतिप्रसङ्गेन।

तथाहि—शरीरेन्द्रियवृत्तिसङ्घातः परार्थः, भोगसाधनत्वात्; भोगसाधनं च जडत्वात्, जडं च कार्यत्वात्, गृहक्षेत्रादिवदिति भूतव्यतिरिक्तः पर आत्मा सिद्धः। तस्य नित्यत्वम्, शरीरनाशेऽप्यविनाशात्। स च जातिस्मृत्यादिनाऽवगम्यते। तस्य मोक्षो बद्धत्वात्। अतो मोक्षस्य कादाचित्कतया कारणापेक्षा। कारणं च हिंसालक्षणधर्माधर्मसंयुतात्—

"अहिंस्यदेहाद्युद्भूतिर्मोक्षमाहुर्दिगम्बराः" इति।

तथाहि—नित्यतायां ग्रहः, अनित्यत्वे च द्वेष इत्युभयपरिहारार्थानेकान्तभावना। तथाहि—घटादिर्मृदादिरूपेण नित्यः, सर्वावस्थासूपलम्भात्। घटादिरूपतयाऽनित्यः, तदपायात्। एवं स्वदेशकालकारणाधारतया सत्त्वमर्थानाम्, अन्यदेशादिष्वसत्त्वम्, स्वकार्ये कर्तृत्वं कार्यान्तरे चाकर्तृत्वम्, स्वशब्देनाभिधेयत्वमन्यशब्देनानभिधेयत्वम्, इत्याद्यूह्यमर्थानामनेकान्तत्वमिति दिगम्बराः।

तदिदमनुपपन्नम्, अनेकान्तभावनाया मिथ्यारूपतयाऽपवर्गसाधनत्वासंभवात्। तच्च स्वदेशादिषु सत्त्वादिनियतरूपस्यैवोपलम्भात्। तथा घटादेश्च कार्यस्य नित्यत्वाद् मृदादेः कारणस्य च नियमेन नित्यत्वाच्च नोभयात्मकत्वम्। एवं स्वशब्देनाभिधेयत्वमेवान्यशब्देन चाभिधेयत्वमेवेति नानेकान्तत्वमिति। या चेयमुभयरूपता प्रोक्ता तत्र विवादः, इतरेतराभावाभ्युपगमेनास्माभिरप्यभ्युपगतत्वात्। यदि च स्वदेशादिष्वप्यसत्त्वादिकं स्यात्, तदा स्यादर्थानामनेकान्तता। न च तदस्ति। तस्मान्नानेकान्तत्वमर्थानामिति मिथ्याभूतत्वान्नापवर्गकारणमनेकान्तज्ञानमिति। न चानेकान्तताभावनावशाद् विशिष्टप्रदेशेऽक्षयशरीरादिप्राप्तौ प्रमाणमस्ति। न च तेषामागमः प्रमाणम्, तस्य प्रमाणमूलत्वाभावात्। न च प्रत्यक्षानुमाननित्यागमाऽमूलानामनित्यागमशब्दानां प्रामाण्यं संभवतीत्युक्तम्। न च शरीरेन्द्रियविषयाणां कार्याणां नित्यत्वं संभवति, अतिप्रसङ्गात्। यच्च शरीरपरिमितस्यात्मनः शरीरनाशे नक्षत्रादिवदवस्थानं निःश्रेयसमित्यार्हतैकदेशीयैरुक्तम्, तदपि न चतुरस्रम्, देहपरिमितस्यात्मनो देहवन्मूर्ततयाऽनित्यत्वप्रसङ्गात्। तथा गजशरीरावस्थितस्य मशकशरीरप्रवेशे मृदङ्गपिहितप्रदीपप्रभाया घटपिधान इव सङ्कोचविकासाश्रयणेन परिणामित्वप्रसङ्गः।

तस्माद् रूपरसगन्धस्पर्शशब्द[वि]ज्ञानात्मकेषु षट्पदार्थेषु यद् दुःखसमुदयनिरोधमार्गाख्यं पदार्थचतुष्कं तस्मिन् क्षणिकादिभावनाऽपवर्गकारणम्, शुद्धचित्तसन्तानोत्पत्तिरपवर्ग इति सौगताः। दुःखं रूपादिस्कन्धपञ्चकम्। तच्च रूपस्कन्धो वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्धो विज्ञानस्कन्धश्चेति स्कन्धपञ्चकम्। तत्र वर्णगन्धरसस्पर्शात्मना चतुर्विधो रूपस्कन्धः। सुखा वेदना दुःखा वेदना मध्यमा वेदनेति त्रिविधो वेदनास्कन्धः। चक्षुःसंज्ञा जिह्वासंज्ञा श्रोत्रसंज्ञा घ्राणसंज्ञा स्पर्शसंज्ञा [मनःसंज्ञा] इति षट् प्रकारःसंज्ञास्कन्धः। संस्कारस्कन्धो द्विप्रकारः, कुशलाकुशलभेदात्। तत्राकुशलो दशविधो मनोवाक्कायभेदैः। तत्र मानसा मिथ्यादर्शनाभिलाषप्रद्वेषास्त्रयः। वाचिका अनृतवचनपैशुन्यपरनिन्दाविप्रलम्भवचनानि चत्वारि। कायिका हिंसापरस्वहरणमैथुनयोगास्त्रय इत्यकुशलाः। कुशलाश्च दश विपरीताः। एवं संस्कारस्कन्धो विंशतिप्रकारः। चक्षुर्विज्ञानं श्रोत्रविज्ञानं घ्राणविज्ञानं स्पर्शविज्ञानं जिह्वाविज्ञानं मनोविज्ञानं चेति षट्प्रकारो विज्ञानस्कन्धः। इत्येष दुःखकारणत्वाद् दुःखमिश्रत्वात् सुखमपि दुःखम्। तस्य कारणं समुदयः। तयोर्निरोधो विनाशः। तस्योपायो मार्गः। क्षणिकादिभावेनैव क्षणिकमिति भावनावशाद् रागादिनिवृत्तिः, ममेदमिति सम्बन्धाभावात्। तथा निरात्मकभावनातश्च रागादिनिवृत्तिः, स्वपरसम्बन्धाभावात्। एवं सर्वं शून्यमिति भावनया रागादिनिवृत्तिः, असत्त्वात्। नहि गगनकुसुमवन्ध्यासुतादौ रागादिसम्भव इति

शुद्धचित्तसन्तत्युद्भवोपपत्तिरिति वैभाषिकसौत्रान्तिकज्ञानाद्वैतवादिनो बौद्धाः। शुद्धचित्तसन्ततेरपि विनाशोऽपवर्ग इति शून्यवादिनः।

तदिदमनुपपन्नम्, क्षणिकादिभावनानां मिथ्यारूपतया निःश्रेयससाधनत्वासम्भवात्। न च सर्वे भावाः क्षणिकाः सत्त्वाद् विज्ञानवद् इत्यनुमानात् पदार्थानां रूपरसगन्धस्पर्शविज्ञानानां क्षणिकत्वसिद्धेः क्षणिकत्वभावनाया न मिथ्यात्वमिति वाच्यम्, तस्याग्न्यनुष्णतासाधककृतकत्वानुमानवत् स एवायं घट इत्यादिप्रत्यक्षबाधयाऽप्रामाण्यात्। न च स एवायं नखः, त एवामी केशा इत्यादिप्रत्यभिज्ञावदस्यापि न प्रामाण्यमिति वाच्यम्, अस्य बाधकाभावात्। न चानेनैवानुमानेनास्य बाध इति वाच्यम्, अनुमानस्य प्रत्यक्षमूलस्य स्वमूलबाधकत्वासम्भवात्। न चानुष्णतासाधकेनोष्णताग्राहिप्रत्यक्षं बाध्यत इति। तथा विज्ञानस्य त्रिक्षणस्थायितया क्षणिकत्वाभावात् साध्यविकलो दृष्टान्त इति।

नन्वक्षणिकस्यार्थक्रियाकारित्वलक्षणसत्त्वासम्भवादुपलभ्यमानं सत्त्वं पृथिव्यादिक्षणिकतां साधयेत्। तथाहि—क्षणिको यदि स्वनिष्पाद्यं सर्वं युगपदेव करोति, न ह्युत्तरादिक्षणेष्वपि, तदैव सर्वं ज्ञायेत, तत्कारणस्य विद्यमानत्वात्। नहि कारणे सति कार्यानुत्पत्तिर्घटत इति। नापि क्रमेण, प्रथमक्षण एवोत्तरादिक्षणभाविनां कार्याणां कारणभूतस्यास्य सद्भावेन विलम्बनासम्भवात्। न च सहकारिप्राप्त्यनुरूपेण कार्यजननमिति वाच्यम्, सहकारिणा क्रियमाणस्य कारणातिशयविनाशस्य वा कारणाद्भिन्नत्वे तदितरविश्ववदुपेक्ष्यत्वात्। तथाऽनतिशयनिवृत्त्यतिशयाधानहेतुत्वे सहकार्यपेक्षकारणभिन्नत्वेऽतदुत्पत्तौ तदुत्पादप्रसङ्गः। अतिशयाधानानतिशयानिवर्तकत्वे तदितरविश्ववत् सहकारिणामप्युपेक्ष्यत्वप्रसङ्ग इति। तस्मादर्थक्रियाकारित्वलक्षणसत्त्वविरहादसन्तोऽक्षणिका इति। अत्र प्रयोगः—यत् क्रमाक्रमाभ्यामजनकं तन्नास्ति यथा खरविषाणम्, क्रमाक्रमाभ्यामजनकाश्चाक्षणिका इति, तस्मात् पृथिव्यादिषु पक्षभूतेषूपलभ्यमानं सत्त्वं विपक्षे वृत्त्यसम्भवात् सपक्षाभावेऽपि क्षणिकत्वं साधयतीति। नैवम्, अक्षणिकानामपि क्रमाक्रमाभ्यां सहकारिप्राप्तौ तथैव जनकत्वोपपत्तेः। ननूक्तं सहकारिणातिशयाधानं तदनतिशयनिवृत्तिर्वेति विकल्पोक्तं सत्त्वादनुपपन्नम्, अस्यैवातिशयत्वात्। यद् यस्य सद्भावे कार्यं करोति, स तस्यातिशय इति मृदादिकारणं चक्रादिसहकारिसमवधाने घटादिकार्यजनकमुपलब्धमिति तत् तदतिशय इति॥ २॥

## वृत्तिः

ततश्च क्रमेण मलपरिपाके जाते सति—भोगेनेति।

मलपरिपाके सति कर्मणां युगपत् पाकाद् दीक्षाख्यया स्वशक्त्या आचार्यव्यापाराभिव्यक्तया केवलया वा। युगपदनेकभोगभोजनात्मककर्मनाशं विधाय मलादिभ्यः पशून् मोचयतीत्यर्थः। यदुक्तं श्रीमत्किरणे—

अनेकभविकं कर्म दग्धबीजमिवाणुभिः।
भविष्यदपि संरुद्धं येनेदं तद्धि भोगदम्॥ (वि० ६।१९)

अत एव सद्योनिर्वाणदीक्षायामारब्धकार्यस्य वर्तमानशरीरारम्भकस्य कर्मणोऽपि क्षय इति सिद्धम्। दीक्षायाश्च नैष्ठिक्यादिको भेदः श्रीमन्मतङ्गादेरवधेयः॥ ७२॥

**आ प्रलयं यत् तिष्ठति सर्वेषां भोगदायि भूतानाम् ।**
**तत् तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः ।। ७३ ।।**

### तात्पर्यदीपिका

ननु न षट्त्रिंशत् तत्त्वानीति शक्यते वक्तुम्, शरीरघटादेरपि सद्भावादित्याशङ्क्याह—आ प्रलयमिति ।

अयमभिप्रायः—शरीरघटादेस्तत्त्वलक्षणाभावान्न तत्सद्भावेन तत्त्वाधिक्यम् । तथाहि—यद् आ प्रलयावस्थायि सर्वभूतभोगकारणं तत्त्वमिति तत्त्वलक्षणं न शरीरघटादेरस्ति, तद्देशतत्कालव्याप्त्यभावात् । तथा शरीरघटादीनां पृथिव्यादितत्त्ववृत्तिरूपतया बुद्धिवृत्तिरूपाध्यवसायादिवत् तत्त्वान्तरत्वासम्भवाच्च न तत्त्वाधिक्यमिति । तदुक्तं गुरुदेवाचार्येण—

ततत्वात् सन्ततत्वाच्च तत्त्वानीति ततो विदुः ।
ततत्वं देशतो व्याप्तिः सन्ततत्वं च कालतः ।।
लक्षादियोजनव्यापि तत्त्वमा प्रलयात् स्थितम् ।
अन्यथा स्तम्भकुम्भादिरपि तत्त्वं प्रसज्यते ।। इति ।।३।।

### वृत्तिः

यद्येवं शरीरादेः कथं न तत्त्वतया परिगणनमत आह—आ प्रलयमिति ।

अतः साक्षात् परम्परया वा भोगदायकमा प्रलयावस्थायि च यत् तत् तत्त्वमित्युक्तम् । अत एवास्माभिः संहारक्रमेण तत्त्वानि प्रदर्शितानि । यथा—

भूवार्यग्निमरुत्खगन्धरसरूपस्पर्शब्दान् भगं
पायुपादकरास्यनासिरसना दृक्त्वक्श्रुतिर्मानसम् ।
गर्वं धीगुणमत्र रागपुरुषान् विद्यानियत्यौ कलां
कालं मोहकबोधकेश्वरसदेशच्छक्तिमीडे शिवम् ।। इति ।

अत्र च रागपुरुषानिति क्रमवैपरीत्येन पुंसो नाध्वत्वमिति दर्शितम् ।।७३।।

**तत्त्वं यतो भवेद् यत् कारणमापूरकं च तत्त्वस्य ।**
**कथिता व्यवस्थितिर्यन्निखिलानामेव तत्त्वानाम् ।। ७४ ।।**

### तात्पर्यदीपिका

प्रतिज्ञातार्थमुपसंहरति—तत्त्वमिति ।

अयमर्थः—शिवाद्यवनिपर्यन्तानां निखिलानां तत्त्वानां व्यवस्थितिः कथिता । तथा निखिलानां तत्त्वानामापूरकमाभीक्ष्ण्येन पूरकमध्वातीतं शिवाख्यं निष्कलं रूपं च कथितम्, "तेनेदं पूर्णं पुरुषेण सर्वम्" (श्वे० उ० ३।९) इति श्रुतेः । यतो भवति यत् तत्त्वं यत् कारणं चापूरकमुपकरणं वा, तच्च कथितमिति ।। ४ ।।

### वृत्तिः

अकृतस्य करणं कृतस्य परिवर्धनं च बुद्धिधर्मं इति । अथ प्रकरणमुपसंहरति — कथिता व्यवस्थितिरिति ॥ ७४ ॥

**तत्त्वानामपि तत्त्वं येनाखिलमेव हेलया कथितम् ।**
**श्रीभोजदेवनृपतिर्व्यधत्त तत्त्वप्रकाशं सः ॥ ७५ ॥**

### तात्पर्यदीपिका

शास्त्रस्वीकरणाय कर्तारं स्वात्मानमभिद्योतयति—तत्त्वानामिति ।

तत्त्वानामपि तत्त्वं स्वरूपं येनाखिलं कृत्स्नमेव हेलयाऽश्रमेण पूर्वं कथितम्, स एव तत्त्वप्रकाशं व्यधत्त विभागेन कृतवानिति । नन्वाप्तकृतत्वावबोधेन न शास्त्रस्वीकारः, शास्त्रस्वीकारस्य युक्तियुक्तावबोधपूर्वकत्वात् । तदुक्तं भट्टाचार्येण—

कणान् वा भक्षयेत् कामं माहिषाणि दधीनि वा ।
युक्तियुक्तनिबन्धश्चेत् तद्धि ग्राह्यं मनीषिभिः ॥ इति ।

नैतदेवम्, इतरेतराश्रयदोषप्रसङ्गात् । श्रवणे प्रवर्तमानस्य युक्तियुक्तावबोधः, युक्तियुक्तावबोधे सत्येव श्रवणे प्रवृत्तिरिति । तस्मादाप्तकृतत्वावबोध एवादौ श्रवणे प्रवृत्तिहेतुः । यथा हि मनुना प्रणीतं व्यासेन प्रणीतमित्यादिकर्तृबहुमानात् प्रवृत्तिरिति युक्तं कर्तृसंकीर्तनमिति । अत्र निवृत्तिः कलाध्वा । तत्त्वाध्वा पृथिवी । भद्रकाल्यादिकालाग्न्यन्तान्यष्टोत्तरशतं भुवनाध्वा । क्षकारो वर्णाध्वा, ळकारो वा । अष्टाविंशतिपदानि पदाध्वा । सद्योजातहृदयाख्यौ मन्त्राध्वा । पदोद्धार उच्यते—

चतुर्वर्णं समुद्दिष्टं महादेवपदं हि यत् ।
सद्भावेश्वरसंज्ञं तु पञ्चार्णं मुनिसत्तम ॥
महातेज इति प्रोक्तं पदं वर्णचतुष्टयम् ।
पदं पञ्चार्णमुद्दिष्टं योगाधिपतिसंज्ञितम् ॥
मुञ्च मुञ्च चतुर्वर्णं षड्वर्णं प्रथमात्मकम् ।
शर्वशर्वपदं चात्र बोद्धव्यं चतुरक्षरम् ॥
भवयुग्मं तथा तद्वद् भवोद्भवपदं पुनः ।
पदमष्टाक्षरं चान्यत् सर्वभूतसुखप्रदम् ॥
सर्वसान्निध्यपूर्वं तु करान्तं सप्तवर्णकम् ।
पदमष्टाक्षरं ब्रह्मविष्णुरुद्रपरं परम् ॥
अनर्चितं द्विरभ्यस्तमष्टार्णं पदमुच्यते ।
असंस्कृतपदं तद्वत् पूर्वस्थितपदं तथा ॥
साक्षिन् तुरुपदे तद्वच्चतुर्वर्णे द्विरुक्तितः ।
पट्पतङ्गपदे वर्णाश्चत्वारः पिङ्गसंज्ञके ॥
तद्वज्ज्ञानपदं शब्दसूक्ष्माख्ये चतुरक्षरे ।
द्व्यक्षरं स्याच्छिवपदं तथा शर्वपदं विभोः ॥

त्र्यक्षरं सर्वदपदं प्रणवादि नमो नमः ।
पञ्चवर्णं शिवायेति त्र्यक्षरं समुदीरितम् ॥
नतियुग्मं पञ्चवर्णं सतारं पदमुत्तमम् ॥ इति ।

ननु कुतः कथं कलानामुत्पत्तिः । शिवेच्छया बिन्दोरिति ब्रूमः । तदुक्तं गुरुदेव-पद्धतौ—

बिन्दोर्नादात्मकात् तस्माच्छिवेच्छातः प्रवर्तिताः ।
कलाः पञ्च निवृत्याद्या यासु विश्वं प्रतिष्ठितम् ॥
मन्त्राः पदैस्तानि वर्णैर्व्याप्तानीह समन्ततः ।
वर्णास्तु भुवनैर्व्याप्तास्तत्त्वैर्व्याप्तानि तानि च ॥
कलाभिस्तानि तत्त्वानि व्याप्तानीह कलाः क्रमात् ।
सदाशिवादिभूम्यन्तं शक्तितत्त्वं व्यवस्थितम् ॥
सदाशिवादिकं त्वेवं स्वकार्यं व्याप्य संस्थितम् ।
चतुर्युगमहापादं पृथिवीतत्त्वकन्दरम् ॥
कालतत्त्वात्तनाभं तत् पञ्चाशद्भावकण्टकम् ।
मायातत्त्वबृहद्ग्रन्थि शुद्धविद्याब्जशोभितम् ॥
विद्येश्वरदलच्छन्नं शक्तिकेसरसंयुतम् ।
पीठमेवंविधं कल्प्यं मातृकाबीजसंभवम् ॥ इति ।
कलाध्वोक्ताङ्गसम्पूर्णो भुवनाध्वोक्तरोमधृक् ।
वर्णाध्वोक्तत्वचोपेतो मन्त्राध्वरुधिरान्वितः ॥
पदाध्वोक्तशिरामांसशुक्लमज्जास्थितत्त्वगः ॥
सदाशिवषडध्वात्मा तस्य प्राणः शिवः स्मृतः ।
परावरो महादेवो ध्याने सकलरूपधृक् ॥
निष्कलस्तदभावे तु अष्टत्रिंशत्कलात्मकः ।
आसनं मूर्तिरावाह्यमेतत् त्रितयमध्वनि ॥
व्याप्यव्यापकभावेन ज्ञात्वा यजनमारभेत् ।
आसनं शुद्धविद्यान्तं मूर्तिः शक्त्यन्तगोचरा ।
आवाह्यं शिवतत्त्वं स्यादेतच्चैवानुशासनम् ॥ इति ॥५॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायां निवृत्याख्यः षष्ठः परिच्छेदः ॥

## वृत्तिः

केनेदं प्रकरणमित्याह—तत्त्वानामिति । तत्त्वानां प्रकाशं ज्ञानं तत्त्वानां तत्त्व-स्वरूपं येन कथितं ज्ञापितमित्यर्थः ॥ ७५ ॥

**यस्याखिलं करतलामलकक्रमेण**
**देवस्य विस्फुरति चेतसि तत्त्वजातम् ।**
**श्रीभोजदेवनृपतिः स शिवागमार्थं**
**तत्त्वप्रकाशमसमानमिदं व्यधत्त ।। ७६ ।।**

### तात्पर्यदीपिका

यस्याखिलं करतलामलकक्रमेण
देवस्य विस्फुरति चेतसि तत्त्वजातम् ।
श्रीभोजदेवनृपतिः स शिवागमार्थं
तत्त्वप्रकाशमसमानमिदं व्यधत्त ॥

नमस्तस्मै भगवते भोजायाक्लिष्टकर्मणे ।
शिवाय शिवभक्ताय शिवैकाहितचेतसे ॥
नमः सर्वजगज्जन्मस्थितिभङ्गैकहेतवे ।
सर्वदैकस्वभावाय शिवाय शिवदायिने ॥
तत्त्वप्रकाशव्याख्यानं भक्तिनिर्भरचेतसा ।
अविज्ञाय कृतं यत्तु सन्तस्तत् क्षन्तुमर्हथ ॥

इति भारद्वाजकुलालङ्करणभूतेन शङ्करसूनुना विधिविहितसोम-
रसास्वादनपरितोषिणा शिवाङ्घ्रिकमलद्वयासक्तमधुकराय-
माणमानसेन श्रीमता श्रीकुमारेण रचिता
तत्त्वप्रकाशतात्पर्यदीपिका परिपूर्णा ॥

### वृत्तिः

तदेव प्रपञ्चयति—यस्येति ।

यः शास्त्रेषु शिवोदितेषु परमं व्याख्यातृभावं गतः
सामान्येषु पदादिकेषु च सुधीः स्वाध्यायशिक्षोल्बणः ।
तेनाघोरशिवेन शैवतिलकैः सम्प्रार्थितेनादरात्
संक्षेपेण गुरूत्तमेन विवृतस्तत्त्वप्रकाशः स्फुटम् ॥

इति लक्षद्वयाध्यापकश्रीमदघोरशिवाचार्यविरचिता
तत्त्वप्रकाशिकावृत्तिः समाप्ता ॥

——

# तत्त्वसंग्रहः

## सद्योज्योतिःशिवाचार्यप्रणीतः

### अघोरशिवाचार्यकृतया टीकया सहितः

शिवत्वं निर्मलं यस्य शश्वद्विश्वविलक्षणम् ।
तमहं सर्वदं वन्दे श्रीमदभ्रसभापतिम् ॥
पदवाक्यप्रमाणज्ञः सद्योज्योतिर्गुरूत्तमः ।
साक्षादिव शिवोऽस्माभिरलक्ष्यमतिवैभवः ॥
तत्त्वसंग्रहचन्द्रस्य प्रकाशाय वितानिता ।
श्रीनारायणकण्ठेन बृहट्टीका शरन्निशा ॥
तथापि खिन्नबुद्धीनां बृहट्टीकाप्रविस्तरे ।
हिताय लघुटीकाऽत्र मयेयमुपरच्यते ॥

तत्र तावदत्रभवानाचार्यः परमशिवप्रणामपूर्वकं प्रकरणकरणं प्रतिजानीते—

**चिदचिन्नेतारमजं सर्वज्ञं शङ्करं प्रणम्याहम् ।**
**मन्दमतिबोधहेतोस्तत्त्वानि वदामि संक्षेपात् ॥ १ ॥**

चितां बद्धात्मनाम्, अचितां च बिन्दुमायातत्कार्याणां नेतारम् अधिष्ठितारम्, साक्षात्परम्परया च शुद्धाशुद्धजगदुपादानेनात्मनां यथार्हं शुद्धाशुद्धभोगप्रदमित्यर्थः । अतश्च जगतः सन्निवेशादिमत्त्वेन कार्यत्वात् तत्कर्तृतयेश्वरसिद्धिरिति भावः । एतेन प्रकृति-पुरुषकर्मेश्वरवादिनोऽपि निरस्ताः, प्रकृतिकर्मणोरचेतनत्वात्, पुरुषस्य च समलत्वेनास्व-वशत्वात् । अजं नित्यनिर्मलत्वात् । शरीरादियोगात्मनापि जन्मना रहितम् । अनेन चास्य नित्यत्वं सिद्धम् । अस्य हि जगत्कर्तुरनित्यत्वे जन्मादियोगित्वे वाऽचेतनत्वमनव-स्थानं च स्यात् । किञ्च, सर्वज्ञं मलरहितत्वात् सर्वकर्तृत्वाच्च । इदं चात्राकूतम्—नास्य ज्ञानं नैयायिकादीनामिव मनःसंयोगाद्यपेक्षम्, अपि तु ज्ञानं स्वभाव एव । तस्य च ज्ञेय-कार्याद्युपाधिभेदादौपचारिकमानन्त्यम् । यच्छ्रूयते—

तदेकं विषयानन्त्याद् भेदानन्त्यं प्रपद्यते ।
कर्तृत्वं तदभिन्नत्वात् तद्वदेवोपचारतः ॥ इति ।
( मृ० वि० ५।१७ )

शं सुखम् अप्रेर्यतारूपं सर्वज्ञत्वसर्वकर्तृत्वात्मकं स्वसाम्यमात्मनां करोतीति शङ्करः । अनेन चास्य मोक्षप्रदत्वमाह, लक्ष्यपदं चैतत् । तमेवंभूतं भगवन्तं प्रणम्य काय-वाङ्मनोभिः प्रह्वीभूय तत्त्वानि पृथिव्यादीनि संक्षेपाद् वदामि । तत्त्वलक्षणमस्याभिधेय-

मित्यर्थः। किमर्थमस्य प्रारम्भोऽत आह—मन्दमतीति। अयमाशयः—मतङ्गाद्युक्तस्य तत्त्वलक्षणस्यातिविस्तृतत्वान्मन्दमतीनां तदवधारणमशक्यम्, ततस्तेषां संक्षेपेण तत्त्व-बोधार्थमस्यारम्भ इति। तत्त्वज्ञानस्य परम्परया परापरमोक्षसाधनत्वात् परमपुरुषार्था-त्मकं प्रयोजनमप्यत्र सूचितम्। ततश्च तत्त्वज्ञानप्रकरणयोर्ज्ञाप्यज्ञापकलक्षणस्तत्त्वज्ञान-मोक्षयोरुपायोपेयलक्षणश्च संबन्धः सिद्धः। गुरुसंप्रदायात्मकमपि संबन्धं वक्ष्यति—"भगवानुग्रज्योतिः सर्वज्ञोऽयमनुजग्राह" इति। अनुग्रहस्योपलक्षणत्वात् परमशिवात् प्रभृति आत्मान्तमविच्छिन्नशास्त्रसंप्रदायतः सिद्धान्तार्थः प्रतिष्ठित इति भावः॥ १॥

इत्थं तत्त्वव्याख्यां प्रतिज्ञाय "व्युत्क्रमेणोपनेयोऽसौ शिवाय गमनं प्रति" इति श्रीमत्स्वायंभुवश्रुतेस्तेषां च संहारक्रमेणैव दीक्षायां शुद्धिरिति सूचयन् संहारक्रमेणैव पञ्चभूतानि तावदाह—

**क्षितिजलशिखिपवनाम्बरभूतान्येषां क्रमेण वृत्तानि।**
**धारणसंग्रहपाकव्यूहो दानं च तदवकाशस्य॥ २॥**

क्षितिजलशिखिपवनाम्बराण्येव भूतानीत्यर्थः। एषां च पृथिव्यादीनां धारणा-दिभिः कार्यैः सिद्धिरित्याह—एषां क्रमेणेति। तत्र संग्रहोऽवष्टम्भः, व्यूहोऽवयवसंघट्टनम्, अवकाशस्य आस्पदस्य दानमाकाशवृत्तिः। ततो अवकाशदानात्मना कार्येण आकाश-सिद्धेस्तदभाववादिनश्चार्वाकास्तत्प्रत्यक्षवादिनो मीमांसकाश्च प्रतिक्षिप्ताः। न चास्य नैयायिकादिभिरिव नित्यत्वमिष्यते, वक्ष्यमाणवत् तन्मात्राकार्यत्वाद् भुवनाधारत्वश्रुतेश्च। व्यूहोऽपि वायुकार्याणामुपलक्षणम्। यदाहुः—"स्पर्शशब्दधृतिकम्पलिङ्गो वायुः" इति। किञ्च—"गन्धो रसोऽथ रूपं स्पर्शः शब्दो महीगुणाः पञ्च। तोयादीनामेते पूर्वं पूर्वं विहाय परिपाट्या॥" तदुक्तं मृगेन्द्रे—"इति पञ्चसु शब्दोऽयं स्पर्शो भूतचतुष्टये॥ अशीतोष्णो महीवाय्वोः शीतोष्णौ वारितेजसोः। भास्वदग्नौ जले शुक्लं क्षितौ शुक्ला-द्यनेकधा॥ रूपं त्रिषु रसोऽम्भस्सु मधुरः षड्विधः क्षितौ। गन्धः क्षितावसुरभिः सुर-भिश्च मतो बुधैः॥" (वि० १२।२७-२९) इति। अत एवाश्रयादन्यत्रोपलब्धेराकाशैक-गुणः शब्द इति यद्वैशेषिकादिभिरुक्तम्, तदयुक्तम्, तस्य हेतोः प्रत्यक्षागमबाधितत्वेन कालात्ययापदिष्टत्वात्। तथाहि—प्रत्यक्षेणाकाशे प्रतिशब्दः श्रूयते, वायौ शकशकादिः, अग्नौ धमधमादिः, जले छलछलादिः, पृथिव्यां कडकडादिः। किञ्च, भेर्याद्याश्रयेष्वपि शब्दा उपलभ्यन्त इत्यादि विस्तरेणोक्तमस्माभिः मृगेन्द्रवृत्तिदीपिकायामिति तत एवा-वधार्यम्॥ २॥

तेषां च भूतानामस्मदादिबाह्येन्द्रियपरिच्छेद्यगुणत्वाद् घटादिवत् कारणपूर्वकत्व-सिद्धेस्तत्कारणं तन्मात्रपञ्चकं सिद्धमित्याह—

**तद्भूतसमानगुणं कारणमापूरकं च तस्यैव।**
**तन्मात्रं भूतस्य ह्ययं विशेषो विशेषरहितं तत्॥ ३॥**

तद्भूतसमानगुणं तन्मात्रं तस्य भूतस्य कारणमुपादानमापूरकं च पोषकं च भवतीति शेषः। यदाहुः—"अकृतस्य करणं कृतस्य परिवर्धनं च प्रकृतिकर्म" इति। ततश्च

गन्धादिपञ्चगुणात्मकं गन्धतन्मात्रं भूमेः कारणम्, रसादिचतुर्गुणरूपं तु रसतन्मात्रं जलस्येत्येवमन्यत् स्पष्टम्। अनेनैतेषां परमाणुरूपतामभिदधाना नैयायिकादयः प्रतिक्षिप्ताः। तेषामचैतन्यत्वे सत्यनेकत्वाद् मूर्तत्वाच्च घटादिवत् पांश्वादिवद्वा कार्यत्वाव्यभिचारात्। ततश्च तन्मात्रादिद्वारेण मायैव परमकारणमिति वक्ष्यामः। यद्येवं समानगुणत्वाद् भूततन्मात्रयोः को विशेषोऽत आह—तन्मात्रं भूतस्येति। यथाहि पृथिव्यादिभूतगता गन्धादयो गुणाः प्रोक्तवद्विशिष्टा उपलभ्यन्ते, नैवं तत्कारणेषु तन्मात्रेषु। ततश्च सूक्ष्मत्वादविशिष्टगुणमात्ररूपात्तन्मात्रवर्गाद्भूतवर्गस्य स्थूलत्वाद्विशिष्टगुणयोगित्वं विशेषः। अत एवैषां तन्मात्रसंज्ञाः। यच्छ्रूयते—"गुणाविशिष्टास्तन्मात्रास्तन्मात्रपदयोजिताः" ( मृ० वि० १२।५ ) इति ॥ ३ ॥

अथैषां भूततन्मात्राणां कार्यशब्दवाच्यत्वमिन्द्रियाधारत्वं चाह—

**एतत्कार्यं दशधा करणैराविश्य कार्यते चेष्टाम्।**
**अविभुत्वात् करणानि तु कार्यमधिष्ठाय चेष्टन्ते ॥ ४ ॥**

एतानि च स्थूलसूक्ष्मरूपेणेन्द्रियाधाराणि स्थितानीत्युक्तं मतङ्गे—"तन्मात्राणीह घटवन्महाभूतानि लेपवत्" ( वि० १९।२१ ) इति ॥ ४ ॥

अथ कर्मेन्द्रियसिद्धिमाह—

**वचनादानोत्सर्गानन्दागमनेषु कर्मकरणानि।**
**श्रोत्रस्पर्शनदर्शनजिह्वाघ्राणानि बुद्धिकरणानि ॥ ५ ॥**

वाक्करपायुप्रजननचरणसमाख्यानि करणानि। उत्सर्गो मलविरेकः। वागादीनि कर्माक्षाणि वचानाद्यासु क्रियासु करणानि सिद्धानीत्यर्थः। अतश्च कर्मेन्द्रियाभाववादिनो नैयायिकादयः प्रतिक्षिप्ताः, नाकरणा कृतिः संभवति यतः। ननु भ्रूलतोत्क्षेपादीनामपि क्रियात्वात् कर्मेन्द्रियानन्त्यप्रसङ्ग इति चेत्, तन्न, तेषां त्वगिन्द्रियवत् सर्वशरीरव्यापकत्वेना[न]भ्युपगमात्, हस्तादेरेव भ्रूक्षेपणादिव्यापारस्तत्तत्संज्ञाकृतः, तत्तदिन्द्रियशक्तीनां तत्र तत्र विशेषाधिष्ठानादित्यविरोधः। बुद्धीन्द्रियाण्युच्यन्ते—श्रोत्रस्पर्शनेति। स्पृश्यतेऽनेनेति स्पर्शनं त्वगिन्द्रियमेव। दर्शनमपि चक्षुरेव ॥ ५ ॥

अथ कैर्व्यापारैरेषां सिद्धिरित्याह—

**प्रत्येकं शब्दादिष्वेषामालोचनं वृत्तिः।**
**इति दशधा करणं बहिरिच्छासंरम्भबोधवृत्त्यन्यत् ॥ ६ ॥**
**अन्तःकरणं त्रिविधं चित्ताहङ्कारबुद्धिनिर्वाच्यम्।**
**उत्पत्तिरहङ्काराच्चित्तबहिष्करणभूतयोनीनाम् ॥ ७ ॥**

एषां श्रोत्रादीनां यथाक्रमं शब्दस्पर्शरूपरसगन्धेषु विषयेषु आलोचनं ग्रहणम्। प्रत्येकमसाधारणं वृत्तिः। शब्दादिग्रहणान्यथानुपपत्त्या तेषां सिद्धिरिति भावः। इत्थं

बहिर्दशप्रकारं बाह्येन्द्रियं ज्ञेयमिति शेषः। अन्तःकरणसिद्धिमाह—अन्तःकरणमिति। बाह्यकरणादन्यदन्तःकरणं त्रिविधम्। मनोबुद्ध्यहङ्काराख्यम्। तेषां च क्रमादिच्छादयो व्यापारा इत्याह—इच्छासंरम्भबोधवृत्तीति। तत्रेच्छाशब्देन संकल्पाख्यमवधानमेकाग्रतापरपर्यायमुच्यते। तच्च दृक्क्रियात्मकत्वाद् बुद्ध्यहङ्कारकार्याद् बाह्यग्राहकपरामर्शात्मनो भिन्नम्, तयोः प्रत्ययरूपत्वात्। अतो यस्यैतत्कार्यं तन्मन इति मनःसिद्धिः। तच्च मनः सङ्कल्पेनान्तरेण बाह्येन्द्रियाधिष्ठानेन च द्विधाधिकारीत्युक्तं मतङ्गे—"द्विधाधिकारि तच्चित्तं भोक्तुर्भोगोपपादकम्। बहिः करणभावेन स्वोचितेन यतः सदा॥ इन्द्रियाणां तु सामर्थ्यं सङ्कल्पेनात्मवर्तिना। करोत्यन्तःस्थितं भूयस्ततोऽन्तःकरणं मनः॥" ( वि० १८।८१-८२ ) इति। मृगेन्द्रेऽपि—"देवप्रवर्तकं शीघ्रचारि संकल्पधर्मि च" ( वि० १२।७ ) इति। तत्र च देवशब्देनेन्द्रियाण्युच्यन्ते। इन्द्रियाधिष्ठातृत्वं च तत्रैव साधितम्—"आत्मेन्द्रियार्थनैकट्येऽपि सर्वदैवाप्रवृत्तितः। प्रवृत्तिकारकास्तित्वं युक्तितोऽप्यवसीयते॥" (वि० १२।९) इति। ततश्चाविभुत्वात् प्रत्यात्मनियततयाऽनेकत्वाच्च कार्यत्वं मनसः। तथा संरम्भः प्रयत्नात्मकोऽहङ्कारकार्य एव। यदुक्तम्—"संरम्भोऽहङ्कृतेर्वृत्तिः" ( भो० का० ३३ ) इति। स च ज्ञानशक्त्याश्रयभूतया बोधाध्यवसायवत्क्रियाशक्त्याश्रयभूतया भवति। अयमेव प्राणादिरूपस्यान्तरस्य वायोः प्रवृत्तिनिमित्तम्। यदाहुः—"प्रेरणाकर्षणे वायोः प्रयत्नेन विना कुतः" ( प्र० वा० १।५४ ) इति। किञ्च, ग्राह्यपरामर्शात्मनो बुद्धिकार्यात् प्रतिक्षणमनेकरूपस्यात्यन्तविलक्षणस्य एकरूपस्याहमिति ग्राहकपरामर्शस्य यत्करणं सोऽहङ्कार इत्यहङ्कारसिद्धिः। न चायं तत्त्वान्तराणां कार्यः, तेषां स्वकार्यैरेव सिद्धेः, कार्यान्तरहेतुत्वे प्रमाणाभावात्, अनेकतत्त्वपरिकल्पनाभावप्रसङ्गाच्च। एवं बोधो ग्राह्याध्यवसायो बुद्धिवृत्तिः। तथाहि—द्विविधोऽत्र बोधोऽध्यवसायात्मकोऽनध्यवसायात्मकश्च। तत्र योऽनध्यवसायात्मकः सर्वदा ग्राहकरूपेणैव भासमान आत्मस्वभाव एव। यस्त्वध्यवसायरूपः स उत्पन्नत्वोपपत्त्याऽनित्यत्वेनावभासमानो न पुंस्वभावः, नित्यस्यानित्यस्वभावत्वायोगात्। न च नित्योऽसावनुभूयते, अतोऽयं यस्य स्वभावः सा बुद्धिः। तदाहुः—"अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥ ....ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया। बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन संमता॥" (श्लो० वा०, प्रत्यक्ष० ११२, १२०) इति। किञ्च, धर्माद्याश्रयतयापि बुद्धिसिद्धिः श्रूयते–"भावा बुद्धिगुणा धर्मज्ञानवैराग्यभूतयः। सात्त्विका व्यत्ययेनैते रागमुत्सृज्य तामसाः॥" ( मृ० वि० १०।२४ ) इति। अयमभिप्रायः—कर्मणो धर्माधर्मात्मनोऽनुष्ठानरूपस्य तत्क्षणमेव नाशात् तज्जन्योऽपूर्वाख्यः संस्कारः कालान्तरफलश्रुत्यन्यथानुपपत्त्या कल्प्यते। स च नात्मनि संभवति, अविकारित्वात्, कर्मणां च कृष्यादीनामात्मसंस्कारकत्वादृष्टेः, अपि तु जड एव। यत्र तानि संस्कारं कुर्वन्ति, सा धर्माद्यष्टगुणा बुद्धिरिति। एवं ज्ञानादिसंस्कारेऽपि वाच्यम्। ते च भावाः सिद्ध्यादिप्रत्ययभेदेन शतत्रयसंख्या भवन्तीत्युक्तमन्यत्र। इत्थं करणवर्गं प्रसाध्य तत्र तेषां कस्मादुत्पत्तिरित्याह—उत्पत्तिरहङ्कारादिति। तत्र मनसो बुद्धीन्द्रियाणां च सात्त्विकात् तैजसाख्यादहङ्कारस्कन्धादुत्पत्तिः, कर्मेन्द्रियाणां तु राजसाद् वैकारिकाख्यात्, भूतयोनीनां च तन्मात्राणां तामसाद् भूतादिसंज्ञादेवं त्रिविधादहङ्कारादेषामुत्पत्तिः।

यदुक्तं मृगेन्द्रे—"श्रोत्रं त्वक्चक्षुषी जिह्वा नासा च मनसा सह । प्रकाशान्वयतः सात्त्वास्तैजसश्च स सात्त्विकः ॥ वाणी पाणी भगः पायुः पादौ चेति रजोद्भवाः । कर्मान्वयाद् रजोभूयान् गणो वैकारिकोऽत्र यः ॥ शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः । गुणाविशिष्टास्तन्मात्रास्तन्मात्रपदयोजिताः॥ प्रकाशकर्मकृद्वर्गवैलक्षण्यात् तमोद्भवाः । प्रकाश्यत्वाच्च भूतादिरहङ्कारेषु तामसः ॥" ( वि० १२।३-६ ) इति। अतश्च बुद्धीन्द्रियद्वारेण तैजसेनाहङ्कारेणात्मनो ज्ञानशक्तिरुन्मील्यते । वैकारिकेणापि कर्मेन्द्रियद्वारेण क्रियाशक्तिरुन्मील्यते । तस्या मलिनत्वात् तदपेक्षया यतः । एषां च सात्त्विकादिव्यवहारः सत्त्वादिगुणबाहुल्यात् । नामिश्रं परिणमत इति न्यायान्न त्वेकजनकं भवति ॥ ६–७ ॥

**महतोऽहङ्कारस्य तु महतश्च गुणत्रयाज्जन्म ।**
**सत्त्वं रजस्तमश्च प्रख्याव्यापारनियमरूपाश्च ॥ ८ ॥**

अहङ्कारस्य तु बुद्धेर्जन्म बुद्धेश्च गुणतत्त्वात् । तदुक्तं सांख्यैरपि—"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः" ( सां० का० २२ ) इति । ननु वैशेषिकादिभिर्नियतविषयत्वाद् भौतिकानीन्द्रियाणीष्यन्ते । तदयुक्तम्, चक्षुरादिना भूतान्तरगतस्य गुणस्य भूतान्तराणां कर्मसामान्यादेश्च ग्रहणात् । तदुक्तं भोगकारिकासु—"भौतिकत्वाच्च नियमे कर्मसामान्ययोः स्फुटम् । देवेभ्यो बुद्धयो न स्युः समवाये च देहिनाम् ॥" ( श्लो० ४० ) इति । यदुक्तं कारकत्वाविशेषेऽपि नैषां विषयनियतस्वभावभेद इति, तदप्युत्पत्तिभेदादिक्षुविकाराणां गुडखण्डशर्करादीनामिव भविष्यतीति न किञ्चिदेतत् । अथ गुणतत्त्वमाह—सत्त्वं रजस्तम इति । प्रकाशप्रवृत्तिनियमाः सत्त्वादीनां क्रमाद् व्यापारा इत्यर्थः । एषां च सूक्ष्मदेहद्वारेण समस्तमायाकार्येषु व्यापकत्वमस्ति । प्रकाशादयश्चान्यासामप्रधानानां गुणवृत्तीनामुपलक्षणम् । तथाहि—स्थैर्यधैर्यादयोऽपि सत्त्वस्य वृत्तयः, क्रौर्यशौर्यादयोऽपि रजसः, तमसस्त्वरतिमान्द्यादयोऽपीत्युक्तं मतङ्गादौ ॥ ८ ॥

ननु गुणा एव प्रकृतिरिति सांख्याः, तदयुक्तमित्याह—

**त्रय एव ते गुणास्त्विह येषां संभूतिरव्यक्तात् ।**
**अविभागो हि गुणानामाधारे क्ष्मादिभागवदवश्यम् ॥ ९ ॥**

अयमभिप्रायः—गुणानामचैतन्ये सत्यनेकत्वाद् यतो घटादिवत् कारणपूर्वकत्वम्, ततस्तेषामव्यक्तादेव संभूतिरित्येवशब्दो भिन्नक्रमः । प्रकृतिकार्यत्वमेव प्रपञ्चयति—आधार इति । क्ष्मादिभागानां घटादिरूपाणां यथा पृथिव्यात्मक आधारेऽवश्यमविभागो भवति, एवं सत्त्वादीनामपि गुणभागानां कस्मिंश्चिदाधारेऽवश्यमविभागो विज्ञेयः । ततस्तस्याविभागस्य य आधारस्तदव्यक्तमित्यव्यक्तसिद्धिः । तदुक्तं मृगेन्द्रे—"ततः प्राधानिकं तत्त्वं कलातत्त्वादजीजनत् । सप्तग्रन्थिनिधानस्य यत्तद् गौणस्य कारणम् ॥" ( वि० १०।१९ ) इति ॥ ९ ॥

अनन्तरं रागतत्त्वसिद्धिमाह—

**यज्जनिताभिष्वङ्गे भोग्याय नरि क्रिया स रागोऽत्र ।**
**भोग्यविशेषे रागे नहि कश्चिद् वीतरागः स्यात् ॥ १० ॥**

ननु मतङ्गादौ प्रकृतिरागयोर्मध्ये पुरुषतत्त्वं श्रूयते । तत्सत्यम् । तस्य तु चेतनत्वान्नित्यत्वाच्च भुवनाद्याधारत्वेनाध्वत्वं न संभवति । तथाहि—कलादिपञ्चकयुक्तस्य भोक्तृत्वेन पुंस्त्वमलेनानात्मादावात्माभिमानरूपेण योग इति दीक्षायां तत्स्थान एव तच्छुद्धयर्थमागमेषु प्रक्रमितत्वादूर्ध्वं पुरुषतत्त्वतया पाठः श्रूयते । अतश्चाचार्येण तद्वर्णनमुपेक्षितम् । मायातत्त्वानन्तरं तु पशुस्वरूपं वक्ष्यति । अस्मिन् नरि पुरुषे येन जनिताभिलाषे भोग्यवस्त्वादानाय प्रवृत्तिर्भवति, सोऽत्र शैवे शास्त्रे रागो ज्ञेयः । अभिलाषात्मना कार्येण रागतत्त्वसिद्धिरित्यर्थः । नन्ववैराग्यलक्षणो बुद्धिधर्म एवाभिलाषहेतुरिति सांख्याः, तदयुक्तम्, वासनारूपस्याकार्यकरत्वात्, तस्य वा कार्यकरत्वे बुद्धेः सर्वदाऽनन्तवासनायोगेन पुंसो युगपद्विरुद्धानन्तप्रतिपत्तिवैशसप्रसङ्गाच्च । प्रत्यक्षरूपस्यापि भोग्यत्वान्नाभिलाषहेतुत्वम् । ननु विषयगुण एवाभिलाषहेतुरस्तु, तन्न, विषयसंनिधानमात्रादेव सर्वस्य सरागतापत्तेर्वीतरागाभावप्रसङ्गात् । तस्माद् वीतरागदर्शनान्यथानुपपत्त्याऽभिलाषहेतुर्ग्राहकगतो रागोऽभ्युपगन्तव्यः । एतदेवाह—भोग्यविशेष इति । न च कर्मैव रञ्जकं भविष्यतीति वाच्यम्, तस्य फलजनन एव चरितार्थत्वात्, अनेकतत्त्वपरिकल्पनाभावप्रसङ्गाच्च । ननु मायाया मोहकस्वभावो रागोऽस्तु, तन्न, यतो न मायायाः साक्षान्मोहकत्वम्, अपि तु कार्यद्वारेणैवेत्यदोषः ॥ १० ॥

वीतरागश्च प्रत्यक्षसिद्ध एवेत्याह—

**यदुपहितेऽभिष्वङ्गो महति पुनस्तदुपधौ स नो दृष्टः ।**
**तस्मान्नो वाच्यमिदं सविशेषो नास्ति वीतराग इति ॥ ११ ॥**

येन स्त्र्यादिना विषयेणोपधाने सत्यपि सोऽभिलाषो न दृष्टः, तस्मात् प्रत्यक्षदृष्टत्वादनभिलाषलक्षणः सविशेषो वीतरागो नास्तीति न वाच्यम् ॥ ११ ॥

विद्यातत्त्वसिद्धिमाह—

**करणेन येन भोग्यं करोति पुरुषः प्रचोद्य महदादीन् ।**
**भोग्ये भोगं च पुनः सा विद्या तत्परं करणम् ॥ १२ ॥**

येन करणेन बुद्ध्यहङ्कारादिकरणग्रामं प्रचोद्य पुरुषो भोग्यं निष्पादयति, तस्मिंश्च भोग्ये भोगं च करोति, तद्विद्याख्यं करणमात्मन इति सन्निकृष्टत्वात् परमित्युच्यते । एतदुक्तं भवति—अश्वेन यथा दीपिकया यातीत्यादाविवात्रानेककरणसाध्येऽपि फले विद्यैव परमं करणम्, यतस्तयैव भोग्यं जानातीति ॥ १२ ॥

किं पुनरत्र भोग्यं को वा भोग इत्यत आह—

**बुद्धिर्विषयाकारा सुखादिरूपा समासतो भोग्यम् ।**
**भोग्ये भोगो भोक्तुश्चिद्व्यक्तिर्भोग्यनिर्भासा ॥ १३ ॥**

अध्यवसितस्रक्चन्दनादिविषया, अत एव सुखदुःखमोहाध्यवसायरूपा बुद्धिरेव पुंसः समासतः संक्षेपेण भोग्यम्, तस्या एव साक्षाद्भोग्यत्वात् । विषयास्तु बाह्यास्तत्साधनत्वेन परम्परया भोग्या उच्यन्ते । तथाहि–भोग्यं वस्तु हि चित्ताधिष्ठितं बुद्धीन्द्रियवृन्दं विद्याया विषयत्वेनोपस्थापयति । तच्चाहङ्कारवृत्त्यात्मपरामर्शपूर्विकया बुद्ध्याऽध्यवसितमर्थं पुरुषो गृह्णाति । यदाहुः—[1]"बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयति" इति । बुद्ध्यादीनां सन्निहितासन्निहितविषयोपस्थापकत्वेनोपयोगः, न तु संविज्जनकत्वेन । उपस्थापितविषयं बुद्ध्यहङ्कारेन्द्रियभेदैः सह या विवेचयति, सा विद्येति विद्यासिद्धिः । ततश्च भोक्तुरनुसन्धातुः पुरुषस्य, भोग्ये बुद्ध्याख्ये सुखाद्यध्यवसायरूपे, सुख्यहं दुःख्यहमिति भोग्यनिर्भासा भोग्योपरक्ता, चिद्व्यक्तिः संविदुद्भवः, स भोगो मन्तव्यः । यदुक्तं स्वायंभुवे—"भोगोऽस्य वेदना पुंसः सुखदुःखादिलक्षणा" इति । ततश्चाध्यवसायस्मृतिप्रतिभाप्रत्ययभेदभिन्ना बुद्धिरपि यया (वि?वे) च्यते, सा विद्या । तच्च परं करणमित्युक्तम् ॥ १३ ॥

ननु बुद्धिरेव प्रकाशरूपत्वात् सूर्यादिवद् विषयानप्यध्यवसायेन प्रकाशयिष्यति, स्वात्मानमपि ग्राहयिष्यति, तत्किमन्येन विद्याख्येन करणेनात आह—

**रविवत् प्रकाशरूपो यदि नाम महांस्तथापि कर्मत्वात् ।**
**करणान्तरसापेक्षः शक्तो ग्राहयितुमात्मानम् ॥ १४ ॥**

प्रकाशरूपापि बुद्धिर्ग्राह्यतापन्नमात्मानं करणत्वेन ग्राहयितुं न क्षमा, ग्राह्यत्वेन घटादिवद् बहिरङ्गत्वात् । इदं चात्राकूतम्—प्रकाशरूपा अपि सूर्यादयो न केवलाः स्वात्मानं ग्राहयन्तीति, किन्तु चक्षुरादिसापेक्षा एव । ततः स्मृत्यादिरूपापि बुद्धिर्न केवला स्वात्मानं ग्राहयति, अपि तु करणान्तरसापेक्षैवेति तत्करणत्वेन विद्यासिद्धिः ॥१४॥

ननु प्रकृतिरेव बुद्ध्यात्मना परिणतमात्मानं पुरुषस्य भोग्यत्वेन दर्शयति, पुरुषस्य तु न कर्तृत्वम्, अपि तु द्रष्टृत्वमे(वातः ? वेत्य)कर्तृत्वात् तस्य न करणापेक्षेति पुनरपि विद्यानर्थक्यम् । अत आह —

**संबन्धात् करणाद्यैर्भोगौत्सुक्येन तत्प्रयोक्तृत्वात् ।**
**तच्चेष्टाफलयोगात् संसिद्धा कर्तृता पुंसः ॥ १५ ॥**

करणैर्बुद्ध्यादिभिः, आदिग्रहणाद्विषयैश्च संबन्धाद् भोगाभिलाषेण तेषां करणादीनां प्रयोक्तृत्वात् तच्चेष्टाया विषयग्रहणात्मिकायाः क्रियायाः फलेन सुखादिना योगाच्च पुरुषस्य कर्तृत्वं सिद्धम् । भोग्यौत्सुक्येनेति पाठे भोग्यवस्तुविषयेणाभिलाषेणेति व्याख्येयम् । इदं चात्राकूतम्—प्रकृतेरचेतनत्वान्न पुरुषं प्रति परमार्थेन प्रवृत्तिर्युक्ता, पुंस एव तु

१. पूर्वतनी ( पृ० ७८ ) द्वितीया टिप्पणी द्रष्टव्या ।

चेतनत्वेन करणादिप्रयोक्तृत्वं संभवति। ततस्तस्यैव कर्तृत्वम्, अकर्तरि करणादिसंबन्धस्य निरर्थकत्वादिति। न च अचेतनस्यापि क्षीरस्य गवादेर्वत्सादिवृद्ध्यर्थं प्रवृत्तिर्दृष्टा, यदुक्तं सांख्यैः—"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥" (सां० का० ५७) इति वाच्यम्, क्षीरस्यापि गवादिप्रेरितस्यैव प्रवृत्तिदर्शनात् प्रधानस्यापि न स्वतः प्रवृत्तिरुपपद्यते यतः ॥ १५ ॥

किञ्चास्य कर्तृत्वाभ्युपगमे—

**व्यर्थं भोक्त्रभिधानं व्यर्थं च ततः प्रधानचरितं वः ।**
**नरि कर्तृत्वविहीने न च भोग इहाप्रयोजके दृष्टः ॥ १६ ॥**

यस्मात् कर्तृत्वरहिते करणाद्यप्रयोजके वा पुंसि भोगो न दृष्टः, ततो भोगस्यापि संवेदनरूपस्य क्रियात्वेन भोक्तुः कर्तृत्वानपगमात् तदनभ्युपगमे भवतां पुरुषे भोक्तृत्वकथनं तद्भोगार्थमचेतनस्य प्रधानस्य प्रवृत्तिश्च कल्प्यमाना निरर्थकत्वान्न युक्तेत्यर्थः। ततः करणादिप्रयोक्तृत्वाद् भोक्तृत्वाच्च पुंसः कर्तृत्वं सिद्धमेव। यदाहुः—[1]"प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः। अप्रवृत्तः प्रवृत्तो वा स कर्ता नाम कारकः ॥" इति ॥ १६ ॥

इत्थं ज्ञातृत्ववत् कर्तृत्वमपि पुंसः स्वरूपमिति प्रतिपादितम्, इदानीं तयोरनादिमलावृतत्वाच्छिवस्येव सर्वत्र सर्वदा न प्रकाश इति केनापि व्यङ्ग्यता सिद्धेत्याह—

**व्यङ्ग्यं कर्तृत्वमतो सर्वार्थत्वात् कदाचिदुत्पत्तेः ।**
**ज्ञातृत्ववदिह वेद्या तद्व्यक्तिकरी कला सा तु ॥ १७ ॥**

ज्ञातृत्ववदिहेति। इह सकलावस्थायां ज्ञातृत्ववत् कर्तृत्वस्याप्यसर्वविषयत्वात् कदाचिदुत्पद्यमानत्वाच्च केनाप्यागन्तुकेन व्यङ्ग्यत्वं प्रतीयते। ततश्च तद्व्यञ्जकतया कलातत्त्वसिद्धिरित्याह—वेद्या तद्व्यक्तीति। तयोर्ज्ञातृत्वकर्तृत्वयोः, एकदेशमलविदारणेन या व्यञ्जिका, सा कलेति कलासिद्धिः ॥ १७ ॥

ननु मलरुद्धापि पुंसः शक्तिः सृष्टिकाले शिवशक्त्या प्रबोधिता तिष्ठति, किं कलाख्येन तत्त्वेनात आह—

**पाशं तु विना नेशो व्यञ्जयति यतो न सर्वविषयं तत् ।**
**दोषो विषमो पथ्यं विनैव नो रोगकर्तृशक्तिमिव ॥ १८ ॥**

यतः संसारावस्थायां पुंसः चैतन्यं दृक्क्रियात्मकं न सर्वविषयं दृश्यते, ततः पाशद्वारेणैव तदीश्वरोऽभिव्यनक्ति, न साक्षात्। मलपरिपाके तु दीक्षाख्यया स्वशक्त्या सर्वविषयं तत्प्रकाशयतीति वक्ष्यामः। ततश्च शिवशक्तिस्तत्त्वान्तराधिष्ठानेनैवात्मनां भोगदायिका न साक्षात्, तथा सति बुद्ध्यादीनामप्यानर्थक्यप्रसङ्गादिति भावः। एतदेव दोष इत्यादिदृष्टान्तोपन्यासेन द्रढयति। यथाहि विषमोऽसाम्यं प्राप्तो दोषो वातपित्तादिरपथ्यं विना रोगस्य कर्तृशक्तिमसौख्यकरणसामर्थ्यं न व्यञ्जयति, अपि त्वपथ्यसेवा-

१. आकरो नोपलभ्यत इति म० पा० वि० (पृ० १७१, टि. १०) द्रष्टव्या।

व्यवधानेनैव, तथेशोऽपि पाशव्यवधानेनैवात्मनामसर्वविषयं चैतन्यं व्यञ्जयतीत्येतावतात्र दृष्टान्तता, न सर्वथा साम्येन, तस्य दुःखैकहेतुत्वादीश्वरस्य च तदुपकारायैव प्रवृत्तत्वात् । एतच्च कलादिकार्यकर्तृत्वमीश्वरस्यानन्ताद्यधिष्ठानेनेत्युक्तं किरणे—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" ( कि० ३।२७ ) इति ॥ १८ ॥

ननु भोगस्य कर्मनिबन्धनत्वाद् विज्ञानकेवलस्य च कर्माहितस्य सुखदुःखादिभोगसंवेदनादृष्टेः कर्मणैव केवलेनात्मनश्चैतन्यवृत्तिमीश्वरः कर्षतीत्यत आह—

**न च कर्मणैव यस्माच्चरितार्थं कर्म भोगनिष्पत्तौ ।**
**ज्ञानेऽपि च प्रसङ्गात् ततश्च विद्यादिबन्धवैयर्थ्यम् ।। १९ ।।**

नात्र कर्मणैव केवलेनात्मचैतन्याभिव्यक्तिः, तस्य फलजनन एव चरितार्थत्वात्, कार्यान्तरहेतुत्वे प्रमाणाभावाच्च । तस्यैव च कार्यान्तरहेतुत्वेऽभ्युपगम्यमाने विषयग्रहणाध्यवसायादिकार्येऽपि तस्यैव हेतुत्वं प्रसज्यते । ततश्च विद्याबुद्ध्यादीनामपि तत्त्वानामानर्थक्यप्रसङ्गः । ततस्तत्त्वान्तरसहकृतस्यैव कर्मणो भोगनिमित्तत्वमिति यथाऽध्यवसायादिकार्यान्यथानुपपत्त्या बुद्ध्यादयः कल्प्यन्ते, एवं पुंसो ज्ञानक्रियाशक्त्यभिव्यक्त्यन्यथानुपपत्त्या कला सिद्ध्यतीति न कश्चिद्दोषः ॥ १९ ॥

अत्र पराशङ्का—

**पूर्वं कलादियोगादग्रहणाद् दृक्क्रिये न विद्येते ।**
**व्यञ्जकरहिते तत्र हि नो गृह्येते न खल्वसद्भावात् ।। २० ।।**

कलादितत्त्वसंबन्ध एव ज्ञत्वकर्तृत्वयोरुत्पत्तेः, तत्पूर्वकालं च तयोरदर्शनात् ते ज्ञत्वकर्तृत्वे तस्मिन्नात्मनि तदानीं स्वरूपतया न विद्येते, अपि तु कलादिसंयोग एवोत्पद्येते । ततो ज्ञानाद्याधारतैवात्मनः सिद्ध्यति, न तु ज्ञत्वादिरूपतेति पूर्वः पक्षः । सिद्धान्तस्तु—व्यञ्जकरहित इति । अयमभिप्रायः—जडस्वभावस्य घटादेरिव ज्ञानसमवायाभावात्, अनित्यज्ञानसमवायाभ्युपगमे विकारयोगेन तस्याप्यनित्यत्वप्रसङ्गात्, व्यञ्जकसंनिधाने ज्ञातृरूपस्य ग्राहकात्मनः स्वसंवेदनसिद्धत्वाच्च नित्यमेवात्मनश्चेतनात्मकत्वमभ्युपगन्तव्यम् । तच्चात्मनः स्वरूपमनादिमलावृतत्वाद् व्यञ्जकेन विना न प्रकाशत इत्युक्तम् । ततश्च कलादियोगात् पूर्वं व्यञ्जकरहितत्वात् ते ज्ञत्वकर्तृत्वे तत्र आत्मनि न प्रकाशेते, न त्वसत्त्वात् । व्यञ्जकाभावकृतो हि योऽनुपलम्भः स नाभावसाधकः, अपि तु सति व्यञ्जके, भूतनिधानादीनां सत्त्वेऽपि व्यञ्जकासन्निधानेऽनुपलम्भात् ॥२०॥

एतदेवाह—

**उपलम्भके च सत्यपि लोके यन्नोपलभ्यते तदसत् ।**
**ज्ञानक्रिये च तद्वन्नासद्भूते कदाचिदतः ।। २१ ।।**

यस्य हि घटादेः प्रदीपादिव्यञ्जकसद्भावेऽपि नोपलम्भः, तस्यैवासत्त्वम्, नान्यस्यान्धकारादितिरोधानेनानुपलभ्यमानस्य । अतश्च ज्ञानक्रिये अपि व्यञ्जकाभावा-

देव नोपलभ्येते, तस्मात् कदाचिदपि नासत्तां व्रजत इत्याह–ज्ञानक्रिये चेति। ननु जन्मनः पूर्वमनुभवितुर्ज्ञानादिसत्तानिश्चयाभावात् संशय एव युक्तः? तन्न, तदहर्जातानामपि बालानां पानचरणाभिघातादिचेष्टाविशेषस्य प्रयत्नपूर्वकस्य हिताहितस्मरणाविनाभावेन व्यवहारकाले सिद्धस्य दर्शनाद् जन्मनः प्रागपि ज्ञत्वकर्तृत्वयोः सत्त्वं सिद्धमेव यतः॥ २१॥

एतदेव दृष्टान्तेन साधयति—

**प्राक्पचनव्यापारात् तत्सिद्धिः पाचके यथा तद्वत्।**
**बोधात् करणाच्चाणोः पूर्वं सिद्धे कुतस्तच्छक्तिः॥ २२॥**

यथा पाचनक्रियादर्शनेन तत्पूर्वकालं परिदृश्यमानं पचनसामर्थ्यं पाचके प्रागेवास्तीति गम्यते, न तु तत्कालमेवोत्पद्यत इति। एवं ज्ञानकार्ययोर्दर्शनादात्मनस्ते ज्ञानक्रियाशक्ती प्रागेव विद्येते इति निश्चीयते। तदुक्तं श्रीमन्मृगेन्द्रे—"चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा। सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम्॥" ( वि० २।५ ) इति।

ततश्च—

**व्यञ्जकसापेक्षत्वात् तन्मूलं दृक्क्रियावरणमस्ति यतः।**
**यदभावे दृक्क्रिययोः सर्वार्थत्वादणोर्न संसरणम्॥ २३॥**

यतः संसारावस्थायां ज्ञानक्रिययोर्व्यञ्जकापेक्षा दृश्यते, अतस्तदपेक्षायाः कारणं दृक्क्रियाच्छादनं किमप्यस्तीत्यवसीयते। यस्याभावे मुक्तात्मनां ज्ञत्वकर्तृत्वयोरीश्वरवत् सर्वविषयकत्वात् पुनः संसारयोगो नास्तीति श्रूयते। ननु सांख्यैर्निर्मल एवात्माभ्युपगतः, तदसत्, संसारावस्थायां तस्य पारतन्त्र्यदर्शनात्, तस्य चाहेतुकत्वे मुक्तस्यापि पारतन्त्र्यप्रसङ्गात्, ज्ञानक्रिययोर्व्यञ्जकापेक्षणाच्च। यच्छ्रूयते—"पाशाभावे पारतन्त्र्यं वक्तव्यं किंनिबन्धनम्" ( मृ० वि० ७।२ ) इत्यादि॥ २३॥

एषां चाव्यक्तादीनामुत्पत्तिक्रममाह—

**अव्यक्तरागविद्याः कलासमुत्थाः कला च मायाजा।**
**वसुधाद्यस्तत्त्वगणः प्रतिपुंनियतः कलान्तोऽयम्॥ २४॥**
**पर्यटति कर्मवशतो भुवनजदेहेष्वयं च सर्वेषु।**
**भुवनाकृतयश्चान्ये स्कन्धा ज्ञेयाः कलान्तानाम्॥ २५॥**

यदुक्तं रौरवे—"कलातत्त्वाद्रागविद्ये द्वे तत्त्वे संबभूवतुः। अव्यक्तं च" ( वि० २।१५ ) इति। कला चेति चशब्दात् कालनियती च मायासमुत्पन्ने, कालनियत्योरपि मायोद्भूतत्वेन भोगक्रियोपकारकत्वेन च श्रुतेः। तथाहि— नियत्यभावे ह्यन्योपार्जितान्यपि कर्माण्यन्ये भुञ्जीरन्, राजनियमाभावे द्विजादिकृष्यादिफलानीव दस्यव इति नियामकत्वेन नियतिः सिद्धा। कालश्चापि तस्यैव भोगावधिनियमहेतुश्चिरक्षिप्रादिप्रत्यय-

लिङ्गः सिद्ध एवेत्यादिविस्तरेणोक्तमस्माभिः मृगेन्द्रवृत्तिदीपिकायां तत्त्वप्रकाशवृत्तौ च। प्रोक्तं च मृगेन्द्रे—"त्रुट्यादिप्रत्ययस्यार्थः कालो मायासमुद्भवः। कलयन्ना समुत्थाना-न्नियत्या नियतं पशुम्॥" (वि० १०।१४) इति। एतच्च तत्त्वद्वयं कलाद्यपेक्षया बहिरङ्गत्वादाचार्येण विस्तरेण न साधितम्, अपि तु चशब्देन सूचितमित्यविरोधः। एतच्च कलादित्रिंशत्तत्त्वात्मकं सूक्ष्मशरीरं प्रतिपुरुषनियतत्वेन तेषां भोगसाधनमित्याह—वसुधाद्य इति। तदुक्तं मृगेन्द्रे–"प्रयोक्त्र्यादिमहीप्रान्तमेतदण्वर्थसाधकम्" (वि० १२।३२) इति। अत एव दीक्षायां सूक्ष्मदेहशुद्धिर्मायातत्त्वाधोभाग एव स्थाने कार्येत्युक्तं रौरवादौ। ननु श्रीमत्कालोत्तरे–"शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमम्। बुद्धिर्मनस्त्वहङ्कारः पुर्यष्टकमुदाहृतम्॥" (१७।४-५) इति श्रूयते? सत्यम्, अत एवैतत्सूत्रं भगवता राम-कण्ठेन त्रिंशत्तत्त्ववाचकतया व्याख्यातम्। यद्येवं कथमस्य पुर्यष्टकत्वम्, भूततन्मात्रबुद्धी-न्द्रियकर्मेन्द्रियान्तःकरणसंज्ञैः पञ्चभिर्वर्गैस्तत्कारणेन गुणतत्त्वेन तदापूरकेण च प्रधानेन भोक्तृस्वरूपोपकारकेण कलादिपञ्चककञ्चुकात्मना च वर्गेणारब्धत्वादित्यविरोधः। तच्च सूक्ष्मशरीरं बाह्यशरीरभेदेऽपि सृष्टेरारभ्य संहारान्तं तदन्तराले मोक्षप्राप्त्यन्तं वा एकस्य एकमेवेत्यवगन्तव्यम्। इत्थमसाधारणरू(पं?पां) कलादितत्त्वसृष्टिमुक्त्वाऽऽत्मन एव कर्मानुगुणभुवनजदेहविषयाद्याधारभूतां भुवनात्मिकां साधारणीं सृष्टिमाह—भुवना-कृतयश्चेति॥ २४-२५॥

एषां च तत्त्वानां प्रतिपुरुषं नियततयाऽचैतन्ये सत्यनेकत्वाद् भुवनाधारत्वेन सावयवत्वाच्च कार्यत्वसिद्धेस्तदुपादानं माया सिद्धेत्याह—

**विकृतेः परतो माया नित्या विभ्वी ह्यचेतना चैका।**
**सर्गस्थितिविलयानामाधारः कारणं च सा जगतः॥ २६॥**

उपादानकारणत्वात् सृष्ट्यादीनामाधारत्वेन विकृतेः स्वकार्यवर्गस्य परतः, पठ्यत इति शेषः। सा च नित्या, परमकारणत्वात् तस्याप्युपादानाभ्युपगमेऽनवस्थाप्रसङ्गाच्च। विभ्वी च स्वकार्यव्यापिका। किञ्चाचेतना, उपादानत्वादेव, मृदादीनामुपादानाना-मचैतन्यमेव दृश्यते यतः। एका च परमकारणत्वादेव। अनेकत्वे ह्यचैतन्ये सत्यनेकत्वाद् घटादिवत् कारणान्तरं मृग्यम्, अतश्चानवस्था स्यात्। अत एव परमाणवो न परम-कारणमित्युक्तम्। ननु परमात्मैव जगदुपादानमिति वेदान्तविदः, तदयुक्तम्, तस्योपादा-नत्वे तत्त्वादिवज्जडत्वप्रसङ्गात्, चेतनाचेतनकारणत्वेऽस्यापि तद्रूपत्वेन सांशतया कार्यत्व-प्रसङ्गाच्च—"यदा यद्रूपिणो भावास्तदा तद्रूपेण हेतुजाः" इति। एतच्च दूषणं पाञ्च-रात्राभ्युपगताया नारायणाख्यायाः परप्रकृतेरपि विज्ञेयम्, न्यायस्य समानत्वात्। अत्र सर्गस्थितिविलयानामाधार इत्यनेन सत्कार्यवाददृशा महाप्रलये कलादिकार्याणि सूक्ष्म-रूपेण मायायामवस्थितानीति दर्शयति। यच्छ्रूयते—"तदाधाराणि कार्याणि शक्तिरूपाणि संहृतौ। विवृतौ व्यक्तिरूपाणि व्याप्रियन्तेऽर्थसिद्धये॥" (मृ० वि० ९।१३) इति। एष च सत्कार्यवादोऽस्माभिः मृगेन्द्रवृत्तिदीपिकायां विस्तरेण साधितः॥ २६॥

इत्थं शुद्धाध्वानं प्रतिपाद्य यस्येदमुपकारकं तमाह—

**नित्यं विभु च मलेन ह्यनादिसंरुद्धदृक्क्रियं तत्त्वम् ।**
**पश्वभिधानं यस्य हि भोगायाऽयं तु परिकरोऽभिहितः ।।२७।।**

यस्य कर्मभोगार्थं साधारणासाधारणरूपो मायीयः परिकरोऽभिहितः, तदात्मवृन्दमलेन पशुत्वाख्येनानाद्यावृतज्ञानक्रियत्वात् पश्वाख्यं तत्त्वमुच्यते । अत एव न मलस्य तत्त्वान्तरत्वमपि तु पशुतत्त्व एवान्तर्भावः, तेन विना पशुत्वायोगाच्च । तत् तत्त्वं नित्यम्, न तु बौद्धानामिव क्षणिकम्, पूर्वानुभूतस्मरणदर्शनात्, क्षणिकत्वे कर्मानुष्ठानतत्फलभोक्तृत्वयोरनुपपत्तेश्च । किञ्च विभु, न तु क्षपणकानामिव शरीरपरिमितः सङ्कोचविकासधर्मी वा, तादृशस्याचेतनत्वानित्यत्वादिदोषप्रसङ्गात्, कर्मफलभोक्तृत्वेन च भोगवैचित्र्यदर्शनात् । अनेकत्वमात्मनामर्थसिद्धमेव । वक्ष्यति च संक्रान्तिनिराकरणसमये । अत्र यदा कूटस्थनित्येन मलेन प्रवाहनित्येन च कर्मणाऽनादिसम्बन्धस्य मोक्षदित्सायां शम्भुर्मलपरिपाकार्थं कर्मभोजनाय मायीयेन कलादिना सम्बन्धं करोति, तदाऽसावात्मा सकल इत्युच्यते, महाप्रलये तु कलाद्युपसंहारान्मलकर्मयुक्तः प्रलयाकलः, विज्ञानयोगादिना कर्मणो विनाशात् केवलमलयुक्तो विज्ञानकल इत्यादिपशुभेदोऽस्माभिस्तत्त्वप्रकाशवृत्तौ विस्तरेण दर्शितः ॥ २७ ॥

अयं च—

**ध्वंसितबन्धनजालो दीक्षाज्ञानाख्यया तु शिवशक्त्या ।**
**शुद्धोऽध्वा तत्त्वानामा प्रकटीकृतदृक्क्रियश्चाणुः ॥ २८ ॥**

तत्र ह्याचार्यकृतो निरधिकरणो वा शिवस्यानुग्राह्यविषयः शाक्तो व्यापारो दीक्षोच्यते । ततो दीक्षाज्ञानादिशब्दवाच्यया शिवशक्त्याऽपनीतमलादिपाशजालोऽत एव प्रकाशितसर्वार्थज्ञानक्रियोऽणुरात्मा शुद्धाध्वसंज्ञो भवति । यदुक्तं रौरवे—' सर्वाञ्जनविनिर्मुक्तं शिवशक्तिकले स्थितम् । आत्मतत्त्वमिदं शुद्धम्"(वि० ४।४३) इति । ननु ज्ञानादेवात्मनां मोक्ष इति वेदान्तिसांख्यादयः, तदयुक्तम्, मलस्य द्रव्यत्वाच्चक्षुषः पटलादेरिव न ज्ञानमात्रान्निवृत्तिः संभवति, अपि तु चक्षुर्वैद्यव्यापारेणेव दीक्षाख्येनेश्वरव्यापारेणैव । यत उक्तं स्वायंभुवे—"दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि" इति ॥ २८ ॥

इयं च संज्ञाऽस्यानुग्रहोत्तरमधिकारादिनिबन्धनदेहसंयोग एव, न तु शिवसाम्यरूपपरमुक्तिप्राप्तौ, तदानीं मुक्तशिवत्वेनैव व्यवहारादित्याह—

**पश्यति शिवं स्वशक्त्या ध्यायति चासौ शिवेद्धया दृष्टया ।**
**यजते शम्भुं मन्त्रैरुपकारायात्मनः परेषां च ।।२९।।**

असौ शुद्धात्मा शिवसमर्थ(त?)या स्वशक्त्यात्मिक(त?)या दृष्ट्या शिवं ध्यायति पश्यति च । तदुक्तं मोक्षकारिकासु—"शिवार्कशक्तिदीधित्या समर्थीकृतचिद्दृशा । शिवं शक्त्यादिभिः सार्धं पश्यत्यात्मा गतावृतिः ॥" (श्लो० १११) इति । अत एव पातञ्जला-

द्युक्तवद् बुद्धयादिविषयत्वं शिवस्य न संभवति, तस्य पाशागोचरत्वात् । यदुक्तं तत्रैव—"अन्तःकरणवृत्तिर्या बोधाख्या सा महेश्वरम् । न प्रकाशयितुं शक्ता पाशत्वान्निगडादिवत् ॥" (श्लो० १०६) इति । किञ्चासावात्मनः परेषां च उपकारार्थं तमेव विविधैर्यज्ञैर्यजति । यदुक्तं रौरवे—"यजन्ति विविधैर्यज्ञैर्मन्त्रतन्त्रविशारदाः । गुरुतन्त्राद्यनुज्ञाता दीक्षाविच्छिन्नबन्धनाः ॥" (वि० २।२१-२२) इति । तत्राचार्या विद्येश्वरादयश्चाधिकारक्षयादात्मोपकारार्थं भोगमोक्षदानादिपरोपकाराय च यजन्ति, साधकः पुत्रको वाऽऽत्मन एव भोगमोक्षार्थमिति भेदः ॥ २९ ॥

तेषु मध्यान्मायागर्भाधिकारीश्वरतत्त्वमाह—

**मण्डलिनः श्रीकण्ठः क्रोधाद्याः शतभवाः सवीरेशाः ।**

**एते कलादियोगात् प्रकटीकृतदृक्क्रियाः परेशेन ॥ ३० ॥**

तत्र मण्डलिनः अष्टौ कलामस्तकस्थाः । यदुक्तं रौरवे—"मण्डलाधिपतिभ्यो यस्तत्त्वमार्गः प्रतिष्ठितः" (वि० ४।२१) इति । श्रीकण्ठो गुणतत्त्वनिलयोऽधस्तनभुवनादेश्च कर्ता । क्रोधादयश्च गुणमस्तकस्था अष्टावेव शतभवाः शतरुद्रा ब्रह्माण्डधारकाः । वीरेशो वीरभद्रः शतरुद्राधिष्ठाता । एते च शिवेनैव प्रकटीकृतदृक्क्रियाः । ततश्चारिनिबन्धनात् कलादियोगादपि पशुवन्न विपरीतज्ञानयोगिनः, शिवेन साक्षादनुगृहीतत्वात् । यदुक्तम्—"कलायोगेऽपि नो वश्याः कलानां पशुसङ्घवत्" ( मो० का० ८२ ) इति । स तु कलादियोगस्तेषामनन्तकर्तृक एव, "शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" ( कि० वि० ३।२७ ) इति श्रुतेः ॥ ३० ॥

ते च—

**कुर्वन्ति भुक्तिमुक्ती स्वगोचरे नियोगतः पुंसाम् ।**

एतच्चापरमन्त्रेश्वरतत्त्वं मायागर्भाधिकारीत्याह—

**मन्त्रेशतत्त्वमेतद् मायाकार्याधिकार्यपरम् ॥ ३१ ॥**

इत्थं परममन्त्रेशानुक्त्वा मन्त्रान् वक्तुमाह—

**सर्गादावणुकोटयः सप्तेशानेन दारितावरणाः ।**

**ज्वालितदृक्कर्तृत्वात् तत्त्वं मन्त्राख्यमेतद्धि ॥ ३२ ॥**

अत्र च "विज्ञानकेवलानष्टौ बोधयामास पुद्गलान्" ( मा० वि० १।१९ ) इति श्रुतेः शुद्धाध्ववर्तित्वाच्च विज्ञानकलानां मध्यात् परिपक्वमलानामेव तत्पाकतारतम्यवशाद् विद्येश्वरत्वे मन्त्रेश्वरत्वे च नियोगः, अपरमन्त्रेश्वरत्वेऽशुद्धाध्ववर्तित्वादपक्वमलानां प्रलयाकलानामेवेति मन्तव्यम् । मन्त्रशब्दश्चात्र–[1]"मननं सर्ववेदित्वं त्राणं संसार्यनुग्रहः । मननत्राणधर्मित्वान्मन्त्र इत्यभिधीयते ॥" इति श्रुतेः शिवशक्तितदनुगृहीतेषु च वर्तते । उपचारात्तु वाचकशब्दानां मन्त्रत्वमिति वक्ष्यामः । निर्मलत्वाच्च प्रकाशितज्ञानक्रिया एते मननादिधर्मयोगाच्छुद्धविद्यातत्त्वाश्रितत्वाच्च रौरवादौ शैवशास्त्रे मन्त्रतत्त्वमित्युच्यन्ते ।

---

१. सार्धत्रिशतिकालोत्तरवृत्तिः (पृ० ४, टि० २२) द्रष्टव्या । श्लोकोऽयं मृगेन्द्रवृत्तौ (क्रि० १।१) च दृश्यते ।

अत एव शुद्धविद्यासंयोजनात् पूर्वं मायोर्ध्वस्थान एव मलविच्छित्तिर्दीक्षायां कार्येति गुरवः ॥ ३२ ॥

अथैषामनुग्रहकरणत्वमाह—

**जगति कृते तत्रार्धं मन्त्राणां शिवसमाहृतान् पुंसः ।**
**अनुगृह्य याति हि विना देशिकमूर्ति प्रयुक्तमीशेन ॥ ३३ ॥**

तत्र तेषु सप्तकोटिसंख्येष्वणुषु मध्यादर्धं गुर्वधिकरणमनपेक्ष्यैवेश्वरेण प्रयुक्तं सत् शिवसमाहृतान् शिवेनैवानुग्रहशक्त्या विषयीकृतान् पुंसोऽनुगृह्य सृष्ट्यनन्तरमेव यातीति, अनुग्रहमिति शेषः । यदुक्तं मृगेन्द्रे—"प्रयोक्तृदेहसापेक्षं तदर्धमखिलेऽध्वनि । कृत्वाधिकारं स्थित्यन्ते शिवं विशति सेश्वरम् ॥ विनाधिकरणेनान्यत् प्रधानविकृतेरधः । कृत्वाऽधिकारमीशेष्टमपैति" ( वि० ४।७-८ ) इति । तेषु मध्याद् विशिष्टमलपाकवन्तः सृष्ट्यनन्तरमेव मोक्षभाजः, अन्ये संहारकाल एवेत्यर्थः ॥३३॥

अत एवान्यस्यार्धस्य व्यापारमाह—

**शिवकृतमण्डलमन्त्रैर्युक्तं चान्यत् प्रयुक्तमीशेन ।**
**देशिकदेहस्थेन तु दीक्षाख्येन प्रयोगेण ॥ ३४ ॥**
**विषवन्निकृन्तति पशोः सहसा मलकर्मयोनिकार्याणि ।**
**आराधितं तु सिद्धीर्यच्छति विविधाश्च साधकेन्द्रेभ्यः ॥ ३५ ॥**

शिवेन पश्वनुग्रहार्थमुत्पादितैर्महामण्डलविद्याङ्गादिमण्डलैस्तेषु पूज्यतया श्रुतैर्मन्त्रैश्च सहितमन्यदर्धमाचार्यमूर्तिस्थेनेशेन प्रयुक्तं सत् पशोर्मलकर्ममायाकार्याणि त्रिषमिव सहसा निकृन्तति । अत एव सकलस्यैव गुर्वधिकरणशिवानुग्रहः, तस्यैव बन्धत्रययोगात् । मलश्चात्र एक एवानेकात्मावारकानेकशक्तियुक्तो नित्यो व्यापकश्च । यच्छ्रूयते—"तदेकं सर्वभूतानामनादि निबिडं महत् । प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवत् ॥" (मृ० वि० ७।८) इति । ततश्च यस्याः शक्तेः पाकः, तस्या एव दीक्षया रोध इति मलैक्ये युगपत् सर्वमोक्षप्रसङ्गोऽपि परिहृतः । कर्म च धर्माधर्मात्मकं पुरुषनियतं प्रवाहानादि । योनिस्तु माया, तत्कार्याणि च साधारणासाधारणरूपाणि कर्मनिमित्तत्वादागन्तुकान्यपि प्रवाहानादीन्येव, बीजाङ्कुरवदनादित्वेनैव कर्मशरीरप्रबन्धस्य सिद्धेः । एतानि च मलादीनि दीक्षाख्येन मन्त्रकरणेनेश्वरव्यापारेण निवर्तन्ते, यथा मन्त्रपूर्विकया क्रियया विषनिवृत्तिर्दृश्यते । अतश्च मन्त्राणामनुग्राहककरणत्वम्, विद्येश्वराणां तु परापराणामाचार्यवत् तत्कर्तृत्वमिति भेदः । किञ्चैत(दन्य?)दर्थमाराध्यमानं साधकेभ्यो भोगाभिलाषिभ्यो विविधाः सिद्धीः प्रयच्छति । यदुक्तं रौरवे[1]—

दीक्षापूता गणपतिगुरोर्मण्डले जन्मवन्तः
सिद्धा मन्त्रैस्तरुणदिनकृन्मण्डलोद्भासिदेहाः ।
भुक्त्वा भोगान् सुचिरममरस्त्रीनिकायैरुपेताः
स्रस्तोत्कण्ठाः शिवपदपरैश्वर्यभाजो भवन्ति ॥ इति ॥ ३५ ॥

---

१. रौरवे नोपलभ्यते वचनमेतदिति म० पा० वि० ( पृ० २६, टि० ७ ) द्रष्टव्या ।

ननु दीक्षया बन्धनिवृत्तिरात्मनो जातेति कथमवगम्यते ? अत आह—

**शुद्धिं व्रजति तुलायां दीक्षातो ब्रह्म(ह?हे)त्यतो मुख्यात् ।**
**प्रत्ययतो जानीयाद् बन्धनविगमं विषक्षयवत् ॥ ३६ ॥**

इह यद्दीक्षायां महापातकयोगिनोऽप्यपेतपातकत्वं दृष्टम् । तथाहि श्रीमत्कालोत्तराद्युक्तवन्मन्त्रलब्धधटारोपणेन तस्य गौरवं परीक्ष्य पश्चादुद्घातमन्त्रोच्चारणादिपूर्वं तच्छुद्धिं कृत्वा पुनर्धटारोपणे तस्य लाघवमुत्पद्यमानं दृश्यते । एतच्चोपलक्षणं निर्बीजकरणादीनां प्रत्ययान्तराणाम् । ततोऽस्माद् दृश्यमानात् प्रत्ययादहितुण्डिकक्रियया विषहरणवद् दीक्षाख्यया क्रियया बन्धनापगमः सिद्ध इति ज्ञातव्यम् । तत एव च दृष्टार्थेषु विषभूतरसवादादिषु तदागमस्य फलवत्त्वं दृष्ट्वा तद्वदेवादृष्टस्यापि तच्छास्त्रस्य सत्यत्वमनुमोयत इति शिवस्य परमाप्तत्वं सिद्धम् । यदुक्तम्—[1]"विषाद्यभावसंदृष्टेर्मन्त्रवादाच्च सस्वरात् । रसोपनिषदाटोपादाप्तः स परिगृह्यते ॥" इति ॥ ३६ ॥

नन्वेवं चेद् दीक्षयैव समस्तपापक्षयात् तत्क्षणमेव शरीरपातप्रसङ्गोऽत आह—

**एष्यत्फलकृतिदाहाद् दीक्षितमात्रस्य पतति नो पिण्डः ।**
**भवति च काचिद् दीक्षा या हन्त्यपि वर्तमानफलम् ॥ ३७ ॥**

एष्यत्फलानामेव कर्मणां सद्योनिर्वाणदीक्षया दाहादारब्धकार्यस्य कर्मणोपस्थापितत्वाच्च दीक्षोत्तरकालं शरीरस्थितिरविरुद्धा । यदुक्तं किरणे—"अनेकभविकं कर्म दग्धं बीजमिवाणुभिः । भविष्यदपि संरुद्धं येनेदं तद्धि भोगतः ॥" (वि० ६।१९) इति । अत्यन्तमलपरिपाके तु सद्योनिर्वाणदीक्षया तस्यापि क्षय इत्याह—भवति चेति । तत्रापि संस्कारवशात् किञ्चित्कालं स्थितिः संभवत्येव । यदाहुः—"तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः" ( सां० का० ६७ ) इति ॥ ३७ ॥

इदानीं भविष्यदपि संरुद्धमिति ज्ञापकोक्तं विशेषयति—

**कृतमपि फलाय न स्याद् दीक्षोपर्यूषरोप्तबीजमिव ।**
**बलवद्विशेषशास्त्रव्यतिकरजातं विहाय कर्मैकम् ॥ ३८ ॥**

दीक्षोत्तरकालं विहितत्वेनानुष्ठीयमानमिष्टापूर्तादिरूपं कर्म दीक्षयैव रुद्धशक्तित्वान्न पुनः शरीरयोगादिफलजनकम् । विशेषशास्त्रसिद्धं साधकेनानुष्ठीयमानं तु मन्त्राराधनादि कर्म फलदमेव । यदुक्तं सूक्ष्मस्वायंभुवे—"यो यत्राभिलषेद्भोगान् स तत्रैव नियोजितः । सिद्धिभाङ्मन्त्रसामर्थ्यात्" इति । किञ्च, मुमुक्षोरपि विशेषशास्त्रविहिता[न]नुष्ठाने तन्निषिद्धानुष्ठाने चाकृतप्रायश्चित्तस्य प्रत्यवाययोगः श्रूयते—[2]"आज्ञाविलङ्घनात् प्रोक्तं क्रव्यादत्वं शतं समाः" ( सा० का० २५।२ ) इति । तद्विहितत्वादेव च सामान्यशास्त्रसिद्धोऽपि वर्णाश्रमाचारोऽनुष्ठेय एव । यच्छ्रूयते—[3]"इति वर्णाश्रमाचारान् मनसापि न

---

१. आयुर्वेदाच्च गणितादिति मृगेन्द्रवृत्ति(वि० १।१)स्थः पाठः ।

२. समयोल्लङ्घनादिति तत्रत्यः पाठः ।

३. मृगेन्द्रवृत्तिदीपिकायां ( वि० १।१ ) श्रीमद्भार्गववचनतया स्मर्यते ।

लङ्घयेत् ॥ यो यस्मिन्नाश्रमे तिष्ठन् प्राप्तो दीक्षां शिवात्मिकाम् । स तस्मिन्नेव संतिष्ठन् शिवधर्मं च पालयेत् ॥" इति ॥ ३८ ॥

ननु समयोल्लङ्घनादिप्रत्यवाययुक्तस्याकृतप्रायश्चित्तस्य मोक्षो वा न वाऽत आह—

**तस्मादप्यकृतविधिः किञ्चित्कालं पिशाचवरराजः ।**
**भ्रान्त्या विमलात्माऽसौ व्रजति हि समतां परेशेन ॥ ३९ ॥**

अत्र च दीक्षोत्तरकालं स्नानार्चनादिसमयानुष्ठानेनारब्धकार्यपाशक्षयः प्रत्यहमपचयेन क्रियते । ततः सापेक्षदीक्षाभाजां शक्तानां समयाचारविशेषोऽनुष्ठेयः । बालिशानां च निरपेक्षदीक्षाभाजां गुरुशुश्रूषाशिवार्चनादि यावच्छक्यमनुष्ठेयम्, अत एव तदनुष्ठानेन दीक्षानिष्पत्तिरनुमीयते । ततश्च यस्य मलपरिपाकबलेन तीव्रतरशक्तिपातनम्, न दीक्षावैकल्यम्, नापि समयोल्लङ्घनादि, तस्य देहपातानन्तरं मोक्षः । यस्य तु मलपरिपाकमान्द्यान्मन्दतरादिशक्तिपातस्य दीक्षोत्तरं दैवान्मानुषात् प्रतिबलात् समयोल्लङ्घनं समुत्पद्यते, सोऽननुष्ठितसमयाचारोऽकृतप्रायश्चित्तविधिश्च पिशाचराजात्मकं समयोल्लङ्घनफलं काम्यफलमिवानुभूय पुनर्विमलात्मा परशिवसाम्यं मोक्षरूपं प्राप्नोति । यदुक्तम्—"प्रायश्चित्तविशुद्धस्य मतिः शुद्धा प्रकीर्तिता" इति । यस्य तु दृष्टार्थतया कृत्रिमगुरुभक्त्यादिना कृतदीक्षितस्य बुद्धिपूर्वमेव समयाननुष्ठानं न तस्य सा निष्पन्ना, गुरुश्च प्रायश्चित्ती भवति । यच्छ्रूयते—"तत्र मिथ्याप्रयुक्ताऽणुः प्रायश्चित्ती भवेद् गुरुः" (मृ० क्रि० ८।२४२) इति, "आत्मदीक्षां गुरुः कुर्याद्व्यभिचारिणि दीक्षितः" इति च ॥ ३९ ॥

इत्थं प्रासङ्गिकदीक्षाफलं प्रतिपाद्य प्रकृते मन्त्रानन्तरं मन्त्रेश्वरानाह—

**मन्त्रादिसर्गपूर्वं त्वष्टौ देवेन दारितावरणाः ।**
**अणवः कृतसर्वार्थज्ञानव्यापारसामर्थ्याः ॥ ४० ॥**

मन्त्रादिसृष्टेः प्रागेवाष्टावणवो विज्ञानकलाः शिवेनापनीतमलाः सर्वविषयज्ञानक्रियाश्च सम्पन्नाः । यदुक्तं मृगेन्द्रे—"तत्रादौ केवलाणूनां योग्यानां कुरुतेऽष्टकम् । वामादिशक्तिभिर्युक्तं सप्तकोटिपरिच्छदम् ॥" ( वि० ४।२ ) इति ॥ ४० ॥

के ते ? किञ्च कुर्वन्तीत्यत आह—

**तेऽनन्तेशप्रमुखाः पतिभावात् प्रेरयन्ति मन्त्रादीन् ।**
**सर्गस्थितिलयमुक्तीः कुर्वन्ति हरेच्छया नुन्नाः ॥ ४१ ॥**

ते चानन्तसूक्ष्मशिवोत्तमैकनेत्रैकरुद्रत्रिमूर्तिश्रीकण्ठशिखण्डिसंज्ञा मन्त्रमहेश्वरत्वेन मन्त्रादीन् प्रेरयन्ति । किञ्च, सर्गादिचतुष्टयं तदविनाभूतं भोजनात्मकं तिरोभावं च कुर्वन्ति । यदुक्तं रौरवे—"स्थितिसंरक्षणादानभावानुग्रहकारिणः" (वि० १।१५) इति । पञ्चकृत्याधिकारित्वेऽपि नैषां शिवसाम्यमित्याह—हरेच्छया नुन्ना इति । अधिकारमलयोगेन प्रेर्यत्वाच्छिवापेक्षयैषां कलया न्यूनं कर्तृत्वम्, मन्त्रमन्त्रेश्वराणां तु ततोऽपि न्यूनम् । अत एवानन्तस्य सर्वोत्कृष्टत्वं श्रूयते—"तेषामनन्तशक्तीनामनन्तः परमेश्वरः"( रौ० वि०

२।१२ ) इति। सर्वज्ञत्वं तु सर्वेषां समानमेव, विशेषाश्रवणात्। एषां च सर्वेषां महाप्रलयेऽधिकारविरामान्मुक्तिरित्युक्तं रौरवादौ—"अनन्तः परमस्तेषां महतां चक्रवर्तिनाम्। विहितं सर्वकर्तृत्वकारणं परमं पदम्॥" ( वि० २।१३ ) इति॥ ४१॥

एवं चेश्वरतत्त्वाश्रिता मन्त्रमहेश्वरत्वेनोच्यन्त इत्याह—

**मन्त्रेशतत्त्वमेतत् परमणवोऽध्वद्वये च तत्पतयः।**
**अभिधायकमनुलिङ्गा ह्यभिधानं नो निरर्थकं यस्मात्॥ ४२॥**

अध्वद्वये शुद्धाशुद्धात्मके मननत्राणयोगिनोऽणवस्तत्पतयश्च मन्त्रेश्वरा मन्त्रमहेश्वरा उच्यन्ते। अनेनाशुद्धाध्ववर्तिनः साञ्जना अपि मन्त्राः संभवन्तीति दर्शयति। यदुक्तम्—[1]"अन्ये प्राधानिका मन्त्रा ब्रह्मविष्ण्वादयः परे। साञ्जनास्तेऽण्डमध्यस्थाः सात्त्वराजसतामसाः॥" इति। अतश्च वाचकशब्दानामचेतनत्वेन मननत्राणधर्मासंभवादभिधायकत्वेनोपचारान्मन्त्रशब्दवाच्यत्वमित्याह—अभिधायकेति। घटपटाद्यभिधानशब्दो वाच्यार्थनिष्ठ एव दृश्यते, तस्मादनन्ताद्यभिधायकशब्दात्मकैर्मन्त्रैर्लिङ्गभूतैरभिधेयास्ते मन्त्रेश्वराद्यात्मानस्तज्जपादिना फलप्रदातारः सिद्धाः। एतेन शब्दमात्रमेव देवतेति ये मीमांसका मन्यन्ते ते प्रतिक्षिप्ताः, अचेतनस्य चेतनाधिष्ठानादेव कार्यकरत्वात्। अतश्च प्रतिमादाविव मन्त्रात्मके शब्देऽभिव्यक्ताः शिवादिवाच्यमन्त्रा एव फलदा इत्यवगन्तव्यम्॥ ४२॥

अत्र च शब्दस्य रचनावत्त्वेन घटादिवत् कार्यत्वाच्छब्दार्थसंबन्धस्यापि नित्यत्वायोगेन साङ्केतिकत्वात् सर्वज्ञ एवेश्वरस्तत्सङ्केतकर्तेत्याह—

**विद्याविद्येशानां सामान्यविशेषधर्मविच्छम्भुः।**
**मन्त्रानकरोद् यस्मादर्थविदभिधानकृद् दृष्टः॥ ४३॥**

यस्मात् पुत्राद्यर्थानां तत्तदर्थविदेव पित्रादिर्लोकेऽभिधानकृद् दृष्टः, तस्मान्मन्त्रेश्वरात्मनामपि वाचकान् मन्त्रान् शम्भुरेवाकार्षीत्। स एव तेषां सामान्यविशेषलक्षणज्ञो यतः। सामान्यलक्षणं तेषां नित्यत्वव्यापकत्वादि, विशेषलक्षणं तु मलावशेषतस्तत्तत्पदयोज्यत्वमित्यवगन्तव्यम्। अत्र मन्त्राद्यात्मकशब्दोपादानतया विद्येश्वरादीनां देहेन्द्रियाद्याधारभूतशुद्धाध्वभुवनोपादानत्वेन कुण्डलिन्याख्या महामाया सिद्धा। यदुक्तं रौरवादौ—"मायोपरि महामाया" (वि० ४।२८) इति। मृगेन्द्रेऽपि—"शक्तेर्नादो भवेद् बिन्दुरक्षरं मातृका ततः" ( क्रि० १।२ ) इति, "शुद्धाध्वन्यपि मायायाः परस्याः" ( मृ० वि० १३।५ ) इति च। एष च विद्येश्वरसदाशिवादिशुद्धतत्त्वभेदस्तत्कारणभूतपरबिन्दुसिद्धिप्रकारश्च मतङ्गादौ विस्तरेणोक्तः, साधितश्च रत्नत्रयोल्लेखिन्यामस्माभिरिति तत एवावधार्यम्॥ ४३॥

---

१. सार्धत्रिशतिकालोत्तरवृत्तिः (पृ० १४६, टि० ७) द्रष्टव्या।

अथैषां विद्येश्वरादीनां स्वस्वाधिष्ठेयोपाधिभेदभिन्नाभ्यां शक्तिशिवाभ्यां संहतिरूपत्वमागमेषु श्रूयत इत्याह—

**अणुशक्तिशम्भुपक्षा विद्याविद्येश्वरेषु विद्वद्भिः ।**
**एकः शिवोऽविकारी तच्छक्तिश्चाप्यतो न योग्यौ तौ ॥ ४४ ॥**
**बहुधा स्थातुं यद्वा चैतन्यविनाकृतौ विकारित्वात् ।**
**अथ शम्भुरेक एव हि योगीव भवेदनेकमूर्तिस्थः ॥ ४५ ॥**

गीतायां श्रूयते—"अनुग्रहाय लोकस्य शिवो मन्त्र इति श्रुतिः । या त्वनुग्राहिका शक्तिः सा मन्त्रत्वमिहागता ॥" इति, "चतुर्विंशतिराख्याता मन्त्राणामीश्वराः पराः । आणवाः शाम्भवाः शाक्तास्तथान्या मन्त्रकोटयः ॥ अण्डस्याधारका ह्येवं वीरभद्रपुरस्सराः ।" इति च । एषु चाणुपक्षस्य प्रोक्तवन्मुख्य एव भेदः । शम्भुशक्तिपक्षयोस्तु तदधिष्ठानवशादौपचारिक इत्याह—एकः शिव इति । अत्रैक एव शिवो जगत्कर्ता सर्वानुग्राहकश्च, तस्यैवानादिमुक्तत्वात् । उक्तं च रौरवादौ—"शिवतत्त्वं परं ह्येकम्" (वि० २।४) इति । श्रुतिरप्याह—"एक एव रुद्रो न द्वितीयाय तस्थे" (अथ० उ० २।७ ) इति । न चानेकेश्वरत्वे जगत्कार्यसिद्धिः, अनेककर्तृकाणां रथादीनामप्येकस्थपतीच्छानुवर्तनं विनाऽनुत्पत्तेः । यदाहुः—"बहवो यत्र नेतारः सर्वे पण्डितमानिनः । सर्वे महत्त्वमिच्छन्ति तद्व्यक्तमवसीदति ॥" इति । अनेन प्रवाहेश्वरपक्षोऽपि निरस्तः, ऐश्वर्यस्य स्वरूपव्यक्तिलाभात्मकत्वेन विनाशानुपपत्तेः । स चाविकारी, नित्यत्वाच्चेतनत्वाच्च । तच्छक्तिश्च तादृश्येव, तद्धर्मत्वात् । नहि नित्यस्यानित्यधर्मयोगः, धर्मधर्मिणोरव्यतिरेकेण धर्मिणोऽप्यनित्यत्वप्रसङ्गात् । अतस्तौ शक्तिशिवावनन्तादिभेदेन बहुधा स्थातुं युक्तौ । यद्वा तयोरनेकधाऽवस्थानमभ्युपगम्यते, तदा विकारित्वान्मायादिवदचेतनौ प्रसज्येते । तयोश्चाचेतनत्वं न युक्तम्, चेतनत्वेनैव श्रवणात्, अचेतनस्य चेतनाधिष्ठानं विना परिणामाद्ययोगाच्च । तस्मादौपचारिक एव तयोर्भेदः । यच्छ्रूयते—"अधिकारी स भोगी च लयी स्यादुपचारतः" इति, तथा—'किन्तु यः पतिभेदोऽस्मिन् स शास्त्रे शक्तिभेदवत् । कृत्यभेदोपचारेण तद्भेदस्थानभेदजः ॥" (मृ० वि० १३।१६४-१६५) इति च । अत्र पराशङ्कामाह—अथ शम्भुरिति ॥ ४४-४५ ॥

एकोऽपि शिवो योगिवदनेकदेहाधिष्ठानेन सदाशिवानन्तादिसंज्ञाभेदं लभत इति चेत्, तच्चायुक्तमित्याह—

**शक्तिर्मूर्तिस्तस्य हि सा चैका नाप्ययं मुख्यः ।**
**बहवः श्रेयोभाजः पुरुषास्तेषां च दृक्क्रियोत्कर्षः ॥ ४६ ॥**
**व्यञ्जकभेदोत्कर्षाद् दृष्टोऽतस्तद्भवो मुख्यः ।**

यस्माच्छिवस्य निर्मलत्वेन परमार्थत्वेन बैन्दवादिदेहायोगाच्छक्तिरेव देहकार्यं कुर्वाणोपचारेण मूर्तिरुच्यते । सा चैकैवेत्युक्तम् । तस्मादीशानादिस्तद्भेदोऽपि न वास्तव एवेति योगिनामिव शरीरभेदोऽप्यस्य न मुख्य एव । ननु—"पञ्चवक्त्रस्त्रिपञ्चदृक्"

इत्यादिना शिवस्यापि शरीरभेदः श्रूयते, सत्यम्, सोऽपि ध्यानार्थमेव श्रूयते। यदुक्तं पौष्करे—"साधकस्य तु लक्ष्यार्थं तस्य रूपमुदाहृतम्" इति। अणुपक्षभेदस्तु मुख्य एवेत्याह—बहवः श्रेय इति। अत्र हि भोगभेदाज्जननमरणभेदाच्च भोगमोक्षार्थं त्वेते श्रेयोभाजः पुरुषा बहव एव दृश्यन्ते। तेषां च व्यञ्जकशरीरेन्द्रियादिसंभवादुत्कर्षः, उत्तरोत्तरं ज्ञानक्रियोत्कर्षश्च दृश्यते। तस्मादेषामपि विद्याविद्येश्वराणां प्रोक्तवच्छिवानुग्रहभेदेन तत्तदधिकारभेदाद् भुवनभेदाच्च तत्संभवो भेदो वास्तव एव ॥ ४६ ॥

ततश्च—

**कुरुतेऽर्थं शिवशक्ती तानधिरुह्येह तद्गताद् भेदात् ।। ४७ ।।**
**भिन्ने इव लक्ष्येते गुणतो जातितश्च तन्नाम ।**

यस्मात् तानधिष्ठाय शिवशक्ती पुरुषार्थं साधयतः, ततस्तद्भेदेन ते अपि भिन्ने इव भवतः। स च सशक्तिकः शिवस्तद्गतकृत्यभेदयोगेन गौण्या वृत्त्या तत्तत्संज्ञावान् भवति ॥ ४७ ॥

अतः शिव एव सर्वानुग्राहक इत्याह—

**नित्यस्वभावविमलः सर्वज्ञः सर्वकृच्चेशः ।। ४८ ।।**
**अविहतशक्तिः शम्भुः सुहृदेकः सर्वपुरुषाणाम् ।**
**अत्र च शक्तिद्वितयं बोधध्यानादिसिद्धये गदितम् ।। ४९ ।।**
**मूर्तिस्तद्वांश्चेति / लेशादुक्तिश्च शक्तिशक्तिमतोः ।** हि /

अत्र शास्त्रे भोगमोक्षसिद्ध्यर्थं ज्ञेयतया च सकलनिष्कलाख्यं शक्तिशक्तिमत्संज्ञं वा तत्त्वद्वयमुक्तम्। तयोश्च शक्तिशक्तिमतोर्मूर्तिमूर्तिमत्त्वेनोक्तिर्ज्ञेया। एतदुक्तं भवति—अधिकारावस्थायां कार्यभेदादष्टत्रिंशत्कलाभेदभिन्ना शक्तिरेवास्य मूर्तिः। तद्योगादेव चासौ सकलः प्रोच्यते। उपरतव्यापारतया युक्तो निष्कल इति ॥ ४८-४९ ॥

तां च—

**मूर्तिमधिष्ठाय हरः पुरुषाणां परहितैकदृक् शम्भुः ।। ५० ।।**
**कुरुते तु भुक्तिमुक्ती रुद्धबलत्वात् स्वतोऽसमर्थानाम् ।**

ध्येयाकाराभिव्यक्तां शक्तिरूपां मूर्तिमधिष्ठाय परहितैकदर्शी शम्भुर्मलावृतसामर्थ्यत्वेन स्वभोगमोक्षाय स्वयमसमर्थानां पुंसां भोगमोक्षौ कुरुते। स च पाशान् पशुभ्यो हरति, तांश्च भोगार्थं मोक्षार्थं वा हरतीति हरः कथ्यते। यदुक्तम्—[1]"हरति पशुभ्यः पाशान् पुंसोऽप्यूर्ध्वं पदं ततस्तु हरः" इति। प्रयोगश्चात्र–पुरुषा भोगार्थं मोक्षार्थं वा न स्वयं प्रवर्तितुं शक्ताः, बद्धत्वेनास्वतन्त्रत्वात्, मेषादिबद्धपशुवत्। पाशाश्च न पुरुषार्थं स्वयं प्रवर्तन्ते निवर्तन्ते वा, जडत्वाद्रज्ज्वादिवत्। अतो यस्तेषां भोगमोक्षहेतुः, सः शिव एव सिद्धः ॥ ५० ॥

---

१. नेत्रतन्त्रोद्योतेऽपि (१।३) उद्धृतो दृश्यतेऽयं श्लोकार्धः।

अत्र च—

**विद्याविद्येशत्वं चापरमुक्तिः परेह शिवसमता ॥ ५१ ॥**

विद्यादिपदानां परमुक्त्यपेक्षया प्रेर्यत्वेऽपि मायोत्तीर्णत्वान्निर्मलत्वाच्च न पुनः संसारयोग इत्यपरमुक्तित्वम् । शिवसाम्यं तु परमोक्ष एव ॥ ५१ ॥

ततश्च—

**सर्वव्याप्त्यर्हत्वान्नाम व्याप्स्यन्ति मन्त्राद्याः ।**
**पत्या व्यञ्जितशक्तिः पुरुषोऽतो जायतेऽस्य पतिसमता ॥ ५२ ॥**
**व्यञ्जकमनुकुर्वन्तो पूर्वं दृष्टा च शक्तिरणोः ।**
**प्राग् दृष्टत्वाच्छक्तेर्नो संक्रान्तिर्न जातिवच्चैका ॥ ५३ ॥**

मन्त्रादयः परमुक्त्यर्हत्वान्मुक्तसंज्ञाभाज इत्यर्थः । ननु संसारावस्थायां पुरुषस्य किञ्चिज्ज्ञत्वदर्शनान्मुक्तावपि तादृश एवात आह–पत्या व्यञ्जितेति । सर्वज्ञेन सर्वसामर्थ्य-युक्तेन च शिवेन यतोऽसौ पुमान् व्यञ्जितशक्तिस्ततोऽस्य तत्साम्यं भवत्येव । तथाहि–संसारावस्थायामभिव्यञ्जकबलानुसारेण केषांचिदज्ञानादियोगोऽन्येषां च ज्ञानाद्युत्कर्षो दृश्यते । अत एवेश्वरगुणसंक्रान्तिमोक्षवादोऽप्ययुक्त इत्याह–प्राग्दृष्टत्वादिति । पुरुषे प्राज्ञे ज्ञानादिशक्तेर्दृष्टत्वादमूर्तस्य गुणसंक्रान्त्ययोगात् तत्संक्रान्तौ दृष्टान्तादर्शनाच्च संक्रान्ति-पक्षोऽयुक्तः । एष च संक्रान्त्यादिमोक्षनिरासप्रकारस्तत्रभवता आचार्येण—' नोदाहरण-सद्भावो गुणसंक्रान्तिसाधने ॥.....विज्ञानमुपदेशात्तु तादृगन्यत् प्रजायते ।.....दीपान्तर-समुत्पत्तिः प्रदीपादिन्धनान्तरे ।.....अमूर्तस्य च संक्रान्तौ न लोको न परीक्षकः ॥'' (प० का० १३-२२) इत्यादिभिः कारिकाभिः श्रीमद्भौरववृत्तौ विस्तरेण साधितः । सा च शिव-साम्यरूपा मुक्तिर्न गोत्वादिजातिवदेका, अपि तु भिन्नैव प्रतिपुरुषगता, सादृश्यव्यति-रेकेण जातेरसंभवादित्यपि तत्रैव साधितम्, पुरुषाणां प्रोक्तवदनेकत्वादेकमोक्षे सर्वमोक्ष-प्रसङ्गाच्च ॥ ५२-५३ ॥

परमात्मलयाख्योऽपि मोक्षो न संभवतीत्याह—

**असकृत् पृथगुपलब्धाः पुरुषास्तेनापि न त्वैक्यम् ।**
**न च नाशः पुंशक्त्योर्मुक्तौ यस्मात् तयोरनादित्वम् ॥ ५४ ॥**

मुक्ताविति वक्ष्यमाणेनान्वयः । मुक्तौ नैयायिकाद्युपगतसंविदभावोऽप्ययुक्तः, शक्तिशक्तिमतोश्चिद्रूपतया नित्यत्वेन च साधनादित्याह— न च नाश इति ॥ ५४ ॥

अत एवानादित्वेन नित्यत्वान्मोक्षनिमित्तभूतस्य शिवस्य शक्त्यात्मनस्तदै-श्वर्यस्य वा नाशो न संभवति । ततश्च तन्नाशेन मुक्ते तदैश्वर्योत्पत्तिरिति यत्प्रवाहेश्वर-वादिभिरुच्यते, तदयुक्तमित्याह—

**नापि च शिवस्य शक्तेरथवाऽभावो निमित्तस्य ।**

एषां च—

**अपृथक्कृत्य गुणत्वादुपलब्धिः प्रोच्यते विशेषश्च ॥ ५५ ॥**

शिवस्य मुक्तात्मनां च समानगुणत्वादपृथगेकरूपैवोपलब्धिः सर्वविषयो ज्ञानादि-प्रकाशः प्रोच्यते । किं पुनरेभ्यः शिवस्य विशेष इत्याह—विशेष इति ॥ ५५ ॥

**मुक्तेषु शिवाज्जातं माहात्म्यमनादिमध्यान्तम् ।**

तेषु मुक्तात्मस्वनादिमध्यान्तमपि माहात्म्यं सर्वज्ञत्वसर्वकर्तृत्वात्मकमनादि-मलावृतत्वाच्छिवान्निमित्तभूतादभिव्यक्तम् । शिवस्त्वनादिसिद्धसर्वज्ञत्वसर्वकर्तृत्व[युक्त] इत्ययमस्यैषां च विशेषः ॥ ५६ ॥

**इत्थं सकलवरप्रद आराध्यः शम्भुरेव तत्त्वविदा ॥ ५६ ॥**

**तस्मिंस्तुष्टे सिद्धिर्मुक्तिश्च परा भवेत् पुंसः ।**

तदुक्तमथर्वशिखायाम्—"शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य" (२ क०) इति । अतश्च सर्वानुग्राहकत्वात् सर्वकर्तृत्वाच्च तदागमस्य शैवाख्यस्यैव प्रामाण्यम्, आगमान्तराणां बौद्धादीनामन्येषामसर्वज्ञप्रणीतत्वेन परस्परविरोधात् । यदाहुः[1]— "सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा । अथोभावपि सर्वज्ञौ मतिभेदः कथं तयोः ॥" इति । ननु शैवस्यापि आगमान्तरविरोधादप्रामाण्यम्, तन्न, विरोधाभावात् । तथाहि— सर्वाऽन्यागमप्राप्यस्थानप्रदर्शनपूर्वं तदनधिगतार्थप्रकाशकत्वादस्य प्रामाण्यमनिवार्यमेव । यदाहुः—"अनधिगतार्थगन्तृ प्रमाणम्" इति । किञ्च,[2]"इति वर्णाश्रमाचारान् मनसापि न लङ्घयेत्" इत्यादिभिर्वर्णाश्रमाचाराभ्यनुज्ञानेन वेदाविरोधाद् वेदवित्परिग्रहणाच्चास्य मतान्तराणामिव न पाषण्डित्वम् । तथा पुराणेतिहासयोः श्वेतोपमन्युप्रभृतीनां महर्षीणा-मत्रानुष्ठानं श्रूयते, महाभारते च नरनारायणयोरश्वत्थाम्नश्च । "आभ्यां लिङ्गेऽर्चितौ देवस्त्वयाऽर्चायां युगे युगे" इति सुवर्णाक्षे च विष्णोस्तदाराधनात् प्रसादश्च । अपि च— "नान्यत् प्रियतरो लोके मम कृष्ण भविष्यति" इत्यादि रामायणे च । कार्तवीर्यादिस्मृतिषु च प्रतिष्ठापूर्वको धर्मः—"पक्वेष्टकाचितं सम्यग् यः करोति शिवालयम्" इत्यादि । सूत्रे च—"मोक्षं विनिर्दिशेत्" इति च । अथर्वशिरःसु श्वेताश्वतरादिषूपनिषत्सु लिङ्गाऽर्चनादि श्रूयते । ततो नास्याविगानता, न च विच्छिन्नमूलता, न च कैश्चिदेव परिग्रहः । अत-स्तद्वाक्यं सर्वप्रमाणाबाधितत्वात् सर्वोत्कृष्टत्वाच्च ग्राह्यमेव । उक्तं च मोक्षकारिकासु— "न चान्येन प्रमाणेन संरुद्धस्तस्य गोचरः । श्रोत्रियैरप्यतो ग्राह्यं तत्फलाधिकसाधनम् ॥" ( श्लो० १४६ ) इति ॥ ५७ ॥

अथ केनेदं प्रकरणं कृतमित्याह—

**इत्यवदत् तत्त्वानि तु सद्योज्योतिः सुवृत्तिकृत् ॥ ५७ ॥**

॥ इति तत्त्वसंग्रहः समाप्तः ॥

---

१. रत्नकीर्तिनिबन्धावल्यां सर्वज्ञसिद्धौ ( पृ० ५ ) (कुमारिल)भट्टवचनत्वेनोद्धृतोऽयं श्लोक इति म० पा० वि० ( पृ० ६७, टि० १८ ) द्रष्टव्यम् ।

२. पूर्वतनी १२९ पृष्ठस्था तृतीया टिप्पणी द्रष्टव्या ।

सुवृत्तिः सद्वृत्तिरिति रौरववृत्तेर्नाम, तत्कर्त्रेदं निर्मितमित्यर्थः ॥ ५७ ॥

श्रीमत्खेटकनन्दनार्ककिरणैः सद्वृत्तिवाक्यात्मकै-
ध्वस्ताज्ञानतमश्चयेन गुरुणाऽघोरादिना शम्भुना ।
तत्त्वज्ञानबुभुत्सुभिर्बुधवरैः संप्रार्थितेनादरात्
तत्त्वानामतिसंग्रहस्य विवृतिर्लघ्वी स्फुटं निर्मिता ॥

॥ इत्यघोरशिवाचार्यविरचिता तत्त्वसंग्रहटीका समाप्ता ॥



# तत्त्वत्रयनिर्णयः

## स द्यो ज्यो तिः शि वा चा र्यं प्र णी तः

### अघोरशिवाचार्यकृतवृत्तिसहितः

सिद्धानि यत्प्रसादाद् दृष्टादृष्टानि वाञ्छितान्यचिरात् ।
नत्वा शिवं विधास्ये तत्त्वत्रयनिर्णये वृत्तिम् ॥

तत्र तावदाचार्यः प्रारिप्सितप्रकरणस्याविघ्नपरिसमाप्त्यर्थं तत्प्रतिपाद्येनार्थेन विशेषयन् परमेश्वरमेव प्रणमति—

**पुंभ्यः फलं विचित्रं ददाति संवीक्ष्य बन्धवैचित्र्यम् ।**
**स्वमहिम्नाऽनाद्युदयोऽनायत्तो नमो नमस्तस्मै ॥ १ ॥**

अनादिरुदयः सर्वविषयज्ञानक्रियाप्रकाशो निर्मलत्वेन यस्य सोऽनाद्युदयः, तस्याप्यादिमत्त्वाभ्युपगमेऽनवस्था स्यादिति भावः । अत एव चासौ न कस्यचिदायत्तः, स्वतन्त्र इत्यर्थः । एवंविधो यः शक्त्यात्मना स्वेन महिम्ना बन्धवैचित्र्यमालोक्य मलावृतत्वेनास्वतन्त्रेभ्यः पुरुषेभ्यो विचित्रं फलं ददाति । तत्र पक्वमलेभ्यस्तत्पाकवैचित्र्यानुगुणं परापरमोक्षं ददाति, अपक्वमलेभ्यस्तत्परिपाकार्थमेव कर्मवैचित्र्यानुगुणं भोगरूपं फलं ददातीत्यनेनास्य सर्वानुग्राहकत्वं सिद्धम् । स च शिव एव, तस्यैव सर्वज्ञत्वसर्वकर्तृत्वात्मनाऽनादिसिद्धेन शिवत्वेन योगो यस्तस्मै शिवाय नमो नम इति ॥ १ ॥

इत्थं कृतपरगुरुनमस्कारः प्रकरणकरणं प्रतिजानीते—

**अथ नतिभाजस्तन्त्रे संक्षेपात् किञ्चिदर्थसद्भावम् ।**
**वक्ष्ये ज्ञातं गुरुतो हितकृतये मन्दबुद्धीनाम् ॥ २ ॥**

अत्र ह्याचार्यः श्रीमद्रौरवसिद्धमर्थसद्भावं तत्त्वसंग्रहेण संक्षेपात् प्रकाश्य श्रीमत्स्वायम्भुवसिद्धमनेन प्रकाशयति । अत एव तत्समाप्तावुक्तम् – "इत्यवदत् तत्त्वानि तु सद्योज्योतिः सुवृत्तिकृत्" ( श्लो० ५७) इति, श्रीमद्रौरववृत्तेरेव सुवृत्तित्वेन सिद्धत्वात् । अत्राप्युपसंहारे वक्ष्यति—"उक्तः समासतोऽयं तत्त्वत्रयनिर्णयश्च वृत्तिकृता । स्वायम्भुवस्य" ( श्लो० ३२ ) इति । नतिर्नमस्कारः । सर्वात्मभिः क्रियमाणं भजतीति नतिभागत्र शिव एव, तस्यैव सर्वेश्वरत्वेन सर्वाराध्यत्वात् । तस्य शिवस्य तन्त्रे शास्त्रे गुरुसंप्रदायादा परमेश्वरमविच्छिन्नाज्ज्ञातं मन्दबुद्धीनां हिताय वक्ष्य इति ॥ २ ॥

**शम्भुः पुरुषो माया नित्यं विभु कर्तृशक्तियुक्तं च ।**
**सुप्तेऽपि विकृतिजाते त्रितयं जागर्ति तत्त्वानाम् ॥ ३ ॥**

अत्र शं सुखमप्रेर्यतारूपं भावयतीति शम्भुः । शम्भुशब्देन समवेतशक्त्यविनाभूतः शिवः कथ्यते, पुरुषशब्देन च जात्येकवचनेन सर्वे आत्मानः, मायाशब्देन च तन्त्रोच्चारितेन मायामहामायारूपं शुद्धाशुद्धं जगदुपादानद्वयमुच्यते । यदुक्तं श्रीमद्रौरवे— "मायोपरि महामाया" (४।२८) इति । तच्च त्रितयं नित्यम्, अनादित्वात्, तेषामप्यादिमत्त्वेऽनवस्थाप्रसङ्गात्, नित्यत्वेन श्रवणाच्च । किञ्च, विभु । तत्र शम्भुपुरुषौ सर्वगतावेव, असर्वगतत्वे व्योमादिवदमूर्तत्वेन गमनासंभवात् । शिवस्य सर्वाधिष्ठानत्वमात्मनश्च देशान्तरकर्मफलभोगो नोपपद्यते यतः । माया च स्वकार्यव्यापिका । अत्र च मलस्याऽनाद्यात्मावारकत्वेनार्थान्नित्यत्वं व्यापित्वं च सिद्धमिति न पृथक् तस्योपादानम् । तथा कर्तृशक्तियुक्तं च । तत्र पतिपुरुषौ चेतनत्वाद् जगत्कर्तृत्वेन भोक्तृतया च कर्तृशक्तियुक्तौ कर्तृत्वादेव च ज्ञातृशक्तियुक्तौ । दृक्क्रियात्मकमेव च स्वरूपं चैतन्यस्य । यच्छ्रूयते— "चैतन्यं दृक्क्रियारूपम्" ( मृ० वि० २।५ ) इति । माया च कर्तुः परमेश्वरस्य शक्त्याऽधिष्ठिता । ततश्च तत्त्वानां त्रितयं कार्यवर्गे संगृहीतेऽपि जागर्ति प्रकाशत एव ॥ ३ ॥

इत्थमेषां साधर्म्यमुक्त्वा वैधर्म्यमाह—

**शिवपुरुषावतिसंख्यौ प्रसवविहीनौ चिता समेतौ च ।**
**एकं प्रसवित्वयुतं मायातत्त्वं चिता विहीनं च ॥ ४ ॥**

तत्र आत्मवर्गोऽनन्तत्वादतिसंख्यः, शिवोऽप्यनन्तचिदचिद्वस्त्वधिष्ठानादौपचारिकेण भेदानन्त्येन युक्तत्वादुपचारेणातिसंख्यः । अथवा मुक्तात्मनामपि मलापनयनादभिव्यक्तेन सर्वविषयेण ज्ञानक्रियात्मना शिवत्वेन योगाच्छिवपदेनोपादानं कृत्वाऽतिसंख्यत्वमुक्तम् । तौ च द्वावविकारित्वात् प्रसवेन परिणामात्मना विहीनौ प्रोक्तवच्चैतन्ययुक्तौ च । मायातत्त्वं तु शुद्धमशुद्धं वा परमोपादानत्वादेकम् । अनेकत्वे ह्यचैतन्ये सत्यनेकत्वात् कारणपूर्वकत्वं स्यात् । उपादानत्वादेव च तत् कार्यप्रसवयुक्तं मृदादिवदचेतनं च ॥ ४ ॥

इत्थं शिवात्मनोर्मायातत्त्वाद् वैधर्म्यं प्रदर्श्याऽधुना शिवस्यात्मनां च वैधर्म्यं दर्शयितुमाह—

**ईशाः प्रवृत्तवीर्यास्तत्रैकोऽनादिसिद्धगुणविभवः ।**
**मुक्तेश्वरवैमल्यं सर्वार्थे दृक्क्रिये च ततः ॥ ५ ॥**

प्रवृत्तवीर्याः सर्वविषयसामर्थ्या ये, ते सर्व एव स्वतन्त्रत्वादीशशब्दवाच्याः । तेषु मध्यादेकः परमशिवोऽनादिसिद्धगुणसम्पदित्युक्तम् । ततश्च मुक्तात्मनां पतिसमत्वभाजाम्, ईश्वराणां विद्येश्वरादीनां ततः शिवादेव निमित्तभूताद्वैमल्यं शिवत्वाभिव्यक्तिश्च संपन्ना । तत्र विद्येशादयोऽधिकारमलांशयोगाच्छिवनियोगेनाधिकारं कुर्वन्ति, मुक्तात्मानस्तु तदप्रेर्यत्वात् तेनैव परानुग्रहनिर्वाहाच्च न प्रवर्तन्ते ॥ ५ ॥

नन्वनादिमुक्तस्य शिवस्यापि सकलनिष्कलादिभेद ईशानतत्पुरुषादिभेदश्च श्रूयते, अत आह—

**नतिपूर्वः कृतवर्गस्तेन स्वामिन्यनादिसंसिद्धे ।**
**सकलाकलप्रभेदो गीतो यश्च क्रियाविषयः ।। ६ ।।**

कृतवर्गः शुद्धाशुद्धरूपः कार्यवर्गः, नतिपूर्वः शुद्धाशुद्धोपादानपरिणामपूर्वः, उत्पद्यत इति शेषः । तेनाऽनादिसिद्धे तस्मिन् यः सकलादिभेदः, यश्च क्रियाविषयः सृष्ट्यादिपञ्चकृत्यविषयः सद्योजातादिभेदः, स्वकार्योद्योगादिभेदात् सृष्ट्यादिकार्योपाधिभेदाच्चोपचारेण शास्त्रेषु गीतो न पारमार्थिकः । यच्छ्रूयते—"अधिकारी च भोगी च लयी स्यादुपचारतः" इति, "तद्भेदः कृत्यभेदेन न भेदः परमार्थतः" इति (च?), "ईशः सदाशिवः शान्तः कृत्यभेदाद् विभिद्यते" इति (च) । पशुविषयः सकलाकलप्रभेदो वास्तव एव । तथाहि—बन्धत्रययुक्तः कलादियोगे, विज्ञानादिना कर्मक्षयेऽपि संस्कारवशात् किञ्चित्कालमवस्थितश्चेति द्विविधः सकलः । अकलोऽपि द्विविधः । तत्र प्रलयेन कलादेरुपसंहृतत्वान्मलकर्मयुक्तः प्रलयाकलः, विज्ञानयोगादिना कर्मक्षयेण केवलमलमात्रयुक्तो विज्ञानकेवलः । मुक्तस्त्वमल एव । यदुक्तं श्रीमत्स्वायम्भुवे—"अथात्माऽविमलो बद्धः पुनर्मुक्तश्च दीक्षया । विज्ञेयः स त्रिधावस्थः केवलः सकलोऽमलः ॥" इति ॥ ६ ॥

अथ बद्धस्वरूपमाह—

**शिवगुणवद् गुणजातं पुंसामपि सर्वसंगतं किञ्च ।**
**एकेन हि सर्वेषां मलेन तदनादिसंरुद्धम् ।। ७ ।।**

शिववज्ज्ञानक्रियात्मकं व्यापकं स्वरूपमात्मनामप्यस्तीति । उक्तं च श्रीमन्मृगेन्द्रे—"चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा । सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम् ॥" ( वि० २।५ ) इति । तच्च व्यञ्जकापेक्षत्वात् सर्वेषामात्मनां स्वरूपं केनचिदेकेन मलेनानादिकृत्वा संरुद्धमवसीयते । तच्च मलमनादित्वादेकमेव । अनेकत्वे ह्यचेतनत्वाद् घटादिवत् कारणान्तरं मृग्यम् । ततश्चात्मनामनाद्यावरणं न संभवति । तदुक्तं श्रीमत्स्वायम्भुवे—"अथानादिमलः पुंसाम्" ( ३।१ ) इति ॥ ७ ॥

**तेनानीशा ह्यज्ञा निर्व्यापारा विना बलव्यक्तिम् ।**
**न च शक्तास्ते स्वबलं विमलं सर्वार्थगं स्वतः कर्तुम् ।। ८ ।।**

मलयुक्तत्वाच्चात्मानः स्वबलव्यक्तिं विनाऽस्वतन्त्रा अज्ञा अक्रियाश्च भवन्ति, ततस्तद्व्यञ्जकं शिवमपेक्षन्त इति भावः । नन्वात्मानो ज्ञानादिना स्वबलव्यक्तिं करिष्यन्ति ? तदयुक्तमित्याह—न च शक्ता इति । अयमभिप्रायः – मलस्य द्रव्यत्वाच्चक्षुषः पटलस्येव न ज्ञानमात्रान्निवृत्तिः, अपि तु चक्षुर्वैद्यव्यापारेणेवेश्वरव्यापारेण दीक्षाख्येनैवेति । एतच्च विस्तरेणोक्तमस्माभिस्तत्त्वसंग्रहलघुटीकायाम् ॥ ८ ॥

**मलसंरोधाद् यदतस्तेषामकृतो हि शिववशीकारः ।**
**पत्युस्त्वेते रोध्या बध्याः शोध्याश्च बोध्याश्च ।। ९ ।।**

मलावृतत्वात् तेषामनावृतेन शिवेन वशीकारोऽकृतोऽनादिसिद्ध इति यदतोऽस्मात् कारणात् ते रोधशक्त्या रोध्याः, कर्मभोगार्थं कलादिबन्धेन बध्याश्च। रोधश्चात्र पाशसामर्थ्योत्पादनेनात्मनां यथानुगुणभोगभोजनात्मकस्तिरोभावः। ततश्च मलपरिपाके सति दीक्षया मलादिपाशापनयनेन शोध्याः, तयैव शिवत्वव्यक्त्या प्रबोध्याश्च भवन्ति ॥ ९ ॥

अत्र पराशङ्का—

**नित्ये ज्ञानादिबले मलादिपरिकल्पनं ननु ज्यायः ।**
**सत्यं नान्या दृक् तत् तादृग् यस्मात् तदीश्वरे दृष्टम् ।।१०।।**

ननु ज्ञानक्रियाबले नित्ये सिद्धे तदावारकत्वेन मलादिकल्पनं ज्यायो भवति नान्यथा, तस्य तु कादाचित्कत्वदर्शनात् कथमेवं कल्प्यते ? अत आह—सत्यमिति। यस्मादीश्वरे तद् ज्ञानक्रियात्मकं चैतन्यं तादृग् नित्यं दृष्टम्, तस्मादात्मस्थमपि तत् चैतन्यत्वान्नान्या दृग् नित्यमेव। अन्यथा आत्मनां विकारित्वेनाचेतनत्वादनित्यत्वादि-दोषप्रसङ्गः स्यादिति भावः ॥ १० ॥

किञ्च, मलाद्यभावे शरीरादियोगोऽप्यस्य न संभवतीत्याह—

**मायाविकारयोगे कर्मयुतः कारणं मलो भविनाम् ।**
**मलशक्तयो विभिन्नाः प्रत्यात्मानं च तद्गुणावरिकाः ।। ११।।**

कर्मभोगार्थमेव शरीरादेरिष्टत्वान्निर्मलस्य मुक्तात्मनस्तदसंभवाच्च शरीरादि-योगो नास्ति। तदुक्तं श्रीमत्स्वायम्भुवे–"तद्भावभाविनो भावाः सर्वे मायात्मकाः पशोः" इति, तथा—"कर्मतश्च शरीराणि [1]विविधानि शरीरिणाम्" ( स्वाय० १२। १३ ) इति। नन्वेवं चेन्मलस्यैकत्वादेकमोक्षे सर्वमोक्षप्रसङ्गः ? अत आह—मलशक्तय इति। मलस्य प्रत्यात्मनियतानेकशक्तित्वादेकस्याः पाकेन निवृत्तौ तदावार्यस्यैव मोक्षो न सर्व-स्येति भावः ॥ ११ ॥

एतदेवाह—

**विनिवर्तते निरोधात् पुंबलतः परिणमन् मलः कालात् ।**
**परिणतिविशेषयोगात् स कदाचित् कस्यचित् कथञ्चिच्च।।१२।।**

मलो हि परिणमन् पुंबलविषयादावरणान्निवर्तते। स चाचेतनत्वान्न स्वयं निवर्तते, अपि त्वीश्वरस्य व्यापारेणैवेत्युक्तम्। स च परिणामः क्रमविकासस्वभावानां पद्मानामिवाऽनियतकाल इत्याह—परिणतिविशेष इति ॥ १२ ॥

---

१. विषयाः कारकाणि चेति तत्रत्यः पाठः।

अत एव परिणतिविशेषयोगान्मलपाकतारतम्येनात्मनां साधनभेदात् परापर-मुक्तिभेद इत्याह—

**अत एव पुद्गलानां परिदृष्टाः साधनादुदयभेदाः ।**
**कालाद् गुणतश्च तथा घटतेऽसौ नान्यथेशतो जातु ।। १३ ।।**

"मोक्षः सप्तप्रकारोऽयम्" ( यो० ५।६७ ) इत्यादि श्रीमतङ्गादिश्रूयमाणः साधन-भेदाद् भक्तिश्रद्धादिगुणभेदात् कालभेदाच्च जायमानोऽसौ मोक्षात्मक उदयभेदो मलपरि-णतिविशेषादेव घटते, नान्यथा । न चेश्वरात् तदनपेक्षादेष भेदो भवति, पक्षपातादिदोष-प्रसङ्गात् । न चास्य सर्वानुग्राहकस्य पक्षपातः ॥ १३ ॥

अत एव नैष्ठिक्यादिदीक्षाभेदस्याप्युपपत्तिरित्याह—

**इत्थं गणनाहीनं निमित्तमभिवीक्ष्य चेश्वरेणोक्तम् ।**
**सद्युक्तिमद् विमुक्तौ नेतरथा साधनानन्त्यम् ।। १४ ।।**

एकरूपे मलपरिपाके तन्निवृत्त्युपायस्तत्फलं चैकरूपमेव स्यादिति भावः । एष च दीक्षाभेदो मलपरिपाकादिभेदश्चास्माभिः मृगेन्द्रवृत्तिदीपिकायां विस्तरेणोक्तः ॥ १४ ॥

साधनानन्त्यमेव प्रपञ्चयितुमाह—

**यस्य यथा यावद्भिः स श्रेयोरोधकृन्मलः पाशैः ।**
**तस्य तथा तावद्भिर्निहितैर्विजहाति बन्धत्वम् ।। १५ ।।**

यस्य विज्ञानकलादेरात्मनो यावद्भिः पाशैः सह यथा मलो रोधं करोति । विज्ञान-कलस्य केवल एवाज्ञत्वाक्रियत्वव्याघातभाक्त्वादिभिः स्वकार्यात्मकैः पाशैः संरोधकृत् । तदुक्तं श्रीमत्स्वायम्भुवे—"तत्सद्भाववशोऽज्ञत्वादिति पाशौघः" इति । प्रलयाकलस्य तु कर्मभिश्च, सकलस्यापि तदनुगुणैः साधारणासाधारणरूपैस्तद्भुवनादिभिश्च रोधं करोति, तस्य तावद्भिरात्मना सह निहितैः सद्भिर्बन्धत्वं विजहाति ॥ १५ ॥

ततश्च—

**इत्थंरूपाणि यतः सन्मुक्तेः साधनानि दृश्यन्ते ।**
**शार्वे शास्त्रे तानि च नेतरथा युक्तिमन्ति जायन्ते ।। १६ ।।**

इत्थंरूपाणि व्यस्तसमस्तपाशच्छेदकारीणि सकलादिभेदेन साधारनिराधार-भेदानि नैष्ठिक्यादिभेदभिन्नानि च दीक्षाख्यानि साधनानि यतः शास्त्रे श्रूयन्ते, ततश्च तानीतरथा मलपरिणतिविशेषात्मककारणभेदाभावे युक्तिमन्ति च न भवन्ति। ततः साधन-भेदः, श्रुत्यन्यथानुपपत्त्या मोक्षभेदः, तत्कारणमलपरिपाकभेदश्चावश्यमभ्युपगन्तव्यः । मलपरिपाकचिह्नानि च शास्त्रेषु श्रूयन्ते—"येषां शरीरिणां शक्तिः पतत्यविनिवृत्तये । तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ द्वेषो भवस्थितौ ॥ भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके

विधौ।" ( मृ० वि० ५।४-५ ) इत्यादि। ततस्तच्चिह्ननिश्चय एव गुरुभिर्दीक्षा कर्तव्या, नान्यथेति ॥ १६ ॥

तत्र प्रश्नः—

**परिणामयति मलं कः कर्मापेक्ष्यैव चित्रकमणुभ्यः ।**
**बीजाद् ददाति चित्र्यं निष्कृष्य च यः ससाधनं भोगम् ॥ १७ ॥**

मलस्याचेतनत्वान्न स्वतः पाको युज्यत इत्यर्थः। अत्र उत्तरमाह—कर्मापेक्ष्यैवेति। यः कर्मवैचित्र्यानुगुणं भोगं सुखदुःखात्मकं तत्साधनानि शरीरादीनि बीजाद् मायातत्त्वादशुद्धान्निष्कृष्योत्पाद्य ददाति, स शिव एव मलमपि रोधशक्त्या पाचयति। तत्र च अशुद्धाध्वन्यनन्तद्वारेणैवाऽस्य कर्तृत्वम्। यदुक्तं श्रीमत्किरणे—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" ( वि० ३।२७ ) इति ॥ १७ ॥

किञ्च—

**यश्च स्वापे बीजं कुर्वन्नास्ते प्रसूतये योग्यम् ।**
**विश्वं च तत्र निहितं प्रलये तेनैव विश्रान्त्यै ॥ १८ ॥**

स्वापे शिवोऽपि चित्रशक्ति मायां पुनः प्रसवयोग्यां करोति, तथाविधांश्चात्मनः पुनर्भोगयोग्यान् विधत्ते ॥ १८ ॥

**कर्म च भुक्त्यै पुंसां जाग्रति विश्वेऽपि किञ्चिदीशानः ।**
**समलं स महाबलदः कारुण्यात् सर्वदैव विनिवृत्त्यै ॥ १९ ॥**

कर्म च पुंसां भोगयोग्यं करोति पाचयतीत्यर्थः। तदुक्तं श्रीमन्मृगेन्द्रे—

स्वापेऽप्यास्ते बोधयन् बोधयोग्यान्
रोध्यान् रुन्धन् पाचयन् कर्मिकर्म ।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्
पश्यन् सर्वं यद्यथा वस्तुजातम् ॥ इति,
( वि० ४।१५ )

भोगसाधनमाक्षिप्य कृत्वा कारणसंश्रयम् ।
तच्च सात्मकमाक्रम्य विश्रमायावतिष्ठते ॥
भविनां भवखिन्नानां सर्वभूतहितो यतः । इति च ।
( वि० ४।१३-१४ )

इत्थं प्रलयेऽपि शिवस्य व्यापारं प्रदर्श्य स्थितिकाले तद्व्यापारमाह—जाग्रति विश्वेऽपीति। महान्तं बलं सर्वज्ञसर्वकर्तृतारूपमात्मभ्यो ददातीति महाबलदः स

ईशानो विश्वे जाग्रत्यपि सर्वदा करुणायुक्तत्वान्मलसहितं किञ्चित् कर्म पाकेन भोगेन विनिवृत्त्यै योग्यं करोति, मलपरिपाकार्थं यत्किञ्चित् पक्वं कर्म स्थितिकाले भोजयतीत्यर्थः ॥ १९ ॥

किञ्च—

**तद्विनिवृत्तेः प्रागपि तत्सामर्थ्योद्बलनवानकृते ।**
**पुंबलरोधं कुर्वन् दृष्टः स च पाशशक्तिसाहाय्यम् ॥ २० ॥**

मलनिवृत्तेः प्रागपि तस्याचेतनस्य स्वतः पाकस्यासंभवात् तत्सामर्थ्योपोद्बलनार्थं तिरोधानशक्त्या पुरुषबलरोधं पाशशक्तिसाहाय्यं च कुर्वन् परमेश्वरो दृश्यते । नन्वात्मानुग्रहाय प्रवृत्तस्यात्मतिरोधानेन पाशानुग्रहोऽनुपपन्नः ? तन्न, मलस्य पाकादेव निवर्तयितुं शक्यत्वात् । तत्पाकार्थं मायीयबन्धसम्बन्धेन भोगभोजनात्मकं तिरोधानं दुःखावहं क्षारादिनेव वैद्यः करोतीति तदप्यनुग्रहार्थमेवेत्यविरोधः । तदुक्तं श्रीमन्मृगेन्द्रे—"यथा क्षारादिना वैद्यस्तुदन्नपि न रोगिणम् । कोटाविष्टार्थदायित्वाद् दुःखहेतुः प्रतीयते ॥" ( वि० ७।१८ ) इति ॥ २० ॥

ततश्च—

**दृष्ट्वा च तन्निवृत्त्यै योग्यं युङ्क्ते नृमुक्तये करणम् ।**
**बीजस्येव स्वापे परिणतिरिष्टा मलस्य चितिहानेः ॥ २१ ॥**

निवृत्तियोग्यं पक्वं तन्मलं दृष्ट्वा शिवः पशुमोक्षाय दीक्षाख्यं स्वशक्तिरूपं करणं युङ्क्ते, प्रयोजयतीत्यर्थः । यद्येवं कर्मभोगस्यैव मलपाकहेतुतयाऽभिधानात् प्रलये मलस्य पाको न स्यादत आह—बीजस्येवेति । अचेतनत्वान्मलस्य मायावच्चेतनशिवाधिष्ठानेन तदानीमपि पाकः संभवत्येवेत्युक्तम् ॥ २१ ॥

अत्र पराशङ्का—

**यदि च विनिवृत्तियोग्यं कुरुते शम्भुर्मलं ततः किमिति ।**
**सर्वात्मसु नो युगपत् कुर्यादिति चोदयन् वाच्यः ॥२२॥**

इत्थं वदन्नेवं प्रत्यनुयोज्य इत्याह—इति चोदयन्निति । कथमित्याह—

**किमिति न सर्वं युगपत् कुरुते भोग्यं स्वकर्म तदहर्वा ।**
**न समाधिरनेकत्वात् कालान्तरभोग्यताबलीयस्त्वम् ॥ २३ ॥**

तदहर्वेति । यदैवागतं तदैवेत्यर्थः । ननु कर्मणामश्वमेधब्रह्महत्यादीनां विरुद्धफलत्वान्न एकस्मिन् काले भोगः संभवतीति चेत्, तदेतत्समाधानं न युक्तमित्याह—न समाधिरिति ॥ २३ ॥

कथं न समाधिरित्यत आह—

**सर्वविकारोत्पत्तौ शक्ता शक्तिः सदैव सन्निहिता ।**
**ईशे बीजे च यतो भविनि विभुत्वं च भोक्तृभावश्च ।। २४ ।।**

**तेनानेकानीशः कृत्वा वृन्दानि कार्यकरणादेः ।**
**बीजाद् युगपत् पुरुषं भोजयति सर्वकर्माणि ।। २५ ।।**

यस्माच्छिवे साधारणासाधारणमायाविकारोत्पत्तौ समर्था शक्तिर्वर्तते, मायायां च समस्तकर्मफलव्यापकत्वं संसारिणि च व्यापकत्वं भोक्तृत्वं च विद्यते, ततो मायातत्त्वाद् युगपदेवानेकानि शरीरादीन्युत्पाद्य शिवः पुरुषं सर्वकर्माणि भोजयेदिति भवत्पक्षेऽपि प्रसज्यते ॥ २४–२५ ॥

पुनरपि पूर्वपक्ष्याशङ्कते—

**नन्वनुमिनुमः क्रमशो दृष्ट्वा कर्माणि भुज्यमानानि ।**
**पाचयति तथैव शम्भुस्तानीति समानमुभयत्र ।। २६ ।।**

क्रमिकस्य भोग्यस्य दर्शनात् क्रमिक एव कर्मपाकः शिवेन पाच्ययोग्यतानुरूपं पद्मादेरिव सवित्रादिना क्रियत इत्यनुमीयते । ततो नास्माकं युगपत् कर्मभोजनप्रसङ्गः । एवं चेदस्माभिरपि क्रमिक एवात्मनां संसारवैराग्यशिवभक्त्यादिशक्तिपातचिह्नं दृष्ट्वा शक्तिपातहेतुर्मलपाकस्तादृशोऽनुमीयते । ततो न सर्वेषां युगपन्मलपरिपाक इति वयमपि न पर्यनुयोज्या एव । यदुक्तम्—[1]"यत्र स्यादुभयोर्दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविनिश्चये ॥" इत्यभिप्रायेणाह—समानमिति ॥ २६ ॥

एतदेव प्रपञ्चयति—

**मत्वा कार्यं प्रोक्तं विनिवृत्तिर्गम्यते मलस्यात्र ।**
**शक्नोति हि योग्यत्वं तथैव कर्तुं महेश्वरोऽपीति ।। २७ ।।**

अत्र हि प्रोक्तं कार्यं दीक्षानुष्ठानात्मकं शक्तिपाताविनाभूतं दृष्ट्वा मलस्य विनिवृत्तिर्ज्ञायते, ततः क्रमिककार्यदर्शनात् क्रमिकमेव मलपरिपाकं शिवः कुर्यान्न युगपदित्यनुमीयत इत्यर्थः ॥ २७ ॥

इत्थं क्रमिकस्यैव मलपाकादेः स्थितिकाले दर्शनात् संहारसमयेऽपि पाच्यानुगुण एव मलादेः पाको न युगपत् सर्वेषां पाकोत्पत्तिरिति तद्विषयप्रश्नेऽपि भवता उत्तरमभि-

---

१. लौकिकन्यायसाहस्र्यां १३९ संख्याको न्याय इति म० पा० वृत्तौ विद्यापादे (पृ० २१८-२१९, टि० २२) द्रष्टव्यम् ।

धेयम्, अतोऽस्मान् प्रति युगपन्मलपाकपर्यनुयोगो भवतो न युक्त इत्यभिप्रायेणाह—

**स्वापे चैवं योनेर्योग्यत्वे कर्मणश्च पृष्टेन ।**
**भवतोत्तरमभिधेयं स्थितिसमये समानकालीने ॥ २८ ॥**

योनेर्मायाया योग्यत्वं प्रसूतिसामर्थ्योत्पादः, कर्मणस्तु फलदानयोग्यत्वं पाक एव । शेषं सुगमम् ॥ २८ ॥

कथमुत्तरमभिधेयमित्यत आह—

**स्रोतस्सु च सर्गादौ नियमविहीने यथा च यद्वस्तु ।**
**यावति काले भवति तद्धि तथा तावदीशेन ॥ २९ ॥**
**कर्तुं शक्यमितीदं तुल्यं मोक्षे च तन्निमित्ते च ।**

एवमुत्पत्तिनियमविहीने शरीरादिसर्गे तत्स्थितौ संहारे वा दृश्यमाने सति माया-स्रोतस्सु मध्याद् यद्यद्वस्तु यावति काले येन प्रकारेण समुत्पद्यते, तद्वस्तु तावति काले तादृगेवेश्वरेण कर्तुं शक्यते, नान्यथेति भवता मायाकार्योत्पत्तियौगपद्यप्रश्नस्य उत्तरमभि-धेयम् । एवं कर्मपाकादावपीत्युक्तम् । एष च परिहारो मोक्षदानयौगपद्यप्रश्ने तद्धेतोर्मल-पाकस्य यौगपद्यप्रश्ने वा समान इत्याह—इदं तुल्यमिति ॥ २९ ॥

अस्य च मलस्य वस्त्वात्मकं रूपमेकत्वादि च विस्तरेण शास्त्रेषूक्तमित्याह—

**अलमुद्दिष्टमशुद्धेः सद्रूपं निरवशेषेण ॥ ३० ॥**
**शास्त्रेष्वेकत्वाद्यं शक्त्यानन्त्यं विना निवर्त्यं तत् ।**
**शक्त्यानन्त्यप्रमुखं सद्युक्तेः शासनोत्थायाः ॥ ३१ ॥**

यच्छ्रूयते—"तदेकं सर्वभूतानामनादि निबिडं महत् । प्रत्यात्मस्थस्वकालान्ता-पायिशक्तिसमूहवत् ॥"(मृ० वि० ७।८) इत्यादि, तच्च तस्य स्वरूपं प्रोक्तवत् शक्त्यानन्त्यं विना पुरुषेभ्यो न निवर्तयितुं शक्यम्, एकमोक्षे सर्वमोक्षप्रसङ्गात्, एकस्यापि वा मोक्षाभावप्रसङ्गाच्चेत्याह—शक्त्यानन्त्यमिति । एतच्चानन्तशक्तित्वादिस्वरूपं मलस्य शास्त्रसिद्धतया युक्त्या च साध्यत इत्याह—शक्त्यानन्त्यप्रमुखमिति । उद्दिष्टमिति पूर्वेणैव सम्बन्धः । आदिशब्देन अनादित्वादि गृह्यते । यच्छ्रूयते—"तदनादिस्थमर्वाग् वा तद्धेतु-स्तदतोऽन्यथा । रुणद्धि मुक्तानेवं चेन्मोक्षे यत्नस्ततो मृषा ॥" (मृ० वि० ७।९) इत्यादि । एष च मलविचारोऽस्माभिर्मृगेन्द्रवृत्तिदीपिकायां विस्तरेण दर्शित इति तत एवावधेयः । ग्रन्थविस्तरभयात्तु नात्र लिख्यते ॥ ३०–३१ ॥

अथ प्रकरणोपसंहारः—

**उक्तः समासतोऽयं तत्त्वत्रयनिर्णयश्च वृत्तिकृता ।**
**स्वायम्भुवस्य जडतामपनेतुमनादिकां पुंभ्यः ॥ ३२ ॥**

अनादिमलावृतज्ञानक्रियत्वान्नैयायिकादिपरिजल्पितां जडतामात्मभ्योऽपनेतुं तेषामविकारित्वात् तदावारको मलः, तद्भावभाविनी माया, तन्निवृत्तिकर्ता शिवश्चात्र संक्षेपेण प्रतिपाद्यत इति ॥ ३२ ॥

श्रीमद्घोरशिवाह्वयेन गुरुणा श्रीजन्यया व्याख्यया
लोकेऽपि प्रथितेन कुण्डिनकुलं चोलेष्वलङ्कुर्वता ।
श्रीसर्वात्मशिवाङ्घ्रिपद्मरजसामाराधकेनामला
श्रीतत्त्वत्रयनिर्णयस्य विवृतिर्लेशादियं निर्मिता ॥

**इत्यघोरशिवाचार्यविरचिता तत्त्वत्रयनिर्णयवृत्तिः समाप्ता ॥**



# रत्नत्रयपरीक्षा

## श्रीकण्ठसूरिप्रणीता

### अघोरशिवाचार्यकृतरत्नत्रयोल्लेखिन्या समेता

शिवं शिवकरं नत्वा सिद्धान्तार्थप्रकाशकम् ।
रत्नत्रयपरीक्षार्थः संक्षेपेण प्रकाश्यते ॥

कैश्चिद् वेददृशाऽपरैः कुलधिया न्यायानुवृत्त्येतरै-
रन्यैश्च स्वमनीषया मलिनितं मोहेन रत्नत्रयम् ।
तस्मात् कर्णविभूषणाय विदुषां भूयोऽपि सद्व्याक्रिया-
शाणोल्लेखनसंस्कृतं तदधुना सोऽहं करोम्युज्ज्वलम् ॥

**नमः शिवाय शक्त्यै च बिन्दवे शाश्वताय च ।**
**गुरवे च गणेशाय कार्तिकेयाय धीमते ॥ १ ॥**

अत्र च पूर्वार्धेन प्रकरणप्रतिपाद्यं रत्नत्रयं प्रस्तावयन् प्रणमति। उत्तरार्धेन सकलसंहितानामवतारकत्वेन गुरुं भगवन्तं श्रीकण्ठनाथं सर्वविघ्नापहं च गणपतिं सिद्धान्तशास्त्रश्रवणविशेषितज्ञानं च कार्तिकेयमस्यैवाविघ्नपरिसमाप्त्यर्थमभिवन्दते ॥१॥

तदेव वस्तुत्रयं व्याख्येयतया प्रतिजानीते—

**बिन्दुशक्तिशिवाख्यानि त्रीणि सिद्धान्तसागरात् ।**
**समुद्धृत्य सतां धर्तुं हृत्कण्ठश्रवणे सदा ॥ २ ॥**

कर्णयोः श्रवणेन, कण्ठोपलक्षितवागिन्द्रिये पाठेन, हृद्यवधानेन सतां धर्तुं बिन्द्वादीनि रत्नानि सिद्धान्तसमुद्रादुद्धृत्य ॥ २ ॥

**रत्नानि वाङ्मयैः सूत्रैर्निबध्यन्ते मया ततः ।**
**क्षन्तुमर्हन्ति तत्सन्तो नासूया परिचारके ॥ ३ ॥**

वाङ्मयैः सूत्रैर्मया निबद्ध्यन्ते। लोके हि कर्णाद्यवयवेषु धारणार्थं रत्नानि सूत्रैर्बद्ध्यन्ते। तस्मात् सदाराधनप्रवृत्ते मय्यसूया न कर्तव्येति ॥ ३ ॥

एषां च बिन्द्वादीनां रत्नसाधर्म्याद् रत्नशब्दवाच्यत्वमित्याह—

**रञ्जनात् सर्वतत्त्वेषु रागादेभ्योऽधिकारयोः ।**
**ईश्वराणां शिवानां च धारणीयतया धिया ॥ ४ ॥**

**पुंसामप्रतिघोदारमरीचिनिचयेन च ।**
**रत्नानीष्टविधानाच्च बिन्द्वाद्याः शिवशासने ।। ५ ।।**

रत्नानि यथा लोके राजन्ते महार्घतया प्रकाशन्ते, समीपवर्तिनां च रागमुत्पादयन्ति, पुरुषैश्चावयवैर्धार्यन्ते, दीप्तिमन्तीष्टविधायीनि च भवन्ति; तथा बिन्द्वादयः पदार्थाः सर्वेषु शक्त्यादिषु तत्त्वेषूपादानतयाऽधिष्ठातृत्वेन च प्रकाशन्ते, ईश्वराणामनन्तादीनां शिवानां च सदाशिवादिपदस्थानामात्मनामेभ्यो हेतुभूतेभ्यो यथास्वमधिकारयोरनुग्राह्यानुग्राहकत्वरूपयोः सदा रागो भवति, पुरुषाणां चैते धिया ध्येयतया धार्यन्ते, अप्रतिहतविलक्षणतेजसो भुक्तिमुक्त्याख्याभीष्टप्रदायिनश्च भवन्ति । तस्मादेतेऽपि शिवशास्त्रे रत्नानि, प्रोच्यन्त इत्यध्याहारः । अप्रतिहतविलक्षणतेजस्तया चैषामतिशयं दर्शितम् ॥ ४-५ ॥

**रत्नत्रयं समाश्रित्य वर्तते तत्त्वसंहृतिः ।**
**अध्वैतत्प्राप्तये षोढा वर्ण्यते परमेष्ठिना ।। ६ ।।**

तत्र शुद्धतत्त्वसंहृतिर्बिन्दुमुपादानत्वेन, शिवं कर्तृतया, शक्तिं च तत्करणतया संश्रित्य वर्तते, उपादानादि विना कार्योत्पत्त्यसंभवात् । अशुद्धायां च शिवशक्ती एव परम्परया कर्तृकरणे, बिन्दुश्च निवृत्त्यादिकलाद्वारेणाधार इति वक्ष्यामः । अत्र बुभुक्षूणां भौतिकदीक्षाभाजां साधकानां विचित्रभुवनभोगात्मना परिणतो बिन्दुः प्राप्यः, शिवस्तु शक्त्यविनाभूतो नैष्ठिकदीक्षाभाजां मुमुक्षूणाम् । तत्प्राप्तये च कलादिषट्प्रकारोऽध्वा शिवेन शास्त्रेषु वर्ण्यते ॥ ६ ॥

एषां चाध्वत्वमुपरिष्टात् साधयिष्यति, इदानीमस्य दीक्षादावुपयोगं दर्शयति—

**एतदेव मतं बीजं त्रयं दीक्षाप्रतिष्ठयोः ।**

एतदपरिज्ञाने दीक्षाप्रतिष्ठयोरशक्यानुष्ठानत्वादिदमेव तयोर्मूलमित्यर्थः ॥

एतदेव स्फुटीकरोति—

**योगाश्च विविधाः कर्म नित्यनैमित्तिकं तथा ।। ७ ।।**
**ज्ञानानि सिद्धयो मोक्षा अपि तस्यावबोधनात् ।**
**एतदेव परा काष्ठा मोक्षाख्याणोर्विचारतः ।। ८ ।।**

योगाः सालम्बनादयः । नित्यं पूजादि । नैमित्तिकं दीक्षादि । ज्ञानानि तद्विषयाणि पशुपाशपतिविषयाणि च । सिद्धयः अणिमाद्याः । मोक्षः शिवसाम्यं सदाशिवादिपदप्राप्तिश्च । यदुक्तं श्रीमन्मतङ्गे—"मोक्षः सप्तप्रकारोऽयम्" ( यो० ५।६७ ) इति । एतत्सर्वं तज्ज्ञानात् सिद्धयतीति । किञ्च, एतत्प्राप्तिरेवाणोः परा काष्ठा, परमोक्ष इत्यर्थः ॥ ७-८ ॥

ततश्च—

**श्रोतव्यमेतदाप्तोक्त्या मन्तव्यं चोपपत्तिभिः ।**

**ध्येयं च योगमार्गेण शक्तिपातोदितात्मभिः ॥ ९ ॥**

शक्तिनिपातान्मलपरिपाकाविनाभूतादुदितात्मभिरूर्ध्वपदोन्मुखचेतोभिः । अनेन चैषामागमानुमानयोगिप्रत्यक्षसिद्धत्वं सूचयति ॥ ९ ॥

का पुनरत्राप्तोक्तिरत आह—

**आप्तोक्तिरत्र सिद्धान्तः शिव एवाप्तिमान् यतः ।**

**न ताभ्यां सदृशः कश्चिच्छ्रेय आप्तिविधायकः ॥ १० ॥**

सिद्धान्तशब्दः पङ्कजादिशब्दवद्योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः । ततस्तान्येवाबाधितत्वात् प्रमाणानीति भावः । कुत इत्यत्राह—शिव एवाप्तिमान् यत इति । ननु कणादपतञ्जलिप्रभृतयोऽप्याप्ता एवेत्यत आह—न ताभ्यामिति । सत्यम्, तेऽपि स्वविषये वस्तुन्याप्ता एव, किन्त्वसर्वज्ञत्वात् तेषां तत्प्रणीतानि च शास्त्राणि तदविषयेषु बिन्द्वादिषु वस्तुषु न प्रमाणीभवितुमर्हन्ति, शिवस्तु निरतिशयसर्वार्थज्ञानक्रियत्वात् परमाप्तः, तत्प्रणीतानि च शास्त्राणि सर्वाऽन्यागमप्राप्यस्थानप्रदर्शनपूर्वकं तदनधिगतार्थगन्तृत्वादबाधितत्वाच्च प्रमाणान्येव । यदाहुः—"अनधिगतार्थगन्तृ प्रमाणम्" इति । ततस्तेन शिवेन तदागमेन च सदृशं न किञ्चिच्छ्रेयसः साधकमस्ति । ननु नित्यत्वादेवागमानां प्रामाण्यं नाप्तप्रणीततयेति मीमांसकाः, तदयुक्तम्, रचनायाः कर्तारं विना घटादिवदुत्पत्त्यदर्शनात् । इत्यादि विस्तरेण साधितमस्माभिर्मृगेन्द्रवृत्तिदीपिकायामिति तत एवावधार्यम् ॥ १० ॥

यद्येवं वामादयोऽपि शैवत्वेन प्रसिद्धाः शिवकृता एव, तन्न, परस्परविरुद्धार्थाभिधायित्वेन तेषां शिवाकृतत्वात् । यदाहुः—[1]"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा । अथोभावपि सर्वज्ञौ मतिभेदः कथं तयोः ॥" इति । प्रसिद्धिस्तु तेषां शिवाधिष्ठितात्मान्तरप्रणीतत्वेनेत्यविरोधः । एतदेवाह—

**सिद्धान्त एव सिद्धान्तः पूर्वपक्षास्ततः परे ।**

**आप्तस्तु शिव एवैकः शिवान्ये त्वशिवा मताः ॥ ११ ॥**

शिवत्वं चात्र सर्वज्ञत्वसर्वकर्तृत्वमभिप्रेतम् ॥ ११ ॥

ततश्च—

**सिद्धान्तः सेव्यते सद्भिः शक्तिपातपवित्रितैः ।**

**कामकारितयाऽन्यैस्तु निन्द्यते पशुशास्त्रवत् ॥ १२ ॥**

एतदेव शक्तिपातचिह्नत्वेनोक्तं श्रीमन्मृगेन्द्रे—"येषां शरीरिणां शक्तिः पतत्य-

---

१. पूर्ववर्तिनी १३५ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या ।

विनिवृत्तये । तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ द्वेषो भवस्थितौ ॥ भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके विधौ ॥" ( वि० ५।४-५ ) इति । ततश्च शक्तिपातानन्तरभाविन्या दीक्षया पवित्रितैः शोधितैः सिद्धान्तः सेव्यते । यदुक्तं श्रीमत्किरणे—"तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा । सर्वज्ञः स शिवो यद्वत्" ( वि० १।२१ ) इति ॥ १२ ॥

अस्य च पशुजननिन्दया न प्रामाण्यव्याहतिरस्तीति दृष्टान्तेनाह—

**नहि कस्तूरिकामोदः पुरुषैः प्रतिहन्यते ।**
**हेतुभिः साध्यते किन्तु धन्यैराघ्रायते सदा ॥ १३ ॥**

तदीयदीक्षाद्युपयोगितया शिवादिपरिज्ञानं भोगमोक्षार्थिभिः कार्यम् । तज्ज्ञानं च सिद्धान्ताभ्यासेन, तदभ्यासश्च शक्तिपाताविनाभाविन्या दीक्षया सिद्ध्यतीत्युक्तम् ॥ १३ ॥

अत्र केचिदाहुः—किमनेनासत्यभूतेन शिवादिवस्तुकथनेन तत्परिज्ञानसाधनकथनेन वा, "सर्वं खल्विदं ब्रह्म" ( छा० उ० ३।१४।१ ), "एको वशी सर्वभूतान्तरात्मा" ( कठो० ५।१२ ) इत्यादिश्रुतिभिः परमात्मैव चिदाकारः सत्यभूतः । स एव शिवादिशब्दवाच्यो नान्यत्किञ्चिदस्ति । ततः परमानन्दस्वरूपस्य तस्य यथावदवबोध एव मोक्षहेतुरिति । तान् प्रत्याह—

**वेदान्तैश्च कुलाम्नायैस्तथान्यैः प्रतिपाद्यते ।**
**आनन्दविप्रलब्धानामानन्दोपहिता चितिः ॥ १४ ॥**

यदेतद्वेदान्तादिशास्त्रैरन्यैश्च शाक्तादिभिश्चितिश्चैतन्यात्मकमेव वस्तु पारमार्थिकम्, तस्याश्चितेरानन्दोपहितायाः परमानन्दस्वरूपाया अवबोध एव मोक्षहेतुरिति प्रतिपाद्यते; तदानन्दविप्रलब्धानाम् "आनन्दं ब्रह्म" (बृ०उ०३।९।३४) इति श्रुतिगतस्यानन्दशब्दस्य परिपूर्णतार्थस्य सुखार्थताभ्रान्त्या विप्रलब्धानामपरिणतमलानामेव शोभते, नान्येषामस्मदादीनां शिवानुगृहीतानामिति भावः । तथा ह्यात्मैकत्वं तावत् साधयितुमशक्यम्, अनेकत्वप्रतिपादकानां श्रुतीनां सम्भवात्, एकत्वश्रुतीनामन्यपरत्वादनेकत्वज्ञापकस्य दृश्यमानस्य जननमरणादिप्रतिनियमस्यानपह्नवनीयत्वाच्च । तेषां चात्मनामस्वातन्त्र्यस्य दर्शनाद् बद्धत्वे सति तेषां भोगमोक्षकर्ता शिवः, तदुपादानादयश्चागमेनानुमानेन सिद्धा इत्यादिविस्तरेणास्माभिर्मृगेन्द्रवृत्तिदीपिकायां दर्शितम्, साधितं च रामकण्ठादिभिर्मतङ्गवृत्त्यादाविति ततोऽवधार्यम् । ग्रन्थविस्तरभयान्नात्र प्रपञ्च्यते ॥ १४ ॥

अत एवात्मविषयं विज्ञानमपि तत्तच्छास्त्रप्रसक्तानां यथावन्न संभवतीत्याह—

**चिन्महोदधिगाम्भीर्यमवसीयेत सूरिभिः ।**
**अवगाह्य परानन्दलहरी यदि नोत्क्षिपेत् ॥ १५ ॥**

यदि हि प्रोक्तवत्परमानन्दभ्रान्तिकल्लोलस्तान्नोत्क्षिपति, ततो विद्वद्भिश्चिन्महोदधेरात्मवर्गसमुद्रस्य गाम्भीर्यं सर्वज्ञत्वसर्वकर्तृत्वात्मस्वरूपं नित्यत्वव्यापकत्वानेकत्वादि

च्चावगाह्य प्रमाणैर्विषयीकृत्यावसीयेत, नान्यथा। तत्तच्छास्त्रकर्तृणामसर्वज्ञत्वात् तद्वचनादेतन्न संभवतीत्यर्थः ॥ १५ ॥

कुतः पुनरेतज्ज्ञायते ? अत आह—

**तदत्र कथितं सर्वस्रोतसां ज्यायसि प्रभोः।**
**उदक्षेणोर्ध्ववक्त्रेण ततस्तदवधारयेत् ॥ १६ ॥**

तच्चात्मस्वरूपं वामादिसमस्तशास्त्रस्रोतसां मध्यादुत्कृष्टे सिद्धान्ताख्ये स्रोतसि कथितमिति तत एवावधार्यम्। शिवकृतत्वेन ज्यायस्त्वमेवास्य साधयति—प्रभोरुदक्षेणोर्ध्ववक्त्रेणेति। कथितमिति। वक्त्रशब्देन वचनत्राणरूपा शक्तिरुच्यते, परमार्थतः शिवस्य देहाभावात्। अतश्चोदक्षेणोदङ्मुखेनानुग्रहप्रवृत्तेनोर्ध्वस्थितेन च शक्त्यात्मना वक्त्रेण। बिन्दुशक्तेर्नादादिक्रमेणोत्पादिते शास्त्रे प्रकाशितमित्यर्थः। नन्वशरीरस्य शास्त्रोपदेशानुपपत्तिः ? तन्न, जगत्सृष्ट्यादिवत् सङ्कल्पमात्रेण विद्येश्वरादीनां शास्त्रावबोधकत्वात् ॥ १६ ॥

किञ्च—

**हेतूनपि परीक्षायै लक्षयेत् तस्य शास्त्रतः।**
**नह्यत्र शेमुषी शुद्धा विपुलापि प्रगल्भते ॥ १७ ॥**

तस्यात्मस्वरूपस्य परीक्षणमपि सिद्धान्तोक्तैरेव हेतुभिः कार्यमिति भावः ॥ १७ ॥

इत्थं प्रसङ्गादात्मस्वरूपस्य सिद्धान्तैकगम्यत्वं प्रसाध्य प्रकृतानां शिवादिरत्नानां श्रवणमनननिदिध्यासनानि सिद्धान्तादेवेति प्रागुक्तं प्रपञ्चयति—

**अलौकिकानि सूक्ष्माणि गोपितानि शिवेन च।**
**त्रीणि रत्नानि को वेत्ति सिद्धान्तेत्त विना स्वयम् ॥ १८ ॥** न/
**हेतूनपि कुतर्कान्धतमसारीन् मनीषया।**
**तद्वद् योगं च को वेत्ति सबीजाबीजलक्षणम् ॥ १९ ॥**

तत्र सबीजयोगः सदाशिवाद्याकारः सकलविषयः, निर्बीजस्तु निष्कलविषयः। अनेनैषामागमानुमानयोगिप्रत्यक्षगम्यत्वमपि दर्शयति ॥ १८–१९ ॥

अपि च—

**सिद्धान्तः सेवितः सद्भिरपि कामान् प्रयच्छति।**
**सर्वान् साधकचित्तस्थानाप्तश्चिन्तामणिर्यथा ॥ २० ॥**

सिद्धान्तादेव साधकानां तत्तत्सिद्धसाधनज्ञानं तदनुष्ठानात् फलावाप्तिश्चेत्यर्थः ॥ २० ॥

इत्थं सिद्धान्तज्ञानफलं प्रदर्श्य तदभिधेयार्थप्रकाशकत्वादस्यापि प्रकरणस्य तदेव प्रयोजनमिति सूचयन् अभिधेयपरीक्षां प्रतिजानीते—

**तमासेव्य मयाप्येषा बिन्दुशक्तिशिवाश्रया ।**
**परीक्षा क्रियते तत्र बिन्दुरादौ निरूप्यते ॥ २१ ॥**

तत्र बिन्दुसिद्धिमाह—

**जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते ।**
**स बिन्दुः परनादाख्यो नादबिन्द्वर्णकारणम् ॥ २२ ॥**

वक्ष्यमाणवद्विचित्रभुवनादिरूपत्वेन शुद्धाध्वनः कार्यत्वात् तदुपादानं बिन्दुः सिद्ध्यति। किञ्च, शब्दोपादानतयापि तस्य सिद्धिरित्याह—नादबिन्द्वर्णकारणमिति। तत्र नादो नामाभिधेयबुद्धिहेतुर्बिन्दोः प्रथमप्रसररूपः सूक्ष्मो नादश्चिन्तया रहितत्वेन श्रीमत्कालोत्तराद्युक्तः। बिन्दुश्च तत्कार्यं मयूराण्डरसबिन्दुवदव्यपदेश्यः परामर्शज्ञानरूपोऽक्षरबिन्दुस्तत्रैव सूक्ष्मत्वेनोक्तः। अर्णश्च वर्णं आकाशवायुप्रभवः श्रोत्रग्राह्यः स्थूलशब्दः। तदुक्तं तत्र—"स्थूलं शब्द इति प्रोक्तं सूक्ष्मं चिन्तामयं भवेत्। चिन्तया रहितं यत्तु तत्परं परिकीर्तितम् ॥" (१।८) ॥ २२ ॥

तत्र शुद्धाध्वनो भुवनाद्याधारत्वं दर्शयितुमाह—

**उत्तीर्णमायाम्बुधयो भग्नकर्ममहार्गलाः ।**
**अप्राप्तशिवधामानस्त्रिधा विज्ञानकेवलाः ॥ २३ ॥**

त्रिविधा हि पश्वात्मानः—तत्र मलकर्ममायायुक्ताः सकलाः, प्रलयाद्युपसंहृतकलादयो मलकर्मयुक्ताः प्रलयाकलाः, विज्ञानादिभ्यः कर्मणोऽपि क्षयान्मलमात्रयुक्ता विज्ञानकलाः। ते पुनः मलपरिपाकतारतम्यात् शिवप्रसादेन भग्नकर्ममलाख्यमहारोधाः किञ्चिदवशेषिताधिकारमलत्वादसंप्राप्तशिवसाम्यास्त्रिविधा एव विज्ञानकेवलिनो भवन्ति ॥ २३ ॥

के ते भेदा इत्याह—

*** विद्याविद्याधिपतयः पशुपूर्वाः सदाशिवाः ।**
**तत्र विद्याभुजः पूर्वे मन्त्रा विद्याश्च नामतः ॥ २४ ॥**

तत्र प्रथमे विद्यातत्त्वनिवासिन इत्याह—तत्र विद्याभुज इति ॥ २४ ॥

**विद्येश्वरनियोज्यास्ते संख्यया सप्तकोटयः ।**
**तेषां पुराणि विद्यायां वामादीनि यथोत्तरम् ॥ २५ ॥**

विद्येश्वरनियोज्यत्वं चैषामनुग्रहकरणत्वात्, विद्येश्वराणां च पञ्चविधकृत्याधिकारित्वात् ॥ २५ ॥

**स्फीतानि नव जातानि तनुभोगेन्द्रियादिभिः ।**

एतानि भुवनान्युत्तरोत्तरं विशिष्टभोगादिमन्तीत्यर्थः ॥

अथैतेभ्यो विशिष्टा विद्येशा इत्याह—

**मध्याः प्रशान्तकलुषा विद्येशाः शिवतेजसः ॥ २६ ॥**
**अधिकारमलोपेतास्तत्त्वमैशं समाश्रिताः ।**
**शिवार्ककरसंपर्कविकासात्मीयशक्तयः ॥ २७ ॥**

प्रशान्तमलत्वमधिकारमलयोगित्वं शिवानुगृहीतत्वं च मन्त्राणामपि समानमेव । शिवतेजसः पञ्चविधकृत्यकारिणः । यदुक्तं श्रीमद्रौरवे—"सृष्टिसंरक्षणादानभावानुग्रहकारिणः" (१।१५) इति ॥ २६–२७ ॥

**अष्टावनन्तपूर्वास्ते यथापूर्वं गुणाधिकाः ।**
**तथा पुराणि तत्रैषामनन्तः परमेश्वरः ॥ २८ ॥**

अष्टावनन्तपूर्वा इति । अनन्त-सूक्ष्म-शिवोत्तम-एकनेत्र-एकरुद्र-त्रिमूर्ति-श्रीकण्ठ-शिखण्डिसंज्ञाः । तत्रेश्वरतत्त्वे तेषामष्टौ भुवनानि प्राग्वदेव । अत एषामनन्त एव परमेश्वरः ॥ २८ ॥

**तत्राणवः पुरेष्वासन् नाप्यन्ये तद्विभूतयः ।**
**परे सदाशिवसमाः पतिकृत्याधिकारिणः ॥ २९ ॥**

तत्तद्भुवनेश्वराराधनादिना दीक्षया वा तेषु भुवनेषु योजिता आत्मानश्च विद्यन्ते । अयं च न्यायो विद्याभुवनेषु सदाशिवादिभुवनेषु च विज्ञेयः । यदुक्तं सूक्ष्मस्वायम्भुवे—"यो यत्राभिलषेद् भोगान् स तत्रैव नियोजितः । सिद्धिभाङ्मन्त्रसामर्थ्यात्" (३९।२) इति । अथ पशुसदाशिवानाह—परे सदाशिवसमा इति ॥ २९ ॥

**मूर्धानमध्वनः प्राप्ताः प्रसन्ने परमेश्वरे ।**

सदाशिवश्चात्राधिकारावस्थः शिव एव । तस्य च अधिकारादयोऽवस्था औपचारिका इत्युक्तम्—"अधिकारी स भोगी च लयी स्यादुपचारतः" इति । संस्कार्यसदाशिवादीनां तु भेदो वास्तव एव ।

एते च सदाशिवतत्त्वस्थसदाशिवभुवनवासिन इत्याह—

**तत्त्वमेषामसूताङ्गपुरभोगादिशोभितम् ॥ ३० ॥**
**सदाशिवमधिष्ठातृनाम्ना तेऽपि सदाशिवाः ।**

अत एवैषां देहादयोऽवास्तवा एव, अधिष्ठातुस्तस्य शिवस्य न पारमार्थिका इत्युक्तं श्रीमत्पौष्करे—"साधकस्य तु लक्ष्यार्थं तस्य रूपमिदं स्मृतम्" इति ॥ ३० ॥

उक्तार्थमुपसंहरति—

**अष्टादशभिरध्वायं भुवनैः सह भोक्तृभिः ।। ३१ ।।**
**त्रिभिश्च तत्त्वैरुद्दिष्टो विशुद्धः शिवकर्तृकः ।**

एष चाध्वा कार्यत्वात् शिवकर्तृक इत्यर्थः। अत्र च निवृत्त्यादिभुवनानां शक्ति-शिवतत्त्वयोश्च सदाशिवतत्त्व एवान्तर्भावो विज्ञेयः ॥ ३१ ॥

कार्यत्वादेवास्य शुद्धाध्वनः केनापि नित्येन कारणेन भवितव्यम्, तच्च बिन्द्वाख्य-मित्याह—

**सदाशिवादितत्त्वौघो नित्योपादानकारणः ।। ३२ ।।**
**विकारित्वाद्यथा कुम्भस्तथा चैष ततस्तथा ।**

एषोऽपि सदाशिवादिरध्वा विकारी, ततो नित्योपादानकारण इति ॥ ३२ ॥

ननु घटोपादानकारणस्य मृत्पिण्डस्यानित्यत्वादनेनापि शुद्धाध्वोपादानेनानित्येन भवितव्यमिति धर्मिस्वरूपविपरीतसाधकत्वाद् विरुद्धोऽयं विकारित्वादिति हेतुः ? अत आह—

**पार्थिवोऽपि भवेत् कुम्भो मायोपादानकारणः ।। ३३ ।।**

साक्षान्मृदुपादानत्वेऽपि घटस्य परम्परया मायैवोपादानकारणमिति ॥ ३३ ॥

कुत इत्याह—

**विनाशोत्पत्तिमत्त्वाभ्यां परिणामितया तथा ।**

अयमभिप्रायः—उत्पत्तिविनाशधर्मिणां हि वस्तूनां घटकपालाद्यवान्तरपरि-णामत्वेनावान्तरकार्यकारणभावे सत्यपि पृथिव्यादितत्त्वानां परम्परयोपादानं मायाख्यं नित्यं परमकारणमभ्युपगन्तव्यम्, अन्यथाऽनवस्थाप्रसङ्गात्। उक्तं च श्रीमत्स्वायम्भुवे—"मायातत्त्वं जगद्बीजमविनाश्यव्ययात्मकम्" इति ॥

एतदेव प्रपञ्चेन साधयति—

**यद्यदुत्पद्यते वस्तु तन्मायेयं यथा कला ।। ३४ ।।**
**उत्पत्तिनाशौ मायेयधर्मावाह महेश्वरः ।**

आप्तवाक्येनाप्येतत्सिद्धमिति भावः ॥ ३४ ॥

इदानीं सत्कार्यवाददृष्ट्या कलाद्यवस्थाभेदेनोत्पत्तिविनाशव्यपदेशं भजन्ती मायैव कलादिकार्यद्वारेण परिणमत इति दर्शयितुं परिणामशब्दार्थमाह—

**परिणामो हि वस्तूनां पूर्वावस्थापरिच्युतेः ।। ३५ ।।**

**अवस्थान्तरसंप्राप्तिः क्षीरस्य दधिभाववत् ।**
**दध्नश्च तक्रवत् तत्र तक्रावस्था निरूप्यते ॥ ३६ ॥**

दृष्टान्तस्वरूपनिरूपणायाह—तत्रेति ॥ ३५-३६ ॥

सा हि—

**न दध्नो नापि दुग्धस्य पूर्वावस्थे हि ते मते ।**

दध्यवस्थायां क्षीरावस्थायां वा तक्रावस्था नास्तीत्यर्थः । तथा हि क्षीरमेव दध्यादिरूपेण परिणमते, क्षीरं नष्टं दध्युत्पन्नमित्यादिव्यपदेशश्च दृश्यते ।

एतदेवाह—

**सदवस्थं हि वस्त्वेकं पूर्वं क्षीरं ततो दधि ॥ ३७ ॥**

असत उत्पत्त्यसंभवात् सदेव दधि क्षीरादभिव्यज्यते, सदेव तक्रं दध्नोऽभिव्यज्यत इति भावः । अयं च सत्कार्यवादोऽस्माभिर्मृगेन्द्रवृत्तिदीपिकायां विस्तरेण दर्शितः ॥३७॥

यथा चैषां दधिनवनीताद्यवस्थापरिणामभेदेन विचित्रार्थक्रियाणां कार्याणां क्षीरमेवोपादानम्, एवं तत्त्वभुवनादिभेदेन विचित्रपरिणामवतां विचित्रार्थक्रियाणां च कलादिकार्याणां साक्षात् परम्परया च मायैव परमकारणमित्याह—

**पश्चात् तक्रं तथा माया विचित्रपरिणामतः ।**
**तत्त्वतात्त्विकभावानामुपादानमनश्वरम् ॥ ३८ ॥**

यद्येवं क्षीरवत् सर्वात्मना परिणामादनित्यत्वं मायायाः, तन्न, सर्वथा दृष्टान्तासंभवात्, परिणामित्वमात्र एवास्य दृष्टान्तत्वम् । ततश्च घृतकीटन्यायेनैकदेशेनैव माया परिणमत इत्यदोषः ॥ ३८ ॥

इत्थं घटस्यापि परम्परया नित्योपादानत्वं प्रसाध्योपसंहरति—

**ततो निदर्शनं साधु प्रसिद्धोक्तविशेषणम् ।**

प्रकर्षेण सिद्धमुक्तं नित्योपादानत्वरूपं विशेषणं यस्य तत् तथाविधमिति ॥

पारिशेषिकानुमानेनापि बिन्दुसिद्धिमाह—

**न माया नेश्वरो नाणुर्न शक्तिः शुद्धवर्त्मनः ॥ ३९ ॥**
**उपादानमतो बिन्दुः परिशेषेण लभ्यते ।**

तत्र मायाया अनुपादानत्वं साधयति—

**तथाहि माया या तेषां क्षोभिताऽनन्ततेजसा ॥ ४० ॥**
क/ **जलादिक्षितिपर्यन्तं तत्त्वजातमसूत सा ।**

तेषां मध्याद् या माया, सा ह्यचेतनत्वादनन्तसामर्थ्यक्षोभितैव स्वकार्यमुत्पादयति। यदुक्तं श्रीमत्किरणे—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" (कि० ३।२७) इति ॥ ४० ॥

तत्रैव हेतूनाह—

**अविशुद्धजडत्वेन मायामार्गतया तथा ॥ ४१ ॥**
**दुःखानुषङ्गान्मायेयकार्माणवमलान्वयैः ।**
**सकलाणूपभोग्यत्वात् परिणामोदयैरपि ॥ ४२ ॥**

यतोऽस्या अशुद्धाध्वनोऽशुद्धत्वे सति जडत्वम्, यतश्च मायामार्गत्वं मोहहेतुत्वम्, यस्माच्च दुःखानुषङ्गः, यतश्च मायेयैरनात्मनि आत्माभिमानादिभिर्मलैः, कार्मेण सुखदुःखमोहहेतुना विपर्ययासक्त्यादिभावप्रत्ययात्मना मलेनाणवेन चाणोरनाद्यावारकेण पशुत्वाख्येन संबन्धः, बन्धत्रययोगिनामेव देहेन्द्रियादिजनकत्वात्। अत एव यतश्च सकलाणूपभोग्यत्वं भुवनादिद्वारेण, यस्माच्च विचित्रकर्मफलभोगसाधनत्वेन विचित्रा अनेकविधाः परिणामोदयाः परिणामवृद्धयः, तस्मादनन्तेन क्षोभिता माया तादृशं कार्यं जनयति, शुद्धस्य शिवस्य अशुद्धविषये कर्तृत्वायोगात्। यद्येवं शिवस्यासर्वकर्तृत्वप्रसङ्गः? तन्न, साक्षात्कर्तृत्वमत्र निषिद्धं न तु प्रयोजककर्तृत्वम्, अनन्तादेरपि तदधिष्ठानं विना कर्तृत्वासंभवात् ॥ ४१-४२ ॥

एतदेव प्रपञ्चयति—

**माया जडान्तरव्याप्ता परिणामवती च यत् ।**
**निष्पादने कलादीनां शरीरादिसमन्वितम् ॥ ४३ ॥**
**पुरुषं गमयेदेव पराधीनमसंशयम् ।**
**सुवर्णमिव कर्मारं मकुटोत्पादकर्मणि ॥ ४४ ॥**

यद्येवं शिवस्यापि शुद्धविषये कर्तृत्वात् शरीरेन्द्रिययोगादिप्रसङ्गः? तन्न, तस्य नित्यनिर्मलनिरतिशयसर्वार्थज्ञानक्रियायुक्तत्वात्, अशरीरस्याप्यात्मनः स्वदेहस्पन्दादौ कर्तृत्वदर्शनाच्च। अनन्तस्य त्वधिकारमलयोगाच्छरीराद्यपेक्षेत्यविरोधः ॥ ४३-४४ ॥

अतश्च—

**सैषा विकल्पविज्ञानगोचरैव सती च यत् ।**
**क्षोभ्यतेऽनन्तनाथेन कुम्भकारेण मृद् यथा ॥ ४५ ॥**

सविकल्पज्ञानविषय एव शरीरिणां कर्तृत्वं दृष्टमिति भावः ॥ ४५ ॥

किमत इत्यत आह—

**सविकल्पकविज्ञानं चितेः शब्दानुवेधतः ।**

सविकल्पकविज्ञानमयं घट इति परामर्शरूपात् शब्दोल्लेखादेवात्मनो दृश्यते ॥

किञ्चातः ? इत्यत आह—

**स तु शब्दश्चतुर्धा वाग्वैखर्यादिविभेदतः ॥ ४६ ॥**
**जायते बिन्दुसंक्षोभादनन्तस्यार्थदर्शने ।**

अनन्तस्य सविकल्पकज्ञानोत्पत्त्यर्थमवश्यं शब्दोऽपेक्षितः । तदानीं चाशुद्धाध्वनोऽनुत्पत्तेः स्थूलाकाशाभिव्यङ्ग्यत्वं न शब्दस्योपपद्यत इति शिवक्षुभितबिन्दुजन्य एव शब्दोऽभ्युपगन्तव्यः । तस्य च वैखर्याद्याश्चतस्रो वृत्तीर्वक्ष्यति । तत्र शब्दोपादानत्वेनापि बिन्दुसिद्धिः ॥ ४६ ॥

किञ्च—

**विद्याशरीरो भगवाननन्तः क्षोभको मतः ॥ ४७ ॥**
**मायायाः सा च विद्वद्भिर्बैन्दवं तत्त्वमुच्यते ।**

अनन्तस्य बैन्दवशरीरयोगः श्रूयते, तदुपादानतया बिन्दुः सिद्ध्यतीति भावः ॥ ४७ ॥

अत्रोपसंहारः—

**अतो न मायोपादानं तथैवायं महेश्वरः ॥ ४८ ॥**

बिन्दुरेवात्र शुद्धाध्वन्युपादानमित्यर्थः । किमनेनाप्रसिद्धेन बिन्द्वाख्येन कल्पितेन, ईश्वर आत्मा तच्छक्तिर्वा शुद्धाध्वन्युपादानमस्तु, अत आह—तथैवायमिति ॥ ४८ ॥

**चेतनत्वादवृत्तित्वात् परिणामात् ततस्तथा ।**
**आत्मा शक्तिश्च विज्ञेयौ विस्तरोऽत्रैव वक्ष्यते ॥ ४९ ॥**

मृदादीनां ह्युपादानानामचेतनत्वं दृष्टम् । चेतनाश्च शिवात्मशक्तयः । ततस्ते नोपादानं भवितुमर्हन्ति । किञ्च, उपादानं हि परिणामेन वा कार्यमुत्पादयति, यथा क्षीरस्य दधिभावः; वृत्तिरूपेण वा, यथा पटस्य गृहादिभावः । शिवादीनामेषां तु वृत्ति-परिणामौ न संभवतः, अविकारित्वात्, विकारित्वे जडत्वानियत्वादिदोषप्रसङ्गात् । अस्य प्रपञ्चोऽत्रैव भविष्यति । प्रोक्तं चास्माभिस्तत्त्वप्रकाशवृत्तौ ॥ ४९ ॥

अन्यथा बिन्दुसिद्धिमाह—

**इतोऽपि लक्ष्यते बिन्दुरणुवैषम्यदर्शनात् ।**

कुत इत्यत्राह—अणुवैषम्यदर्शनादिति । अणूनामात्मनां ज्ञानादिवैषम्यदर्शनात् ॥

वैषम्यमेवाह—

**दृश्यन्ते पुद्गलाः केचिदल्पज्ञानक्रियान्विताः ॥ ५० ॥**
**तेभ्योऽधिकाः परेऽन्ये तु सर्वज्ञा बलशालिनः ।**

एतच्च वैचित्र्यं तेषां न स्वतः संभवतीत्याह—

**पुद्गलश्चेतनो नित्यो विकाररहितो मतः ॥ ५१ ॥**

आत्मनो हि सर्वदाऽनन्तघटपटाद्यध्यवसायज्ञानानुसंधातृत्वेन स्वसंवेदनसिद्धत्वाद् देहान्तरफलकर्मभोक्तृतया च चेतनत्वं नित्यत्वं च सिद्धमागमेषु श्रूयते। इत्यतोऽस्य न विकारः संभवति ॥ ५१ ॥

अन्यथा हि—

**विकारित्वे जडानित्यभावः स्याद् घटकुड्यवत् ।**

अयं च न्यायः शक्तेरपि समानः, धर्मधर्मिणोरव्यतिरेकादित्याह—

**तथैव च चितिः शक्तिस्तयोरप्यविकारिणोः ॥ ५२ ॥**

इदं च प्रागेव दर्शितम्। उक्तं च नादकारिकासु—"अविकार्यत्रात्मोक्तस्तच्छक्तिश्चाप्यतो न योग्यौ तौ। बहुधा स्थातुं यद्वा चैतन्यविनाकृतौ विकारित्वात् ॥" (श्लो० १९) इति। अत एव तयोरौपाधिकमेव वैचित्र्यमित्याह—तयोरपीति ॥ ५२ ॥

**बहुधा यदवस्थानं तदुपाधिवशाद् भवेत् ।**

ततश्च—

**संपृक्ता चिदणोर्येन मायाद्यर्थावलोकने ॥ ५३ ॥**
**यदुपाधेर्विचित्रा च स बिन्दुर्बहुवृत्तिकः ।**

अत्रात्मनां चिच्छक्तिर्येन नादात्मना परिणतेनाभिधेयबुद्धिबीजेन संपृक्ता मायेयसविकल्पार्थावलोकने प्रवर्तते, यस्य च प्रत्यात्मनियतैर्नादाख्यैर्विचित्रैर्वृत्तिभेदैरुपहिता विचित्रैव प्रकाशते, स बिन्दुः। एतच्च विस्तरेणोक्तं तत्रभवता रामकण्ठेन नादकारिकासु। प्रोक्तं च श्रीमत्कालोत्तरे—"नादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम्" (१।५) इति ॥ ५३ ॥

ननु कर्मणैव प्रत्यात्मनियतेनात्मनां भोगवैचित्र्यवद् ज्ञानादिवैचित्र्यमप्यस्तु? अत आह—

**न कर्मणाऽणोर्वैचित्र्यमनपेक्षेण जायते ॥ ५४ ॥**
**वैचित्र्यमपि भोगस्य सापेक्षेणैव तेन यत् ।**

कर्म हि कलादितत्त्वभुवनादिसापेक्षमेव भोगवैचित्र्यं करोति, अन्यथा पृथिव्यादीनामप्यनुपयोगात् ॥ ५४ ॥

एवं ज्ञानवैचित्र्यमपि नादसहकृतमेव करोति न केवलम्। तदेव सापेक्षत्वं दर्शयति—

**कर्मोपभोगं कुरुते वैचित्र्यं चन्दनादयः ॥ ५५ ॥**
**तदेव यदि तत्कुर्यात् किं तैरिति विलुप्यताम् ।**

कर्म परं फलजननमेव करोति, तस्य तु वैचित्र्यं सहकारिवैचित्र्यादेव भवतीति भावः। ननु "कर्मतश्च शरीराणि [1]विविधानि शरीरिणाम्" (स्वा० ४।२।१३) इति श्रीमत्स्वायम्भुवश्रुतेः कर्मैव साधनवैचित्र्यमपि करोति। सत्यम्, साधनवैचित्र्यद्वारेणैव कर्म फलवैचित्र्यं करोति न केवलमित्यविरोधः ॥ ५५ ॥

एतदेव द्रढयति—

**प्रवृत्तिः सर्वभूतानां त्यागोपादानकारणम् ॥ ५६ ॥**

अपेक्ष्यवस्तुसद्भावे हि हेयानां त्यागार्थम् उपादेयानां चोपादानार्थं भूतानां प्रवृत्तिः संभवति, नान्यथा ॥ ५६ ॥

प्रकारान्तरेण बिन्दुसिद्धिमाह—

**किञ्चातिशायिकं प्राहुस्तमम्बरमनश्वरम् ।**
**शिवानामसमैश्वर्यभाजां भोगाधिकारयोः ॥ ५७ ॥**
**ज्योतिर्गणानामाकाशमिव भूतादिकारणम् ।**

यथा हि पञ्चभूतादिभूतमाकाशमवकाशदायित्वेन स्थूलशब्दाभिव्यञ्जकत्वेन च सूर्यादीनां ज्योतिषां भोगाधिकारयोः कारणम्, एवं शुद्धाध्ववासिनां शिवानां सर्वज्ञत्व-सर्वकर्तृत्वात्मकशिवत्वयोगिनां विद्येश्वरादीनामवकाशदानेन शब्दोत्पादनेन च भोगा-धिकारयोः कारणं बिन्दुः सिद्धः। तं चानश्वरत्वेनापराकाशमातिशयिकं परमव्योमाख्य-मागमज्ञाः प्राहुः, अपरस्य तत्र प्रगमासम्भवात् ॥ ५७ ॥

अधुना प्रागुक्तं बिन्दोः सविकल्पकज्ञानोपयोगित्वमुपसंहरति—

**बिन्दुरेव विकल्पाख्यां सविकल्पकबुद्धिषु ॥ ५८ ॥**
**स्ववृत्तिभेदसंभेदैरुल्लिखन् लभते चितिम् ।**

बिन्दुरेव शब्दोपादानत्वात् सूक्ष्मादिवैखर्यन्तशब्दात्मकस्ववृत्तिभेदसंबन्धाद् घटोऽयं लोहितः परिवर्तुल इत्यादिपरामर्शविकल्पोल्लेखनेन सविकल्पज्ञानेष्वात्मनश्चितिं सविकल्पकानुभवमुत्पादयति। शब्दानुवेधेन हि जात्यादिविशेषणविशिष्टं सविकल्पकज्ञान-मुत्पद्यते। यदाहुः—"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्। बलमूकादिविज्ञान-सदृशं शुद्धवस्तुजम् ॥ ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया। बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन संमता ॥" (श्लो० वा० प्रत्यक्ष० ११२,१२० ) इति ॥ ५८ ॥

**न चायं भावनासंज्ञः संस्कारोऽध्यक्षभावतः ॥ ५९ ॥**
**संस्काराः स्मृतिलिङ्गा हि नास्मत्प्रत्यक्षगोचराः ।**

नायं सविकल्पानुभवः पूर्वानुभूतवासनात्मकः संस्कारो मन्तव्यः, तस्यानुमेयत्वात्, अस्य च प्रत्यक्षानुभवरूपत्वात्। स्मृत्यन्यथानुपपत्त्या हि संस्कारः कल्प्यते ॥ ५९ ॥

---

१. विषयाः कारकाणि चेति तत्रत्यः पाठः।

नन्वध्यवसायस्य बुद्धिकार्यत्वाद् बुद्धिपरिणामभेद एव सविकल्पानुभवः ? अत आह —

**न बुद्धेः परिणामो वा मायोर्ध्वमपि सम्भवात् ।। ६० ।।**

बुद्धेरध्यवसायहेतुत्वेऽपि बिन्दुकार्यशब्दसहकारादेव सविकल्पकज्ञानं जन्यत इत्युक्तम् । अत एव शुद्धाध्वनो बुद्ध्यभावेऽपि वाक्शक्तिद्वारेण विद्येश्वरादीनां सविकल्पानुभवः सिद्धः ॥ ६० ॥

ततश्च —

**तथा विद्येश्वरोऽनन्तो मायामाक्रम्य तेजसा ।**
**ततः सृष्टिं प्रकुरुते सविकल्पकबोधवान् ।। ६१ ।।**
**अणुत्वे सति कर्तृत्वादस्मत्प्रेष्यो यथा जनः ।**

अनन्तस्य अणुपक्षतयाऽधिकारमलशेषेण प्रेर्यत्वात् सविकल्पकज्ञानयोगादेव मायाक्षोभकत्वम्, न तु शिवस्य बिन्दुक्षोभवन्निर्विकल्पकमात्रेणेति भावः ॥ ६१ ॥

इत्थमनन्तस्य सविकल्पकज्ञानयोगेन कर्तृत्वाच्छब्दद्वारेण विद्येश्वरादीनां तद्धेतुत्वेन बिन्दुसिद्धिरित्युक्त्वा अधुनाऽस्मिन्नेवार्थेऽन्येषां मतमाह—

**अन्ये वृत्तिपरीणामभेदवादविशारदाः ।। ६२ ।।**
**गुरवः कथयन्त्येनमन्यथोक्तविशेषणम् ।**

उक्तविशेषणमेनमर्थमनन्तस्य सविकल्पकज्ञानयोगेन कर्तृभावमन्ये गुरवोऽन्यथा साधयन्ति ॥ ६२ ॥

**परिणामस्य कर्ताऽयं न तु वृत्तेस्ततस्तथा ।। ६३ ।।**

यतोऽयमनन्तः परिणामस्य कर्ता ततस्तथाविधसविकल्पकज्ञानवानित्यर्थः ॥६३॥

एतदेव साधयति—

**इदमेवं मया क्षुब्धमिष्टं संपादयेद् ध्रुवम् ।**
**इति जानाति यः शक्तः स कर्ता परिणामिनाम् ।। ६४ ।।**

वृत्तिकर्तुस्तु न तदपेक्षेत्याह—

**परिणामिष्वयं धर्मो वृत्तिमत्स्वन्यथा भवेत् ।**

एतदेव प्रपञ्चयितुं सविकल्पकज्ञानस्य निर्विकल्पकज्ञानपूर्वकत्वमाह—

**तथाहि सर्वो निर्धूतविकल्पमवलोकयन् ।। ६५ ।।**
**वस्तु लोको विजानाति सविकल्पकमन्यथा ।**

निर्विकल्पकज्ञानानन्तरं सविकल्पकज्ञानं भवतीत्युक्तं प्रागेव । अन्यथा ज्ञानाऽनवस्था । सविकल्पकज्ञानानभ्युपगमे निर्विकल्पकस्य वस्तुमात्रावभासकत्वेन सर्ववस्तुसाधारणत्वाद् ज्ञानानवस्था स्यात् । घटज्ञानमित्यादिनियमोऽनुपपन्न इत्यर्थः ॥ ६५ ॥

ततश्च—

**अनन्तेनापि शब्दानुविद्धविज्ञानपूर्वकम् ।। ६६ ।।**
**सर्वं चेदिह विज्ञातमिष्येतैष करोति च ।**
**सविकल्पं विजानामीत्यवबोधाभिमानतः ।। ६७ ।।**

यस्मात् सविकल्पकं ज्ञानं जानामीत्यवबोधरूपत्वात् परामर्शरूपेणान्तःसंजल्पात्मकेन शब्देनानुविद्धं जायते, तस्माच्छब्दानुविद्धसविकल्पकज्ञानपूर्वं मायादि वस्तु ज्ञात्वा अनन्तः क्षोभादिकं करोति, अज्ञातस्य करणादर्शनात् ॥ ६६-६७ ॥

शिवस्य तु वृत्तिकर्तुर्बिन्दुक्षोभेन तदपेक्षेत्याह—

**वृत्तिरेव मता बिन्दोः पटस्येव कुटी ततः ।**
**निर्विकल्पकबोधेऽपि बिन्दुमीशोऽधितिष्ठति ।। ६८ ।।**

अनन्तस्य च परिणामकर्तुरस्त्येव सविकल्पकज्ञानापेक्षेत्युपसंहरति—

**नैवं विद्येश्वरो मायामेषा हि परिणामिनी ।**

इत्थं परमतमुपन्यस्य दूषयति—

**न वृत्तिपरिणामाभ्यां कर्तृभेदोऽवधार्यते ।। ६९ ।।**
**कुर्वतोऽपि कुटीं बुद्धिः सविकल्पा हि दृश्यते ।**

हीति यस्मादर्थे । एतच्च परमताभ्युपगमनदूषणमुक्तम्, न तु सिद्धान्ततया, बिन्दोरपि तत्त्वभुवनादिरूपेण परिणामश्रुतेर्वृत्तिपरिणामयोरत्यन्तभेदाभावाच्च ॥ ६९ ॥

इदानीं बिन्दोः पर्यायनामान्याह—

**शब्दतत्त्वमघोषा वाग् ब्रह्म कुण्डलिनी ध्रुवम् ।। ७० ।।**
**विद्या शक्तिः परो नादो महामायेति देशिकैः ।**
**बिन्दुरेवं समाख्यातो व्योमानाहतमित्यपि ।। ७१ ।।**

इदानीं बिन्दोः सूक्ष्मादिशब्दवृत्तीः संहारक्रमेण दर्शयति—

**चतस्रो वृत्तयस्तस्य याभिर्व्याप्तास्त्रिधाणवः ।**

याभिर्व्याप्ता अणवः प्रोक्तवदुत्तममध्यमापकृष्टज्ञानादिमन्तो भवन्ति ॥ ७०-७१ ॥

कास्ता इत्यत्राह—

**वैखरी मध्यमाभिख्या पश्यन्ती सूक्ष्मसंज्ञिता ।। ७२ ।।**

अत आसां कारणत्वेन बिन्दुः सिद्ध इत्यर्थः ॥ ७२ ॥

वैखरीस्वरूपमाह—

**तत्र सा वैखरी श्रोत्रग्राह्या याऽर्थस्य वाचिका ।**

सा च—

**स्थानेषु विधृते वायौ कृतवर्णपरिग्रहा ।। ७३ ।।**
**प्रयोक्तॄणामियं प्रायः प्राणवृत्तिनिबन्धना ।**

तदाहुः—

आकाशवायुप्रभवः शरीरात् समुच्चरन् वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः ॥ इति ।

मध्यमामाह—

**केवलं बुद्ध्युपादाना क्रमाद् वर्णानुपातिनी ।। ७४ ।।**
**अन्तःसंजल्परूपा तु न श्रोत्रमुपसर्पति ।**
**प्राणवृत्तिमतिक्रम्य वर्तते मध्यमाह्वया ।। ७५ ।।**

एषा च परामर्शज्ञानस्वरूपा स्थूलशब्दस्यापि कारणमित्युक्तम् ॥ ७४-७५ ॥

**अविभागेन वर्णानां सर्वतः संहृतिक्रमात् ।**
**स्वयंप्रकाशा पश्यन्ती मायूराण्डरसोपमा ।। ७६ ।।**

इयं चाक्षरबिन्दुरूपेत्युक्तम् ॥ ७६ ॥

इदानीमभिधेयवुद्धिबीजत्वेन प्रागुक्तां नादापरपर्यायां सूक्ष्मावस्थामाह—

**स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ।**

अनपायिनीत्वं चास्याः सुषुप्त्याद्यवस्थास्वपि संभवात्, न तु नित्यत्वेन । अस्या अपि प्रतिपुरुषं भेदेनानेकत्वादचेतनत्वाच्च कार्यत्वात् । तस्याश्च कारणं परबिन्दुरेवेत्युक्तम् ॥

तामेव विशेषयति—

**यस्यां दृष्टस्वरूपायामधिकारो निवर्तते ।। ७७ ।।**

यस्यां पुरुषस्वरूपाद् विवेकेन दृष्टस्वरूपायां पुरुषस्य भोगाधिकारो निवर्तते । यद्येवं विवेकज्ञानादेव मोक्षसिद्धेर्दीक्षानर्थक्यप्रसङ्गः ? तन्न, मलस्य द्रव्यत्वाच्चक्षुःपटलस्य चक्षुर्वैद्यव्यापारेणेव ईश्वरव्यापारेण दीक्षाख्येनैव निवृत्तिसिद्धेः ॥ ७७ ॥

ततश्च तद्विषयविवेकविज्ञानाभावादेव शब्दब्रह्मवादिनः पुरुषसमवायिनीं तां मन्यन्त इत्याह—

**पुरुषे षोडशकले तामाहुरमृताह्वयाम् ।**

एवं हि तेषां भ्रम इत्याह—

**केवलः परमानन्दो धीरो नित्योदितः प्रभुः ॥ ७८ ॥**
**नास्तमेति न चोदेति न श्रान्तो न विकारवान् ।**
**सर्वभूतान्तरचरः शब्दब्रह्मात्मको रविः ॥ ७९ ॥**
**भित्वा यं बोधखड्गेन निर्गच्छन्त्यविशङ्किताः ।**

यमेनं सम्यग्ज्ञानाख्येन खड्गेन भित्वा विविच्य यथावद् ज्ञात्वा संसारान्निर्गच्छन्त्यात्मानः, सोऽयं शब्दब्रह्माख्यो रविरस्माद् रवेर्विलक्षण इति तेषां भ्रमः ॥ ७८-७९ ॥

अत्र सिद्धान्तमाह—

**तामेव वाणीं सूक्ष्माख्यामाहुरात्मविदो जनाः ॥ ८० ॥**

एवशब्दो भिन्नक्रमः । आत्मस्वरूपविदस्तु शैवास्तां सूक्ष्माख्यां बिन्दुकार्यभूतां शब्दवृत्तिमेव मन्यन्ते, न तु पुरुषसमवायिनीम्, तस्याविकारित्वेन जडत्वात्, तत्समवाये पुरुषस्यापि विकारित्वाऽचेतनत्वादिदोषप्रसङ्गात् ॥ ८० ॥

इत्थं बिन्दुकार्यरूपाः शब्दवृत्तीः प्रदर्श्योपसंहरति—

**प्रत्यात्मनियता एता वृत्तयो बन्धनात्मिकाः ।**

आसां च कार्यत्वेन जडत्वान्न चित्समवायो युज्यते, अपि तु बन्धनत्वमेवेत्यर्थः ॥

तथापि—

**आभ्यो विविक्तमात्मानं नहि पश्यन्ति पुद्गलाः ॥ ८१ ॥**

पुद्गला मलयुक्तात्मान इत्यर्थः । मलावृतत्वादात्मनां तद्विवेकज्ञानाभावेन तास्वेवात्मभ्रान्तिरिति भावः ॥ ८१ ॥

कुत एवमेषामयं भ्रम इत्यत्राह—

**परमात्मैव वागात्मा वागेवात्मेति च श्रुतेः ।**

आत्मनो वाक्शक्त्यादिसंबन्धस्यार्थवादभूतानामासां श्रुतीनामर्थापरिज्ञानादेवं ते मन्यन्ते पुद्गलाः, मलयुक्तात्मान इत्यर्थः ।

**वैखरी श्रोत्रजे बोधे मध्यमा सविकल्पके ॥ ८२ ॥**
**पश्यन्ती मध्यमोत्पादसमुद्योगेषु लक्ष्यते ।**

वैखरी श्रोत्रग्राह्यैव । मध्यमा परामर्शज्ञानरूपत्वात् सविकल्पके लक्ष्यते । तस्या अपि समुत्पादनहेतुः पश्यन्ती ॥ ८२ ॥

अन्या तु—

**यदावृत्तिरशेषेण विलीना चित्तसंश्रया ॥ ८३ ॥**

**तदा सूक्ष्मा विशुद्धेव चिदाभात्यविवेकतः ।**

सूक्ष्मा त्वभिधेयबीजत्वेन सर्वभूतेष्ववस्थिता पश्यन्त्या अपि कारणभूता चिदा अत्यन्तसंश्लेषात् तद्रूपेव भातीत्युक्तम् ॥ ८३ ॥

उक्तन्यायेन च—

**न सोऽस्ति प्रत्ययोऽणूनां यः शब्दानुगमादृते ।। ८४ ।।**
**अनुविद्धमिह ज्ञानं सर्वं शब्देन जायते ।**

किञ्च—

**सैषा चतुर्विधा वृत्तिर्निवृत्त्यादिकलाश्रयात् ।। ८५ ।।**
**पञ्चधा भिद्यते भूयः कलास्ता बिन्दुवृत्तयः ।**

सैषा शब्दात्मिका बिन्दुवृत्तिर्निवृत्त्यादिकलाश्रयाणामात्मनां तारतम्येन पञ्चधा ज्ञानाद्युपकारिकेत्यर्थः । निवृत्त्यादयः पुनः कुत उत्पन्ना इत्यत्राह—कलास्ता इति । बिन्दोरेवावस्थाभूताः कलाकारवृत्तयः । ततः कलोपादानत्वेनापि बिन्दुसिद्धिरिति भावः ॥ ८५ ॥

ता एव नामतो दर्शयति—

**निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च पञ्चमी ।। ८६ ।।**
**शान्त्यतीताः कला एता याभिर्व्याप्तोऽध्वपञ्चकम् ।**

एताश्च सदाशिवभुवनोर्ध्वं भुवनत्वेन स्थिता अपि शक्तिरूपेण समस्ताध्वव्यापिकाः स्थिता इत्याह—याभिर्व्याप्तोऽध्वपञ्चकमिति ॥ ८६ ॥

**तत्त्वाध्वा भुवनाध्वा च वर्णाध्वा च पदात्मकः ।। ८७ ।।**
**मन्त्राध्वा व्यापकस्तेषां कलाध्वा बिन्दुमाश्रितः ।**

तत्त्वादिपञ्चाध्वव्यापकः प्रोक्तरूपकलाध्वा बिन्दुमुपादानत्वेनाश्रित इत्यर्थः । तत्र तत्त्वाध्वा शिवादिपृथिव्यन्तशुद्धाशुद्धतत्त्वरूपः । भुवनाध्वा तु अनाश्रितादिकालाग्न्यन्तभुवनात्मकः । वर्णाध्वा च मातृकैव । पदाध्वा व्योमव्यापिसंज्ञः । मन्त्राध्वा पुनः संहितामन्त्रा एव ॥ ८७ ॥

कथं पुनरेषामध्वसंज्ञा ? अत आह—

**त्यक्त्वैकमेकं संप्राप्य कलादिष्वजरामरम् ।। ८८ ।।**
**पदमासाद्यते पुंभिरतोऽध्वानः कलादयः ।**

यथा हि लोकेऽध्वसु क्रमादेकपदावष्टब्धं भूप्रदेशं मुक्त्वाऽन्यपदावष्टब्धं भूप्रदेशमासाद्य ग्रामादि प्राप्यते, तथा कलासु तत्त्वेषु भुवनेषु वर्णेषु पदेषु मन्त्रेषु वाऽशुद्धविषयेषु

कर्मभोगार्थम्, शुद्धविषयेषु सर्वज्ञत्वादिप्राप्त्यर्थं दीक्षायां विशिष्टसंबन्धात्मकं योजनं क्रियते। ततः कलादिवस्तुपद्धतयोऽध्वान इत्युच्यन्ते ॥ ८८ ॥

तेषु च—

**कलाध्वा वर्णितः पूर्वं निवृत्त्यादिविभेदतः ॥ ८९ ॥**
**व्याप्तिं तस्याभिधास्यामि साधाराङ्काधिदेवताम्।**
**साकारकारणामात्मबिन्दुशक्तिशिवाश्रयाम् ॥ ९० ॥**

आधारा हृदयादयः, अङ्कानि चिह्नानि वज्रादीनि, अधिदेवता अधिष्ठातृदेवताः सद्योजातादयः, आकारश्चतुरश्रादिः, कारणान्यधिपतयो ब्रह्मादयः। आत्मबिन्दुशक्तिशिवाश्रयामित्यत्रात्मनां भोगाधिकरणत्वेन आश्रयभूतानाम्। किञ्च, बिन्दुरुपादानतया, शक्तिः करणतया आधारकत्वेन च, शिवः कर्तृतया आश्रयो यस्याः कलाव्याप्तेस्ताम् ॥ ८९-९० ॥

तत्र तावन्निवृत्तिव्याप्तिं संहारक्रमेणाह—

**निवृत्तौ पार्थिवं तत्त्वं पुराण्यष्टोत्तरं शतम्।**
**तेषु कालानलादीनामनन्ताण्डस्य षड् बहिः ॥ ९१ ॥**
**प्राच्यादिषु दशस्वासन्नाशास्वेकैकशो दश।**
**रुद्राणां शतसंख्यानां वीरभद्रस्य चोपरि ॥ ९२ ॥**
**भद्रकाल्याश्च भुवने क्षकारोऽर्णेषु कीर्तितः।**

तत्र रुद्रनामान्येव भुवनानामपि नामानि। भुवनादयश्च पद्धत्यामेवास्माभिर्विविच्य दर्शिताः। ग्रन्थविस्तरभयात् पद्धत्यन्तरेषु बहुशः प्रसिद्धत्वाच्च नात्र लिख्यन्ते ॥ ९१-९२ ॥

**एकाशीतिपदा देवी प्रतिसर्गपदक्रमात् ॥ ९३ ॥**
**अष्टाविंशतिसंख्यैस्तु पदैरत्र प्रतिष्ठिता।**

एकाशीतिपदा देवी व्योमव्यापिलक्षणा शक्तिः। सा च प्रतिसर्गपदक्रमात् संहारक्रमेणान्त्यप्रणवादारभ्याष्टाविंशतिपदैरत्र निवृत्तिकलायां व्यवस्थिता ॥ ९३ ॥

किञ्च—

**मन्त्रावजातहृदयौ तत्र सा तु परा कला ॥ ९४ ॥**
**भुवनादीनभिव्याप्य पञ्च पञ्चसु वर्तते।**

पञ्चाध्वनो व्याप्य तेष्वेव वर्तत इत्यर्थः ॥ ९४ ॥

इत्थं निवृत्तिव्याप्तिमभिधाय एतस्याकारादीनाह—

**पीतैषा चतुरश्रा च कठिना वज्रलाञ्छिता ॥ ९५ ॥**

ध्यातव्योद्यदनेकार्चिर्मांसला हृदयाम्बुजे ।

तस्या निवृत्तिसंज्ञाकारणमाह—

तत्प्रलीनाणुसंघस्य संकल्पो विनिवर्तते ॥ ९६ ॥
अनासाद्य फलं तेन निवृत्तिरभिधीयते ।

किञ्च—

ब्रह्माऽत्र कारणं मन्त्रः सद्योजातोऽधिदेवता ॥ ९७ ॥

प्रतिष्ठाया अप्याह—

प्रतिष्ठायां तु चत्वारि कलायामवनीं विना ।
भूतानि पञ्च तन्मात्राः पञ्च कर्मेन्द्रियाणि च ॥ ९८ ॥
पञ्च बुद्धीन्द्रियाण्यासन् मनोऽहङ्कारबुद्धयः ।
अव्यक्तमपि वर्णाश्च हादिटान्ता विलोमतः ॥ ९९ ॥
त्रयोविंशतिराम्नाताः षट्पञ्चाशत् पुराणि च ।
जलतेजोऽनिलाकाशबुद्धयव्यक्तेष्वहङ्कृतौ ॥ १०० ॥
अष्टावष्टौ पदान्येकविंशतिस्तत्र संख्यया ।
शिरो वामश्च मन्त्रौ द्वौ विष्णुः कारणमुच्यते ॥ १०१ ॥
सा तु शुक्लार्धचन्द्राभा नीलोत्पलदलाङ्किता ।
ध्यातव्या गलपद्मान्तर्बहुलालोकशालिनी ॥ १०२ ॥
तत्प्रलीनाणुसंघस्य संकल्पोऽर्थप्रसिद्धये ।
प्रतिष्ठितो यतस्तेन प्रतिष्ठा नाम सा कला ॥ १०३ ॥
वामदेवो ह्यधिष्ठाता वाच्यमन्त्रात्मको मतः ।

"मननं सर्ववेदित्वं त्राणं संसार्यनुग्रहः । मननत्राणधर्मित्वान्मन्त्र इत्यभिधीयते ॥" इति न्यायात् शिवशक्तितदनुगृहीतेषु मन्त्रशब्दो वर्तते, उपचारात्तु वाचकशब्दे प्रसिद्धः । ततोऽत्रापि सद्योजातवामदेवादिशक्तिभेदा एव अधिदेवतात्वेनोच्यन्ते । अत एव तासु निवृत्त्यादिषु भुवनरूपासु सद्योजातादिविग्रहः शिवोऽभिध्येयस्तत्पदप्राप्तिकामैरिति गुरवः ॥ ९८–१०३ ॥

विद्यायास्त्वाह—

विद्यायां सप्त पुरुषो रागो नियतिसंयुतः ॥ १०४ ॥
विद्या कला च कालश्च मायातत्त्वानि तत्र तु ।
मायादिभुवनानां च विज्ञेयाः सप्तविंशतिः ॥ १०५ ॥

ञादयोऽत्र घकारान्ता वर्णाः सप्त विलोमतः ।
पदानि विंशतिर्मन्त्रौ शिखाघोरौ व्यवस्थितौ ।। १०६ ।।
रुद्रोऽत्र कारणं मन्त्रो बहुरूपोऽधिदेवता ।
सा तु स्फुरदनेकार्चिस्त्रिकोणा स्वस्तिकाङ्किता ।। १०७ ।।
ध्यातव्या तालुपद्मान्तर्नीलाञ्जनसमद्युतिः ।
तत्प्रलीनाणुसंघस्य संकल्पोऽशेषगोचरः ।। १०८ ।।
सर्वार्थद्योतको येन तेन विद्येति गीयते ।

अशेषगोचरः स्वभुवनाधोवर्तिसमस्ताध्वविषयः, न तु सर्वविषयः, तस्य मलाभाव एव संभवात् ।। १०४–१०८ ।।

शान्तौ तु त्रीणि तत्त्वानि दशाष्टौ भुवनानि च ।। १०९ ।।
कथितान्यत्र वर्णास्तु गादिकान्तास्त्रयो मताः ।
पदान्येकादशाऽत्रासन् मन्त्रौ वक्त्रतनुच्छदौ ।। ११० ।।
भुवनादीन्यभिव्याप्य पञ्च षड्बिन्दुलाञ्छिता ।
षट्कोणोदितमल्पान्तसहस्रकिरणद्युतिः ।। १११ ।।
ध्यातव्या सा परा शक्तिर्भ्रूमध्यकमलोदरे ।
तत्प्रलीनाणुसंघस्य द्वेषरागाद्यभावतः ।। ११२ ।।
संकल्पस्य प्रशान्तत्वाच्छान्तिरेषा निगद्यते ।
ईश्वरः कारणं तत्र मन्त्रस्तत्पुरुषाह्वयः ।। ११३ ।।
तदधिष्ठायको ज्ञेयः पुरुषस्त्वधिदेवता ।
अत्र च त्रीणि तत्त्वानि पञ्चमी तु परा कला ।। ११४ ।।
शिवतत्त्वात्मकं तत्र पुराणि दश पञ्च च ।
वर्णा विसर्गपूर्वा ये षोडश स्वरसंज्ञिताः ।। ११५ ।।
ओमित्याद्यं पदं मन्त्राः शिवास्त्रेशानशब्दिताः ।
शान्त्यतीता च पञ्चाध्वगर्भिणी परमा कला ।। ११६ ।।
चिन्तनीया महाकाशस्वरूपा मूर्धपङ्कजे ।
ईशानो मन्त्रराडेनामधितिष्ठति कारणम् ।। ११७ ।।
देवः सदाशिवस्तत्र कलाध्वेति प्रकीर्तितः ।
व्यापको भुवनादीनामभिव्याप्तः स बिन्दुना ।। ११८ ।।
बिन्दुः शक्त्या शिवेनैषा नान्येन व्याप्यते शिवः ।

त्रीणीति । विद्येश्वरसदाशिवाख्यानीत्यर्थः । अत एव शक्तितत्त्वस्य शिवतत्त्वेऽन्तर्भावं मन्यमानः शान्त्यतीताव्याप्तिमाह—पञ्चमी त्विति । व्यापक इति । उक्तवदितराध्वनां व्यापकः कलाध्वा बिन्दूपादानक इत्युक्तः । कर्तृभूतः शिवः करणभूतया समवायिन्या शक्त्या बिन्दुमधितिष्ठति, शिवस्य तु नाधिष्ठाताऽस्तीत्यर्थः ॥ १०९–११८ ॥

एतदेवाह—

**स हि देवः समावृत्य स्वशक्त्याऽनन्यभूतया ॥ ११९ ॥**
**सर्वमाक्रम्य च तया विजानाति करोति च ।**

अतः शक्तेः सर्वज्ञानक्रियारूपत्वं सिद्धम् ॥ ११९ ॥

इदानीं व्याप्तिस्वरूपं विचारयति—

**अन्यस्यान्यत्र सद्भावः सर्वदाऽव्यभिचारिणी ॥ १२० ॥**
**व्याप्तिराप्तपदार्थात्मलाभस्थितिनिबन्धनम् ।**

अन्यस्य आकाशादेः, अन्यत्र कुड्यादावस्तित्वं सर्वकालमव्यभिचारिणी व्याप्तिः । सा च आप्तस्य पदार्थस्य आत्मलाभनिबन्धनमुत्पत्तिनिबन्धनं स्थितिनिबन्धनं च भवति ॥ १२० ॥

अत एव—

**द्विधा सा सन्निधावेका परमात्मविधानतः ॥ १२१ ॥**

तदेव दर्शयति—

**तत्र सन्निधिमात्रेण विदधात्यखिलं चितिः ।**
**यथार्को दिनचेष्टानां सन्निधेरुपकारकः ॥ १२२ ॥**

चितिश्चैतन्यात्मिका शिवस्य समवायिनी शक्तिः, संकल्पमात्रेण सृष्ट्यादिकृत्यं विदधाति, सूर्य इव कमलविकासादि । तथा ह्यात्मनोऽपि स्वदेहस्पन्दनादौ सङ्कल्पमात्रेण कर्तृत्वं दृष्टम् ॥ १२२ ॥

ततश्च चिदधिष्ठानेनैव जडस्यात्मनि विधानरूपा व्याप्तिरित्याह—

**बिन्दुरात्मनि नादादीनध्वनः षडपि क्रमात् ।**
**विचित्रैः परिणामैस्तैर्विदधाति शिवेरितः ॥ १२३ ॥**
**यथा मृत्कलशादीनि कुलालाधिष्ठिता सती ।**

अध्वनः षडपीति । कलावर्णपदमन्त्रतत्त्वभुवनात्मनः सर्वानेव बिन्दुरुत्पादयति । तत्त्वभुवनाध्वानौ शुद्धरूपावेव, अशुद्धयोस्तु तत्त्वभुवनाध्वनोर्मायोत्पन्नत्वात् ॥ १२३ ॥

किञ्च—

**येन यद् व्याप्यते वस्तु परिणामितया स्वयम् ।। १२४ ।।**
**सा तस्य विकृतिः प्रोक्ता हेम्नस्तु मकुटो यथा ।**

एनमेवार्थं साध्यविषये योजयति —

**बिन्दुना व्याप्यते योऽसौ षड्विधोऽध्वा कलादिकः ।। १२५ ।।**
**सा तस्य विकृतिस्तेन व्याप्तत्वान्नादबिन्दुवत् ।**

अशुद्धतत्त्वभुवनव्यतिरिक्तः षड्विधोऽध्वा कार्यत्वेन नादबिन्दुवत् स्वकारणं बिन्दुं गमयतीति भावः ॥ १२५ ॥

इदानीं बिन्दुसमवायवादिनां मतमुपन्यस्यति—

**केचिदाचक्षते बिन्दुः समवैति शिवे ततः ।। १२६ ।।**
**दृक्शक्तिवत् क्रियाशक्तिरियं कुण्डलिनी परा ।**

ज्ञानशक्तिवदन्यापि बिन्द्वात्मिका क्रियाशक्तिः शिवे समवैति, न तु मायावत् ततो व्यतिरिक्तेति भावः ॥ १२६ ॥

एवं च—

**द्वे शक्ती समवायिन्यौ शिवे ज्ञानक्रियात्मिके ।। १२७ ।।**

एतदेव प्रपञ्चयति, तत्र—

**आद्या तु संविद् विज्ञानं क्रिया कुण्डलिनी परा ।**

आद्यायाः संविद् विज्ञानमिति च व्यपदेशः । अन्यस्यास्तु क्रिया कुण्डलिनीति च ॥ १२७ ॥

तयोस्तु—

**ज्ञानशक्त्या विजानाति क्रियया कुरुते जगत् ।। १२८ ।।**

शिव इत्यध्याहारः ॥ १२८ ॥

कुत इत्यत्राह—

**क्रिया हि फलदा पुंसां न ज्ञानं स्यात् फलप्रदम् ।**

यतः कुलालादीनामपि क्रियाशक्तिरेव प्रयत्नात्मिका घटाद्युत्पादनरूपं फलमावहति, ज्ञानशक्तिस्तु तत्तदर्थविषयीकरण एव चरितार्था । ततः शिवोऽपि ज्ञानशक्त्या विजानन् क्रियाशक्त्या सर्वं करोतीति ॥

ततश्च—

**ताभ्यां न विरहस्तस्य ते च न स्तः शिवं विना ।। १२९ ।।**

इत्थं मतान्तरेण बिन्दोः शिवसमवायं प्रदर्श्य तन्मतेनैव सदाशिवादितत्त्वान्यपि दर्शयति—

**तयोः प्रसरतोः साम्ये तत्त्वात्मा स्यात् सदाशिवः ।**
**ईशाऽधिकक्रियाशक्त्योर्विद्याज्ञानातिरिक्तयोः ।। १३० ।।**

तयोः क्रियाज्ञानयोः साम्येन प्रसरतोः सतोः क्रियाशक्तेरिव सदाशिवतत्त्वात्मपरिणामो भवति, क्रियाशक्त्याधिक्ये त्वीश्वरतत्त्वात्मा, ज्ञानशक्त्याधिक्येऽपि विद्यातत्त्वात्मा ॥ १३० ॥

किञ्च—

**तत्त्वेषु तेषु विज्ञानकेवलानां महात्मनाम् ।**
**भुवनानि विचित्राणि स्वभावललिताः प्रियाः ।। १३१ ।।**
**भोगानप्यपरिम्लानानङ्गानि करणानि च ।**
**विदधाति शिवः शक्तेरनन्यायाः क्रियात्मनः ।। १३२ ।।**
**नादादीनपि तेनैष कर्ता शुद्धाध्वनो मतः ।**

उक्तार्थमुपसंहरति—

**अतो नायं पृथक् शक्तेः शक्तिरेव क्रियात्मिका ।। १३३ ।।**
**समवेता शिवे बिन्दुरिति तत्राभिधीयते ।**

अतोऽयं बिन्दुः शिवसमवायिन्या ज्ञानशक्तेर्नात्यन्तं पृथग्भूतोऽपि तत्समवेता क्रियाशक्तिरेवेति केचिन्मन्यन्ते। अथ तन्निरासायाह—तत्रेति। सिद्धान्तोऽभिधीयत इत्यर्थः ॥ १३३ ॥

तमेवाह—

**सोऽयमात्मनि तत्त्वौघमनेकभुवनावलिम् ।। १३४ ।।**
**विदधद् विविधानल्पतनुभोगेन्द्रियादिकम् ।**
**बिन्दुराख्यायते युक्त्या परिणामी प्रधानवत् ।। १३५ ।।**

बिन्दोस्तत्त्वभुवनाद्युपादानत्वेन श्रुतेः प्रधानवद् मृदादिवद् वा परिणामित्वमवश्यमभ्युपेयम् ॥ १३४-१३५ ॥

किमत इत्यत्राह—

**परिणामि च यद्वस्तु तदवश्यं जडात्मकम् ।**
**यथा क्षीरं जडत्वेऽस्य समवायः कथं शिवे ।। १३६ ।।**

परिणामित्वाच्चास्य क्षीरादिवज्जडत्वं सिद्धम् । ततश्च नास्य चित्समवायो युज्यत इत्याह—जडत्व इति ॥ १३६ ॥

तत्समवायाभ्युपगमे शिवस्याप्यचेतनत्वं प्रसज्यत इत्याह—

**स हि तादात्म्यसंबन्धो जडेन जडिमावहः ।**
**शिवस्यानुपमाखण्डचिद्घनैकस्वरूपिणः ॥ १३७ ॥**

नित्यमुक्तत्वादनुपमं सर्वविषयत्वादखण्डं चिद्घनं ज्ञानक्रियात्मकं घनं शरीरमेकमेव स्वरूपं यस्य तस्य शिवस्य । अयमर्थः—चेतनात्मिका शक्तिरेव शिवस्य देहः । सा चैकाऽपि ज्ञेयकार्याद्युपाधिभेदादुपचारेण ज्ञानक्रियाशक्त्यादिव्यपदेशं भजते । पञ्चकृत्योपकारिभिरीशानाद्यवस्थाभेदैः शरीरकार्यं कुर्वाणोपचारेण शरीरत्वेनाप्युपचर्यत इति नास्याचेतनबिन्दुसमवायो युज्यते, तत्समवाये त्वचेतनत्वादिदोषप्रसङ्गात् ॥ १३७ ॥

अस्त्वचेतनः को दोष इति चेत्—

**यस्त्वेनं मन्यते मोहाज्जडधीर्जडमीश्वरम् ।**
**न तस्य युक्तिः शास्त्रं वा नात्मा नास्ति च देवता ॥१३८॥**

ईश्वरस्याचेतनत्वाभ्युपगमे जगत्कर्तृत्वेनेश्वरं साधयताऽनुमानेन, तस्य चेतनत्वादिस्वरूपप्रतिपादकैरागमैश्च बाधः । किञ्च, न्यायस्य समानत्वाच्छिवसमानजातीयात्मानोऽप्यचेतनाः प्रसज्येरन् । तेषां च भोगमोक्षकर्तृतया देवतापि न सिद्ध्यति ॥ १३८ ॥

ततश्च—

**स वर्जनीयो विद्वद्भिः सर्वास्तिकबहिष्कृतः ।**

ननु युष्मत्पक्षेऽपि शिवस्य कर्तृत्वेनाभ्युपगमात् क्रियावेशेन परिणामिताप्रसङ्गः ? अत आह—

**क्रियया हेतुभूतत्वात् क्रियाशक्तिश्चिदेव यत् ॥ १३९ ॥**

नात्र क्रियावेशः, कर्तृत्वमपि तु क्रियायां शक्तत्वमेव । ततश्चायस्कान्तशक्तेरिवायसि शिवशक्तेः सन्निधिमात्रेण बिन्दावेव क्रियावेशः, अतः क्रियाहेतुभूतत्वाद् ज्ञानशक्तिरेव क्रियाशक्तिरुच्यत इत्यविरोधः ॥ १३९ ॥

अत्र पराशङ्कापूर्वकं "जायतेऽध्वा यतः शुद्धः" (श्लो० २२) इत्यादि प्रागुक्तमेव समर्थयति—

**बिन्दुरन्यो न मायोर्ध्वमचिदस्तीति चेन्मतम् ।**
**जायतेऽध्वा कुतः शुद्धः क्व वा लीयेत केन वा ॥ १४० ॥**
**षोढा भवेदयं तत्त्वभुवनादिविभेदतः ।**
**विज्ञानकेवलास्त्रेधा कथं कस्माच्च ते पुनः ॥ १४१ ॥**

**विमुच्येरन्नृते बिन्दोस्तद्वैचित्र्यविधायिनः ।**

ननु चिद्रूपा शिवशक्तिरेव तस्य सर्वस्य हेतुरत आह—

**नहि चित् परिणामेन कुरुते तदशेषतः ।। १४२ ।।**
**चैतन्यभावादित्यग्रे वक्ष्यते शक्तिनिर्णये ।**

एतत्प्रागेव दर्शितम् । साधितं चास्माभिस्तत्त्वप्रकाशवृत्तौ विस्तरेण ॥ १४२ ॥

अत्र पराशङ्का—

**स्यादेष कल्पितानेकभेदः कार्यविशेषतः ।। १४३ ।।**
**एक एव शिवो नैकशक्तिमानिति चेन्मतम् ।**

ननूक्तवच्चेतनस्य शिवस्य तत्त्वादिरूपेण परिणामो न युज्यते, किन्त्वेकस्यापि शिवस्यानेकशक्तेः कार्यभेदादौपचारिकः सदाशिवादितत्त्वभेदः काल्पनिक एव, न तु पारमार्थिक एवेति यद्येवं भवतोऽभिमतम्, तत्सत्यमेव, अधिष्ठातृविषये शिवस्याधिष्ठातुरवस्थाभेदस्याधिष्ठेयभेदकृतत्वेनौपचारिकत्वात् । अधिष्ठेयस्य शुद्धाध्वनस्तत्त्वभुवनादिभेदः सत्य एव, अन्यथोपचारस्याप्ययोगात् ॥ १४३ ॥

अथ चिद्विवर्ततया सोऽप्यसत्य एवेष्यते, तदानीम्—

**मायेयोऽपि तथा तु स्यादध्वा युक्त्यविशेषतः ।। १४४ ।।**

विवर्ताभ्युपगमस्याशुद्धाध्वनि संभवात् सोऽप्यसत्यतामापाद्येतेत्यर्थः ॥ १४४ ॥

अस्तु सोऽप्यसत्यः, को दोष इति चेत्, तदयुक्तम्, प्रमाणबाधादित्याह—

**यथास्वं हेतुभिः शास्त्रैः प्रत्यक्षैरपि योगिनाम् ।**
**प्रसिद्धानध्वनः शुद्धान् प्रत्याचष्टे कथं सुधीः ।। १४५ ।।**

अत्र च शुद्धाध्वन इत्युपलक्षणमशुद्धानामपि तत्त्वादीनाम् । ततश्च शुद्धाशुद्धरूपस्य जगतोऽसत्यताभ्युपगमः सर्वप्रमाणबाधित इति तद्वादिनो दुर्बुद्धय एवेति भावः ॥ १४५ ॥

तथाहि—

**विशिष्टे परमोदारदातरीशे यथागमम् ।**
**प्रवृत्तिरुपभोगाय मोक्षाय च निगद्यते ।। १४६ ।।**

शास्त्रतस्तावद्भोगमोक्षप्रदे शिवे सिद्धे सति शास्त्रोपदिष्टक्रमेणैव भोगार्थं मोक्षार्थं वाऽऽत्मनां प्रवृत्तिर्यथाऽधिकारं दृश्यते ॥ १४६ ॥

किञ्च, भोगस्थानमपि साक्षाच्छिवकर्तृकमत्यन्तशुद्धं शास्त्रेषु श्रूयत इति दर्शयितुं श्रीमन्मतङ्गसूत्रं (वि० २६।६३) पठति—

**सदाशिवपदं योगाच्चर्यातो वाऽथ दीक्षया ।**
**प्राप्यते चित्तभेदेन मोक्षो वाऽथ चतुष्टयात् ।। १४७ ।।**

चित्तभेदशब्देनात्र ज्ञानं विवक्षितम् । ततश्च शुद्धाध्वनि कर्मणः प्रगमासंभवात् तज्जन्यस्य च भोगस्य सुखदुःखमोहरूपत्वेनाशुद्धत्वात् सदाशिवादिभुवनवर्त्यपरमोक्षसंज्ञः शुद्धभोगः, परमोक्षश्च शिवसाम्यरूपो योगादिसहकृतदीक्षया प्राप्यते । तत्र मलपरिपाक-मान्द्ये भौतिकदीक्षाभाजां भोगानन्तरं मोक्षप्राप्तिः, विशिष्टमलपरिपाकवतां नैष्ठिक-दीक्षाभाजां शरीरपातानन्तरम्, सद्योनिर्वाणदीक्षाभाजां च तदनन्तरमेव मोक्षप्राप्तिः । नन्वस्मिन् सूत्रे दीक्षाचर्याज्ञानयोगाख्यानि चत्वार्यपि समविकल्पानि भोगमोक्षसाधना-नीति प्रतीयन्ते? नैवम्, वाक्यार्थानभिज्ञानात् । एवं हि तत्र वाक्यार्थः—सदाशिवपदस्या-त्रोपलक्षणत्वात् तत्तद्भुवनेश्वरसाक्षात्कारफलाद् योगात्, तत्तदाराधनात्मिकया वा चर्यया, तत्तद्भुवनयोजनात्मिकया दीक्षया च, तत्तद्भुवनेश्वरस्वरूपनिष्ठेन च ज्ञानेन तत्तद्भुवनेषु प्राप्तिर्भवत्येव, न तु समविकल्पतया । ज्ञानादिष्वपि दीक्षया विनाऽनधिकारात् तस्या एव प्राधान्यं यतः । मोक्षो वाऽथ चतुष्टयात् । अस्मात् समुच्चितान्नैकस्माद् भोगो वेति वाशब्दार्थः । तथा च चर्यायोगयोस्तावज्ज्ञानं विनानुष्ठानमेव नोपपन्नम्, नह्यज्ञातेऽर्थे योगश्चर्या वा संभवति । ज्ञानमपि द्रव्यत्वान्मलादिबन्धानां चक्षुषः पटलानामिव चक्षुर्वैद्य-व्यापाराद् दीक्षाख्यमीश्वरव्यापारं विना न तेभ्यः पुंसां मोक्षं कर्तुं क्षममित्युक्तम् । अतो दीक्षैव मोक्षहेतुः । उक्तं च तत्रैव प्रकरणान्तरे—"तस्मान्मन्त्रक्रिया मुख्या सेश्वरी मुक्ति-मुक्तिदा" (म० वि० ७।७४ ) इति । श्रीमत्षट्साहस्रिकायामपि—"दीक्षैव मोक्षदा पुंसां चिदभिव्यक्तिकारिणी" इति ॥ १४७ ॥

अत्र च सदाशिवपदस्य भोगाधिकरणत्वं श्रूयत इत्याह—

**इति भोगः समाख्यातः सदाशिवपदं महत् ।**

भोगशब्देनोपचाराद् भोगाधिकरणमुच्यते । सदाशिवपदमित्यपि शुद्धाध्वभुवनो-पलक्षणमित्युक्तम् ॥

अस्य च भुवनरूपत्वेन कार्यत्वात् शुद्धाध्वत्वाच्च बिन्दुरेवोपादानकारणतया सिद्ध इत्युक्तमित्यभिप्रायेणाह—

**न तत्र मायोपादानं तनुभोगादि जायते ।। १४८ ।।**
**विशुद्धत्वादतः सिद्धः शुद्धाध्वा चोपभुक्तये ।**

तत्र सदाशिवपद इति ॥ १४८ ॥

अन्यथाऽपि शुद्धाध्वसाधनायाह—

**किञ्च माया प्रयोज्येन कर्त्रा केनाप्यधिष्ठिता ।। १४९ ।।**

**उपादानं कलादीनां कलाव्याप्तस्वरूपिणी ।**
**यथा मृत्कलशादीनां कुलालेन तथा ह्यसौ ।। १५० ।।**

सत्कार्यपक्षाश्रयणेन कलादिपृथिव्यन्तं कार्यं कलाः, ताभिः शक्तिरूपाभिराश्रयत्वेन व्याप्यत इति कलाव्याप्तस्वरूपिणी माया मृदादिवदशुद्धत्वात् शिवप्रयोज्येन कर्त्रा क्षोभ्यते, न तु बिन्दुवत् साक्षाच्छिवेनेत्युक्तम् —"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः ॥" (कि० वि० ३।२७) इति। कुलालस्यापि शिवप्रयोज्यत्वं दर्शयति—तथा हीति ॥ १४९-१५० ॥

**प्रयोज्यः पशुभावेन कर्ता हेतुर्महेश्वरः ।**

पशुत्वादेव कुलालः प्रयोज्यः कर्ता, निर्मलत्वाच्छिवः प्रयोजककर्तेत्यर्थः ॥

तथाहि—

**अज्ञो जन्तुरनीशोऽयमात्मकार्येऽपि कीर्तितः ।। १५१ ।।**
**ईश्वरप्रेरितः कुर्याच्छुभं वा यदि वाऽशुभम् ।**

इत्थं दृष्टान्तं प्रसाध्य दार्ष्टान्तिके योजयति—

**प्रयोज्यत्वाच्छरीरादियुक्तोऽनन्तः कुलालवत् ।। १५२ ।।**
**मायायाः क्षोभको येन शरीरेणेन्द्रियेण च ।**
**देशादिना स सिद्धोऽध्वा विशुद्धः शिवशासने ।। १५३ ।।**

येनेति यन्मयेनेत्यर्थः। देशादिनेति भुवनाद्यात्मनाऽऽश्रयेण। आदिग्रहणात् प्रागुक्तेन सविकल्पकज्ञानहेतुना शब्देन च युक्तोऽनन्तः कर्ता। स शुद्धोऽध्वा शिवशास्त्रे सिद्ध इति ॥ १५२-१५३ ॥

इत्थं मतान्तरनिराकरणेन परिग्रहशक्तिरूपां शुद्धाध्वोपादानभूतामचेतनां परबिन्दुसंज्ञां महामायां प्रसाध्य मतान्तरेणाऽशुद्धाध्वनोऽपि बिन्दूपादानत्वं मायायाश्च कार्यत्वमुपन्यस्यति—

**अवस्थामपरे बिन्दोर्मायामाहुर्विपश्चितः ।**
**कलाव्याप्तस्वरूपा च पुद्गलाधिष्ठिता च यत् ।। १५४ ।।**

यद्यस्माच्छुद्धविद्यातत्त्वाद् मायाऽपि बैन्दवीभिः कलाभिर्व्याप्ता पश्चात्माधिष्ठिता च, तस्मात् तामपि बिन्दोरेवावस्थां कार्यरूपां सूक्ष्मां परिणतिमाहुः ॥ १५४ ॥

**तथैव प्रकृतिस्तेषां स्थूला सूक्ष्मा परेत्यसौ ।**
**महामाया भवेत् त्रेधा तत्र स्थूला गुणात्मिका ।। १५५ ।।**
**बुद्ध्यादिभोग्यजननी प्रकृतिः पुरुषस्य सा ।**

प्रकृतिमपि तस्यैव स्थूलमवस्थान्तरमाहुः। एवं तेषां बिन्द्वेकोपादानवादिनां सा महामाया स्थूलसूक्ष्मपरभेदेन त्रिधा भिद्यते। स्थूला सा बिन्द्ववस्था सत्त्वरजस्तमोरूपा पुरुषस्य बुद्ध्यादीनि भोगसाधनानि तत्त्वानि भोग्यांश्च विषयान् परम्परयोत्पादयन्ती प्रकृतिरुच्यते ॥ १५५ ॥

**सूक्ष्मा कलादितत्त्वानामविभागस्वरूपिणी ॥ १५६ ॥**
**जननी मोहिनी माया सर्वाशुद्धाध्वकारणम् ।**

सूक्ष्मा तु मायासंज्ञा भोक्तृत्वहेतूनां कलादितत्त्वानां सर्वस्य च प्रकृत्यादेरपि तत्त्वभुवनात्मनस्तद्वर्तिनश्च जगतः साक्षात् परम्परया च कारणं भवति ॥ १५६ ॥

किञ्च—

**मन्त्रयोनिः परा माया नित्या कुण्डलिनी तु या ॥१५७॥**
**उपादानं शरीराणां विद्याविद्येश्वरात्मनाम् ।**

परा तु मायोपादानमिति। मायायाश्चोपादानभूता महामायेत्यर्थः। सा च नित्या, परमकारणत्वात् ॥ १५७ ॥

ततश्च—

**कार्यात्मिका सा मायेयं परिणामवती च यत् ॥ १५८ ॥**
**शरीरेन्द्रियसंयुक्तं कर्तारं साधयेत् ततः ।**

एवं च—

**विशुद्धस्याध्वनः सिद्धिरनिवार्याऽवतिष्ठते ॥ १५९ ॥**
**येषां माया मतेऽनित्या कलाविद्यादिकारणम् ।**
**न तेषामसितो मार्गः कलाशुद्ध्या विशुद्ध्यति ॥ १६० ॥**

इत्थं परमतेन मायायाः कार्यत्वं प्रसाध्य तन्मतेनैव मायाया अनित्यत्वे दूषणमाह—येषामिति। मायाया अनित्यत्वेन शुद्धाध्वोपादानत्वानभ्युपगमे बिन्दुकार्यभूतकलाध्वशुद्ध्या मायाकार्यस्याशुद्धस्याध्वनः शुद्धिर्न भवेत्, अन्यस्य शुद्ध्याऽन्यस्य शुद्ध्ययोगात्। ततस्तच्छुद्ध्यन्यथानुपपत्त्या शुद्धाध्वापि बिन्दुकार्य एवाभ्युपगन्तव्यः ॥ १५९–१६० ॥

एतदेवाह—

**कला हि शोधिताः पञ्च निवृत्याद्या विशुद्धये ।**
**तत्त्वादीनामतो बिन्दोः कार्यमध्वा विशेषतः ॥ १६१ ॥**

बिन्दुकार्यत्वे ह्युपादानभूतकलाशुद्ध्या सर्वस्य तत्त्वादेः शुद्धिरनिवार्येति भावः ॥ १६१ ॥

ननु व्यापिकानां कलानां शुद्धया व्याप्यस्य तत्त्वादेः शुद्धिर्भविष्यतीत्यत आह—

**न तु व्यापकमात्राणां शुद्धया शुद्धिर्मताऽध्वसु ।**
**अनुपादानरूपाणां कलानां नित्यशुद्धयोः ।। १६२ ।।**
**शिवशक्त्योर्विशुद्धयैव सदा शुद्धिप्रसङ्गतः ।**
**इत्याख्याता महामाया सर्वाध्वप्रकृतिः परा ।। १६३ ।।**
**आचार्यैस्तैरशेषाध्वकार्यवादविचक्षणैः ।**

अत्र च मायाया अनित्यत्वे प्रमाणाभावात्, शुद्धस्य बिन्दोरशुद्धोपादानत्वायोगात्, नित्यत्वश्रुतिविरोधाच्चायं पक्षः प्रयत्नेन निराकृत इति मत्वा सिद्धान्तज्ञानिनामाचार्याणां मतेन मायाया नित्यत्वसाधनायाह—

**अन्ये तु कथयन्त्यत्र मायामध्वस्वनश्वरीम् ।। १६४ ।।**
**उपादानं कलादीनामभिव्याप्तां च बिन्दुना ।**

तदुक्तं श्रीमत्स्वायम्भुवादौ—"मायातत्त्वं जगद्बीजमविनाश्यव्ययात्मकम्" इत्यादि। श्रीमद्रौरवेऽपि—"विद्याराजाधिराजेशो मायां विक्षोभ्य मन्त्रराट्। कलामुत्पादयामास" (१।६-७) इत्यादि ॥ १६४ ॥

ननु मायाया अकार्यत्वेऽप्यशुद्धाध्वनो व्यापकमात्रकलाशुद्धया शुद्धिर्भवेदिति चेदतिप्रसङ्गादित्युक्तम्, अत आह—

**शुद्धिश्च तादृशी ज्ञेया तयोरागमवेदिभिः ।। १६५ ।।**
**यया व्यापकशुद्धयैव विशुद्धिरितराश्रया ।**

व्यापककलाशुद्धया व्याप्यस्याध्वमात्रस्य शुद्धिर्दीक्षायां कर्मभोजनादिद्वारेणोपपद्यत इत्यागमेषु श्रूयते। अयं चात्राभिप्रायः—कर्मसद्भावे ह्यात्मनां कलादिकोऽशुद्धाध्वा बन्धत्वेनावतिष्ठते, तस्य शुद्धिस्तान् प्रति बन्धकत्वनिवृत्तिरेवाभिमता। सा च मलपरिपाकयुक्तस्य दीक्षया कर्मक्षयादुपजायते। तदुक्तं श्रीमत्किरणे—"अनेकभविकं कर्म दग्धबीजमिवाणुभिः। भविष्यदपि संरुद्धं येनेदं तद्धि भोगतः॥" ( कि० ६।१९ ) इति। श्रीमत्स्वायम्भुवेऽपि—"धर्माधर्मक्षयकरी दीक्षा" इति। अतश्च सर्वेष्वध्वसु प्रत्येकमितराध्वान्तर्भाविन भोगभोजनादिरूपा दीक्षोपपद्यत इति व्यापककलाध्वशुद्धया व्याप्यस्याशुद्धस्यापि तत्त्वभुवनादेरध्वनः साधारणरूपस्य तं प्रति बन्धकत्वनिवृत्तिलक्षणा शुद्धिरुपपद्यत इति न कश्चिद्दोषः ॥ १६५ ॥

इत्थं मायाया नित्यत्वेऽपि दोषाभावमुक्त्वा पुनरपि बिन्दुमेव विशेषयति—

**मन्त्रयोनिर्महामाया या परिग्रहवर्तिनी ।। १६६ ।।**
**शिवस्य शक्तिराक्रान्ता यया सर्वेऽपि पुद्गलाः ।**

वाच्यमन्त्राणामुत्पत्त्ययोगाद् वाचकमन्त्राणां शब्दोपादानत्वेन योनिर्महामाया। सा च शिवस्य परिग्रहशक्तिरुच्यते, यया सर्वेऽपि पशवः प्रोक्तवन्नादादिद्वारेणाऽधिष्ठिताः ॥ १६६ ॥

किञ्च—

**सेयं क्रियात्मिका शक्तिरीश्वरी सर्वदोदिता ॥ १६७ ॥**
**वर्तमाना पशुष्वेव पाशत्वेन व्यवस्थिता ।**

एषा च सर्वदेश्वरस्य क्रियाशक्त्यधिष्ठितत्वात् शुद्धकार्योत्पादनार्थमात्मनां च क्रियाशक्त्यविवेकेन स्थितत्वाच्च कैश्चिद् भ्रान्त्या क्रियाशक्तिरैश्वरीति प्रोक्ता, न तु परमार्थतश्चित्समवायिनी क्रियाशक्तिः, उपादानत्वेनाचेतनत्वादित्युक्तम्। अत एव मुक्ताणुषु न प्रवर्तते, पशुष्वेव वर्तमानत्वात्। इयमपि पाशतयैव स्थिता, न तु पाशातीतशिवसमवायेनेति ॥ १६७ ॥

अतश्च—

**पशून् वर्तयते नित्यं नानायोनिष्वनिश्चिता ॥ १६८ ॥**

सेयं क्रियाशक्तिरव्यतिरेकेण ज्ञाता सती पशूनशुद्धासु योनिषु योजयति। तद्विवेके तु नाशुद्धयोनिप्राप्तिरित्यर्थः ॥ १६८ ॥

किञ्च—

**स्वपरामर्शवीर्येण भोगमोक्षौ प्रयच्छति ।**

स्वकीयेन परामर्शज्ञानात्मना वीर्येण भोगमोक्षौ प्रयच्छति, भोगमोक्षयोः परम्परयोपकारिणी भवतीत्यर्थः ॥

माया तु भोगोपकारिका, अनात्मादिष्वात्मादिज्ञानहेतुत्वात्, तत्रास्य भोगोपकारित्वं दर्शयति—

**सा भोगसाधनोपायप्रत्ययोदयहेतुना ॥ १६९ ॥**
**शब्दानुवेधेन सदा मोहयेदविवेचिता ।**

अविवेचितस्वरूपा महामाया भोगसाधनग्रहणोपायभूतसविकल्पकज्ञानोत्पत्तिहेतुना शब्दानुवेधेन सर्वदा पशून् मोहयति ॥ १६९ ॥

तदानीं च—

**सर्वथैवामृतप्राप्तेः पृथक्कारं प्रतन्वती ॥ १७० ॥**
**ततोऽभूद् विषयाभोगप्रीतिलालसचेतसः ।**

विषयाभोगश्रद्धालोः पुंसः सर्वथा मोक्षप्राप्तेर्बहिर्भावं तदानीं करोतीत्यर्थः ॥ १७० ॥

मोक्षोपकारकत्वमपि दर्शयति—

**ज्ञानं परामृतोपायहेतुः परिकरः पशोः ॥ १७१ ॥**

परमोक्षप्राप्त्युपायस्य दीक्षाख्यस्य तदुत्तरकालानुष्ठेयस्य च नित्यादिकर्मणः कारणं परिच्छेदज्ञानमेव, अज्ञातविषयेऽनुष्ठानासंभवात्, निर्बीजदीक्षायामप्याचार्यस्य ज्ञानप्रधानत्वात् ॥ १७१ ॥

तस्य च शिवादिवस्तुविषयकज्ञानस्य शास्त्रद्वारेण बिन्दुरेव संपादक इत्याह—

**तच्च शब्दानुवेधेन शब्दराशेरभूदसौ ।**
**शब्दराशिश्च बिन्दूत्थो बिन्दुर्नादादसावपि ॥ १७२ ॥**
**बिन्दोरनाहतादेष कारणं शुद्धवर्त्मनः ।**

अनाहतबिन्दुरिति शुद्धाध्वयोनेर्महामायायाः संज्ञा । तस्याश्च नादबिन्द्वादिक्रमेण शब्दोत्पत्तिरित्युक्तम् ॥ १७२ ॥

**तत्र भोक्तृतया भोगैः शरीरेन्द्रियगोचरैः ॥ १७३ ॥**
**मलः कर्म च माया च विशुद्धमनुमीयते ।**

तत्र च विद्येश्वरादीनां भोक्तृत्वश्रुतेर्भोगस्य शरीराद्यविनाभावादशुद्धभोगसाधनशरीरादिहेतूनां मलमायाकर्मणां तत्रासंभवात् शुद्धभोगसाधनैः शरीरादिभिर्भोक्तृत्वहेतुः शुद्धोऽधिकारमलः शुद्धं चेश्वरसेवात्मकं सहकारि कर्म, शुद्धा च माया शरीराद्युपादानमनुमीयते। तयोश्चाधिकारमलेश्वरसेवात्मककर्मणोर्महामायाभुवनप्राप्तिस्तत्कारणभूतदीक्षा वा संपादिका, मायोत्तीर्णानां विच्छिन्नावारकमलानामेव तत्संभवात् ॥ १७३ ॥

एतदेवाह—

**मायैव कारणं शुद्धाशुद्धयोर्मलकर्मणोः ॥ १७४ ॥**

अशुद्धस्य त्वनात्मादावात्माद्यभिमानरूपस्य पुंस्त्वमलस्याशुद्धभोगहेतोश्चाश्वमेधब्रह्महत्याद्यनुष्ठानरूपस्य कर्मणोऽशुद्धमायाकार्यसंपर्कः कारणमित्याह—

**अशुद्धयोरशुद्धैव मायाऽतो द्विविधा मता ।**

न त्वाणवमलस्य सा हेतुरिति व्याख्येयम्, तस्यानाद्यावारकत्वेन श्रवणात्, आदिमत्त्वे च आवरणकारणासंभवात् । ननु "कर्माप्येवमनादिकम्"(कि०वि० ३।७) इति श्रुतेः, कर्मसद्भाव एव मायाप्रवृत्तेश्च कथं कर्मणो माया कारणमुच्यते, सत्यं प्रवाहानादिरेव कर्मशरीरप्रबन्धः, कर्माभावे मायायाश्चाप्रवृत्तिरेव, तथापि कर्मानुष्ठानस्य देहवतामेव संभवाद् वासनारूपस्य च कर्मणो बुद्धिद्वारेण मायास्थत्वात् तथोक्तमित्यविरोधः। कर्मापि कृष्यादिकर्मवत् प्रकृतिसंस्कारकत्वात् पुरुषसंस्कारकत्वे तस्य विकारित्वप्रसङ्गाद् बुद्धौ गुणत्वेन वर्तत इत्युक्तं श्रीमन्मतङ्गादौ। अतश्च मायामहामायात्मकद्वयं नित्यसिद्धमित्याह—मायाऽत इति। एवं विसदृशकार्यत्वाद् मायाया बिन्दुकार्यत्वं न संभवतीति भावः ॥

**बिन्दोर्विवेके सहसा च्छिद्यते मलकम्बुकः ।। १७५ ।।**

मलस्य द्रव्यत्वेन ज्ञानानिवर्त्यताया उक्तत्वात्, दीक्षया क्षपितमलानामेव शुद्धाध्वभुवनप्राप्तेः शास्त्रद्वारेण महामायापुरुषविवेकज्ञानस्य संभवाच्चाधिकारमलक्षयस्तद्विवेके भवति ॥ १७५ ॥

**मायापुरुषविवेके तु धर्माधर्मतुषक्षयः ।**

यदाहुः—"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते" ( भ० गी० ४।३७ ) इति । ततश्च कर्मक्षयेऽपि परिणतमलानां विज्ञानकेवलत्वमेव । प्रकृतिपुरुषविवेके तु तदपि नास्त्येव । यदुक्तं सिद्धगुरुभिः—"गुणतत्त्वोर्ध्वभोगस्य कर्मणोऽनुपलब्धितः । कैवल्यमपि सांख्यानां नैव युक्तमसंक्षयात् ॥" ( प० मो० का० ५३ ) इति ॥

ततश्च—

**उत्तीर्णमायमात्मानं महामायानुषङ्गिणम् ।। १७६ ।।**
**उद्दिश्य शक्तिरीशस्य बिन्दोः क्षोभाय वर्तते ।**

साधकदीक्षाभाजं शुद्धभोगाभिलाषिणं प्रति शिवशक्तिर्बिन्दोः क्षुब्धात् शरीरादीन्युत्पादयतीत्यर्थः ॥ १७६ ॥

स च शक्त्या क्षोभितः—

**यथोदधिरुपर्येव विकरोत्यनिलेरणात् ।। १७७ ।।**
**तथैकदेशतो बिन्दुः शक्तेर्व्याप्नोति चाखिलम् ।**

शक्तेः प्रेरणाद् घृतकीटन्यायेनैकदेशेन बिन्दुर्विकरोति, न तु क्षीरदधिन्यायेन सर्वात्मना, तथा सत्यनित्यत्वप्रसङ्गादनवस्थाप्रसङ्गाच्चेत्यर्थः । किञ्च, स्वकार्यरूपाभिः कलाभिः प्रागुक्तं विश्वं व्याप्नोति चेत्यर्थः ॥ १७७ ॥

अयं च न्यायोऽन्यत्रापि समान इत्याह—

**एवं मायैकदेशेन विकरोति तथाखिलम् ।। १७८ ।।**
**व्याप्नोति कार्यमात्मीयं तथैवाव्यक्तमिष्यते ।**

अयमत्र बिन्दोर्मायाप्रधानयोर्विशेषो यत् स्वकार्यमेवैते व्याप्नुवतः, न तु स्वस्मादूर्ध्वम्, तत्र प्रगमासंभवात् । अतः शुद्धस्य त्वशुद्धाध्वन्यपि व्यापकत्वात् प्रगमः संभवत्येव ॥ १७८ ॥

इदानीं बिन्दोरवस्थान्तराधिष्ठानादौपाधिकः शिवस्य लयादिभेद इत्याह—

**तत्राक्षुब्धे भवेद् भोगो बिन्दावानन्दरूपिणि ।। १७९ ।।**
**क्षुब्धेऽधिकारो देवस्य लयोऽतिक्रान्तबिन्दुकः ।**

तत्रानन्दरूपिणि समन्ताद्व्याप्तिसमृद्धिभाजि बिन्दावक्षुब्धे शिवशक्त्या क्षोभनिमित्ते विषयीकृते प्रसवौन्मुख्यभाजि सति शिवशक्तेरुद्योगात् पालनात्मको भोगो

भवति। क्षुब्धे तूत्पादितकार्ये शक्तेर्व्यापृतत्वादधिकारः। उपसंहृतकार्ये स्वरूपनिष्ठे शक्तेरप्युपसंहृतव्यापारत्वाल्लयः ॥ १७९ ॥

ततश्च शिवशक्त्योर्व्यापारभेदादौपचारिको भेद इत्याह—

**एकैव खलु चिच्छक्तिः शिवस्य समवायिनी ॥ १८० ॥**
**त्रिविधोपाधिसंभेदाल्लयभोगाधिकारिणी ।**
**तयैतयाऽभिसंबन्धादेको देवस्त्रिधा भवेत् ॥ १८१ ॥**
**शिवः सदाशिवोऽधीशो लयभोगाधिकारवान् ।**

यदुक्तम्—"अधिकारी स भोगी च लयी स्यादुपचारतः" इति। अनेन बिन्दु-परीक्षोपसंहारेण शक्तिपरीक्षोपक्षिप्तेति मन्तव्यम् ॥ १८०-१८१ ॥

अथ शक्तिलक्षणमाह—

**शक्तिरप्रतिघोदारमरीचिनिचयात्मिका ॥ १८२ ॥**
**नित्योदितानवच्छिन्ना निर्विकल्पस्वरूपिणी**
**निरावरणनिर्द्वन्द्वनिरुपादानवैभवा ॥ १८३ ॥**
**विविधोपाधिसम्बन्धविवर्तभिदुरोदया ।**
**शान्तोदितप्रपञ्चादिबिन्दुव्याप्तिपटीयसी ॥ १८४ ॥**
**परानपेक्षानन्यात्मप्रकाश्या सर्वतोमुखी ।**
**आदिमध्यान्तरहिता रहिता सर्वबन्धनैः ॥ १८५ ॥**
**निष्ठा काष्ठा परा सूक्ष्मा वस्तुमात्रातिलालसा ।**

मरीचिनिचयोऽत्र ज्ञानक्रियासमृद्धिः, लयावस्थायामस्या औपचारिकभेदस्याप्य-भावाद् निर्विकल्पस्वरूपिणी सा कथिता। विविधेति विचित्रकार्योपाधिसंबन्धादपार-मार्थिकेन भेदशीलोदयेन युक्ता, कृत्यभेदाधिकारावस्थायां भिन्नेव लक्ष्यमाणेत्यर्थः। किञ्च, सा प्रोक्तप्रपञ्चादिभूतबिन्दुव्याप्तिदक्षा मलरहितत्वेन परानपेक्षत्वादनन्य-प्रकाश्या। अत एवात्मशक्तिवैलक्षण्येन सर्वबन्धनविरहादिगुणयुक्ता। काष्ठा निरति-शया। निष्ठा अतिशयावधिभूता। परा सूक्ष्मा अत्यन्तसूक्ष्मा। अतिलालसा सर्वानुग्रहण-शीला च बोद्धव्या ॥ १८२-१८५ ॥

सा च शिवस्य ज्ञानक्रियात्मकं चैतन्यमेवेत्याह—

**चितिरेव मताम्लानमहिमा परमेष्ठिनः ॥ १८६ ॥**
**शिवस्यानाहितापूर्वविशेषस्यैव सन्निधौ ।**
**तयैतयाऽभिसम्बन्धविशेषान्नित्यरूपया ॥ १८७ ॥**

**विकरोति विचित्राभिर्वृत्तिभिः स्थगयन्निव ।**
**बिन्दुरापूरयन्नादेराणवं चिन्नभो मुहुः ।। १८८ ।।**
**सरिद्वानभिसम्बन्धादिन्दुनार्कस्य सन्निधौ ।**
**विकरोति यथा लोलैः कल्लोलैर्नादयन्नभः ।। १८९ ।।**

कर्तृभूतस्य शिवस्य सन्निधौ करणभूतया शक्त्या संबन्धाद् बिन्दुः कार्योत्पादक इत्याह—शिवस्येति । बिन्दुः प्रतिपुरुषं भिन्नैर्नादैरात्मनां चैतन्यमापूरयतीत्युक्तं प्रागेव ॥ १८६-१८९ ॥

नन्विन्द्रियादिरहितस्य कर्तृत्वं न युज्यते ? तन्न, स्वदेहस्पन्दादावात्मनः शक्तिमात्रस्य करणस्य दर्शनात्, अस्याश्च शिवसमवायेन परिणामाभावात् कार्यभेदादौपचारिक एवेच्छाज्ञानक्रियादिभेद इत्याह—

**सैषा शिवाश्रया शक्तिरमोघा बलशालिनी ।**
**एकानेकविभागेव कार्यभेदाद् विभाव्यते ।। १९० ।।**
**यथैका सवितुः शक्तिर्दानादानादिकर्मभिः ।**

एतदेव प्रपञ्चयति—

**इच्छाकार्यमनिच्छापि कुर्वाणेच्छा चिदव्यया ।। १९१ ।।**
**ज्ञानमज्ञानरूपैवमक्रियापि क्रिया तथा ।**

ज्ञेयकार्याद्युपाधिभेदात् तस्या ज्ञानक्रियादिभेद इत्यर्थः ॥ १९१ ॥

किं बहुना—

**यद् यस्याः कार्यमाम्नायलोकाभ्यामवधारितम् ।। १९२ ।।**
**तदेतद्रूपिणी शक्तिः कुरुतेऽचिन्त्यवैभवा ।**

अनेनास्याः सर्वाधिष्ठानमुक्तम् । यदाहुः—"न सा भावकला काचित् सन्तानद्वयवर्तिनी । व्याप्त्री शिवकला यस्यामधिष्ठात्री न विद्यते ॥" इति ।

अविकारेण सर्वार्थकारित्वमेव दृष्टान्तेन द्रढयति—

**कामानपि बहूनेकः कल्पवृक्षः प्रयच्छति ।। १९३ ।।**
**चिन्तामणिश्च विविधानचिन्त्यमहिमा यथा ।**
**तथाऽनाहितसंस्कारविशेषैकस्वरूपिणी ।। १९४ ।।**
**चिदचिन्त्या विभोः शक्तिरशेषार्थक्रियाविधौ ।**

चेतनत्वान्नास्या विकार इत्याह—

**न जायते न म्रियते क्षीयते न च वर्धते ।। १९५ ।।**
**चितिः शक्तिः प्रकाशत्वादजडत्वाच्च**

अमुमेवार्थं व्यतिरेकेण साधयति—

यत् पुनः ।

**उत्पद्यते नश्यति वा चिनोत्यपचिनोति च ॥ १९६ ॥**

**तदप्रकाशरूपं वा जडं वा दृश्यते यथा ।**

**शरीरादि तथा नासौ तस्मान्नैषा विकारिणी ॥ १९७ ॥**

यतोऽसावप्रकाशरूपा जडा च न भवति, ततो न विकारिणीत्यर्थः ॥१९६-१९७॥

एवमस्याः क्षीरदधिन्यायेन सर्वात्मना परं विकारो निराकृतः, इदानीमुक्ताभ्यामेव हेतुभ्यामेकदेशपरिणामोऽपि नास्तीत्याह—

**ताभ्यामेवोपदेशाभ्यां परिणामो निराकृतः ।**

**बोधशक्तेरबोधस्य परिणामो हि दृश्यते ॥ १९८ ॥**

एतदेव प्रपञ्चयति—

**परिणामाऽपरिम्लानं शाश्वतं शिवमाश्रिता ।**

**समवायेन तादात्म्यान्नहि चित् परिणामिनी ॥ १९९ ॥**

परिणामहीनं नित्यं चेतनं शिवं समवायेन तादात्म्यलक्षणसम्बन्धेनाश्रिता चिच्छक्तिर्न परिणामिनी भवितुमर्हति। यच्छ्रूयते—"शक्तिर्नाऽचेतना चितः" ( मृ० वि० ३।४ ) इति ॥ १९९ ॥

ततश्च—

**नित्यैषाऽशेषकार्याणां कारणत्वाद् यथेश्वरः ।**

**सत्त्वे कारणशून्यत्वादपि बिन्दुवदिष्यते ॥ २०० ॥**

अस्याश्चानित्यत्वेऽनवस्थाप्रसङ्ग इति भावः ॥ २०० ॥

**तथाहि तां समाश्रित्य सन्तोऽन्ये शाश्वतो सतो ।**

**यत्सिद्धौ जगतः सिद्धिर्यदसिद्धौ न किञ्चन ॥ २०१ ॥**

**तत्सत्ता साध्यते कस्य केन वा प्रतिपाद्यते ।**

यस्या उपादानभूतबिन्द्वाद्यधिष्ठातृकर्तृशक्तेः सद्भाव एव शुद्धाशुद्धमयस्य कार्यरूपस्य जगतः सिद्धिर्नान्यथा, तस्याः सत्ता केनान्येन प्रमाणेन साध्यते ? कार्योत्पत्त्यन्यथानुपपत्त्यैव सा सिद्धेत्यभिप्रायः ॥ २०१ ॥

इत्थं शक्तिं प्रसाध्य चिदचिदद्वैतवादिनां मतमुपन्यस्यति—

**तामेतामद्वयामेके कीर्तयन्ति विपश्चितः ॥ २०२ ॥**

**चितिं सदसदाकारविवर्तोल्लासशालिनीम् ।**

विपश्चित इत्याक्षेपे। एवं हि ते मन्यन्ते—शक्तिरेव चिद्रूपा सत्यभूता। सा च विवर्ततया शुद्धाशुद्धभुवनादिरूपानर्थानसत्यभूतान् प्रकाशयति। ततश्च द्वैतप्रतिभासो द्विचन्द्रादिज्ञानवद् भ्रान्त एवेति॥ २०२॥

एतदेव दृष्टान्तेनाह—

**यथा रज्जुरहिच्छिद्रमालाविभ्रमकारिणी ॥ २०३॥**
**न तानुत्पादयत्यर्थानसतः प्रथयत्यसौ।**
**ज्ञानमात्रं तथैवेयमेकानेकायते भ्रमात् ॥ २०४॥**

ततश्च—

**सेयं भ्रान्तिरनालम्बा सर्वन्यायविरोधिनी।**
**विचाराल्लूनमूलत्वादहेतुर्बन्धमोक्षयोः ॥ २०५॥**
**तस्मान्न बद्धो बन्धोऽन्यो बन्धकश्च विचारतः।**
**नित्यमुक्ताद्वयानन्तसंविदेवास्ति केवलम् ॥ २०६॥**
**कथं पुनरयं भेदप्रतिभासोऽपि दृश्यते।**
**व्यवहारस्तु भेदात्मा विज्ञेयो वटयक्षवत् ॥ २०७॥**

कथमप्रामाण्यं भेदावभासस्यात आह—

**तथाहि भेदो भावानां न प्रत्यक्षोऽक्षधीर्यतः।**

कुत इत्यत्राह—अक्षधीरिति।

**बालमूकादिविज्ञानतुल्यैवाकल्पनार्थजा ॥ २०८॥**

निर्विकल्पकविज्ञानस्यैवार्थसामर्थ्यजनितस्य प्रत्यक्षत्वात् तस्यैव प्रामाण्याभ्युपगमाद् भेदस्य च विकल्परूपत्वान्न प्रत्यक्षसिद्धत्वमित्यर्थः॥ २०८॥

किञ्च—

**सा विधात्री पदार्थानां न निषेधति किञ्चन।**

तदुक्तम्—"आहुर्विधातृ प्रत्यक्षं न निषेधृ विपश्चितः" (ब्र० सि० २।१) इति। ततश्च भेदस्येतरेतराभावग्रहणपूर्वकत्वाद् भावविषयेण प्रत्यक्षेण ग्रहणं नोपपद्यत इति भावः॥

सविकल्पकं तु—

**यद् विशेषणविज्ञानं शब्दसंस्कारपूर्वकम् ॥ २०९॥**
**देशकालाद्यपेक्षाक्षैरुदपादि न तत्पुनः।**
**अर्थसामर्थ्यजं ज्ञानं स्मृतिसङ्कल्पवन्मतम् ॥ २१०॥**

यत्पुनः शब्दानुवेधेन सविकल्पकं ज्ञानं देशकालाद्यपेक्षाक्षैरुत्पाद्यते, तदिदं देश-कालाद्यपेक्षत्वान्नार्थसामर्थ्यजन्यं स्मृतिप्रतिभासादिवत्, ततस्तत्प्रमाणमिष्यते। यदाहुः—"कल्पनापोढमभ्रान्तं प्रत्यक्षम्" ( न्या० बि० १।४ ) इति ॥ २०९-२१० ॥

अत एव—

**नानुमानागमौ तत्र प्रमाणं तदभावतः ।**

प्रत्यक्षविषयत्वाभावतो भावानां भेदे नानुमानागमावपि प्रमाणं भवितुमर्हतः ॥

तथा हि—

**प्रत्यक्ष एव तावर्थे विकल्पविषयावपि ॥ २११ ॥**

यतस्तावपि प्रत्यक्षसिद्ध एवार्थे विकल्पमुत्पादयन्तौ प्रमाणीभवितुमर्हतः, संबन्ध-ग्रहणादेः प्रत्यक्षपूर्वकत्वाद्विकल्परूपत्वाच्च। भेदस्य तु प्रत्यक्षेण ग्रहणं न संभवतीत्युक्तम्, अतः स्वप्नादिज्ञानवदसत्यभूत एवायं भेदप्रतिभासः ॥ २११ ॥

यत एवायम्—

**स्वोत्थैर्निबध्यते तस्माच्छङ्कापाशैर्विमूढधीः ।**
**मुच्यते तेभ्य एवायं बन्धमोक्षौ न वस्तुतः ॥ २१२ ॥**

इत्थं तन्मतमुपन्यस्य सिद्धान्तमुपक्षिपति—

**इत्यद्वैतग्रहाविष्टाः प्रलपन्तो दयालुभिः ।**
**गुरुभिः प्रतिबोध्यन्ते सिद्धान्तागमदायिभिः ॥ २१३ ॥**

कथं बोध्यन्ते ? अत आह—

**यद्यद्वयेयं संवित्तिः प्रमाणैर्व्यावहारिकैः ।**
**साध्येत तैरेव दृढं तस्याः स्यात् सद्वितीयता ॥ २१४ ॥**

यदि संविदैक्यं लोकस्य व्यवहारसिद्धैः प्रमाणैर्भवद्भिः साध्यते, ततस्तैरेव सत्य-भूतैरद्वैतहानिः। अथ तान्यप्यसत्यानीष्यन्ते, निष्प्रमाणकत्वादद्वैतासिद्धिरिति भावः ॥ २१४ ॥

एतदेव प्रपञ्चयितुमनुमानस्वरूपमाह—

**प्रसिद्धाः पृथगेवालं धर्मिदृष्टान्तहेतवः ।**
**अप्रसिद्धस्य धर्मस्य सिद्धयै व्याप्त्युपबृंहिताः ॥ २१५ ॥**

दृष्टान्तभूते हि महानसे धूमाग्न्योर्व्याप्तिमविनाभावसम्बन्धं गृहीत्वाऽथ साध्य-धर्मिणि पर्वतादौ धूमवत्त्वेन हेतुना प्रसिद्धो वह्निमत्त्वरूपधर्मोऽनुमीयते। ततः पृथगेव भेदेन धर्म्यादयः सिद्धा अभ्युपगन्तव्याः ॥ २१५ ॥

तथा हि—

**न सिद्धः साध्यते धर्मो नासिद्धैरपि तैस्तथा ।**

**सिद्ध्यसिद्धी च संभूय नैकत्र स्थातुमर्हतः ।। २१६ ।।**

नहि सिद्धस्य साधकान्तरापेक्षा, नाप्यसिद्धा हेत्वादयः सिद्धं साधयन्ति ॥ २१६ ॥

अतश्च—

**सपक्षपक्षयोर्भेदे प्रमाणमनुमा भवेत् ।**

**ऐक्ये हि न तयोर्हेतुसाधर्म्यं**

यस्मात् पक्षसपक्षयोरैक्ये हेतुसाधर्म्यं दृष्टान्तसिद्धधूमवत्त्वाख्यहेतुना साध्यधर्मिणि धूमवत्त्वस्य साधर्म्यं न भवति, तस्मात् तयोरैक्ये नानुमानात् साध्यसिद्धिः ॥ २१७ ॥

दृष्टान्ताभावे तु व्याप्तिग्रहणमपि न संभवतीत्याह—

**तदभावतः ।। २१७ ।।**

**कस्य केन कथं व्याप्तिः**

इत्थं सत्यद्वैतसिद्ध्यर्थमनुमानाङ्गीकारे भेदोऽवश्यं भावीत्याह—

**इत्यद्वैतप्रसिद्धये ।**

**प्रयुक्तो भेदमाख्याति प्रयोगः स्वाङ्गसिद्धये ।। २१८ ।।**

स्वाङ्गस्य हेत्वादेः सिद्ध्यर्थमित्यर्थः ॥ २१८ ॥

किञ्च, संविदेकैवेति संविद्विषयभेदनिषेधे जडविषयो भेदो न निषिद्धयत इत्याह—

**अद्वयेति निषेधोऽपि चिति युज्येत तन्मते ।**

**द्वैतभावस्ततोऽन्यत्र सिद्ध्येत् सिद्धावपि ध्रुवम् ।। २१९ ।।**

**प्रतिज्ञा भज्यते तेषामाशामात्रविजृम्भिता ।**

आगमप्रामाण्यस्वीकारेऽप्यद्वैतहानिरित्याह—

**आगमोऽपि पदैस्तैस्तैः स्मारितार्थविशेषतः ।। २२० ।।**

**पदार्थजातं संसर्गविशिष्टं कथयेत् कथम् ।**

**यद्यद्वयेयं संवित्तिः स्वेन स्यादभिधित्सिता ।। २२१ ।।**

यदि स्वेनागमेनाद्वया संवित्तिरभिधित्सिता स्यात्, कथमसौ जातिगुणक्रियाद्रव्यवाचिभिर्गौरियं श्वेता गच्छति ग्राममित्यादिभिः पदैः स्मारितार्थविशेषा पदार्थजातसंसर्गरूपां विशिष्टां बुद्धिं जनयेत् । एतदुक्तं भवति—आगमस्य सत्यभूतस्य प्रमाणतयाऽभ्युपगमे

तेन तदवयवैस्तदर्थैश्च द्रव्यादिभिः सत्यैश्च भाव्यम्, अतोऽयमेवाद्वैतविरोध इति ॥ २२०–२२१ ॥

अतश्च—

**आगमः कथमद्वैतमनुमानं च साधयेत् ।**
**निवार्यमाणमङ्गैः स्वैरद्वैतक्षपणक्षमैः ॥ २२२ ॥**

इदानीं चिच्छक्तिरेकैव खल्वित्यादीनामद्वैतश्रुतीनां प्रमाणान्तरविरोधान्मुख्यार्थासम्भवं दर्शयितुमाह—

**किञ्च शब्दाः परित्यज्य मुख्यमर्थं विरोधतः ।**
**वर्तमाना हि दृश्यन्ते गौणेऽर्थे लोकवेदयोः ॥ २२३ ॥**
**गौर्ब्राह्मणोऽयमादित्यो यूप इत्येवमादयः ।**

अनुमानस्य त्वविनाभावसम्बन्धलक्षणे व्याप्तिग्रहणे सति प्रमाणत्वेनार्थसाधकत्वमनिवार्यमेवेत्याह—

**नैवं हेतुरदुष्टायां व्याप्तौ साध्यं न साधयेत् ॥ २२४ ॥**

अतश्च भेदसाधकैरनुमानैर्बाधितत्वादेकत्वश्रुतयः संविदो नित्यत्वव्यापकत्वादिसादृश्यस्तोत्रपरा इत्याह—

**अतो हेतुबलाक्रान्ताः श्रुतयो द्वैतमात्मनाम् ।**
**मुख्यमप्यपहायार्थं नुतिं कुर्वन्ति संविदः ॥ २२५ ॥**

किञ्च—

**प्रत्यक्षमपि गृह्णाति वस्तुनो निर्विकल्पकम् ।**
**भेदं परेभ्यो व्यावृत्तिरूपं येनोपजायते ॥ २२६ ॥**
**जायमानेन नामादिविशेषस्मृतिपूर्वकम् ।**
**सविकल्पमसन्दिग्धं व्यभिचारविवर्जितम् ॥ २२७ ॥**
**प्रत्यक्षसंज्ञं विज्ञानम्**

अत्र हि नामप्रमाणादिविशेषस्मरणपूर्वकमुत्पद्यमानं सविकल्पकमपि ज्ञानमसंदिग्धत्वादबाधितत्वाच्च प्रत्यक्षतया प्रमाणमेवेष्यते । यदाहुः—"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया । बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता ॥" ( श्लो० वा० प्रत्यक्ष० १२० ) इति । ततस्तादृशं प्रत्यक्षज्ञानं येन जायमानेनोत्पद्यते, तदपि निर्विकल्पकं ज्ञानं वस्तुनः परेभ्यो व्यावृत्तरूपं भेदं गृह्णात्येव, कार्यस्य कारणगुणान्वयात्, सत्कार्यवादाभ्युपगमाच्च ॥ २२६-२२७ ॥

तस्य तु भेदग्राहित्वानभ्युपगमे तदुत्तरकालं सविकल्पकज्ञानं नोत्पद्यत इत्याह—

**अन्यथा नोपपद्यते ।**
**अगृहीतार्थभेदस्य तन्नामादिविशेषवत् ।। २२८ ।।**

ननु भेदस्येतरेतराभावग्रहणपूर्वकत्वाद् भावविषयेण प्रत्यक्षेण ग्रहणं नोपपद्यत इत्युक्तम्, तदयुक्तम्, सिद्धे हि भेदेऽसावितरेतराभावः। अन्यथा पयोऽर्थी पावकमनुधावेदिति सर्व(मस)मञ्जसम् ॥ २२८ ॥

**अनुमानस्य साफल्यमपि भेदग्रहे सति ।**
**व्याप्तिग्रहणसंबन्धे**

व्याप्तिविज्ञानार्थं भेदग्रहणस्यावश्यंभावात् तत्सद्भाव एवानुमानप्रवृत्तिरित्यर्थः ॥

वस्तुसामान्यमात्रग्रहणे तु तस्य प्रागेव सिद्धत्वाद् धर्मिविशेषणस्य धर्मविशेषसाधनार्थमनुमानं न प्रवर्तत इत्याह—

**सामान्ये सिद्धसाधनात् ।। २२९ ।।**

अन्यथा भेदसिद्धिमाह—

**अपि चान्यत्वमद्वैतभेदयोरभ्युपैति चेत् ।**
**भेदः सिद्धयेदथानन्यभाव एवं च साध्यते ।। २३० ।।**

अद्वैतस्य द्वैतान्यस्याभ्युपगमे द्वैताद्वैतात्मकस्य वस्तुद्वयस्यासिद्धिः। अथाद्वैतभेदयोर्द्वैताद्वैतात्मकस्य वस्तुद्वयस्याप्येकत्वमिष्यते, यद्येवं भेदस्यैवाद्वैतसंज्ञा भवद्भिरुच्यत इति न वो नाम्नि विवादः। यतोऽस्माभिरप्येवं भेद एव साध्यते ॥ २३० ॥

नन्वेकस्यां रज्जौ सर्पादिभ्रमवदेकस्यामेव संविदि सत्यभूतायामसत्यभूतो वस्तुभेदप्रतिभास इत्युक्तम् ? अत आह—

**नहि दृष्टान्तमात्रेण साध्यसिद्धिर्भवेदतः ।**
**रज्जूदाहरणं शिष्यसम्मोहायैव केवलम् ।। २३१ ।।**

केवलस्य दृष्टान्तस्य हेत्वादिभिर्विनाऽर्थसाधकत्वाभावाद् दृष्टान्तमात्रस्य सत्यत्वेऽप्यद्वैतविरोधात् तदसत्यत्वे दार्ष्टान्तिकभूतायाः संविदोऽप्यसत्यत्वप्रसङ्गाद् रज्जूदाहरणमनर्थकमेवेत्यर्थः ॥ २३१ ॥

किञ्च—

**नापि संवित्समा रज्जोर्विशेषानुपलब्धितः ।**
**विवर्तमाना तैर्भावैर्ज्ञानमात्रनिवर्तकैः ।। २३२ ।।**

रज्ज्वादौ हि सर्पादिभ्रमाः सम्यग्ज्ञानोदयान्निवर्तन्ते। ततो बाधितत्वात् सर्पाद्यवभासस्तिमिरादिदोषकृतोऽसत्य एव। घटपटाद्यर्थप्रकाशस्य तु कालान्तरदेशान्तरयोरपि

विशेषादर्शनाज्ज्ञानमात्रव्यतिरेकेण भासमानैरबाधितत्वादेव सत्यभूतैस्तैस्तैर्घटपटादिभावैरुपाधिभूतैः सह विवर्तमाना स्वयमपि भिन्नेव भासमानाऽऽत्मसंविन्न रज्जुसाम्यं भजते। एतदुक्तं भवति—घटपटादिबाह्यार्थभेदः सत्य एव, आत्मसंविदस्तु तत्तदर्थसन्निधौ तत्तदाकारारोपो बुद्ध्यध्यवसायभेद उपाधिकृत इति। एतच्चोत्तरत्र प्रपञ्चयिष्यते। अतश्च तत्तदर्थसन्निधौ जायमानस्य तत्तदाकारस्य बौद्धस्याध्यवसायात्मनो ज्ञानस्यासकृद्भेदेऽपि तत्तदध्यवसातृरूपायाः सर्वदैकरूपेण भासमानाया ग्राहकसंविदो न रूपान्तरपरावृत्तिः, अपि तु नित्यत्वमेव, चेतनत्वेनाविकारित्वात्। ततश्चात्मसंविदो नैका एव, एकत्वे भोगसाम्यविमोक्षादिदोषप्रसङ्गादित्युक्तमस्माभिरन्यत्र ॥ २३२ ॥

अस्याश्चात्मसंविदो बौद्धाध्यवसायाविवेकादनेकरूपताभ्रमो मलहेतुक एव पश्वात्मनामित्याह—

**सा तु संविदविज्ञाता तैस्तैर्भावैर्विवर्तते।**
**मलोपरुद्धदृक्शक्तेर्नरस्येवोडुराट् पशोः ॥ २३३ ॥**

यथा तिमिररुद्धचक्षुष एकोऽपीन्दुरनेक इव प्रतिभाति, एवं मलरुद्धज्ञानशक्तेरेकैव चेतनात्मिका संविदनेकरूपेव विवर्तत इति ॥ २३३ ॥

यथा च प्रमाणान्तरसिद्धैक्यस्यापीन्दोरनेकत्वप्रत्ययस्तिमिरहेतुकः, एवं शास्त्रादिसिद्धैक्यस्य गृहीतृरूपस्य ज्ञानस्यानेकाकारताभ्रमः स्वकारणं मलं गमयतीत्याह—

**यथा तैमिरिको हेतुसहस्रेणापि तर्कयन्।**
**एकमिन्दुमनेकांस्तान् भूयोभूयः समीक्षते ॥ २३४ ॥**
**यथा वा पित्तसंदुष्टरसनः स्वादु तर्कयन्।**
**अपि तिक्तं विजानाति पयः करणदोषतः ॥ २३५ ॥**
**यथा वाञ्जनसंयुक्ते क्वथ्यमाने च वारिणि।**
**विदुषामपि नीलोष्णप्रत्ययाववविवेकतः ॥ २३६ ॥**
**तथा परीक्षिता सम्यगागमैः सोपपत्तिकैः।**
**विवर्तमाना जातेति नष्टेति विविधेति च ॥ २३७ ॥**
**ज्ञानानिर्वृत्ति गमयेत् कारणं तिमिरादिवत्।**

स च मलो द्रव्यत्वाच्चक्षुषः पटलादिरिव न ज्ञानमात्रान्निवर्तते, अपि तु चक्षुषो वैद्यव्यापारेण पटलादिरिवेश्वरव्यापारेण दीक्षाख्येनैव निवर्तत इत्याह—

**तच्छिवप्रणिधानेन शिवशास्त्रोदितेन च ॥ २३८ ॥**
**कर्मणैव निवर्त्येत नान्यथा ज्ञानकोटिभिः।**
**तिमिरादिर्यथारोग्यशास्त्रोक्तेनैव कर्मणा ॥ २३९ ॥**

तन्मलं शिवध्यानेनाङ्गभूतेन सहकृतया शिवशास्त्रोक्तया दीक्षाख्यया क्रिययैव निवर्तते। यदुक्तं श्रीमत्स्वायंभुवे—"दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि" इति। अत्र प्रयोगः—

मलो ज्ञानानिवर्त्यो भवति, आत्मकरणाच्छादकत्वात्, तिमिरवत्। परमार्थो मलः, मलिनीकरणार्थक्रियाकारित्वात्, यथा काचतिमिरात्मको मलो भ्रमोत्पादकः॥ २३८-२३९॥

इत्थं ग्राहकसंविदो नित्यत्वप्रसङ्गान्मलं तन्निवृत्तिहेतुं चोक्त्वा ग्राह्यस्य प्रपञ्चस्य भेदो वास्तव इत्याह—

**देशकालनरान्यत्वेऽप्यन्यथानवभासितः ।**
**अबाधितः प्रमाणैश्च विवर्तः स्यात् कथं चितेः ॥ २४० ॥**
**प्रपञ्चः किञ्च मायेयः प्रमाणैरेव साधितः ।**

संविदस्त्वनेकाकारता भ्रान्त्यैवेत्युक्तम्, इत्याह—

**तस्माद् विवर्तते संविदणूनामेव बन्धनात् ॥ २४१ ॥**

एतदेव प्रपञ्चयति—

**विवर्तः खलु चिच्छक्तेर्मिथ्यापरिणतिर्यया ।**
**अतद्रूपापि तद्रूपरूपिणीवाऽनुभूयते ॥ २४२ ॥**

स च विवर्तो बुद्ध्यविवेकादात्मनां भवतीत्याह—

**स परस्परसंबद्धश्चिदचिद्गोचरस्तयोः ।**
**अन्योन्याध्याससाध्यत्वादविवेककृतोदयः ॥ २४३ ॥**

एतदेव व्याचष्टे—

**तत्र चित् स्वाभिसम्बन्धबुद्धितत्त्वाविवेकतः ।**
**आरोप्यात्मनि तद्वृत्तिविकारानविकारिणी ॥ २४४ ॥**
**जन्मादीननु जातेति नष्टेति विविधेति च ।**
**ससुखेति सदुःखेति स्वात्मानं दर्शयत्यणोः ॥ २४५ ॥**
**तद्वज्जडं च चैतन्यमारोप्यात्मनि चिद्गुणम् ।**
**अविवेकेन जानाति बालोऽहं कृश इत्यतः ॥ २४६ ॥**
**सर्वेषामविकोऽयमणूनां मलहेतुकः ।**
**भ्रान्तिप्रधानसन्तानकन्दश्चिज्जडवस्तुनोः ॥ २४७ ॥**

य एषोऽनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मप्रतिपत्तिरूपः पुंसामविवेकः, स न निर्हेतुकः, मुक्तस्याऽपि प्रसङ्गात्। अतस्तस्य केनापि कारणेनाऽनादिना भवितव्यम्। अविवेकस्यानादिसिद्धत्वाद् यस्तस्य हेतुः, स मल इति भावः॥ २४४-२४७॥

अत्रैव हेतुमाह—

**नहि संविद्विशेषाणां विशिष्टैर्जडवस्तुभिः ।**
**विवर्तभेदा युज्येरन्नन्तरा दृढबन्धनम् ।। २४८ ।।**

इदं चात्राकूतम्—मलावृतत्वादेवात्मनां कलादिद्वारेणैव ज्ञानाद्यभिव्यक्तिः । सा च मायाया मोहकत्वादनात्मादावात्माभिमानरूपेति ॥ २४८ ॥

बन्धहेतुत्वमेव प्रपञ्चयति—

**तथा हि देहेऽहंबुद्धिर्न लोष्टे साऽपि कस्यचित् ।**
**अणोरेव न सर्वेषामतो बन्धस्तयोर्मतः ।। २४९ ।।**

तयोश्चिज्जडयोरन्योन्यगुणाध्यासे बन्ध एव नियामक इति शेषः ॥ २४९ ॥

किञ्च—

**यानि यस्येन्द्रियाण्यासन् नरस्य ज्ञानकर्मणोः ।**
**न तानि पुनरन्यस्य करणानि तयोस्तथा ।। २५० ।।**
**विशिष्टैव विवर्ताय चिद्विशेषस्य वार्यते ।**
**बुद्धिर्न सर्वा सर्वेषां तेन बन्धस्तयोर्मतः ।। २५१ ।।**
**बुद्ध्यारूढं सुखं दुःखं किञ्चित् केनचिदेव यत् ।**
**पुंसोपभुज्यते तेन तयोर्बन्धो नियामकः ।। २५२ ।।**

अयमर्थः—आत्मनां हि संसारावस्थायां सर्वविषयस्य ज्ञानादेः स्वरूपत्वेन शास्त्रेषु श्रूयमाणस्यादर्शनात् तदावारकेण तावन्मलेन भाव्यम् । तेषां च किञ्चिज्ज्ञत्व-दर्शनात् कलादिद्वारेण तज्जनकेन मोहहेतुत्वाद् विपरीतप्रतिपत्तिहेतुना मायाख्येन बन्धेन भाव्यम् । भोगस्य सुखदुःखादेर्भोगसाधनानां च शरीरेन्द्रियाणां प्रत्यात्मनियतत्वेन विचित्रत्वाद् वैचित्र्यकारणं कर्माप्यवश्यमभ्युपेयमिति ॥ २५०-२५२ ॥

अत्र सांख्यच्छाययाऽविवेक एवात्र नियामकोऽस्तु, किं मलाख्येनाप्रसिद्धेन बन्धेन पुरुषस्य कल्पितेनेति चोदयति—

**अविवेको नियन्ता चेत्**

परिहरति—

**स तयोरेव किंकृतः ।**

तयोर्बुद्धिसंविदोरन्योन्याविवेकः केन कृतः । निर्हेतुकत्वे मुक्तस्यापि भवेत् ॥

ततस्तत्कारणतयाऽनाद्यावारको मलोऽभ्युपगन्तव्यः, यदभावे मुक्तस्य न पुनरविवेको भवति, तत एव च बन्धविमोचकस्येश्वरस्यापि सिद्धिरुक्तेत्याह—

**तेन बन्धोऽस्ति बन्धश्च पृथगेवेशितुर्मतः ।। २५३ ।।**

अतश्च—

**बन्धवर्ती विमूढात्मा मोक्षस्तद्बन्धमोचनम् ।**
**गलिते सर्वथा बन्धे विमुक्ते चाणवे मले ।। २५४ ।।**
**सर्वार्थद्योतिका शक्तिः शिवस्यैव विजृम्भते ।**

बन्धमोक्षश्च शिवप्रसादादेवेत्युक्तम् ॥ २५४ ॥

**सर्वावरणनिर्मुक्ता शक्तिरेषा महीयसी ।। २५५ ।।**
**अल्पीयांसं समावृत्य विषयं सा तु दर्शयेत् ।**

कथं दर्शयतीत्यत्राह—

**परसंवित्स्वरूपायाः शक्तेरसति बन्धने ।। २५६ ।।**
**परमात्रं प्रकाशेत मुक्ताणूनामनारतम् ।**

मलरहितत्वेन स्वपरप्रकाशिकाया मुक्तात्मसंविदः परमात्रं परस्य वस्तुनः सत्तामात्रं प्रकाशते, न तु बद्धात्मवदस्य विशेषेण भोग्यतया प्रकाशत इत्यर्थः, तथात्वे मुक्तस्याऽपि सुखदुःखादिसंवेदनेन भोक्तृत्वप्रसङ्गात् ॥ २५६ ॥

**अतो विमुक्ताः सर्वज्ञा न तु चिन्मात्रवेदिनः ।। २५७ ।।**

न तु स्वसंवेदनमात्रनिष्ठाः, अपि तु शिववत् सर्वज्ञा एवेति ॥ २५७ ॥

ततश्च—

**सति बाह्ये तदज्ञानं वस्तुनि स्यात् तमःकृतम् ।**

बाह्ये च वस्तुनि सत्यपि यदेतद्विषयाज्ञानमात्रं बद्धात्मनां दृश्यते, तन्मलकृतमेव । ततश्च असर्वज्ञा न मुक्ता इत्याह—

**तमसाच्छाद्यमाना हि न ते मुक्ता भवन्ति च ।। २५८ ।।**

शब्दानुवेधापेक्षित्वं च सविकल्पकज्ञानस्य बन्धहेतुकमित्याह—

**विकल्पो बिन्दुसंक्षोभाच्छब्दवेधेन संविदाम् ।**
**जायते मलरुद्धानामणूनामर्थदर्शने ।। २५९ ।।**
**निर्मलानामसंक्षोभाद् बिन्दोस्तद्बन्धमोक्षजा ।**
**निर्विकल्पार्थसंवित्तिस्तदहर्जातबालवत् ।। २६० ।।**

मुक्तानां तु मायेयबैन्दवपाशोत्तीर्णत्वाच्छब्दानुवेधसहकृतं बौद्धं सविकल्पकं ज्ञानं न भवेत्, किन्तु चिच्छक्तिरेवान्यानपेक्षिणी ग्राह्यं वस्तु विषयीकरोति। तदहर्जातबालवदिति च शब्दादिविकल्परहितत्वमात्रे दृष्टान्तो ज्ञेयः ॥ २५९–२६० ॥

वस्तुतो बालस्यापि मलावृतत्वेन वस्तूनां यथास्वरूपानवबोधात्, मुक्तानां तु मलरहितत्वात् तच्छक्तिः समस्तं वस्तु यथावस्थितमेव गृह्णातीत्याह—

**यो यदा वर्तते भावो भूतो भावि च तत् तदा ।**
**यथार्थस्थितिं गृह्णाति स्वसंवेद्या चिदव्यया ।। २६१ ।।**

तदुक्तं मोक्षकारिकासु—"शिवार्कशक्तिदीधित्या समर्थीकृतचिद्दृशा । शिवं शक्त्यादिभिः सार्धं पश्यत्यात्मा गतावृतिः ॥" ( श्लो० १११ ) इति ॥ २६१ ॥

नैषां च सर्वज्ञत्वसर्वकर्तृत्वसंभवेऽपि प्रवृत्तिरित्याह—

**न ते विश्वस्य कर्तारः कर्ताऽस्य शिव एव यत् ।**

कुत इत्यत्राह—

**नहि कर्तृबहुत्वस्य गमकं विद्यते क्वचित् ।। २६२ ।।**

नहि रथादीनामप्यनेककर्तृकाणामेकस्थपतीच्छानुवर्तनं विनोत्पत्तिर्दृष्टा । यदुक्तम्—"बहवो यत्र नेतारः सर्वे पण्डितमानिनः । सर्वे महत्त्वमिच्छन्ति तद्व्यक्तमवसीदति ॥" इति । अनेन प्रवाहेश्वरपक्षोऽपि निरस्तः, ऐश्वर्यस्य स्वरूपव्यक्तिलाभात्मकत्वेन विनाशयोगात् । ततस्तेन नित्यमुक्तेन शिवेनैव कार्यस्य निर्वर्त्यमानत्वाद् रागद्वेषादिरहितत्वाच्च न प्रवर्तन्ते ॥ २६२ ॥

एतदेव दर्शयति—

**नित्यमुक्तोदिताचिन्त्यप्रभावा शक्तिसंज्ञिता ।**
**संविदाश्रयते शश्वच्छिवं परमकारणम् ।। २६३ ।।**
**स तया जडमाक्रम्य सृजत्यवति हन्ति च ।**
**तिरोदधाति भगवाननुगृह्णाति चात्मनः ।। २६४ ।।**

अनेन शक्तिविचारोपसंहारेण तदाश्रयभूतस्य शिवस्य विचारोपक्षेपोऽपि कृतो वेदितव्यः । तथाहि जगतः सन्निवेशादिमत्त्वेन कार्यत्वात् तत्कर्तृतयाऽऽत्मनां च मलावृतत्वात् तन्मोक्षकर्तृत्वेन च शिवः सिद्ध एव । यदुक्तम्—"विवादाध्यासितं विश्वं विश्ववित्कर्तृपूर्वकम् । कार्यत्वादावयोः सिद्धं कार्यं कुम्भादिकं यथा ॥" इति । ८ पौ.

इदानीं तस्य कृत्यभेदादुपचारेण भेदमाह—

**कृत्येषु तेषु कर्ताऽसौ त्रिविधः पञ्चसूच्यते ।**

कथमित्यत्राह—

**शक्तिमानाहितोद्योगः प्रवृत्तश्चेति देशिकैः ।। २६५ ।।**

एतदेव प्रपञ्चयति—

**तत्र शक्तो भवेदाद्यो निष्कलः शिवसंज्ञितः ।**
**तस्मिन् मुकुलितेवास्ते क्रियाख्या शक्तिरैश्वरी ।। २६६ ।।**

शक्तेरेकत्वादौपाधिको ज्ञानक्रियाभेद इति दर्शयितुं ज्ञानस्यापि क्रियारूपत्वाव्यभिचाराच्छक्तिः क्रियाशब्देनोक्ता। तस्याः शक्तेः सर्वव्यापारोपसंहारेण स्वरूपमात्रावस्थाने सति शिवः शक्तादिशब्दवाच्यो भवति। सैव तस्य परबिन्दुस्वरूपाधिष्ठातुर्लयावस्थोच्यते ॥ २६६ ॥

अथ भोगावस्थायामुद्युक्तादिशब्दवाच्योऽसावित्याह—

**सैवोन्मिषन्ती संप्राप्तबिन्दुगर्भभरालसा।**
**पत्युराविष्करोत्युच्चैः परमानन्दसन्ततिम् ॥ २६७ ॥**

सा च शक्तिरुद्योगेन बिन्दोः कार्यस्य प्रसवाभिमुख्यं कुर्वाणा यदा पत्युः परमानन्दसन्ततिं ज्ञानक्रियासमृद्धिं कार्योत्पादनेनाऽऽविष्करोति, तदा तस्य शिवस्य भोगः पालनात्मको भवतीति भावः। न तु शिवस्य परमानन्दः सुखातिशयो भोगश्च सुखसंवेदनरूपो व्याख्येयः, निर्मलत्वेन शिवस्योपाधिभूतयोस्तयोरसम्भवात् ॥ २६७ ॥

तदानीं चोद्युक्तया शक्त्या सहाऽयमुद्युक्तादिशब्दवाच्यः प्रकाशत इत्याह—

**स तया रमते नित्यं समुद्युक्तः सदाशिवः।**
**पञ्चमन्त्रतनुः श्रीमान् देवः सकलनिष्कलः ॥ २६८ ॥**

अतश्च कार्योपाधिभिन्ना ईशानादिपञ्चमन्त्रात्मिकाः शक्तय एव तनुकार्यं कुर्वाणाः शिवस्य तनुरुच्यन्ते, न तु पारमार्थिकेति भावः। तदुक्तं श्रीमन्मृगेन्द्रे—"तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः। ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम् ॥" (वि० ३।८-९)। ततो ध्यानार्थमेव तस्यागमेष्वाकारश्रवणमित्युक्तं श्रीमत्पौष्करे—"साधकस्य तु लक्ष्यार्थं तस्य रूपमिदं स्मृतम्" इति। अत्र च शिवशक्त्योर्लयादिभेदस्य बिन्द्ववस्थाभेदकृतत्वात् तस्य च शान्त्यतीतकलारूपस्य लयावस्थात्वेन श्रुतेः शान्त्यादिकलाचतुष्टयपरिणामरूपं भोगाधिष्ठानम्। तदधिष्ठानेन शिवस्यापि भोगः प्रोच्यत इत्युक्तं श्रीमन्मतङ्गे—"चतुर्मूर्तिमयं शुभ्रं यत्तत्सकलनिष्कलम्। तस्मिन् भोगः समुद्दिष्टः पत्युर्विश्वस्य सर्वदा ॥" (वि० ३।३४) इति। यद्येवं सदाशिवभुवनाधिष्ठान एव देवस्य सदाशिवत्वात् तस्यैव पञ्चमन्त्ररूपत्वात् कथमत्र भोगावस्थायां तत्कथनम्, निवृत्त्यादिभुवनेषु केवलं सद्योजातादिमन्त्राकारतया शिवस्य ध्येयत्वादेवमुक्तम्। पञ्चमन्त्रसमष्टिरूपा मूर्तिस्तस्याधिकारावस्थस्य प्रवृत्तस्य सदाशिवभुवन एवेति वक्ष्यति—"स बिन्दोः" (श्लो० २७९) इत्यादिना। एषोऽर्थश्च श्रीमन्मतङ्गे विस्तरेण दर्शित इति तत एवावधारयितव्यः ॥ २६८ ॥

इदानीं शक्तेर्मन्त्रत्वमाह—

**मननात् सर्वभावानां त्राणात् संसारसागरात्।**
**मन्त्ररूपा हि तच्छक्तिर्मननत्राणधर्मिणी ॥ २६९ ॥**

तदुक्तम्—"मननं सर्ववेदित्वं त्राणं संसार्यनुग्रहः। मननत्राणधर्मित्वान्मन्त्र इत्यभि-

धीयते ॥" इति। एषा च व्युत्पत्तिः शिवस्य शक्तेर्विद्येश्वरादीनां च समानैव, अतश्च वाचकशब्दानामुपचारेण मन्त्रशब्दप्रयोगः ॥ २६९ ॥

अस्याश्चौपाधिक एव भेद इत्याह—

**कार्यभेदादधिष्ठानवशादेकैव पञ्चधा ।**
**सा भाति बिन्दुशान्त्यादिपञ्चाधिष्ठेयगोचरा ॥ २७० ॥**

बिन्दुशान्त्यादिभुवनाधिष्ठानादस्य ईशानादिभेद इत्युक्तं प्रागेव। एतदेव प्रपञ्चयति—

**बिन्दुः शान्तिः कला विद्या प्रतिष्ठा सनिवृत्तिका ।**
**भोगस्थानानि पञ्चैषां बिन्दुसंज्ञा शिवेरिता ॥ २७१ ॥**

ननु शान्त्यादिभुवनचतुष्टयमेव भोगस्थानमित्युक्तम्, सत्यम्, शान्त्यतीतरूपस्य परबिन्दोर्लयावस्थारूपत्वेऽपि सृष्ट्यारम्भ एव तद्भुवनोत्पत्तेस्तदप्यत्र भोगस्थानतयेत्युक्तमित्यविरोधः ॥ २७१ ॥

अत एवासां बिन्दुकलानां कारणावस्थायां लयरूपत्वेन परबिन्दुसंज्ञेत्याह—

**कलानामविभागोऽयं पञ्चानां बिन्दुसंज्ञितः ।**
**तद्गोचरा परा मूर्तिरपरा कार्यगोचरा ॥ २७२ ॥**

परा मूर्तिर्बिन्द्वधिष्ठात्री लयावस्था शक्तिः, कार्याधिष्ठात्री त्वपरा शिवस्य मूर्तिरित्यर्थः ॥ २७२ ॥

एवं च—

**या तस्य विमला शक्तिः शिवस्य समवायिनी ।**
**सैव मूर्तिः क्रियाभेदात् सादाख्या तनुरुच्यते ॥ २७३ ॥**

समवेतशक्तिरेव बिन्दुपरिणामस्य निवृत्तिभुवनाधोवर्तिनः सदाशिवभुवनस्याधिष्ठानादधिकारं कुर्वाणोपचारेण तस्य सदाशिवाख्या तनुरुच्यत इत्यर्थः ॥ २७३ ॥

दीक्षादिना तत्तद्भुवनप्राप्तानां सत्य एव भेदः, तदधिष्ठात्र्योस्तु शिवशक्त्योः कार्यभेदाद् भेद इत्युक्तमित्याह—

**महामाया समाक्रान्ता शिवेन बलशालिना ।**
**भोगस्थाननिविष्टानां निर्मलानां शिवात्मनाम् ॥ २७४ ॥**
**तनुभोगेन्द्रियस्थानविज्ञानादि करोति यत् ।**
**तत्कार्यं सा क्रियाशक्तिरसावपि तथोच्यते ॥ २७५ ॥**

शिवशक्तिक्षोभिता महामाया यद्यत् कार्यमुत्पादयति, तत्र तदधिष्ठात्र्योः शिवशक्त्योः कार्यभेदेन स्थानभेदेनोपचारात् तत्तत्संज्ञा भवति। यथा शान्तिभुवनाधिष्ठानेन

तदुत्पादे च शक्तिरपि शान्तिसंज्ञा, शिवश्च शान्तसंज्ञः। इत्येवमन्यत्रापि द्रष्टव्यम्। तदुक्तं श्रीमन्मृगेन्द्रे—"किन्तु यः पतिभेदोऽस्मिन् स शास्त्रे शक्तिभेदवत्। कृत्यभेदोपचारेण तद्भेदस्थानभेदतः॥" ( वि० १३।१६४-१६५ ) इति॥ २७४-२७५॥

एतदेव प्रपञ्चयति—

**सर्वज्ञानक्रियारूपा शक्तिरेका हि शूलिनः।**
**इच्छाज्ञानक्रियाद्या यत्प्रभवाः कार्ययोनयः॥ २७६॥**

यत्प्रभवा यदीया इच्छाज्ञानाद्या अवस्थाः कार्ययोनयः, कार्योपाधिकृता इत्यर्थः॥ २७६॥

इत्थं शक्तिरेव शिवस्य मूर्तिस्तत्कार्यविषयेत्युक्तम्, इदानीं भोगाधिकारतत्त्ववासिनामुक्तवद् बैन्दवान्येव शरीरादीनीत्याह—

**ईश्वराणां शिवानां च महामायामयास्तथा।**
**देहेन्द्रियादयः शुद्धाः सुभगाः स्वधिकारकाः॥ २७७॥**

तत्कारिणी तु—

**सेयं क्रियात्मिका शक्तिः शिवस्याव्यभिचारिणी।**
**तत्संबन्धाच्छिवोऽशेषकार्याणां हेतुरुच्यते॥ २७८॥**

अधिकारावस्थोच्यते—

**स बिन्दोरवतीर्याणुसदाशिवसमावृतः।**
**पतिकृत्याधिकारेषु सदाशिवमहेश्वरान्॥ २७९॥**
**सम्प्रेषयन्नशेषाध्वमूर्धनि भ्राजते प्रभुः।**

अवतारणं चात्रोद्योगावस्थापरित्यागेन प्रवृत्तत्वम्, प्रवृत्तिश्च संस्कार्य सदाशिवान् विद्येश्वरांश्च यथाक्रमं स्वभुवनभोगेष्वशुद्धाध्वाधिकारे च नियोजनम्। अत एव प्रभवनशीलोऽशेषाध्वाधिष्ठाता भ्राजते सदाशिवाकारेण ध्येयतां प्राप्नोतीत्यर्थः॥ २७९॥

तदेव ध्येयाकाराधिष्ठानं दर्शयति—

**पञ्चस्रोतोमुखः शान्तः प्रभुः शक्तिशिराः शिवः॥२८०॥**
**दृक्क्रियेच्छाविशालाक्षो विज्ञानेन्दुकलान्वितः।**
**ईशानमूर्धा पुंवक्त्रो दशदिग्बाहुमण्डलः॥ २८१॥**
**अघोरहृदयो वामगुह्यो जाततनूज्ज्वलः।**
**प्रवृत्तिमानयं देवः सकलः सर्वपावनः॥ २८२॥**

अत्र च पञ्चस्रोतश्शब्देन मननत्राणरूपायाः शक्तेः पञ्चावस्थाभेदा उच्यन्ते॥ २८०–२८२॥

इत्थं बिन्द्ववस्थाधिष्ठानभेदेऽपि शिवशक्त्योरेकत्वं प्रदर्श्योपसंहरति—

**एक एव शिवस्तद्वच्छक्तिरप्यविकारिणी ।**
**लयभोगाधिकारेषु तौ हि चिन्मात्ररूपिणौ ।। २८३ ।।**

इदानीमनेकत्वमेवौपचारिकमेतयोः प्रकारान्तरेण दर्शयितुं तत्तदवस्थाभाजामात्मनां वास्तवं भेदमाह—

**तथाहि विमलोदारगभीरे चिन्महोदधौ ।**
**स्वात्मनि प्रविलीयन्ते तेनैके समधिष्ठिताः ।। २८४ ।।**

परिणतमलाः केचिदात्मानस्तेन शिवेनानुग्राहकेण समधिष्ठिता अनुग्रहशक्त्या मोचिताः सन्तो विमलतरनिरतिशयसर्वज्ञत्वसर्वकर्तृत्वसमुद्ररूपे स्वात्मनि स्वरूपे लीयन्ते तिष्ठन्ति, तदनुग्रहात् तत्साम्यरूपं मोक्षं भजन्तीत्यर्थः। न तु शिवात्मन्यैक्यं ते प्रयान्तीति व्याख्येयम्, अद्वैतस्य प्रागेव निषेधात्। एते च लयावस्थशिवसमत्वाल्लयावस्थाभाज उच्यन्ते ॥ २८४ ॥

विज्ञानकेवलिनोऽप्यपरिणतमलमायोत्तीर्णत्वान्महामायाश्रितत्वाद्भोगहीनत्वाच्च लयावस्थाभाजो निर्व्यापारत्वादुच्यन्त इत्याह—

**शिवेन निभृतात्मीयशक्तयोऽन्ये विशेरते ।**

भोगावस्थाभाज आह—

**समालिङ्ग्य महामायामपरे वृत्तिशालिनीम् ।। २८५ ।।**
**तत्संपर्कसुखैकाग्रबुद्धयो भोगलम्पटाः ।**

शान्त्यादिभुवनरूपेण परिणतां महामायामाश्रित्य वर्तन्त इत्यर्थः ॥ २८५ ॥

अधिकारभाजोऽप्याह—

**तथा परे परव्योम समाश्रित्याध्वमूर्धनि ।। २८६ ।।**
**कुर्वन्ति पञ्चकृत्यानि पत्युराज्ञानुवर्तिनः ।**

अनन्तादयः शुद्धाध्वमूर्धनि परव्योममहामायाभुवनान्याश्रित्य शिवाज्ञया पञ्चकृत्यकारिणो भवन्तीत्युक्तम् ॥ २८६ ॥

**ततः स तेषामेकोऽपि लयभोगाधिकारिणाम् ।। २८७ ।।**
**अधिष्ठातृतया भेदमौपचारिकमृच्छति ।**
**तद्वदेव मता शक्तिस्तयोर्भेदोऽधुनोच्यते ।। २८८ ।।**

तयोः शिवशक्त्योः परस्परभेदः कथ्यते ॥ २८७–२८८ ॥

तमेव भेदमाह—

**शुद्धेऽध्वनि शिवः कर्ता कारणं शक्तिराश्रिता ।**
**समाश्रयः स विज्ञेयः स्वनिष्ठघनचिन्मयः ।। २८९ ।।**

धर्मधर्मितयैवानयोर्भेदः ॥ २८९ ॥

तत्र च धर्मिस्वरूपं ज्ञानं स्वनिष्ठमेव, विषयग्रहणसामर्थ्यरूपं तु धर्मतयोच्यत इत्याह—

**सा तु संविदशेषार्थग्रहणे लम्पटोदया ।**
**परमैश्वर्यरूपा च महिमा व्याप्तिरूपिणी ।। २९० ।।**

ततश्च—

**महेश्वरो महानेष सर्वार्थव्यापकस्तयोः ।**

सर्वविषयव्यापकसामर्थ्ययुक्तत्वाच्छिवः सर्वार्थव्यापकः । उक्तार्थमेव प्रकटयति—तयोरिति ॥ २९० ॥

**परानपेक्षं रूपं यद्विज्ञानं शिवसंज्ञितम् ।। २९१ ।।**
**तस्य शक्ति परापेक्षं रूपमाहुर्विपश्चितः ।**

परापेक्षं विषयापेक्षमित्यर्थः ॥ २९१ ॥

कुत एवं कल्प्यत इति चेदत आह—

**आकारद्वयसंवित्तिरशेषस्यापि वस्तुनः ।। २९२ ।।**
**परापेक्षानपेक्षाभ्यामस्ति शक्तिः शिवाश्रया ।**

जडविषये दाहकस्याग्नेर्दाह्यस्य सन्निधौ दहनसामर्थ्यदर्शनात्, अन्यथा तदनभिव्यक्तेः, चिद्विषये च आत्मनि विषयग्रहणरूपस्य स्वनिष्ठस्य ग्रहीतृस्वरूपस्य स्वसंवेदनसिद्धत्वादेतत् सिद्धमित्यर्थः । अतश्चास्ति शक्तिरिति ॥ २९२ ॥

यद्येवमात्मशक्तेरस्याः शिवशक्तेः को विशेषोऽत आह—

**नित्योदितानवच्छिन्नविभूतेरीश्वरस्य यत् ।। ५९३ ।।**
**ज्ञेयाधिष्ठेयकार्यादौ न तु हेत्वादिकं परम् ।**
**तेन शक्तिः परापेक्षं रूपमीशस्य युज्यते ।। २९४ ।।**

नित्यमुक्तत्वादीश्वरस्य ज्ञेयादिविषये शक्तिव्यतिरेकेण न बुद्ध्यादिकरणापेक्षा, आलोकादिसहकार्यपेक्षा च । अतः शक्तिरेव तस्य परापेक्षरूपं नान्यत् । बद्धात्मनां तु शक्त्याख्यं विषयापेक्षं स्वरूपमात्रमेवासौ कार्यादिहेतुर्न भवेत्, तेषां कार्यादौ करणाद्यपेक्षादर्शनादित्याह—

**न सर्वस्य परापेक्षं रूपमात्रमसौ भवेत् ।**
**कार्यपुत्रादिरूपाणामन्यथैवोपलम्भनात् ।। २९५ ।।**

शिवस्येति पाठे केवलस्य शम्भोर्ज्ञानं न स्वरूपमात्रनिष्ठमेव, किन्तु विषयापेक्षमेव कार्यादिहेतुः । न तु बद्धात्मनां दृष्टकार्याणां पुत्रादीनां पित्रादेर्विषयादिसापेक्षेणैव ज्ञानादिनोत्पत्तिदर्शनादित्यर्थः ॥ २९५ ॥

अतो नेश्वरस्यापि निर्विषयं ग्रहणात्मकं ज्ञानं संभवतीत्याह—

**न तु निर्विषयं ज्ञानं तदेव विषयग्रहः ।**

यद्येवं विषयसन्निधान एव ग्रहणरूपस्योत्पत्तिदर्शनाद् धर्मस्वरूपस्यानित्यत्वप्रसङ्गः ? तन्न, शिवस्य सर्वदा बिन्द्वादेर्नित्यस्य विषयस्य ग्राह्यत्वात्, ग्रहणसामर्थ्यस्य ग्रहीतृसमवेतत्वेन सर्वदाऽवस्थानाच्च ।

नन्वात्मनां नीलादिज्ञानविनाशेन पीतादिज्ञानस्य क्रमेणोत्पत्तिदर्शनात् तत्सामर्थ्यस्याप्यनित्यत्वं लक्ष्यते ? अत आह—

**विरोधेनाथ पर्यायान्नैवमप्यविनाशि यत् ॥ २९६ ॥**
**नश्वराणामयं धर्मो यः काले नान्यथोदयः ।**

नीलाद्यध्यवसायरूपाद् भिन्नस्य पीताध्यवसायरूपस्य बौद्धस्य ज्ञानस्य विनाशित्वात् परस्परविरोधाच्च पर्यायेणोत्पत्तावपि तत्तत्सुखादिरूपबुद्धिग्रहणसामर्थ्यस्य सर्वदा ग्रहीतृसमवेतत्वेन संवेदनादविनाशित्वमेव, अतो बौद्धस्यैवायमन्यथा परिणामः ॥ २९६ ॥

ततश्च—

**अविनाशि च तन्नित्यमिष्टमस्माद् विभिद्यते ॥ २९७ ॥**
**शक्तिराश्रयतः शम्भोः स च तस्यास्ततस्तथा ।**

तदप्यात्मसामर्थ्यं शिवसामर्थ्यवन्नित्यमेष्टव्यम् । एवं च शिवशक्त्योरात्मभेदाभावेऽपि धर्मिधर्मभेदः सत्य एवेत्याह—अस्मादिति । ततस्तस्मात् कारणात् तथा धर्मात्मिकैव शक्तिरित्यर्थः ॥ २९७ ॥

अत्र पराशङ्का—

**कार्योपाधिवशाच्छक्तिसंज्ञा स्यादपि चिद्घने ॥ २९८ ॥**
**न तु शक्तिः परापेक्षा वस्तुतोऽस्तीति केचन ।**

धर्मिरूपमेव परमार्थं न तु धर्मरूपमित्यर्थः ॥ २९८ ॥

अत्रोत्तरम्—

**करणेन विना कार्यं कुर्वन् कर्ता भवेदिति ॥ २९९ ॥**
**मतिरेषामयुक्तैव युक्तिप्रत्यक्षबाधिता ।**

कुलालादीनां हि कर्तॄणां करणेन विना कर्तृत्वादर्शनात् शिवस्याऽपि कर्तृत्वात् केनापि करणेन भवितव्यम् । तच्छक्त्यात्मकमेव । यदुक्तं श्रीमन्मृगेन्द्रे—"करणं च न शक्त्यन्यत्" ( वि० ३।४ ) इति । एवमात्मनामपि देहस्पन्दादौ शक्तिरेव करणमित्युक्तम् ॥ २९९ ॥

किञ्च, ग्रहणरूपस्य परमार्थस्यानभ्युपगमे स्थितिकालेऽप्युपाधिभूतसदाशिव-तत्त्वादिबिन्दुकार्यविषयीकरणाभावादस्य सदाशिवादिभेदकल्पनमयुक्तम् । उपाध्यग्रहणेऽप्येतद्भेदोपचाराभ्युपगमे सर्वदैवाधिकारावस्था भवेत्, न तु लयावस्था, विशेषाभावादित्याह—

**किञ्चागृहीतमपि चेदुपाधिः कार्यमीशितुः ।। ३०० ।।**
**सदोपहितभावेन निरुपाधिः कथं शिवः ।**

बिन्द्वाद्यग्रहणे तत्क्षोभाद्यप्यस्य न युक्तम्, अज्ञातस्य करणासंभवादित्याह—

**कथं वायं भवेत् कर्ता कारणज्ञानवर्जितः ।। ३०१ ।।**

किञ्चाऽऽत्मनामपि शिवसमानगुणत्वाद्धर्मिरूपत्वाद्धर्मरूपज्ञानानभ्युपगमे सुखादिसंवेदनरूपो भोगो न सम्भवतीत्याह—

**पुरुषो वा कथं बुद्धि पश्येत् शक्त्या तया विना ।**

एवं च सति—

**इदमन्धतमः कृत्स्नमन्तरा शक्तिदीपिकाम् ।। ३०२ ।।**
**जायेतान्यच्च भगवानशक्तः किं करिष्यति ।**

शक्त्यनभ्युपगमे भोगमोक्षार्थं सर्वप्रवृत्तिशून्यं जगद् भवेदित्यर्थः ।। ३०२ ।।

ततश्च—

**अनन्यापि तथा शम्भोर्विभिन्ना शक्तिरिष्यते ।। ३०३ ।।**
**यथा मसूरात्व(रस्त्व)ङ्गुष्ठान्नापि भिन्नोक्तहेतुभिः ।**

यथा मसूराख्यो धान्यविशेषोऽङ्गुष्ठाख्यस्तज्जातीयोऽपि केनाप्याकारेण भिद्यते, एवं शिवशक्त्योर्वस्त्वन्तरत्वाभावेऽपि धर्मिधर्मतया भेदः सिद्धः । अत्र च समानजातीयत्वेनैक्यमभ्युपगम्य इत्थं दृष्टान्ततवमुक्तम्, वस्तुतोऽङ्गुष्ठमसूरयोर्भेदात् । इत्थं शिवशक्त्योर्धर्मिधर्मतया भेदेऽपि तादात्म्यसंबन्धान्नात्मान्तरवद् भेद इत्याह–नापि भिन्नोक्तेति।।३०३।।

इत्थं शक्तिशक्तिमतोरात्मान्तरत्वाभावेऽपि धर्मिधर्मतया भेदं प्रतिपाद्योपसंहरति—

**अनन्याऽपि विभिन्नाऽतः शम्भोः सा समवायिनी ।। ३०४ ।।**
**स्वाभाविकी च तन्मूला प्रभा भानोरिवामला ।**

ननु बिन्द्वाख्ययैव शक्त्या शिवः कार्यं करिष्यति, किमनया ? अत आह—

**नह्येष भगवान् शक्त्या स्वात्मनोऽत्यन्तभिन्नया ।। ३०५ ।।**
**कदाचित् कुरुते किञ्चिन्नापि जानाति किञ्चन ।**

बिन्दोरुपादानत्वेन बहिरङ्गत्वादचेतनत्वाच्च चिद्रूपया स्वसमवायिन्या शक्त्या विना शिवो न बिन्द्वादिवस्तु विषयीकर्तुं तत्क्षोभादि चोत्पादयितुं शक्नोति, कुम्भकारादेरपि चिच्छक्तियुक्तत्वेनैव दर्शनात् ।। ३०५ ।।

यद्येवं शक्त्या विनेश्वरस्याप्यकिञ्चित्करत्वात् सैव जगत्कारणत्वेनास्तु। यदाहुः—"यया विना न सर्वज्ञः सोऽपि तस्यै नमोऽस्तु ते" इति, तन्न, शक्तेर्धर्मत्वेनाश्रयं विनाऽवस्थानासंभवात्। तदाश्रयः स एष शक्तिमान् सङ्कल्पमात्रेण विश्वकर्तेत्याह—

**अनाहितविशेषोऽपि हेतुर्देवो महेश्वरः ॥ ३०६ ॥**

इदानीं कर्तृशक्त्या भेदोपचारे उपाधिभूतं पारमार्थिकं कार्यभेदमाह—

**कार्यभेदोऽपि कार्यस्य स्यादवस्थाविशेषतः।**

एतदेव प्रपञ्चयति—

**बिन्दुः प्रलीनकार्योऽसौ शिवशक्तिसमीरितः ॥ ३०७ ॥**
**सर्गाय स्थितये स्रष्टृप्रपञ्चविलयाय च।**
**चिरस्थापितविश्वो हि बिन्दुरेव प्रवर्तते ॥ ३०८ ॥**
**अवस्थाभेदमासाद्य घटमारभते यथा।**
**मृदवस्थान्तरापत्त्या पूर्वमेवमसावपि ॥ ३०९ ॥**
**प्रभुशक्तिसमाक्रान्तस्तत्तद्वृत्तिविशेषतः।**
**कार्यभेदाय घटते निर्विकारेऽपि शूलिनि ॥ ३१० ॥**
**अनापन्नविकारोऽपि यथोक्तक्रमभाविनाम्।**
**भेदसंशोषचूर्णानामवस्थाभेदजन्मनाम् ॥ ३११ ॥**
**विधाता कमलस्योष्णगभस्तिः स्यात् तथा शिवः।**
**कर्ता सर्गादिकार्याणामविकारोऽपि शक्तिमान् ॥ ३१२ ॥**

ननु किमर्थमसौ सृष्ट्यादिकार्यं करोतीति चेत्, पश्वनुग्रहायेति ब्रूमः। यद्येवं सर्वानुग्राहकत्वेऽपि शिवः कथं केषाञ्चिदेव मोक्षं करोति न सर्वेषाम्, अयमेवास्य स्वभावो वा तर्ह्यन्तः रागद्वेषयुक्तः स्यात्। अत आह—

**यथा मधूच्छिष्टमृदोरनपेक्षः क्षणेन च।**
**द्रवताशुष्कताहेतुरविकारोऽपि भास्करः ॥ ३१३ ॥**
**तथा समासमात्मीयपुण्यापुण्याख्यकर्मणाम्।**
**अणूनामविकारोऽपि बन्धमोक्षकरः शिवः ॥ ३१४ ॥**

सत्यं सर्वानुग्राहकः शिवः। न चास्य रागादिर्विद्यते, अनादिमलरहितत्वात्। बन्धमोक्षकर्तृत्वं चात्मनामेव, योग्यत्वादित्युक्तम्। ततश्च यथैकाकार एवार्कः स्वसन्निधानेन द्रवत्वयोग्यस्य मधूच्छिष्टस्य द्रवतां शोषत्वयोग्याया मृदः शुष्कतां च करोति, तथा शिवोऽपि पक्वमलानां मोक्षयोग्यानां मोक्षं करोति, अपक्वमलानां बन्धयोग्यानां तत्पाकार्थं बन्धं करोतीत्यविरोधः। अतश्चात्र पुण्यापुण्याख्यशब्देन—"न हृष्यत्युपकारेण नापकारेण कुप्यति। यः समः सर्वभूतेषु जीवन्मुक्तः स उच्यते ॥" इति न्यायेनोपकारा-

पकारात्मकं कर्मद्वयमुच्यते। तयोर्मलपरिपाकवशात् साम्यबुद्धौ सत्यां मोक्षो भवति, तदभावे तु बन्ध एव। न त्वश्वमेधब्रह्महत्यादिरूपौ पुण्यापुण्यौ, तयोः साम्यं मोक्षहेतुरिति व्याख्येयम्, शास्त्रविरोधात्, तादृशस्य कर्मसाम्यस्य संसारावस्थायामपि संभवात्, स्वनाशमात्र एव चरितार्थत्वात्। समस्तकर्मसाम्यस्यापि विज्ञानकेवलित्वमात्र एव हेतुत्वात्, मोक्षहेतुत्वासम्भवात्, मलपरिपाकस्यैव प्रोक्तकर्मसाम्यचिह्नानुमेयस्य दीक्षाद्वारेण मोक्षहेतुत्वसम्भवाच्चेत्यादि विस्तरेणास्माभिरुक्तं मृगेन्द्रवृत्तिदीपिकायाम्। साधितं च गुरुभिः श्रीमत्स्वायंभुवकिरणमतङ्गादिवृत्तिष्विति ततोऽवधेयम्॥ ३१३-३१४॥

अतश्च—

**परस्परविरोधेन निवारितविपाकयोः।**
**कर्मणोः सन्निपातेन शैवी शक्तिः पतत्यणौ॥ ३१५॥**

विरुद्धफलयोरश्वमेधब्रह्महत्यादिधर्माधर्मरूपयोः स्वर्गब्रह्मलोकफलयोर्धर्मरूपयोरवीचीरौरवफलयोर्वाऽधर्मरूपयोः कर्मणोः सन्निपाते सति शैवी शिवत्वदायिकाऽनुग्राहिका शक्तिरात्मनि न पतति, तस्या मलपरिपाक एव पातश्रवणात्। किन्तु रोधशक्तिरेव नियतिद्वारेण विरुद्धकर्मक्षयार्थं पतति। तदुक्तं श्रीमन्मतङ्गे—"धर्माधर्मविपाकेऽस्मिन्" (वि० १३।१५) इत्यादिना दीक्षाया एव मलपरिपाकाविनाभूतायाः कर्मक्षयद्वारेण मोक्षहेतुत्वम्। यदुक्तं श्रीमत्किरणे—"अनेकभविकं कर्म दग्धबीजमिवाणुभिः। भविष्यदपि संरुद्धं येनेदं तद्धि भोगतः॥"(६।१९) इति। मलपरिपाके सत्यनुग्राहिकायाः पातः॥ ३१५॥

**तस्यां पतितमात्रायां निर्धूतघनसंवृतिः।**
**प्रशान्तमलकालुष्यमात्मानमनुपश्यति॥ ३१६॥**

मलावरणापगमात् तद्विमुक्तं सर्वज्ञत्वादिरूपमस्य प्रकाशत इत्यर्थः॥ ३१६॥

**तदैव हि विमुक्तोऽसौ यदाघ्रातः शिवेच्छया।**

दीक्षाख्यया शिवशक्त्या स्पृष्टो मुक्त एवेति॥

दीक्षोत्तरकालं चारब्धकार्यबन्धक्षयार्थम्—

**नित्यनैमित्तिकेनैष कर्मणा वर्तते परम्॥ ३१७॥**

तत्रापि—

**अनेनैव शरीरेण परां व्याप्तिमखण्डिताम्।**
**प्राप्नुवन्ति महाधीरा धन्या हि शिवयोगिनः॥ ३१८॥**

योगाभ्यासादत्रैव सर्वज्ञत्वादिः प्रकाशत इत्यर्थः॥ ३१८॥

प्रसङ्गाच्छिवयोगिमाहात्म्यमाह—

**स पुनाति दृशा वाचा चरणेन करेण च।**
**नदीजनपदोद्यानपुरादीनि स्वलीलया॥ ३१९॥**

किं पुनः शरणायातं भवभीतमिमं जनम् ।

इदानीं प्रकरणकर्ता स्वगुरुनमस्कारं करोति—

नमस्तथाविधायास्मद्गुरवे शिवतेजसे ॥ ३२० ॥
निधये योगरत्नानामनन्तफलदायिनाम् ।

केनेदं प्रकरणमारचितमित्यत्राह—

रामकण्ठकृतालोकनिर्मलीकृतचेतसा ॥ ३२१ ॥
रत्नत्रयपरीक्षेयं कृता श्रीकण्ठसूरिणा ।
श्रीरामकण्ठसद्वृत्तिं मयैवमनुकुर्वता ।
रत्नत्रयपरीक्षार्थः संक्षेपेण प्रकाशितः ॥ ३२२ ॥

॥ रत्नत्रयपरीक्षा समाप्ता ॥

येनाकारि कवीश्वरेण रसवानाश्चर्यसाराह्वयः
पाषण्डापजयश्च काव्यतिलको भक्तप्रकाशस्तथा ।
नाट्येष्वभ्युदयश्च सुन्दरगिरा शैवेषु सद्वृत्तय-
स्तेनाघोरशिवेन साधु रचिता रत्नत्रयोल्लेखिनी ॥

इत्यघोरशिवाचार्यविरचिता रत्नत्रयोल्लेखिनी सम्पूर्णा ॥



# भोगकारिका

## सद्योज्योतिःशिवाचार्यप्रणीता

### अघोरशिवाचार्यकृतवृत्तिसहिता

शिवं प्रणम्य सद्भोगमोक्षदं मन्दचेतसाम् ।
हिताय लेशतः स्पष्टं व्याख्यास्ये भोगकारिकाम् ॥

इह हि तत्रभवद्भिः सद्योज्योतिष्पादैः प्रकरणप्रतिपाद्यमानं भोगमोक्षात्मकमर्थं सूचयद्भिस्तस्यैवाऽविघ्नपरिसमाप्त्यर्थं प्रथमं परमशिवनमस्कारः क्रियते—

**त्रिबन्धिचित्कलायोगभोगविश्लेषमोक्षदम् ।**
**सर्वकालक्रमार्थज्ञं प्रणम्याजं शिवं ध्रुवम् ॥ १ ॥**

त्रयो बन्धाश्च मलकर्ममायालक्षणास्ते विद्यन्ते येषां ते त्रिबन्धिनः, तेषां त्रिबन्धिनां सकलाख्यानां चितामात्मनां योऽयं कलायोगः सूक्ष्मदेहारम्भककलादिपृथ्व्यन्ततत्त्वात्मकैस्तत्तद्भुवनजदेहरूपैश्च मायीयैरवयवैः संबन्धः, तेन भोगं तद्विश्लेषेण मोक्षं च यो ददाति, तं तादृशम् । अनेन शिवस्यानादिमुक्तत्वेन सर्वाऽनुग्राहकत्वं सर्वकर्तृत्वं च सूच्यते । अत एव च—सर्वकालक्रमार्थज्ञम् । सर्वं च भूतादिरूपं कालक्रमं सर्वांश्च तत्तत्कालभाविनः पदार्थान् जानातीति । एतेन चाऽस्य निर्मलत्वात् सर्वकर्तृत्वाच्च सार्वकालं सर्वज्ञता प्रतिपाद्यते । किञ्च, अजम् अमलत्वादेव शरीरादिसंबन्धात्मनाऽपि जन्मना रहितम् । ध्रुवं चाविकारिणम् । न तु बिन्द्वादिवत् परिणामित्वम्, विकारित्वे जडत्वप्रसङ्गात् । शिवं प्रणम्य भोगमोक्षौ वच्मीति वक्ष्यमाणेन संबन्धः ॥ १ ॥

**रुरुसिद्धान्तसंसिद्धौ भोगमोक्षौ ससाधनौ ।**
**वच्मि साधकबोधाय लेशतो युक्तिसंस्कृतौ ॥ २ ॥**

साधयन्ति भोगमोक्षाविति साधका आचार्यादयः, तेषां दीक्षादौ तत्साधनादिज्ञानाय युक्त्या अनुमानेन, संस्कृतौ प्रतिपादितौ, श्रीमद्रौरवतन्त्रोपलक्षितसिद्धान्तशास्त्रे सिद्धौ ससाधनौ भोगमोक्षौ रौरवानुसारेणैव संक्षेपाद् वदामि ॥ २ ॥

तत्र तावत् सत्साधनं भोगं दर्शयितुं भोगाधिकारः केषामित्यत आह—

**अञ्जनादीशनुन्नानां जायते भोगलोलिका ।**
**कर्माशयानुरूपेण चिद्वतां भवमण्डले ॥ ३ ॥**

मलिनत्वादीशेनाधिकारावस्थेन शिवेनानन्तादिद्वारेण नुन्नानां भोगाऽभिमुखीकृतानामात्मनाम्, अञ्जनान्मलादेव हेतोः, संसारमण्डले कर्मसंस्कारपाकानुगुणं भोग-

लोलिका भोगेच्छा जायते । ननु निर्मल एवाऽऽत्मा सांख्यैरभ्युपगतः, तदयुक्तम्, निर्मलस्य भोगासक्त्यसम्भवात्, तत्संभवे वा मुक्तस्यापि प्रसङ्गात् । ननु रागनिबन्धनाऽऽसक्तिरिष्यते, सत्यम्, रागोऽपि मलिनस्यैवासक्तिहेतुः । यदुक्तं श्रीमत्स्वायंभुवे—"यद्यशुद्धिर्न पुंसोऽस्ति सक्तिर्भोगेषु किं कृता" इति ॥ ३ ॥

अथ कोऽसौ भोगः, कै साधनैः साध्यते ? इत्यत आह—

**ईश्वरेच्छासमाविष्टजगद्बीजपरिच्युतैः ।**
**साधनैः साध्यते भोगो बुद्धिवृत्त्यनुरञ्जनः ।। ४ ।।**

ईश्वरोऽत्रानन्त एव, तस्यैव मायाक्षोभकत्वात् । यदुक्तं श्रीमत्किरणे—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" ( वि० ३।२७ ) इति । तदिच्छया क्षुब्धं यज्जगद्बीजं मायाख्यम्, तस्मात् प्रसूतैरसाधारणैः सूक्ष्मदेहात्मकैः साधारणभुवनादिरूपैः साधारणाऽसाधारणभुवनजदेहात्मभिश्च यः साधनैर्भोगो निष्पाद्यते, स च बुद्धिवृत्त्यनुरञ्जनात्मकः । बुद्धिवृत्त्या सुखदुःखमोहाध्यवसायरूपया आत्मचैतन्यस्य यदनुरञ्जनं स एव भोगः । अनुरागश्चात्र सुखाध्यवसायाकारबुद्धिवृत्तिनिष्ठतया तत्संवित्तिस्तदनुभव एव, न तु प्रतिबिम्बात्मताऽऽत्मनः, परिणामिताप्रसङ्गात् । तदुक्तं श्रीमत्स्वायम्भुवे—"भोगोऽस्य वेदना पुंसः सुखदुःखादिलक्षणा" इति ॥ ४ ॥

तत्र भूतानां तावद्भोगसाधनतां प्रतिपादयति—

**क्ष्माजलाग्निमरुद्व्योम्नां गुणवृत्त्यक्षभूमिताः ।**
**स्वमात्रापूरपुष्टानां गमयन्ति तदङ्गताम् ।। ५ ।।**

अत्र पृथिव्यादीनां भूतानां ये गुणादयस्त एव तेषां भोगाङ्गतां साधयन्ति । तत्र गुणा गन्धादयः । वृत्तयस्तु धारणादयः । अक्षभूमिता चेन्द्रियाधारत्वम् । एतान्यप्यनन्तरमेव दर्शयिष्यति । ततश्च क्ष्मादयो गुणैर्वृत्तिभिरक्षाधारतया चात्मनां भोगसाधनतां भजन्तीत्यर्थः । कीदृशां क्ष्मादीनामित्यत आह—स्वमात्रापूरपुष्टानामिति । स्वैः स्वैः कारणभूतैस्तन्मात्रैर्य आपूरः पूरणम्, तेन पुष्टानाम् । अकृतस्य करणं कृतस्य परिवर्धनं च प्रकृतिकर्म यतः ॥ ५ ॥

एतानि च भूतानि स्वकारणैस्तन्मात्रैः सह स्थूलसूक्ष्मत्वेनेन्द्रियाधाराणि स्थितानीत्युक्तं श्रीमन्मतङ्गे—"तन्मात्राणीह घटवन्महाभूतानि लेपवत् ॥" ( वि० १९।२१ ) इति । तत्त्वसंग्रहेऽपि—"एतत्कार्यं दशधा करणैराविश्य कार्यते चेष्टाम् । अविभुत्वात् करणानि तु कार्यमधिष्ठाय चेष्टन्ते ॥" (श्लो० ५) इति । अतश्चैषां सूक्ष्मदेहस्थानां भूतानामिन्द्रियाधारत्वे बाह्यशरीरस्थानां च "दिह उपचये"(१०१५ अ०) इति धात्वर्थगत्या देहत्वेन चोपचयधर्मित्वे साधारणे सति धृत्यादयोऽसाधारणवृत्तय इत्याह—

**करणाधारदेहत्वे धृतिसंग्रहपक्तयः ।**
**व्यूहोऽवकाशदानं च वृत्तयो वसुधादिषु ।। ६ ।।**

तत्र धृतिर्धारणं भूमेर्वृत्तिः । संग्रहोऽवष्टम्भोऽम्भसः । पक्तिः पाकोऽग्नेः । व्यूहोऽवयवघटनं वायोः । अवकाशस्यास्पदस्य दानमाकाशस्य ॥ ६ ॥

अथ तदेवैषां साधारणमिन्द्रियाधारत्वं सूक्ष्मदेहस्थत्वेनाह—

**आतिवाहिकदेहस्थं करणं प्रविजृम्भितैः ।**
**योनेर्योन्यन्तरं चापि याति पुंभोगसिद्धये ॥ ७ ॥**
**पुमर्थदादृष्टवशात्**

अतिवाहयत्यात्मनां कर्म भोगेन नाशयतीत्यातिवाहिकः सूक्ष्मदेहः, तत्स्थमेव करणमिन्द्रियवर्गश्चेष्टते, अविभुत्वेन निराश्रये चेष्टानुपपत्तेः । सूक्ष्मदेहस्थभूततन्मात्राधार एव करणवर्गश्चेष्टत इत्युक्तम् । किञ्च, तत्सूक्ष्मदेहस्थं करणं पुरुषार्थप्रदकर्मवशात् तस्यैव पुंसो भोगसिद्धये योनेर्योन्यन्तरं प्रयाति । यदुक्तं तत्त्वसंग्रहे—"वसुधाद्यस्तत्त्वगणः प्रतिपुंनियतः कालान्तोऽयम् । पर्यटति कर्मवशतो भुवनजदेहेष्वयं च सर्वेषु ॥" ( श्लो० २४-२५ ) इति ॥ ७ ॥

स च सूक्ष्मदेहः सूक्ष्मत्वात् पिशाचादिवन्नास्मदादिप्रत्यक्षः, अपि तु योगिप्रत्यक्षगम्य इत्याह—

**देहो नैवातिवाहिकः ।**
**अक्षाधारोऽक्षगम्योऽयमनीशानां पिशाचवत् ॥ ८ ॥**

अथ भूतानां गुणानाह—

**गन्धः क्षितौ रसः षोढा मधुरः क्ष्माकबन्धकः ।**
**शुक्लादि शुक्लं भास्वच्च रूपं क्षित्यादिषु त्रिषु ॥ ९ ॥**
**अशीतोष्णौ महीवाय्वोः पाकजापाकजौ पृथक् ।**
**जले शीतः शिखिन्युष्णस्पर्शोऽयं संव्यवस्थितः ॥ १० ॥**
**शब्दस्तद्द्रव्यजनितः पृथग्भूतचतुष्टये ।**
**प्रतिशब्दकसंघातो नभस्येवोदितो बुधैः ॥ ११ ॥**

तत्र गन्धः सुरभ्यसुरभिरूपः क्षितावेव । रसः क्ष्माजलयोः । तत्र क्षितौ कट्वम्ललवणमधुरकषायतिक्तरूपः । जले तु मधुर एव । रूपं च क्ष्माजलाग्निषु । तत्र क्षितौ शुक्लरक्तपीतकृष्णाद्यनेकविधम् । जले तु शुक्लमेव । अग्नौ भास्वद्रूपम् । तेषु सवायुषु स्पर्शः स्थितः । स च मह्यां वायौ च प्रत्येकमशीतोऽनुष्णः । कः पुनर्महीवायुस्पर्शयोः परस्परं भेदोऽत आह—पाकजापाकजौ पृथगिति । मह्यां स्पर्शः पाकजः, वायौ त्वपाकज इत्ययमेवानयोर्भेदः । अस्य चोपलक्षणत्वाद् रूपादयोऽपि महीगुणाः पाकजा एव । जले पुनः स्वाभाविकः स्पर्शः शीत एव । अग्नावुष्ण एव । शब्दश्च भूम्यादिषु चतुर्षु तैस्तैः पार्थिवादिभिर्द्रव्यैः परस्परमाहत्य जातः । नभसि तु प्रतिश्रुक्शब्दात्मकः ।

ननु वैशेषिकादिभिराश्रयादन्यत्रो(त्रानु)पलब्धेराकाशैकगुणः शब्द इष्यते, तदयुक्तम्, प्रत्यक्षागमबाधितत्वेन हेतोः कालात्ययापदिष्टत्वात् । यतः शब्दाश्रय एव भेर्यादौ शब्दः श्रूयते । किञ्च, पृथिव्यां तावत् कटकटादिकः शब्दो दृश्यते, जले छलच्छलादिः, अग्नौ धमधमादिः, शकशकादिर्वायौ, नभसि च प्रतिशब्दात्मक इति । एतच्चाकाशैकगुणत्वं शब्दस्य विस्तरेणास्माभिर्मृगेन्द्रवृत्तिदीपिकायां प्रतिक्षिप्तम् । उक्तं च श्रीमन्मृगेन्द्रे– "इति पञ्चसु शब्दोऽयं स्पर्शो भूतचतुष्टये । अशीतोष्णो महीवाय्वोः शीतोष्णौ वारितेजसोः ॥ भास्वदग्नौ जले शुक्लं क्षितौ शुक्लाद्यनेकधा । रूपं त्रिषु रसोऽम्भस्सु मधुरः षड्विधः क्षितौ ॥ गन्धः क्षितावसुरभिः सुरभिश्च मतो बुधैः ।" ( वि० १२।२७-२९ ) इति ॥ ९-११ ॥

अथ उक्तार्थोपसंहारः—

**इत्थं यथोक्तगन्धादिव्रातोपेता धरादयः ।**
**अभिप्रसिद्धा लोकस्य**

गन्धाद्याश्रयतया पृथिव्यादयोऽर्था लोकसिद्धा इत्यर्थः ॥

एषां च भूतानामस्मदादिबाह्येन्द्रियपरिच्छेद्यगुणत्वाद् घटादिवत् कार्यत्वसिद्धेस्तत्कारणतया पञ्च तन्मात्राः सिद्धा इत्याह—

**मात्रास्तैरनुमानतः ।। १२ ।।**

अथ गुणग्रहणादेव तदव्यतिरेकित्वाद् गुणिनोऽपि ग्रहणं सिद्ध्यतीति दर्शयितुं प्रोक्तानां तावद् भूतानां गुणेभ्योऽपृथग्भावं साधयितुमाह—

**चित्रस्वभावकाः प्रोक्ता गुणभिन्ना धरादयः ।**
**क्रमव्यङ्ग्या यथा चित्रं पटे रूपं तु वेष्टिते ।। १३ ।।**

उक्ताः पृथिव्यादयः । अर्थाद् गन्धादिगुणैः परस्परं भिन्नाः स्थलोपलपर्वतसरित्समुद्राद्याकारभेदेन विचित्रस्वभावाश्च दृश्यन्ते । ततोऽमी वेष्टितपटगतचित्ररूपवत् क्रमव्यङ्ग्या एव । नहि पृथिव्यादीनां परिदृश्यमानावान्तराकारभेदभिन्नं सन्निकृष्टं स्वरूपं तदनुगुणं च विप्रकृष्टं स्वरूपं सर्वं युगपद् ग्रहीतुं शक्यम्, अपि त्विन्द्रियैरनुमानेन च क्रमेण व्यज्यते ॥ १३ ॥

किमतः ? इत्यत आह—

**विशेषणविशेष्यत्वव्यपदेशस्य धीभिदाम् ।**
**क्रमव्यङ्ग्यत्वतो हेतोर्गोचरत्वं व्रजन्त्यमी ।। १४ ।।**

अमी धरादयोऽर्थाः क्रमव्यङ्ग्यत्वाद्धेतोः सुरभिरियं पृथिवीत्यादीनां विशेषणविशेष्यरूपाणां धीभिदां ज्ञानभेदानां तद्भावव्यपदेशस्य च विषयतां प्राप्नुवन्ति ॥ १४॥

अत्र च—

**नागृहीतैस्तु गन्धाद्यैर्जातुचिज्जायते मतिः ।**

**धरित्र्यां हि जलादीनामग्रहेऽपि प्रजायते ।। १५ ।।**

**गन्धादिभ्यस्ततोऽनन्या जलादिभ्यः पृथक् च भूः ।**

हि यस्मात् कारणात्, विशेषरूपैर्गन्धादिभिर्गुणैरगृहीतैर्विशेष्यायां धर्मिरूपायां धरित्र्यां कदाचिद् बुद्धिर्नोत्पद्यते, द्रव्यान्तरेषु तु जलादिष्वगृहीतेष्वप्युत्पद्यत एव। तस्माद् गन्धादिभ्यो भूमिरनन्या, जलादिभ्योऽन्यैवेति ॥ १५ ॥

एवं भूतान्तरेष्वपि ज्ञेयमित्याह—

**जलादिष्वेवमेवायं योज्यो हेतुर्मनीषिभिः ।। १६ ।।**

ननु जपाकुसुमसन्निधाने रक्तभावं भजन् स्फटिकमणिः शौक्ल्यगुणग्रहणादृतेऽपि गृह्यते, तस्माद् गुणिग्रहणस्य गुणग्रहणपूर्वकत्वमसिद्धमत आह—

**संस्थानं चापि वर्णं च रूपं द्विविधमिष्यते ।**

**तस्मादसिद्धता नास्ति हेतोरुपहिते मणौ ।। १७ ।।**

इह हि द्रव्याणां वर्णवत् संस्थानात्मकमपि रूपं गुण एवेष्यते। तस्माज्जपाकुसुमोपहितस्यापि स्फटिकस्य ग्रहणं शौक्ल्यगुणग्रहणाभावेऽपि वृत्तचतुरश्रादिसंस्थानग्रहणपुरस्सरमेव भवतीति द्रव्यग्रहणस्य गुणग्रहणपूर्वकत्वं सिद्धमेव। अतोऽस्य हेतोर्नासिद्धतेति ॥ १७ ॥

इत्थं भूतानां भोगाङ्गत्वं प्रसाध्याधुना "मात्रास्तैरनुमानतः" ( श्लो० १२ ) इति प्रागुक्तां तन्मात्रासिद्धिं विशेषयितुं भूतानां तावत् कार्यत्वमनिर्देशेन दर्शयति—

**गुणानां कार्यतासिद्धौ यो हेतुरभिधीयते ।**

**क्षित्यादिककलान्तानां योज्यः कारणसिद्धये ।। १८ ।।**

गुणानामचैतन्ये सत्यनेकत्वाद् घटादिवत् कारणपूर्वकत्वमिति वक्ष्यति। ततस्तेनैव हेतुना पृथिव्यादीनामपि कार्यत्वसिद्धिः। तथाहि—परिदृश्यमानभोगवैचित्र्यान्यथानुपपत्त्या पृथिव्यादिककलान्तर्त्रिशत्तत्त्वात्मकः प्रत्यात्मनियतः सूक्ष्मदेहोऽस्तीत्युक्तम्, आगमेषु च श्रूयते। ततस्तेषां पृथिव्यादीनां प्रतिपुरुषनियतत्वेनाचैतन्ये सत्यनेकत्वात् कारणपूर्वकत्वं सिद्ध्यतीति ॥ १८ ॥

तत्र तावद् भूतकारणत्वेन तन्मात्रासिद्धेस्तत्तद्गुणभेदादेव पृथिव्यादीनां क्रमसिद्धिरित्याह—

**शब्दाद्येकोत्तराधिक्या मात्रास्तदविशेषतः ।**

**योनयो गगनादीनां क्रममिच्छन्ति धर्मिणाम् ।। १९ ।।**

अयमत्र तात्पर्यार्थः—अनभिव्यक्तविशेषशब्दमात्रस्वरूपं शब्दतन्मात्रमाकाशस्योपादानम्, एवं तदधोवर्ति शब्दस्पर्शमात्रस्वरूपं स्पर्शतन्मात्रं वायोः, शब्दस्पर्शरूपात्मकं

रूपतन्मात्रं तेजसः, शब्दस्पर्शरूपरसात्मकं रसतन्मात्रं जलस्य, शब्दादिगन्धान्तपञ्च-गुणरूपं गन्धतन्मात्रं भूमेरिति। अक्षरार्थस्तु—गगनादिवच्छब्दाद्येकोत्तरं गुणाधिक्यं यासां ताः शब्दाद्येकोत्तराधिक्याः। तदविशेषतो गुणाविशेषादनभिव्यक्तविशेषशब्दादि-मात्रस्वरूपात् तेषां गगनादीनां क्रमाद् योनय उपादानभूताः शब्दादितन्मात्राः, तेषामेव विशिष्टगुणयोगिनां धर्मिणामाकाशादीनां भूतानां सृष्टिक्रममिच्छन्ति, गुणाधिक्यक्रमेणा-धोऽधोभावं भजन्त्यः कार्याणामप्यधोऽधोभावं कुर्वन्तीत्यर्थः ॥ १९ ॥

कथं पुनरासां भोगाङ्गत्वमत आह—

**स्वकार्योत्पत्तितत्पुष्टिकर्तृता सर्वयोनिषु ।**
**मात्राद्यासु पुमर्थस्य साधनत्वं विनिश्चितम् ।। २० ।।**

अकृतस्य करणं कृतस्य परिवर्धनं च यतः सर्वोपादानानाम्, ततस्तन्मात्राणां मायादीनां च कार्ययोनीनां भोगसाधनतत्त्वोत्पादकत्वात् तदापूरकतया च भोगत्वं सिद्धम् ॥ २० ॥

अथेन्द्रियाणामपि भोगाङ्गत्वं दर्शयितुं प्रथमं कर्मेन्द्रियसिद्धिमाह—

**आनन्दगमनोत्सर्गवचनादानकर्मणाम् ।**
**उपस्थपादपाय्वास्यपाणिनामानि वै पृथक् ।। २१ ।।**

उत्सर्गो मलविरेकः। आनन्दादिक्रियाहेतुत्वेनोपस्थादीनि कर्मेन्द्रियाणि सिद्धा-नीत्यर्थः ॥ २१ ॥

किमेतान्युपस्थादीनि स्थानान्येवेन्द्रियाणि नेत्याह—

**भावाभावौ तु यत्तन्त्रौ प्रत्येकं कर्मणां स्मृतौ ।**
**स्थानेषु सत्सु तानीह पञ्च कर्मेन्द्रियाणि तु ।। २२ ।।**

इह हि केषाञ्चित् पादादिस्थानयोगिनामपि तत्तदिन्द्रियशक्तिहीनानां गमनादि-क्रिया न दृश्यते। तस्मात् तेषु स्थानेषु सत्स्वपि तासां क्रियाणां यदधीनौ भावाभावौ तास्तत्रस्थाः शक्तय एव पृथक् पञ्चेन्द्रियाणि ज्ञेयानि। अत एव कर्मेन्द्रियाणि ये नेच्छन्ति नैयायिकादयस्ते प्रतिक्षिप्ताः ॥ २२ ॥

नन्वेवं चेद् भ्रूलतोत्क्षेपादीनामपि क्रियात्वादनन्तता कर्मेन्द्रियाणां प्रसज्यते, अत आह—

**आनन्दादिभिरेतैस्तु कर्मभिः परिभाषितैः ।**
**कर्मेन्द्रियाण्यतो नैषामानन्त्यं कर्मणां वशात् ।। २३ ।।**

भवेदयं दोषो यद्यस्माभिः शरीरैकदेशवृत्तीनि तानीष्यन्ते। त्वगिन्द्रियवत् तेषां सर्वशरीरव्यापकत्वेनेष्टत्वाद्धस्तस्यैवायं भ्रूक्षेपणादिव्यापारः पाय्वादेरिव जीर्णविरेचना-द्यात्मक इति भ्रूक्षेपादीनामप्यानन्दादिष्वेवान्तर्भावान्न तद्भेदादत्रेन्द्रियानन्त्यसिद्धिः।

किञ्च, एतैरेव आनन्दादिभिः प्रागुक्तैः प्रधानभूतैः कर्मभिः पञ्चैव कर्मेन्द्रियाणि सिद्ध्यन्तीति नानन्तता कर्मेन्द्रियाणाम्, तत्तत्संज्ञास्तु तेषां तत्र तत्र विशेषाधिष्ठानादित्यविरोधः ॥ २३ ॥

इदानीं बुद्धीन्द्रियसिद्धिमाह—

**शब्दादिग्रहणे पुंसः कर्तुर्नाकरणा कृतिः ।**
**न चैककरणा यस्मादपेक्षा न निवर्तते ॥ २४ ॥**

शब्दादिग्रहणस्यापि क्रियात्वाच्छिदिक्रियावत् करणं विना नोत्पत्तिर्युक्ता । न च ताः पञ्चापि क्रियाः श्रोत्रादेरेकस्मादेव करणादुत्पद्यन्ते । यस्मात् करणान्तरापेक्षा न निवर्तते, शब्दग्रहणकरणभूते श्रोत्रे सत्यपि स्पर्शादिग्रहणे त्वगादिकरणान्तरापेक्षिता दृश्यत इति भावः ॥ २४ ॥

कानि तानि करणानीत्यत आह—

**करणानि श्रुतिस्त्वक् च चक्षुर्जिह्वा च नासिका ।**

ततश्च शब्दादिग्रहणान्यथानुपपत्त्या तान्यनुमीयन्त इत्यभिप्रायेणाह—

**शब्दाद्यालोचनं तेषां वृत्तिः शब्दादिसन्निधौ ॥ २५ ॥**

सन्निभेति पाठे शब्दादिबाह्याकारसदृशमान्तरमाकारमध्यवसायिन्या बुद्ध्या सह मनोऽधिष्ठितानीन्द्रियाणि विद्याया विषयत्वेनोपस्थापयन्तीत्यर्थः । तं चेन्द्रियोपस्थापितं बुद्ध्याऽध्यवसितमाकारमन्तरङ्गेण विद्याख्येन करणेन पुरुषो गृह्णातीति वक्ष्यामः । उक्तं चान्यत्र—[1]"बुद्ध्याऽध्यवसितमर्थं पुरुषश्चेतयते" इति ॥ २५ ॥

न चैतानि कर्णशष्कुल्यादिस्थानान्येवेन्द्रियाणि, अपि तु तत्स्थाः शक्तय एव, यतः स्थानवतामपि कर्मवशात् तच्छक्तिवैकल्यान्न शब्दादिज्ञानमुत्पद्यत इत्याह—

**एतानि स्थानमात्राणि बुद्ध्यक्षाणीति मा कृथाः ।**
**स्थानेषु सत्सु वैकल्यान्न संविज्ज्ञायते यतः ॥ २६ ॥**

अथान्तःकरणसिद्धिरुच्यते—

**इच्छासंरम्भबोधाख्या नोक्तैः सिद्ध्यन्ति साधनैः ।**
**तत्सिद्धौ करणान्यन्तर्मनोऽहङ्कारबुद्धयः ॥ २७ ॥**

इह हि पृथिव्यादीनां तत्त्वानां स्वकार्यैरेव सिद्धेः कार्यान्तरहेतुत्वे प्रमाणाभावाद् अनेकतत्त्वपरिकल्पनाभावप्रसङ्गाच्च यानीच्छादिसिद्धौ साधनानि, तानि मनोऽहङ्कारबुद्ध्याख्यान्यान्तराणि करणानीत्यन्तःकरणसिद्धिः । तत्रेच्छाशब्देनैकाग्रतापरपर्यायोऽवधानात्मकः सङ्कल्पो विवक्षितः । स मनसो वृत्तिः । संरम्भश्च प्रयत्नोऽहङ्कारस्य । बोधश्चाध्यवसायो बुद्धेरिति । एतच्च प्रपञ्चयिष्यते ॥ २७ ॥

---

१. पूर्वतनी ७८ पृष्ठस्था द्वितीया टिप्पणी द्रष्टव्या ।

एषां चान्तःकरणबहिष्करणानां परस्परोपकारेण पुरुषार्थसाधनत्वमाह—

**अन्तर्मुखानि बाह्यानि संभूयेच्छादिसाधनम् ।**
**शिबिकोद्वाहिनरवदेकापायेन तास्ततः ॥ २८ ॥**
**अन्तर्मुखागतानां च चितेरर्थं प्रकुर्वताम् ।**
**बाह्यार्थं बुद्धिभिः सार्धं न स्युरिच्छादिकाः क्रियाः ॥२९॥**

यतोऽन्तर्मुखानि बाह्यानि च करणानि शिबिकोद्वाहिनरवत् संभूयेच्छादीनां क्रियाणां साधनं भवन्ति, बाह्यार्थालोचनपूर्वाणामेवाऽध्यवसायादीनां दर्शनात्, अवधानादिना विना बाह्यार्थग्रहणासंभवाच्च। ततश्चितेरात्मनोऽर्थं भोगाख्यं प्रयोजनं साधयतामन्तर्मुखागतानामन्तःकरणानां चशब्दाद् बहिष्करणानां वाऽन्यतरस्यापि वर्गस्यापायेन तिष्ठतां सतां ता इच्छादिकाः क्रियाः शब्दादिबाह्यार्थबुद्धयो वा पुरुषार्थसाधनतया नोत्पद्यन्ते, यथा शिबिकोद्वाहिनोर्मध्यादेकस्यापाये तदुद्वहनक्रिया न दृश्यते ॥ २८–२९ ॥

अत्र पराभिप्रायमाह—

**अन्येऽन्तःकरणं प्राणमिच्छन्ति व्यक्तचेतनम् ।**

अन्ये लोकायतैकदेशाः प्रणयनादिवृत्तिभिर्जीवनादिहेतुभूतं भूतपरिणामविशेषादभिव्यक्तचेतनं प्राणाख्यमान्तरं वायुमेवान्तःकरणमाहुः ।

अस्य दूषणमाह—

**प्रयत्नैर्न विना सोऽस्ति तत्सिद्धौ करणं तु किम् ॥ ३० ॥**

प्राणात्मनस्तावद् वायोः कादाचित्कत्वेन प्रयत्नपूर्विका प्रवृत्तिर्दृश्यते। यदाहुः— "प्रेरणाकर्षणे वायोः प्रयत्नेन विना कुतः" (प्र० वा० १।५४) इति। ततः संरम्भात्मकप्रयत्नसिद्धौ केनापि करणेन भाव्यमित्यन्तःकरणसिद्धिः। वक्ष्यति च—"संरम्भोऽहङ्कृतेर्वृत्तिः" ( श्लो० ३३ ) इति ॥ ३० ॥

किञ्च, चैतन्योत्पत्तिरप्यस्य वायोर्भवताऽभ्युपगतेति तस्याः करणान्तरं वाच्यमित्याह—

**चैतन्योद्गारभारोऽयमस्यान्तःकरणं वद ।**
**व्यक्तं न चास्य चैतन्यं वायुत्वाद् बाह्यवायुवत् ॥ ३१ ॥**

न जडस्य चैतन्याभिव्यक्तिर्युक्ता, सर्वस्य चैतन्याभिव्यक्तिप्रसङ्गादित्यस्य न चैतन्यं वायुत्वाद् बाह्यवायुवदिति ॥ ३१ ॥

इत्थं प्राणान्तःकरणपक्षं निरस्य प्रागुक्तादन्तःकरणत्रयान्मनः साधनायाह—

**इच्छाहेत्वाशु सञ्चारी बहिर्देवप्रवर्तकम् ।**
**मनो यस्याशुभावाच्च कर्तुर्न युगपन्मतिः ॥ ३२ ॥**

देवनाद् द्योतनाद् देवशब्देनेन्द्रियाण्युच्यन्ते । मतिशब्देन च तत्तदर्थविषयं ज्ञानम् । ततश्चायमर्थः—इह ह्यात्मन इन्द्रियार्थसन्निकर्षे सत्यपि सर्वाणीन्द्रियाणि युगपन्न प्रवर्तन्ते । किञ्चिदेव, न च तत्सर्वदा प्रवर्तते । ततस्तत्प्रवृत्तौ यत्करणं तदिच्छायाः सङ्कल्पात्मनोऽवधानस्य हेतुभूतं बाह्येन्द्रियप्रवर्तकं च मनो बोद्धव्यम् । अत एव च तदान्तरेण अन्तःकरणाधिष्ठानेन सुखादिसङ्कल्पेन च बाह्येन्द्रियाधिष्ठानेन च द्विधाऽधिकारीत्युक्तं श्रीमन्मतङ्गे—"द्विधाऽधिकारि तच्चित्तं भोक्तुर्भोगोपपादकम् । बहिष्करणभावेन स्वोचितेन यतः सदा ॥ इन्द्रियाणां तु सामर्थ्यं सङ्कल्पेनात्मवर्तिना । करोत्यन्तःस्थितं भूयस्ततोऽन्तःकरणं मनः ॥" (वि० १८।८१-८२) इति । श्रीमन्मृगेन्द्रेऽपि—"देवप्रवर्तकं शीघ्रचारि सङ्कल्पधर्मि च । मनः" ( वि० १२।७ ) इति । ननु स्वादुसुरभ्यभिजातमर्मरशब्दवदभिरूपदीर्घतरशष्कुल्यास्वादने युगपत् पञ्चज्ञानोत्पत्तिर्दृश्यते, तन्न, यतस्तत्राप्युत्पलपत्रशतव्यक्तिभेदवदलक्ष्यसूक्ष्मक्रमाण्येव पञ्चज्ञानान्युत्पद्यन्ते । अत एव एतदाशु संचारीत्युक्तम् ॥ ३२ ॥

एवमहङ्कारमपि साधयति—

**पञ्चकर्मकृतो वायोर्जीवनाय प्रवर्तकः ।**
**संरम्भोऽहङ्कृतेर्वृत्तिः**

जीवनाय शरीरधारणार्थं प्रणयनापनयनादिपञ्चकर्मकृतस्तत्तद्वृत्तिभेदेन प्राणापानादिसंज्ञाभाजो वायोः प्रवर्तकः संरम्भात्मको यः प्रयत्नः, सोऽहङ्कारवृत्तिरित्यहङ्कारसिद्धिः । यदुक्तं श्रीमन्मृगेन्द्रे—"अथ व्यक्तान्तराद् बुद्धेर्गर्वोऽभूत् करणं चितः । संरम्भाद् यस्य चेष्टन्ते शारीराः पञ्च वायवः ॥" ( वि० ११।२० ) इति । तत्र प्रणयनं सूक्ष्मदेहस्योर्ध्वाधोनयनं प्राणस्य व्यापारः । अपनयनमधःप्रापणं मलादेरपानस्य । अन्नादेः रसरूपस्य सर्वगात्रेषु साम्येन नयनं समानस्य । विनमनमङ्गानां व्यानस्य । उन्नयनमान्तरस्य ध्वनेर्वर्णताप्रापणमुदानस्य । पञ्चकर्मकृत इति च प्राधान्यादुक्तम् । उद्गारादिकर्तृत्वेन चास्य वायोः श्रवणात् । यदुक्तं श्रीमत्कालोत्तरे—"उद्गारे नाग इत्युक्तः कूर्म उन्मीलने स्थितः । कृकरस्तु क्षुते चैव देवदत्तो विजृम्भणे ॥ धनञ्जयः स्थितो घोषे मृतस्यापि न मुञ्चति ॥" ( १०।१२-१३ ) इति ॥

किञ्च, बुद्धिकार्यादयं घट इत्यादिग्राह्याध्यवसायरूपात् प्रत्यर्थं भिन्नरूपात् प्रत्ययादत्यन्तभेदेन भासमानः सर्वार्थग्रहणेऽप्येकरूपोऽहमिति ग्राहकाध्यवसायरूपः प्रत्ययोऽहङ्कारस्यैव वृत्तिरित्याह—

**अन्योऽर्थप्रत्ययोऽपरः ॥ ३३ ॥**

अहङ्कारवृत्त्यात्मकप्रत्ययोऽर्थप्रत्ययादन्य इत्यर्थः ॥ ३३ ॥

ननु शब्दग्रहणादयः श्रोत्रादीनामसाधारणवृत्तयः, संरम्भस्तु तेषामेवेन्द्रियाणां साधारणवृत्तिरिति किमन्येनाहङ्कारेण कल्पितेन ? अत आह—

**न देवग्रामसामान्यवृत्तिः संरम्भ इष्यते ।**
**यतोऽन्यतमवैकल्ये जायते सत्यहङ्कृतिः ॥ ३४ ॥**

साधारणकार्यकर्तॄणामेकापाये तत्क्रियानुत्पत्तेरुक्तत्वात् तद्वैकल्येऽपि जायमानोऽयं संरम्भोऽहंप्रत्ययो वाहङ्कारस्यैव कार्य इत्यर्थः ॥ ३४ ॥

अत्रैव प्रसङ्गाद् बुद्धीन्द्रियकर्मेन्द्रियतन्मात्रवर्गाणां मनःसहितानामहङ्कारादेवोत्पत्तिरिति दर्शयितुमाह—

**अन्ये चाहङ्कृतिस्कन्धास्त्रिवर्गजनकास्त्रयः ।**
**तैजसादिकनामानः क्रमशः सात्त्विकादयः ॥ ३५ ॥**

सत्त्वरजस्तमोबहुलाः सात्त्विकराजसतामसास्त्रयोऽहङ्कारस्कन्धाः क्रमात् तैजसवैकारिकभूतादिकसंज्ञाभाजो भवन्ति । सात्त्विकादित्वं चैषां सत्त्वादिगुणबाहुल्यात् ॥३५॥

नामिश्रं परिणमत इति न्यायेन गुणान्तरसंसर्गोऽप्येषां विद्यते यतः, तत्र कुतः केषामुत्पत्तिरित्यत आह—

**समनो बुद्धिदेवानां गणो यस्मात् प्रकाशकः ।**
**तस्मात् स सात्त्विकाज्जातः स्वानुरूपादहङ्कृतः ॥ ३६ ॥**

अत्र नैयायिकमतमनूद्य दूषयति—

**अन्ये तु बुद्धिदेवानां भौतिकत्वं प्रपेदिरे ।**
**विषयाणां तु नियमादसिद्धादेव हेतुतः ॥ ३७ ॥**

एवं हि ते मन्यन्ते— शब्दैकग्राहकं श्रोत्रम्, स्पर्शैकग्राहिका त्वगित्यादिनियतविषयत्वादिन्द्रियाणां तानि शब्दाद्याधाराकाशादिभूतजन्यानि । आहङ्कारिकत्वे तु तेषामेककारणत्वादेकरूपता स्यान्न तु प्रत्येकं विषयनियमसिद्धिरिति । तदिदं तैरसिद्धादेव हेतोः कल्प्यते, तेषां विषयनियमस्य प्रकृतिनियमसाधकस्याऽसिद्धेः । नियतविषयत्वे हीन्द्रियाणां तानि स्वस्वकारणान्येव भूतानि गुणसहितानि गृह्णीरन् । यावता द्रव्यान्तराणि तु तद्गुणाश्च चक्षुरादिना गृह्यन्ते ॥ ३७ ॥

तथाहि—

**चतुर्द्रव्यगतान् स्पर्शांश्चतुरो मारुता त्वचा ।**
**द्रव्याण्यनियतं चैव गृह्णाति मरुता समम् ॥ ३८ ॥**

त्वगिन्द्रियं तावद् वायव्यत्वेनाऽभ्युपगतं वायुसहितानि पृथिव्यप्तेजांसि तद्गतांश्च स्पर्शान् गृह्णाति ॥ ३८ ॥

किञ्च—

**त्रीणि द्रव्याणि चक्षुश्च तेषु रूपाणि चैव हि ।**
**अतो न नियमोऽक्षाणां विषयाणां च कल्प्यते ॥ ३९ ॥**

दूषणान्तरमाह—

**भौतिकत्वाच्च नियमे कर्मसामान्ययोः स्फुटम् ।**
**देवेभ्यो बुद्धयो न स्युः समवाये च देहिनाम् ।। ४० ।।**

भौतिकत्वसाधनायाऽक्षाणां विषयनियमेऽभ्युपगम्यमाने भूतेभ्यो गुणेभ्यश्च व्यतिरेकेण भवद्भिरभ्युपगतानां कर्मसामान्यसमवायानां पदार्थानां बुद्धयस्तेभ्यो जायमाना न भवेयुः ।। ४० ।।

यदप्युक्तमाहङ्कारिकत्वे तुल्ये कथमक्षाणां कार्यभेद इति, तदप्युत्पत्तिभेदादिक्षुविकाराणां गुडखण्डशर्करादीनामिव भविष्यतीति मत्वा श्रोत्रादीनां शब्दादिग्रहणनियामकापेक्षायामप्यस्माभिः पुरुषार्थदायकं कर्मैव नियामकमिष्यत इत्याह—

**न चाप्यहङ्कृतो जन्म नियमे कारणं मम ।**
**पुमर्थदातृ यत्कर्म कारणं तद् भवेरितम् ।। ४१ ।।**

नास्माभिरहङ्कारजत्वमेव विषयनियमे कारणमिष्यते, किन्तु शिवाधिष्ठितं कर्म चेत्यर्थः ।। ४१ ।।

कायरन्ध्रविशिष्टे नभोभागे शब्दावद्योतकेऽभ्युपगम्यमाने नासारन्ध्रादीनामपि श्रवणेन्द्रियत्वप्रसङ्गतया श्रवणाकाशस्यैव शब्दग्राहकत्वनियमे कर्मैवाऽदृष्टाख्यं नियामकं भौतिकेन्द्रियवादिनाऽपीष्यत इत्याह—

**नानाश्रुतिभयात् क्लृप्ते खे परेणापि कारणम् ।**
**शब्दभोगस्य नियमे तत्प्रदं कर्म भाषितम् ।। ४२ ।।**

खे कायाकाशे शब्दग्राहके कल्प्यमाने नानाश्रुतित्वप्रसङ्गभयाच्छ्रवणाकाशस्यैव शब्दग्रहणनियमे पुरुषार्थपदं कर्मैव कारणं भवताऽपीष्यत इत्यन्वयः ।। ४२ ।।

इत्थं कर्मेन्द्रियाणामाहङ्कारिकत्वमाह—

**राजसाद् वैकृताद् वर्गः कर्माक्षाणां तु कर्मकृत् ।**
**जातः कार्यस्य येनेह कारणानुविधायिता ।। ४३ ।।**

रजसः प्रवृत्तिहेतुत्वाद् राजसाद् वैकारिकाख्यादहङ्कारस्कन्धात् क्रियाहेतुः कर्मेन्द्रियवर्गो जातः । यस्मात् कारणानुविधायित्वं कार्ये दृश्यते ।। ४३ ।।

अत एव सत्त्वस्य प्रकाशत्वात् प्रकाशस्य बुद्धीन्द्रियवर्गस्य सात्त्विकादुत्पत्तिरुक्ता । अन्यथा भिन्नस्वभावयोरनयोर्वर्गयोरेकस्मादेवोत्पत्त्यभ्युपगमे कारणानियमलक्षणोऽनवस्थादोषः प्रसज्यत इत्याह—

**विनिवारयितुं शक्या नाव्यवस्था विकारजा ।**
**सात्त्विकात् संभवे क्लृप्ते सात्त्वराजसवर्गयोः ।। ४४ ।।**

अत एव—

**मात्रासङ्गोऽप्यहङ्कारात् वर्गद्वयविलक्षणः ।**
**प्रकाश्यस्तामसस्तस्माज्जातो भूतादिसंज्ञकात् ॥ ४५ ॥**

इदानीं बुद्धेरध्यवसायादिहेतुत्वमाह—

**प्रकाशो विषयाकारो देवद्वारो न वा क्वचित् ।**
**पुंबोधव्यक्तिभूमित्वाद् बोधो वृत्तिर्मतेर्मता ॥ ४६ ॥**

इन्द्रियद्वारोऽयं घट इत्यादिबाह्यविषयाध्यवसायरूपप्रकाशस्तदनपेक्षश्चान्तर-स्मृतिप्रतिभादिप्रकाशो वाशब्दाद् वक्ष्यमाणो भावप्रत्ययलक्षणश्च प्रकाशः पुरुषबोधस्य व्यक्तिस्थानत्वाद् बोधाख्यो मतेर्बुद्धेर्वृत्तिर्ज्ञेया। ततोऽध्यवसायस्मृत्यादिलिङ्गा बुद्धिः सिद्धयतीति। तदुक्तं श्रीमन्मृगेन्द्रे—"इति बुद्धिप्रकाशोऽयं भावप्रत्ययलक्षणः। बोध इत्युच्यते बोधव्यक्तिभूमितया पशोः॥" (वि० ११।८) इति ॥ ४६ ॥

एष च बुद्धिबोधस्त्रिविध इत्याह—

**क्लृप्तिर्मतिः स्मृतिश्चेति**

तत्र क्लृप्तिः कल्पनं प्रतिभेत्यर्थः। मतिश्च मननं ज्ञानमध्यवसाय इति यावत् ॥

इत्थमिच्छादिकार्यभेदादन्तःकरणभेदः सिद्ध इत्युपसंहरति—

**जाता भिन्नार्थवाचकाः ।**
**इच्छासंरम्भबोधाख्यास्तेनान्तःकरण त्रिधा ॥ ४७ ॥**

स्मृत्यादीनामवान्तरभेदेऽपि बोधकत्वेनैकार्थत्वाद् बुद्धिवृत्तित्वम्, इच्छादयस्तु वृत्तयो भिन्नार्थत्वाद् भिन्नकारणा इति भावः ॥ ४७ ॥

ननु पृथिव्यादीनां विषयत्वेन भोग्यत्वादिन्द्रियाणां च तद्ग्रहणहेतुत्वादस्तु भोगसाधनता, बुद्धेस्तु इन्द्रियार्थसन्निकर्षादात्मन्युत्पद्यमानायाः संवेदनरूपत्वान्न भोग-साधनता, अपि त्वात्मगुणतैवेति नैयायिकादयः, अत आह—

**तुल्ये गुणान्वितत्वे तु संवेद्यं किञ्चिदिष्यते ।**
**बुद्धिश्चापि ह्यसंवेद्या धन्या तार्किकता तव ॥ ४८ ॥**

अयमभिप्रायः—द्विविधोऽत्र बोधोऽध्यवसायात्मकोऽनध्यवसायात्मकश्च। तत्र योऽध्य-वसायात्मकः, स सर्वदा ग्राहकरूपेणैव भासमानत्वादात्मनः स्वभाव एव। यस्त्वनध्यव-सायरूपः, स उत्पत्त्यपवर्गयोगित्वेन भासमानत्वान्न पुंसः स्वभावः, नित्यस्यानित्य-स्वभावत्वायोगात्, तत्स्वभावत्वे चानित्यत्वप्रसङ्गात्। न च नित्योऽनुभूयते, ततो न पुंसः स्वभाव इति। यस्य सः स्वभावः सा बुद्धिर्भावानामध्यवसेयतोत्पादिका धर्मज्ञाना-द्यष्टगुणा बुद्धिरिति। ततश्च विषयाध्यवसायरूपत्वाद् भावप्रत्ययात्मना सत्त्वादिगुणत्रया-न्वितेन स्वरूपेण भोग्यत्वाच्च बुद्धेरपि संवेद्यतैव, न त्वात्मगुणत्वम्। तदुक्तं तत्त्व-

संग्रहे—"बुद्धिर्विषयाकारा सुखादिरूपा समासतो भोग्यम्" (श्लो० १३) इति। प्रयोगश्चात्र भवति—बुद्धिरपि संवेद्यैव, सत्त्वादिगुणान्वयात्, पृथिव्यादिवदिति। करणत्वं चेन्द्रियवदस्या विषयाध्यवसायहेतुत्वात् सिद्धमित्युक्तम् ॥ ४८ ॥

ननु धर्मादीनां भावानामप्यस्माभिरात्मगुणत्वमिष्यते, तदयुक्तम्, तेषामात्म-संस्कारकत्वायोगात्। तथाहि—ज्योतिष्टोमादिकर्मसंस्कारस्तावन्नात्मनि संभवति, अविकारित्वात्, कर्मणां च कृष्यादीनामात्मसंस्कारत्वादृष्टेः, अपि तु जड एव। यत्र तानि संस्कारं कुर्वन्ति सा बुद्धिः। एवं ज्ञानादिसंस्कारेऽपि वाच्यम्, तद्बलादेव स्वप्नस्मृति-प्रतिभादावसत्यप्यर्थे उल्लेखो दृश्यते यतः, अतश्च—

**अन्तर्बहिश्च करणं साक्षाद् भोगस्य साधनम्।**
**भोग्यं विना न भोगोऽस्तीत्यतो भोगस्य साधनम् ॥ ४९ ॥**

आन्तरो बाह्यश्च करणग्रामो भोगस्य सुखदुःखादिसंवेदनात्मनः साक्षात् करणम्। यदुक्तं श्रीमत्स्वायम्भुवे—"भोगोऽस्य वेदना पुंसः सुखदुःखादिलक्षणा" इति। स च भोगः स्रक्चन्दनादिभोग्यं विना न स्यादिति तद्ग्रहणपूर्वकस्य सुखाद्यध्यवसायस्यापि साधनमिष्यते ॥ ४९ ॥

एतदेव दृष्टान्तेन प्रकटयति—

**सैनिकान् विजयायेह प्रयुङ्क्ते नृपतिर्यथा।**
**प्रयुङ्क्ते महदादीनि बोधाद्यर्थमणुस्तथा ॥ ५० ॥**
**सैनिकस्थे जये राज्ञः कर्तृत्वं तु यथा तथा।**
**बुद्ध्यादिसंस्थे बोधादौ पुंसः कर्तृत्वमिष्यते ॥ ५१ ॥**
**स्वात्मार्थं सैनिकानां तु विजयो नेति ते यथा।**
**साधनं विजयस्येष्टास्तथैव महदादयः ॥ ५२ ॥**
**तेषामपि हि बोधाद्यं स्वार्थं नेति विनिश्चितम्।**

करणानामचेतनत्वात् तद्वृत्तीनां न स्वार्थत्वम्, अपि तु चेतनपुरुषार्थतैवेति भावः ॥ ५०-५२ ॥

**ततो बोधादिवृत्तीनां साधनं महदादयः ॥ ५३ ॥**

अधुना भोग्यं विभजति—

**मोहदुःखसुखाकारो रूपाख्यस्तद्भवो द्विधा।**
**बौद्धो बोधः परं भोग्यं मायादि च तदर्थतः ॥ ५४ ॥**

उद्भूतगुणत्वेन मोहादिहेतुत्वान्मोहाद्याकारो रूपसंज्ञो धर्मादिभाववर्गः, तदुपादानः सिद्ध्यादिप्रत्ययवर्गश्च द्विविधोऽयं बौद्धो बोधः पुंसः परमव्यवहितं भोग्यम्। मायादिकं भुवनादिवस्तु तदन्वयतस्तदर्थत्वाद्भोगाधिकरणत्वात् परम्परया भोग्यमिति ॥ ५४ ॥

कोऽसौ रूपाख्य इत्यत आह—

**अधर्मादित्रयं रागो धर्मादि च चतुष्टयम् ।**
**तमोरजःसत्त्वमयं रूपं तत्कर्मजं मतौ ।। ५५ ।।**

अधर्माज्ञानानैश्वर्याख्यं रूपं तामसम्, रागस्त्ववैराग्याख्यं राजसम्, धर्मज्ञान-वैराग्यैश्वर्याख्यं सात्त्विकमित्येवमष्टविधं रूपं बुद्धौ गुणत्वेन स्थितं कर्मतश्चोपादाना-ज्जातम् । तत्त्वभुवनशरीरादि तु कर्मणैव सहकारिणा मायाख्यादुपादानात् साक्षात् परम्परया चोत्पन्नमित्युक्तं श्रीमत्स्वायम्भुवादौ ॥ ५५ ॥

एते च—

**अत्यन्तोच्छेदतो मुक्तावभिव्यक्तेश्च सर्वतः ।**
**पटादिबोधावैतत्यादात्मनो न गुणा गुणाः ।। ५६ ।।**

यतो धर्मादीनां मोक्षेऽत्यन्तोच्छेदः परैरपीष्यते, यतश्चात्मस्वभावस्य ज्ञानक्रिया-त्मनो नित्यस्य व्यापकस्य मुक्तौ सर्वतो व्यापकत्वेनाभिव्यक्तिः श्रूयते, यस्माच्च पटादि-ज्ञानानामध्यवसायरूपाणामवैतत्यमव्यापकत्वं दृश्यते, तस्मादनित्या अव्यापकाश्चाधर्मा-दयो नित्यस्य व्यापकस्यात्मनो गुणा भवितुं नार्हन्ति, तत्समवाये तस्य परिणामित्वादि-दोषप्रसङ्गात् । एते चाधर्मादयः सांसिद्धिकवैनयिकप्राकृतभेदात् त्रिविधा आत्मन उत्पद्यन्ते । यदुक्तं श्रीमन्मृगेन्द्रे—"सांसिद्धिका वैनयिकाः प्राकृताश्च भवन्त्यणोः ॥ विशिष्टधर्मसंस्कारसमुद्दीपितचेतसाम् । गुणः सांसिद्धिको भाति देहापायेऽपि पूर्ववत् ॥ लोकधीगुरुशास्त्रेभ्यो भाति वैनयिको गुणः । समर्जितो वैनयिको मनोवाक्तनुचेष्टया ॥ प्राकृतो देहसंयोगे व्यक्तः स्वप्नादिबोधवत् ।" ( वि० १०।२६-२९ ) इति ॥ ५६ ॥

अतश्चैवं त्रिविधेभ्यो धर्मादिभ्यः फलभेदानाह—

**एषामधोगतिर्बन्धो विघातः संसृतिः क्रमात् ।**
**स्वर्गो मुक्तिः प्रकृतिभावो विघातश्च फलानि च ।। ५७ ।।**
**भवः स्थानापराधोऽथ विघ्नो भोगानतिक्रमः ।**
**वश्योर्ध्वस्थितिः सद्दृष्टिभृत्त्वं भोगास्पृहा फलम् ।। ५८ ।।**
**स्वाचिन्तितेषु वा विघ्नो रूपे सांसिद्धिके फलम् ।**
**विनयप्राकृते रूपे पूर्वोक्तफलसंग्रहः ।। ५९ ।।**

वैनयिकेभ्यः प्राकृतेभ्यश्चाधर्मादिभ्यः क्रमादधोगत्यादीनि फलानि भवन्ति । सांसिद्धिकेभ्यस्तु भवादीनि । तत्राऽधोगतिर्नरकप्राप्तिः । बन्धोऽनात्मन्यात्माभिमानि-तादिः । संसृतिस्तिर्यगादियोनिप्राप्तिः । मुक्तिश्च दर्शनान्तरमोक्षः, परमुक्तेर्दीक्षाफलत्वेन मोक्षकारिकासु वक्ष्यमाणत्वात् । प्रकृतिभावः प्रकृतिलयः । भवः संसारः । स्थानापराधः स्वस्थानान्न्यक्कारः । भोगानतिक्रमो भोगेच्छा । वश्योर्ध्वस्थितिः वश्यानां स्वपदाधः-स्थानिनामधिष्ठानम् । सद्दृष्टिभृत्त्वं तत्तद्विषयसम्यग्ज्ञानयोगः । शेषं सुगमम् ॥५७-५९॥

इत्थं भावान् विचार्य प्रत्ययान् व्याचष्टे—

**व्यक्ताव्यक्तज्ञसंबुद्धिः सिद्धिः सम्प्रति सिद्धयति ।**
**रागमात्रानुलिप्ताङ्गाद् धर्मादिसमुदायतः ॥ ६० ॥**

इह हि बुद्धौ वासनात्वेन स्थिता धर्मादयोऽष्टौ भावा उच्यन्ते । यदाहुः—"भावयन्ति यतो लिङ्गं तेन भावाः प्रकीर्तिताः"(पौ०) इति । त एव प्रकर्षावस्थां प्राप्ताः स्थूलेन रूपेण भोग्यदशामापन्नाः संसारिणां प्रत्यायनात् प्रत्ययाः कथ्यन्ते । तदुक्तम्—"प्रत्याययन्ति क्षेत्रज्ञं प्रत्ययास्तेन कीर्तिताः" (पौ०) इति । अतश्च [ वैराग्येण राजसेनेषद्युक्तात् [T] सात्त्विकाद् धर्मादिभावचतुष्टयात् सिद्धिरुत्पद्यते । सा च व्यक्तस्य गुणादेरव्यक्तस्य च प्रधानस्य ज्ञस्य च पुरुषस्य संबुद्धिस्तद्विषयं ज्ञानमेव प्रकर्षावस्थां प्राप्ता सिद्धिरुच्यते । उक्तं च—"पुंप्रकृत्यादिविषया बुद्धिर्या सिद्धिरत्र सा" (मृ० वि० ११।२) इति । तत्र व्यक्ताव्यक्तविषये बुद्धिबोधे तत्प्रकाशकत्वेनात्यन्तं विविक्तः पुरुषः स्वयमेवावभासते, यदाहुः—"तदा द्रष्टुः स्वरूपेऽवस्थानम्" (यो० सू० १।३) इति; न तु बुद्धिप्रकाश्यतया, भोग्यत्वादिदोषप्रसङ्गात् । यद्वक्ष्यति मोक्षकारिकासु—"परिणामी पुमान् भोग्यः प्राप्तस्तद्गोचरो यदि" ( श्लो० १०५ ) इति ॥ ६० ॥

**धर्मादिरूपसंपृक्ता पापादित्रितयोद्भवा ।**
**तुष्टिः कृतार्थविज्ञानमनयाऽऽत्मग्रहे सति ॥ ६१ ॥**

सात्त्विकैर्धर्मादिभिरीषत्संपृक्तादधर्मादित्रयात् तामसात् तुष्टिरुत्पद्यते । सा च तुष्टिः प्रागुक्तया भूततन्मात्रादिज्ञानरूपया सिद्धया तत्तद्दर्शनोक्तेन स्वरूपेणात्मनो ग्रहणे सत्यधस्तनविषयाद् वैराग्यादकृतार्थस्यापि कृतार्थोऽस्मीत्युत्पद्यमाना बुद्धिस्तुष्टिरुच्यते । यच्छ्रूयते—"तुष्टिर्नुरकृतार्थस्य कृतार्थोऽस्मीति या मतिः" ( मृ० वि० ११।२ ) इति ॥ ६१ ॥

**अधर्मादित्रयाज्जाता रागलेशानुरञ्जितात् ।**
**अशक्तिर्दैववैकल्यादसामर्थ्यं शुभादिषु ॥ ६२ ॥**

शुभशब्देनात्रोपस्थेन्द्रियव्यापार आह्लाद उच्यते । तदादिषु इन्द्रियवैकल्यात् तदुपलक्षितशरीरवैकल्याद्वा क्लैब्यबाधिर्यादिरूपं यदसामर्थ्यम्, सेयमशक्तिस्तामसाद् वर्गाद् राजसेनेषत्संपृक्ताद् भवति । उक्तं च—"अशक्तिरप्रवृत्तत्वात् तामसी दुःखभावतः । राजस्यपि गुणो दृष्टः कार्ये कारणसंश्रयः ॥' ( मृ० वि० ११।६ ) इति ॥ ६२ ॥

**तस्मादेवायथावस्तु विज्ञानं वीतरागतः ।**
**ईषद् धर्मादिसंपृक्तादभिव्यक्तो विपर्ययः ॥ ६३ ॥**

तस्मात् तामसवर्गाद् राजसहीनात् सात्त्विकतेषद्युक्तादयथार्थग्रहणरूपो विपर्ययस्तमोमोहमहामोहतामिस्रान्धतामिस्रलक्षणो जायते । यच्छ्रूयते—"किञ्चित्सामान्यतोऽन्यत्र मतिरन्या विपर्ययः" ( मृ० वि० ११।३ ) इति ॥ ६३ ॥

इत्थमतिसंक्षेपेणोक्तं भावप्रत्ययात्मकं बुद्धिबोधमुपसंहरति—

**लेशोक्तो बुद्धिधर्मोऽयम्**

एषां च भावप्रत्ययानां प्रपञ्चः श्रीमन्मतङ्गादौ विस्तरेण दर्शितः, प्रकाशितश्चास्माभिर्मृगेन्द्रवृत्तिदीपिकायामिति तत एवावधार्यः । ग्रन्थविस्तरभयात्तु नात्र लिख्यते ॥

अयं च—

**चेतनेनोपभुज्यते ।**

भोग्यत्वादिति शेषः ॥

भोग्यत्वमेव साधयति—

**भोग्यत्वं चास्य संसिद्धं येनोत्पन्नोऽनुभूयते ॥ ६४ ॥**
**स चाप्यनुभवो भोगो भोक्तारं गमयत्यलम् ।**

अस्य बौद्धस्य ज्ञानस्योत्पत्त्यपवर्गयोगित्वेन भोग्यत्वमेव, न तु भोक्तृत्वम्, तस्य सर्वदा ग्राहकरूपेण स्थिरस्यैव स्वसंवेदनसिद्धत्वादित्युक्तम् ॥ ६४ ॥

अतश्च—

**साधयित्रा विना यस्मात् सिद्धिर्नेह समीहिता ॥ ६५ ॥**

इह हि बुद्धिचैतन्यवादिभिर्बौद्धैर्भोक्तृत्वेनाभ्युपगतस्यास्य बौद्धस्य ज्ञानस्यास्थिरत्वेन घटादिवदचेतनत्वात् कालान्तरभाविकर्मफलभोक्तृत्वासंभवादुक्तवद्भोग्यत्वाच्च स तत्तद्विषयसुखाद्यनुभवरूपो भोग एव भोक्तारं साधयति । यतो भोगक्रियासिद्धिर्भोक्तारं चेष्टमानमन्तरेण न संभवति, भोगस्यापि क्रियात्वात् । तत्कर्तृत्वेनाप्यात्मसिद्धिरिति भावः । समीहिता, अभीष्टेत्यर्थः ॥ ६५ ॥

अत्र चोदयति—

**न विना दृष्टसंवादमनुमानस्य मानता ।**

इह हि धूमेनानुमितोऽग्निरासीदता प्रत्यक्षीक्रियत इति तस्यानुमानस्य प्रमाणान्तरसंवादो दृश्यते । अत एव तस्य प्रामाण्यम् ॥

चक्रमूर्धादौ धूमादेरिव साध्यव्यभिचारादर्शनात् ततश्चात्राप्यनुभवात्मनो ज्ञानस्यैव दर्शनाद् ज्ञातृज्ञानयोराकारभेदानुपलम्भाद् भोगाद् भोक्त्रनुमानस्यापि व्यभिचारशङ्कया प्रमाणत्वाभावान्न भोक्तुर्ज्ञानव्यतिरिक्तस्यात्मनः सिद्धिरिति सौगताः । यदाहुः—"एकमेवेदं संविद्रूपं हर्षविषादाद्यनेकाकारविवर्तं पश्यामः । तत्र यथेष्टं संज्ञाः क्रियन्ताम्" इति । तदयुक्तमित्याह—

**दृष्टस्य केन संवादो येन तस्यास्ति मानता ॥ ६६ ॥**

अयमभिप्रायः—भोगस्य विषयसंवेदनात्मनोऽनुभवस्य बाह्यविषयासन्निधानेऽपि सुषुप्त्यादावान्तरदेहस्पर्शमात्रविषयत्वेन स्थिरतयैव भासमानत्वात् स्थिरत्वेन स्वसंवेदन-प्रत्यक्षसिद्धो ग्राहकरूपो आत्मेत्युक्तम्। न च ज्ञानस्य क्षणिकस्य स्वात्मनि क्रियाविरोधेन स्थैर्याध्यारोपो युक्तः। यदप्युक्तम्—अक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् यत्सत् तत्सर्वं क्षणिकमिति, तदपि न, अक्षणिकस्यैव मण्यादेः क्रमेण घटादीन् भावानव-भासयतो युगपच्चैकगृहगतांस्तांस्तानर्थान् प्रकाशयतोऽनुभवसिद्धत्वात्। क्षणिकस्य चोत्पत्तिकाल एव नश्यतोऽनेकक्षणनिर्वर्त्यक्रियानुष्ठानाक्षमत्वादित्यादि विस्तरेण श्रीम-न्मतङ्गवृत्त्यादावाचार्यैः साधितमिति ॥ ६६ ॥

ततश्चात्मनः स्वसंवेदनसिद्धत्वेऽप्यनुमेयत्वमभ्युपगम्योच्यते—

**नेह प्रमाणसंवादः प्रत्यक्षस्य प्रमाणतः।**

नात्र प्रमाणस्य प्रमाणान्तरसंवादापेक्षा, प्रत्यक्षस्य प्रमाणान्तरसंवादाभावेऽप्यन-धिगतविषयज्ञानजनकत्वेन प्रामाण्यात्। तदाहुः—"अनधिगतार्थगन्तृ प्रमाणम्" इति।

कथं पुनश्चक्रमूर्धादौ व्यभिचारोऽत आह—

**अन्वयव्यतिरेकाभ्यां व्यभिचारनिराकृतिः ॥ ६७ ॥**

यस्य धूमादेर्येनाऽविनाभावलक्षणः संबन्धोऽन्वयव्यतिरेकाभ्यां निश्चितः, न तस्य तत्र व्यभिचारो दृश्यते। सुविवेचितस्य धूमस्याऽग्नाविव। चक्रमूर्धादिजन्यस्य तु स्वरू-पाविवेकेन धूमत्वभ्रान्तिः। ततश्चात्रापि क्रियायाः सर्वत्र कर्तृपूर्वकत्वदर्शनाद् भोग-क्रियया भोक्ताऽनुमीयते ॥ ६७ ॥

भवद्भिरपि स्वदेहे बुद्धिपूर्वकत्वेन सिद्धात् कार्यादिव्यवहारात् परशरीरे बुद्धिः प्रमाणान्तरसंवादं विनाऽप्यनुमानेनाऽनुमीयत इत्याह—

**देहधर्मस्य मानत्वे कारणं बुद्धिरिष्यते।**

देहधर्मस्य चेष्टाद्यात्मनो मानत्वे हेतुत्वे सति तेन परशरीरे तद्धेतुर्बुद्धिः साध्यत इत्यर्थः। यदाहुः—"बुद्धिपूर्वां क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्ग्रहात्। ज्ञायते धीः" इति ॥

अतश्च रूपादिदर्शनान्यथानुपपत्त्या चक्षुरादीन्द्रियवद् भोगान्यथानुपपत्त्या भोक्तृ-सिद्धिरित्यभिप्रायेणाह—

**अस्मात् सामान्यतो दृष्टादन्यस्यापि प्रमाणता ॥ ६८ ॥**
**अनुमानस्य संसिद्धा**

यदुक्तं चार्वाकैः—अस्तु भोक्ता। स तु परिदृश्यमानपृथिव्यादिचतुर्भूतविकार-समाहारात्मकः काय एव। तस्यैव परिणामविशेषेण किण्वादिद्रव्यविकारेण मदशक्त्यभि-व्यक्तिवच्चैतन्याभिव्यक्तिः, प्राणादिवायुबलेन भोगादिक्रियादर्शनाच्च। न तु ततोऽन्यः, तस्य प्रत्यक्षेणादर्शनात्। यदाहुः—"दृष्टे संभवत्यदृष्टपरिकल्पना न न्याय्या" इति।

तदपि निराकृतमित्याह—

**कारणादत एव हि ।**

**चेतनो बुद्धिबोधस्य भोक्ता मानसमर्थितः ॥ ६९ ॥**

**पृथिव्यादिसमाहारो भवत्विति न युक्तिमत् ।**

अयमभिप्रायः—यतः शरीरस्याप्यन्तः शूलाद्यात्मना बहिश्च मृदुकर्कशादिना स्पर्शेन भोग्यत्वदर्शनाद् घटादिवच्चेतनत्वं न युक्तम्, ततस्तस्यापि भोक्तृत्वेनाऽऽत्मा सिद्ध इति ॥ ६९ ॥

चेतनत्वं चास्य न प्रमाणोपपन्नमित्याह—

**चैतन्यं हि त्वया तस्य केन मानेन निश्चितम् ॥ ७० ॥**

ननु शुक्लशोणितात्मकदेहारम्भकभूतसद्भाव एव चैतन्यदर्शनात् तदभावे चाऽदर्शनाद् देहात्मकमेव चैतन्यमत आह—

**सति भावेऽप्यनैकान्तः**

शवशरीरे गर्भादौ वा देहात्मकभूतसद्भावेऽपि चैतन्याऽदर्शनान्न देहात्मकं चैतन्यम्, ततश्च शरीराऽऽत्मवादो न प्रमाणोपपन्न इत्याह—

**तस्माद् वायसवाशितम् ।**

भोग्यत्वाच्चास्याऽचेतनत्वमित्याह—

**अनभिव्यक्तचैतन्या दृष्टा भोग्या गुडादयः ॥ ७१ ॥**

**जीवच्छायोपभोग्यत्वादस्तु तुल्यो गुडादिभिः ।**

गुडादयो हि जीवस्याऽऽत्मनश्छाययाऽनुभवात्मना संविदा भोग्यत्वेन ग्राह्यतया विषयीक्रियमाणाः कदाचिदप्यभिव्यक्तचेतना न दृष्टाः । ततः कायाऽऽत्मापि भूतसमाहारः प्रोक्तवद्ग्राह्यत्वेन भोग्यतया विषयीकरणादचेतन एवेति न तस्य भोक्तृत्वमुपपद्यते । किञ्च, देहस्यैव चेतनत्वे तस्याऽसकृत्परिणामेन विनाशाद् बाल्यावस्थाऽनुभूतं वृद्धावस्थायां स्मर्यमाणं नोपपद्यत इत्यादि विस्तरेण निराकृतोऽयं पक्षोऽस्माभिः श्रीमन्मृगेन्द्रवृत्तिदीपिकायाम् ॥ ७१ ॥

ननु शरीरव्यतिरिक्तानामिन्द्रियाणामेव भोक्तृत्वमस्तु, नान्यस्येतीन्द्रियचैतनिकाः, तदयुक्तमित्याह—

**भोग्यत्वकरणत्वाभ्यामिन्द्रियाणां विनिश्चितम् ॥ ७२ ॥**

**अचैतन्यमतो भोक्ता पुरुषश्चित्स्वभावकः ।**

उक्तवदिन्द्रियाणामपि भोगार्थतया भोग्यत्वात् करणत्वाच्छस्त्रादिवदचेतनत्वमनिवार्यमेव, अतो नैषां कर्तृत्वम्, अपि तु चित्स्वभावस्यात्मन एव । तस्यैव हि सर्वान्यकारकप्रवृत्तिनिवृत्तिहेतुत्वेन कर्तृत्वं युक्तम् । यदाहुः—"प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः । अप्रवृत्तः प्रवृत्तो वा स कर्ता नाम कारकः ॥" इति ॥ ७२ ॥

**भोक्तुर्भोगश्चितेर्व्यक्तिर्भोग्यच्छायानुरञ्जिता ।। ७३ ।।**

भोग्याया बुद्धेः सुखादिरूपायाश्छायया आकारेणानुरञ्जिता चैतन्यव्यक्तिरेव भोक्तुर्भोगः । यदुक्तं श्रीमत्स्वायंभुवे—"भोगोऽस्य वेदना पुंसः सुखदुःखादिलक्षणा" इति ॥ ७३ ॥

तदानीं च—

**अचितश्चितिसंबन्धाद् भोग्यमाभाति चेतनम् ।**

अचेतनमपि बुद्ध्यात्मकं भोग्यं तस्यात्मनश्चैतन्यसंश्लेषाच्चेतनवदाभासते । तदुक्तं सांख्यैरपि—"अचेतनं चेतनावदिव लिङ्गम्" ( सां० का० २० ) इति ॥

एवं च—

**भोग्यद्वारेण पाशानां पशूनां च परस्परम् ।। ७४ ।।**
**चेतनाचेतनच्छायानुषङ्गो भासते भृशम् ।**

भोग्यं हि वस्तु चित्ताधिष्ठितं बुद्धीन्द्रियवृन्दमात्मनो विषयत्वेनोपस्थापयति । तच्च बुद्ध्याऽध्यवसितं पुरुषो गृह्णाति । यदाहुः[1]—"बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयति" इति । ततश्च प्रकाशरूपत्वादादर्शस्थानीयेन भोगाख्येन बुद्धिबोधात्मना द्वारेणात्मनां भोक्तृणां पाशानां च विषयरूपेण परिणतानां भोग्यानां चेतनाचेतनरूपयोश्छाययोः प्रतिबिम्बितयोराकारानुषङ्गः संश्लेषमात्रं भृशमत्यर्थमेकाकारतया भासते । अत एवात्रा-नात्मादौ आत्मादिभ्रमः संसारिणाम् । तद्विवेकज्ञाने तु तेषां प्रकृतिलय इत्युक्तम् । स एव च सांख्यानां मोक्षः ॥ ७४ ॥

अतश्च—

**भोग्ये भोगः प्रभोश्छाया यथा चन्द्रमसो जले ।। ७५ ।।**

प्रभोर्व्यापकस्यात्मनः स एव भोग्यविषयो भोगः, या तदध्यवसायात्मनि बुद्धिबोधे चन्द्रमस इव जले छायाविशिष्टा चैतन्याभिव्यक्तिः । चन्द्रबिम्बस्य जडत्वात् स्थूलत्वाच्च विशिष्टस्वरूपाभिव्यक्तिमात्र एवात्र दृष्टान्तत्वम् । अतो भोक्तृत्वाच्चेतनस्य पुरुषस्यैव कर्तृत्वं नाचेतनानां भोग्यानां बुद्ध्यादीनामिति मन्तव्यम् ॥ ७५ ॥

ननु क्रियावेशो हि कर्तृत्वम् । स यदि पुंसः स्यात् परिणामिता भवेत् । पुरुषो हि निर्विकारः, ततो नास्य कर्तृत्वम्, किन्तु प्रकृतेरेव । सा हि विवेकज्ञानात् पूर्वं महदा-दिरूपेण भोग्यतया तस्यात्मानं दर्शयतीति संसार इत्युच्यते । तत्संभवे तु तस्मान्नि-वर्तमाना मुक्तिशब्दाभिधेयेति सांख्याः । यदुक्तं तैः—"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा रङ्गात् । पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥" (सां० का० ५९) इति । अत आह—

१. पूर्वतनी ७८ पृष्ठस्था द्वितीया टिप्पणी द्रष्टव्या ।

**परिणामभयात् पुंसि भोगे चानीप्सिते सति ।**
**अविशेषो दुरापोहः प्रसक्तो भोक्तृमुक्तयोः ।। ७६ ।।**

अयमभिप्रायः—नात्र क्रियावेशः कर्तृत्वम्, अपि तु क्रियायां शक्तत्वमेव। तथाहि—अयस्कान्तसन्निधानादयस इवात्मनः सन्निधेः शरीरादेरेव स्पन्दादिरूपः क्रियावेशो दृश्यते। ततश्च बुद्ध्यादिविषयीकरणरूपे भोगे पुंसो न परिणामप्रसङ्गः, किन्तु तत्परत्वेन तद्विषयीकरणमेव। भवत्पक्षे तु पुंसो निर्मलत्वेन तत्परत्वेऽप्यनभ्युपगम्यमाने भोक्तृमुक्तयोरविशेषो दुर्निवारः प्रसज्यते, उभयोरप्यनपेक्षत्वेन तुल्यत्वात् ॥ ७६ ॥

ननु परार्थप्रवृत्ता प्रकृतिरेव तदर्थं प्रवर्तत इत्युक्तम्, यदाहुः—"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं यथा प्रवृत्तिः प्रधानस्य ॥" (सां० का० ५७) इति, अत आह—

**पुमर्थाय च पाशानां प्रवृत्तिर्विनिवारिता ।**

अयमभिप्रायः—अचेतनत्वादेव प्रधानस्य पुरुषं प्रति प्रवृत्तिर्न युक्ता, क्षीरादेरपि चेतनगवाद्यधिष्ठितस्यैव प्रवृत्तिदृष्टेः। वायुजलादीनामपि पक्षीकृतत्वाच्च तत्प्रवृत्त्यभ्युपगमेऽपि न निरपेक्षं प्रति प्रवृत्तिर्युक्ता। निरपेक्षं प्रति प्रवृत्तौ वा मुक्तस्यापि प्रवर्तते। ततश्च बद्धात्मनि साभिलाषत्वे भोगार्थं समुद्योगादात्मनि विकारे चाऽनभ्युपगम्यमाने तस्मिन् भोगोऽपि न युक्तिमानित्याह—

**भोक्तर्यविकृते भोगो मुक्तवन्नोपपद्यते ।। ७७ ।।**

नन्वविवेक एव प्रधानप्रवृत्तेर्हेतुः। प्रकृतिपुरुषविवेकज्ञाने तु तं प्रत्युपरताधिकारत्वान्न प्रवर्तते। अतो न बद्धमुक्तयोरविशेषः। यदाहुः—"प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति। या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥" (सां० का० ६१) इति; तदयुक्तम्, भवत्पक्षे पुंसो निर्मलत्वेनाविवेकायोगात्, निर्हेतुके चाविवेके सर्वदा विवेकाभावप्रसङ्गाच्च। तस्मादविवेकान्यथानुपपत्त्यापि तस्य समलत्वसरागताद्यभ्युपगन्तव्यमिति वक्ष्यामः ॥ ७७ ॥

यद्येवमात्मनः समलत्वेनाज्ञस्वभावत्वे शरीरादियोगेन ज्ञातृतया विकारे चाभ्युपगम्यमाने स्वभावान्तरयोगादनित्यत्वप्रसङ्ग इति परमतमाशङ्कते—

**विकारित्वादनित्यश्चेत्**

भोक्तेति शेषः।

परिहरति—

**मायासाध्यं न मन्यते ।**

मायया स्वकार्यैः सूक्ष्मबाह्यशरीरद्वारेण क्रियमाणं विशेषं न जानीते भवानिति शेषः। ततो नानित्यत्वादिदोष इत्यभिप्रायः ॥

कथमित्यत आह—

**स्वरूपव्यक्तिलाभाच्च न विकारो न नाशिता ।। ७८ ।।**

नास्माभिर्नैयायिकादिवज्जडरूप एवाऽऽत्मा इष्यते, अपि तु ज्ञस्वभाव एव । स तु तस्य स्वभावः शरीरादियोगं विनाऽनभिव्यक्तेरनादिना केनाऽपि प्रतिबद्धोऽवसीयते, स च मल एवेति वक्ष्यामः । ततश्च मायया कलादिभिः स्वकार्यैर्मलव्युदासेनैकदेशस्वरूपव्यक्तिरेवात्मनः क्रियते । मलपरिपाके तु दीक्षाख्यया शिवशक्त्या सर्वविषयोऽभिव्यज्यते । ततो नास्य विकारो विनाशिता चेति ।। ७८ ।।

अस्य च—

**भोग्योपधानरागश्च स्वच्छत्वान्नोक्तकारणात् ।**

अतो भोग्यविषयोपधानजनितो रागोऽपि सुखदुःखमोहाकारः प्रकाशोऽस्य स्फटिकस्येव स्वच्छत्वात् प्रकाशरूपत्वात्, न तु पूर्वोक्तात् परिणामाख्यात् कारणात् । स च विषयोपरागोऽप्यस्य तत्परतया तद्विषयीकरणमेवेत्युक्तम् ।।

ततो भोग्यस्य शरीरस्यासकृत्परिणामेऽपि भोक्तुर्न परिणाम इत्याह—

**शरीरपरिणामेन परिणामी न पुद्गलः ।। ७९ ।।**
**स यतोऽचेतनो भोग्यो बुद्धिवत् परिणामतः ।**

तस्यापि परिणामाभ्युपगमे बुद्ध्यादिवद्भोग्यत्वमचेतनत्वं च स्यादित्यर्थः ।।७९।।

तत्र परमतमुपन्यस्य दूषयति—

**चैतन्यं हि गुणो ज्ञानं समवायोऽथ तेन वा ।। ८० ।।**
**स्वरूपं पुरुषस्येति नान्यदस्य न युक्तिमत् ।**

एवं हि नैयायिकादयो मन्यन्ते—जडस्वभाव एवाऽऽत्मा, तस्य मनःसंयोगाद् गुणतया ज्ञानं समवेतमुत्पद्यते । तदेव च तस्य चैतन्यम्, नान्यज्ज्ञस्वभावत्वमिति । तदयुक्तम्, जडत्वे तस्य घटादिवज्ज्ञानसमवायायोगादिति ।। ८० ।।

नन्वत्र नियामकं कर्मादृष्टाख्यमस्ति, यत्कर्मसमानाधिकरणे पुरुष एव ज्ञानं समवेतमुत्पद्यते, नान्यत्र तद्व्यधिकरणे घटादाविति, अत आह—

**अज्ञे नर्येव विज्ञानं नान्यत्रेति नियामकम् ।। ८१ ।।**
**कर्माऽपि नोपपन्नं तु तदन्यत्र स्थितं यतः ।**

कर्मणः कृष्यादेरिव प्रकृतिसंस्कारत्वमेव नात्मसंस्कारत्वम्, विकारित्वप्रसङ्गादित्युक्तम् । ततस्तदपि नात्र नियामकं भवितुमर्हति । ततश्चैतन्यसमवायाच्चित्स्वभाव एवात्मा सिद्ध इत्याह—

**मोहो मोहस्वभावेभ्यो यद्वन्नार्थान्तरं बुधाः ।। ८२ ।।**

**चैतन्येभ्यः पदार्थेभ्यस्तद्भिन्नार्थान्तरं चितिः ।**

चैतन्यात्मनो ज्ञानस्यात्मधर्मत्वाद् धर्मनाशे धर्मिणोऽपि तदव्यतिरेकान्नाशः प्रसज्यत इति सर्वदा चेतनस्वभाव एवात्माभ्युपगन्तव्यः । तस्य च मलावृतत्वान्मनो-बुद्ध्यादयस्तदभिव्यञ्जकतया सिद्धा इत्युक्तम् । अस्य च भोगक्रियायामुपकारकतया सहकारिभूतं प्रयोक्तृकरणरञ्जकरूपं कलाविद्यारागाख्यं कञ्चुकत्रयं प्रकृतिसाधनात् पश्चादभिधास्यत इत्याह—

**प्रयोक्तृकरणं भोग्ये रञ्जकं चोपरि त्रयम् ॥ ८३ ॥**
**अस्य भोगक्रियाकर्तुः प्रकृतेरुपदेक्ष्यते ।**

इत्थं प्रसङ्गाद् भोक्तारं प्रसाध्य प्रकृते बुद्धेरेवाहङ्कारस्योत्पत्तिरित्याह—

**बुद्धेः स्कन्धोऽपरो भिन्नो योऽहङ्कारमजीजनत् ॥ ८४ ॥**
**जनितारो गुणा येन दृष्टास्तत्प्रतिभादिषु ।**

येन कारणेन तस्या बुद्धेः प्रतिभादिषु वृत्तिषु प्रोक्तेन नयेन परस्पराभिभवेनाश्र-यान्मिथुनीभावाच्च कार्यस्योत्पादयितारो गुणाः दृष्टाः, यदुक्तं सांख्यैः—"अन्योन्याभि-भवाश्रयजननमिथुनवृत्तयश्च गुणाः" ( सां० का० १२ ) इति, तेन बुद्धेरेवाध्यवसायहेतोः स्कन्धादन्यो भागो गुणसंपृक्तोऽहङ्कारमजीजनत् । ततश्च नह्येकं जनकमिति न्यायेना-न्योन्यसंपृक्ता एव गुणा जनकास्तथैव च सर्वेषु पदार्थेषु वर्तन्ते । सात्त्विकादिव्यवहारस्तु तेषां सत्त्वादिबाहुल्यादिति भावः ॥ ८४ ॥

साक्षाद्गुणकार्यत्वादेव चास्यां गुणान्वयो घटादिषु मृदाकारान्वयवदित्याह—

**प्रथमा विकृतिः साऽतो गुणानां तत्र युज्यते ॥ ८५ ॥**
**उद्भवाभिभवाभ्यां तु नियमेन व्यवस्थितिः ।**

गुणा हि तस्यां नियमेन परम्पराभिभवेन भवन्तः सिद्ध्यादिजनका इत्युक्तम्, यद्येवमहङ्कारस्यापि गुणान्वयाद् गुणेभ्य एवोत्पत्तिरस्तु, अत आह—

**अहङ्कारेऽप्ययं न्याय इति मा जल्प पण्डित ॥ ८६ ॥**
**अन्योन्यविकृतित्वात् तन्मात्रास्वप्यनुषज्यते ।**

अहङ्कारादिभूतान्तानां सर्वेषामप्यन्योन्यविकृतित्वात् प्रोक्तवत्परम्परया गुण-विकारत्वान्न केवलमहङ्कार एव तन्मात्रास्वपि, अपिशब्दादिन्द्रियवर्गे भूतवर्गे च गुणान्वयोऽनुषज्यत एव, घटकपालादिषु मृदाकारान्वयवत् । न तु सर्वेषां साक्षाद् गुणेभ्य एवोत्पत्तिरित्यदोषः ॥ ८६ ॥

अथ के ते गुणाः ? कैर्व्यापारैश्च तेषां सिद्धिरित्यत आह—

**सत्त्वं रजस्तमश्चेति कारणानि धियो गुणाः ॥ ८७ ॥**

**प्रख्याव्यापारनियमैः पुंयोगं ये वितेनिरे ।**

प्रोक्तवद्बुद्ध्यादिद्वारेण भावप्रत्ययादिरूपं पुरुषभोग्यं वस्तु ये सर्गादौ चक्रुरुत्पादितवन्तः, अधुनापि कुर्वते, ते बुद्धेरपि कारणं गुणा इति । एते च परस्परावियोगादेकमेव तत्त्वम् । यच्छ्रूयते—"त्रयो गुणास्तथाप्येकं तत्त्वं तदवियोगतः" ( मृ० वि० १०।२१ ) इति । ततो बुद्धिकारणतया प्रकाशप्रवृत्तिनियमाख्यैर्व्यापारैः सत्त्वादीनां सिद्धिः । एते च प्राधान्यात् प्रदर्शिताः, अन्येषामपि स्थैर्यधैर्यादीनां शौर्यक्रौर्यादीनामरतिमान्द्यादीनां गुणकार्याणामागमेषु श्रवणात् ॥ ८७ ॥

ननु गुणा एव प्रधानाख्यया नित्यत्वेन स्थिता इति सांख्याः, तदयुक्तमित्याह—

**अचैतन्येऽप्यनेकत्वसंख्यासंबन्धहेतुतः ॥ ८८ ॥**
**तेषां कारणपूर्वत्वमिष्टं बुद्धिघटादिवत् ।**

यत एषामनेकत्वसंख्यासंबन्धादनेकत्वम्, ततोऽनेकत्वादचेतनत्वाच्च घटादिवत् कार्यत्वसिद्धिः ॥ ८८ ॥

किं तेषामुपादानमित्यत आह—

**उपादानं गुणानां यत् प्रकृतिः साभिधीयते ॥ ८९ ॥**
**अविभागस्थिता यस्यां निर्गच्छन्ति शिवेरिता ।**

यस्यां सूक्ष्मत्वेनाविभागेन स्थिता गुणाः शिवप्रेरणेन स्वस्वप्रवृत्तिविभागैः स्थूला अभिव्यज्यन्ते, सा प्रकृतिः । शिवेरितेति चाचेतनत्वान्नास्याः स्वातन्त्र्येण प्रवृत्तिरिति दर्शयति । अस्याश्च प्रतिपुरुषं सूक्ष्मदेहवर्तित्वेनानेकत्वात् कार्यत्वमिति वक्ष्यामः ॥८९॥

अथ पुरुषस्य कलादिपञ्चकञ्चुकयुक्तस्य भोक्तृत्वेन पुंस्त्वमलयोगाद् दीक्षायां तच्छुद्ध्यर्थं प्रकृतितत्त्वादूर्ध्वमागमेषु पाठे सत्यपि तस्य व्यापकत्वाच्चेतनत्वेन भोक्तृत्वाच्चाध्वरूपत्वं भोगसाधनत्वं च न संभवतीति तमुपेक्ष्य तस्यैव रञ्जकत्वेन प्रागुक्तं रागतत्त्वं साधयितुमाह—

**भोग्यानुभवमासाद्य भोग्ये सक्तिः प्रवर्तते ॥ ९० ॥**
**तत्सिद्ध्यर्थं ततस्तस्य रागो भोगानुरञ्जकः ।**

इह हि संसारावस्थायां पुरुषस्य भोग्यं दृष्ट्वा तस्मिन् सक्तिः प्रवर्तते । सा च नाहेतुरुत्पद्यते, मुक्त्यवस्थायामपि प्रसङ्गात् । अतस्तस्य पुंसस्तस्याः सक्तेः सिद्ध्यर्थं भोगाभिलाषजनको रागोऽभ्युपगन्तव्यः ॥ ९० ॥

अत्र पराभिप्रायः—

**सत्त्वं रजस्तमो युक्तं विषयेष्वनुरञ्जकम् ॥ ९१ ॥**
**बुद्धावभ्युदितं पुंसस्तस्मादन्यो निरर्थकः ।**

परिहरति—

**तन्मतावुदितं भोग्यं तस्मिन् योऽस्यानुरञ्जकः ॥ ९२ ॥**
**स रागोऽन्यः प्रमन्तव्यो रूपेऽप्येतद्धि दूषणम् ।**

सात्त्विकादिभोगसाधनविषयाकाराध्यवसायद्वारेण बुद्धावुदितस्य सुखदुःखमोहरूपेण परिणतस्य सत्त्वादिगुणत्रयस्यैव साक्षाद्भोग्यत्वात् तस्मिन्नपि भोग्ये यः पुंसोऽभिलाषजनकः, स तस्माद्विषयगुणादिरूपेण बुद्धावुदितात् सत्त्वादिगुणत्रयाद्भोग्यरूपादन्यो ग्राहकगतो रागो मन्तव्यः। भोग्यस्यैवाऽभिलाषजनकत्वे वीतरागाभावप्रसङ्ग इति भावः। तदुक्तं तत्त्वसंग्रहे—"भोग्यविशेषे रागे नहि कश्चिद्वीतरागः स्यात्" (श्लो० १०) इति। यद्येवमवैराग्यलक्षणो बुद्धिधर्म एव रागोऽस्त्वत आह—रूपेऽप्येतद्धि दूषणमिति। अयमभिप्रायः—अवैराग्यलक्षणस्य रूपस्य तावद्वासनारूपत्वान्न कार्यकरत्वम्, वासनावस्थायामपि कार्यकरत्वे बुद्धेरनन्तवासनायोगेन पुंसो युगपद्विरुद्धाऽनन्तप्रतिपत्तिवैशसप्रसङ्गात्। प्रत्ययात्मना स्थूलरूपेण भोग्यदशामापन्नेन तस्मिन् रागेऽभ्युपगम्यमानेऽपि प्राग्वद्वीतरागाभावप्रसङ्ग इति तयोरन्यो रागोऽभ्युपगन्तव्य इति। कर्मैव रञ्जकमस्त्विति चेन्न, तस्य कृष्यादिवत्फलजनन एव चरितार्थत्वात्, कार्यान्तरहेतुत्वे प्रमाणाभावात्, अनेकतत्त्वपरिकल्पनाभावप्रसङ्गाच्च ॥ ९२ ॥

अथ विद्यासिद्धिः—

**करणं न विना कर्तुः कृतिः कर्मणि दृश्यते ॥ ९३ ॥**
**अतोऽस्ति करणं विद्या बुद्धिबोधविवेचिनी ।**

प्रोक्तवदिन्द्रियाणां विषयोपस्थापकत्वेनोपयोगात् तस्मिन् बुद्धिबोधाख्ये कर्मणि ग्राह्ये ग्रहणक्रियायां पुंसः केनापि करणेन भवितव्यम्। यत्तत्करणं सा विद्येति ॥ ९३ ॥

अत्र परः—

**प्रदीपवन्मतिस्तस्य स्वपरात्मप्रकाशिका ॥ ९४ ॥**
**विद्यते करणं पुंसो विद्यया किं करिष्यति ।**

बुद्धेः प्रकाशरूपत्वात् प्रदीपवद्विषयाकारं स्वात्मानमपि प्रकाशयतीति न करणान्तरसिद्धिः ॥ ९४ ॥

परिहरति—

**प्रदीपः करणं पुंसः स्तम्भाद्यर्थोपलब्धिषु ॥ ९५ ॥**
**दीपोपलब्धौ चक्षुश्च बुद्धावप्येवमिष्यताम् ।**

बुद्धेरपि ग्राह्यत्वेन कर्मत्वात् करणापेक्षाऽस्तीत्युक्तमिति भावः। उक्तं च तत्त्वसंग्रहे—"रविवत् प्रकाशरूपो यदि नाम महांस्तथापि कर्मत्वात्। करणान्तरसापेक्षः शक्तो ग्राहयितुमात्मानम् ॥" ( श्लो० १४ ) इति ॥ ९५ ॥

एतदेव दर्शयति—

**त्रैगुण्यात् सा विवेकेन शक्ता दर्शयितुं नहि ॥ ९६ ॥**
**विषयाकारमात्मानमविविक्ता यतः स्वयम् ।**
**विद्या गुणपरा वेद्यं विविक्ताऽतो विवेकतः ॥ ९७ ॥**
**शक्ता दर्शयितुं पुंसो नाऽत्र कार्योऽतिमत्सरः ।**

बुद्धेस्त्रिगुणात्मकत्वेन भोग्याकारविवेकात् कर्मतया न स्वात्मप्रकाशकत्वं प्रदीपादिवत् । विद्या तु तदतीतत्वेन भोग्याकाराद् विविक्ता सतो पुंसो वेद्यं करणान्तरनिरपेक्षा प्रकाशयत्येवेति ॥ ९६-९७ ॥

अथ कलाया व्यापारः कथ्यते—

**कर्मादिकारकानीकप्रयोक्ता भोगसिद्धये ॥ ९८ ॥**
**स्वतन्त्रः पुरुषः कर्ता कला तस्य प्रयोजिका ।**

भोक्तृत्वेन भोगार्थं बुद्ध्यादिकारकव्रातप्रयोक्तृत्वात् कर्ता पुरुष इत्युक्तम्—"प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः । अप्रवृत्तः प्रवृत्तो वा स कर्ता नाम कारकः ॥" इति । तस्य च भोगक्रियायां वक्ष्यमाणवत् सामर्थ्योपोद्बलनेन प्रयोजिका कला शास्त्रेषूच्यते ॥ ९८ ॥

नन्वकर्तैव पुरुष इति सांख्याः, तदयुक्तमित्याह—

**अकर्तृत्वाऽभ्युपगमे भोक्तृशब्दो निरर्थकः ॥ ९९ ॥**
**उपादानप्रवृत्तेश्च निष्फलत्वं प्रसज्यते ।**

भोगस्याऽपि क्रियात्वाद् भोक्तृत्वेनैव पुंसः कर्तृत्वं सिद्ध्यति । तस्मिन्नकर्तर्यभ्युपगम्यमाने तद्भोगार्थं प्रधानस्याऽपि प्रवृत्तिर्निष्फला स्यात्, अकर्तरि करणादिसंबन्धस्य निरर्थकत्वात् ॥ ९९ ॥

किञ्च—

**कर्तृमत् कर्मदेवादि क्रियासाधनभावतः ॥ १०० ॥**
**वास्यादिवदतः कर्ता परिज्ञेयो विभुः पुमान् ।**

अविभुत्वे ह्यात्मनो गगनादिवदमूर्तत्वाद् देशान्तरनयनाऽसंभवेन दाक्षिणात्यादेः काश्मीरादौ दृश्यमानो देशान्तरफलभोगोऽनुपपन्न इति तदन्यथाऽनुपपत्त्याऽऽत्मा व्यापकोऽभ्युपगन्तव्य इति । उक्तं च श्रीमत्पराख्यादौ—"कर्तृशक्तिं व्यनक्त्यस्य कलाऽस्यातः प्रयोजिका । ततः कलासमायुक्तो भोगेऽणुः कर्तृकारकः ॥" इति । अस्य कर्तुः पुंसः कर्तृशक्तिः शक्तेरेकत्वाज्ज्ञानक्रियाशक्तिर्वक्ष्यमाणवद् मलावृतत्वेनार्थेषु न प्रवर्तत इति प्रदीपवत् प्रकाशरूपा कलैकदेशे मलविदारणेन तामभिव्यनक्ति प्रकाशयति । ततः सा

प्रयोजिका हेतुः कर्त्री भण्यते। स चाणुः पुरुषस्तयाऽत्यन्ताविवेकेन भासमानो भोगक्रियायां कर्तृकारकमुच्यते। स हि भोक्तृत्वात् कर्ता, कला तु तत्प्रयोजिकात्वात् कारकमिति। तदुक्तं श्रीमन्मृगेन्द्रे—"इत्येतदुभयं विप्र संभूयाऽनन्यवत् स्थितम्। भोगक्रियाविधौ जन्तोर्निजगुः कर्तृकारकम्॥" (वि० १०।७) इति॥ १००॥

अन्यथा हि—

**व्यक्तिकर्त्रनपेक्षस्य कर्तृभावे समीहिते॥ १०१॥**
**आत्मनः प्राक्कलायोगात् प्रसक्ता सर्वकर्तृता।**
**सर्वकर्तृत्वसंबन्धात् सर्वज्ञः परमेशवत्॥ १०२॥**
**सर्वज्ञत्वादयुक्ताऽस्य स्वात्मदुःखाय कर्तृता।**

आत्मनो हि निर्मलत्वेन कलानपेक्षस्यैव कर्तृत्वेऽभ्युपगम्यमाने शिववत् कलादिपाशात्मकशरीरसंबन्धं विनैव सर्वकर्तृत्वम्, अज्ञातस्य करणासंभवेन सर्वज्ञत्वं च भवेत्। निरावरणत्वेन शिवेनाऽनधिष्ठितस्य स्वतन्त्रस्याऽस्य स्वात्मन एव दुःखाय शरीरादिकर्तृत्वं न युज्यते। अतोऽस्य सुखोत्पादादौ पारतन्त्र्यदर्शनाद् बद्धत्वं समलत्वं च निश्चीयते। तत एव चाऽस्यासर्वकर्तृत्वमसर्वज्ञत्वं च संसारावस्थायां दृश्यते॥ १०१-१०२॥

ततो मलावृतत्वादस्य भोगे विषये किञ्चिज्ज्ञत्वकर्तृत्वयोरपि फलानुग्रहापेक्षा सिद्धेत्याह—

**न चास्य सर्वकर्तृत्वं बद्धत्वाद् गोवृषादिवत्॥ १०३॥**
**कलानुग्रहसापेक्षा भोगे तेनाऽस्य कर्तृता।**

इत्थं कलां प्रसाध्य तस्या एव विद्यारागाव्यक्तानामुद्भव इत्याह—

**स्कन्धोऽपरः कलायास्तु यस्मादेताः प्रजज्ञिरे॥ १०४॥**
**विद्यारागप्रकृतयो युग्मायुग्मक्रमेण तु।**

युग्मक्रमेण रागविद्ये सहैव जायेते, अव्यक्तं तु पृथगयुग्मक्रमेणेत्यर्थः। उक्तं च श्रीमद्रौरवे—"कलातत्त्वाद्रागविद्ये द्वे तत्त्वे संबभूवतुः। अव्यक्तं च" (२।१५) इति। अत्र कर्मफलभोगस्य कालाऽवच्छेदं भोक्तृनियमं च विनाऽनुत्पत्तेः कालनियत्याख्यं तत्त्वद्वयमागमेषु श्रूयमाणमर्थसिद्धत्वादाचार्येणाऽनुपात्तम्। तथाहि—कृष्यादिवत् कर्मफलानां राजनियमाऽभावे दस्युभिरपहारदर्शनाद् ज्योतिष्टोमादिकर्मफलानामपि भोक्तृप्रतिनियामकेन केनाऽपि भाव्यमिति तन्नियामकत्वेन नियतिः सिद्धा। कर्मणो नियामकत्वमस्तीति चेत्? तन्न, तस्य फलजनन एव चरितार्थत्वादित्युक्तम्। ईश्वरशक्तेरपि तत्त्वान्तरव्यवधानेनैव भोगविषये कार्यकरत्वम्, अन्यथा सर्वतत्त्वाभावप्रसङ्गात्। किञ्च, चिरक्षिप्रादिप्रत्ययद्वारेण चिरं भुङ्क्ते इत्यादिभोग्याद्यवच्छेदकत्वेन कालः सिद्धः। स च न नैयायिकाद्यभ्युपगतवन्नित्यो भवितुमर्हति, भूतादिरूपत्वेनानेकत्वादचेतनत्वाच्च। तदुक्तं श्रीमन्मृगेन्द्रे—"त्रुट्यादिप्रत्ययस्यार्थः कालो मायासमुद्भवः। कलयन्ना समुत्थानान्नियत्या नियतं पशुम्॥" (वि० १०।१४) इति॥ १०४॥

इत्थं सूक्ष्मदेहात्मिकां तत्त्वसंहतिमुक्त्वा तस्याः प्रतिपुरुषं नियतत्वमाह—

**वसुधादिकलाप्रान्ता भोगसाधनसंहतिः ॥ १०५ ॥**
**नियता प्रतिभोक्तारं परिज्ञेया मनीषिभिः ।**

तदुक्तं तत्त्वसंग्रहे—"वसुधाद्यस्तत्त्वगणः प्रतिपुंनियतः कलान्तोऽयम् । पर्यटति कर्मवशतो भुवनजदेहेष्वयं च सर्वेषु ॥" ( श्लो० २४-२५ ) इति ॥ १०५ ॥

एकत्वे सूक्ष्मदेहस्य सर्वेषां दृश्यमानभोगभेदो न युक्त इत्याह—

**अन्यथा हि सुखादीनां दृष्टो भेदो न युज्यते ॥ १०६ ॥**

नन्वेकत्वेऽपि सूक्ष्मदेहस्य कर्मभेदादेव तत्फलभोगभेदो भविष्यतीति चेत् ? तदयुक्तमित्याह—

**योक्ष्यते कर्मणो भेदात् तद्भेदो यदि योक्ष्यते ।**

कर्मभेदादेव भोगभेदः सिद्ध्यति, सिद्धे च भोगभेदे कर्मभेदोऽनुमीयत इतीतरेतराश्रयदोषः प्रसक्त इत्यर्थः ॥

ननु कर्तृभेदादेव सिद्धः कर्मभेदः, कर्मभेदाच्च भोगभेद इति नान्योन्याश्रयदोषः ? अत आह—

**सम्बन्धाद्युगपत् सा तु कुर्वन्ती कर्मकर्तृभिः ॥ १०७ ॥**
**कथं भिन्नानि कर्माणि कर्तृभेदात् करिष्यति ।**

मलावृतत्वेनाऽऽत्मनां कलादिसूक्ष्मदेहादिसम्बन्धं विना कर्मकर्तृत्वाऽनुपपत्तेर्युगपत् सर्वकर्तृसम्बन्धेन कर्म कुर्वाणा सा सूक्ष्मदेहरूपा तत्त्वसंहतिरेकरूपा कथं भिन्नानि विचित्राणि कर्माणि करोति, नैवेत्यर्थः । ननु प्रतिपुरुषं चिकीर्षाभेदात् कर्मभेद इति चेत् ? तन्न, चिकीर्षायाश्च सूक्ष्मदेहसम्बन्धादेवोत्पत्तेः । तस्याश्चैकत्वाच्चिकीर्षाभेदोऽप्यनुपपन्न इति परिदृश्यमानभोगभेदान्यथाऽनुपपत्त्या प्रतिपुरुषं सूक्ष्मदेहभेदोऽवश्यमभ्युपगन्तव्यः ॥ १०७ ॥

नन्वात्मभेदे हि सूक्ष्मदेहभेदो युक्तः, स एव तावदेक इति वेदान्तविदस्तत्राऽऽह—

**आत्मनामप्यनेकत्वमत एव प्रतीयते ॥ १०८ ॥**

एकत्वे ह्यात्मनः सुखदुःखादिवैचित्र्यं जन्ममरणवैचित्र्यं चानुपपन्नमिति भोगवैचित्र्यादेवाऽऽत्मनानात्वसिद्धिः । एष चाद्वैतनिरासोऽस्माभिर्मृगेन्द्रवृत्तिदीपिकायां विस्तरेण दर्शितः ॥ १०८ ॥

अथ किमियं सूक्ष्मदेहरूपा तत्त्वसंहतिरात्मवद् व्यापिका, आहोस्विदव्यापिकेत्यत आह—

**तस्याश्चाविभुता सिद्धा युगपद् वृत्त्यसंभवात् ।**

ज्ञानक्रियाभिव्यक्तिलक्षणस्य तत्कार्यस्य सर्वत्र युगपदनुत्पत्तेस्तस्याश्चाव्यापकत्व-सिद्धिः ॥

ननु यत्र सहकारिणा कर्मणा फलारम्भेण निर्देशो भवति, तत्रैवासावात्मनश्चैतन्याभिव्यक्तये विक्षोभमभिव्यञ्जनरूपं करोतीति तस्मादेवास्याः सर्वत्र युगपत्कार्यानुत्पत्तिर्नाव्यापकत्वादिति चेत्, तदप्ययुक्तम्, तस्याः कार्यत्वेनाऽनित्यत्वाद् घटादिवद् व्यापकत्वाऽसिद्धेरित्यभिप्रायेणाह—

**कर्मनिर्देशविक्षोभकरणत्वं च नोत्तरम् ॥ १०९ ॥**
**युगपद् वृत्त्यनुत्पत्तेः सर्वत्र विभुतैव न ।**

अथ किमियमेकदेशे चैतन्याभिव्यक्तिः सूक्ष्मदेहव्यञ्जकस्याऽविभुत्वात्, उत व्यङ्ग्यस्याऽऽत्मनः ? इत्यत आह—

**विकारित्वादिधर्म्यात्मा विरोधश्च श्रुतेरणौ ॥ ११० ॥**
**अविभौ युगपच्चित्तत्वव्यक्तिकालेऽप्यणुर्विभुः ।**

यद्यव्यापक आत्मा स्यात्, तदा देशान्तरफलोपभोगोऽप्यनुपपन्न इत्युक्तम् । किञ्च, तस्य मुक्त्यवस्थायां शिववत् सर्वज्ञत्वसर्वकर्तृकत्वश्रवणाद् व्यापकत्वमवश्यमभ्युपेयम् । अथ संसारावस्थायामव्यापकत्वं मुक्त्यवस्थायां च व्यापकत्वं तस्येष्यते, तदा परिणामित्वाचेतनत्वादिदोषप्रसङ्गः, ततो नित्यत्वव्यापकत्वादिश्रुतेर्विरोधः । तदुक्तं श्रीमन्मृगेन्द्रे—"चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा । सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम् ॥" ( वि० २।५ ) इति, "नाव्यापको न क्षणिको नैको नापि जडात्मकः" ( वि० ६।७ ) इति च ॥ ११० ॥

इत्थं सूक्ष्मदेहात्मिकामसाधारणतत्त्वसृष्टिमुक्त्वा भुवनात्मिकां साधारणतत्त्वसृष्टिमाह—

**तत्त्वानामपरे स्कन्धा भोगिनो रतिभूमयः ॥ १११ ॥**

सूक्ष्मदेहरूपाद् भोगादन्ये विचित्रभुवनाद्याकारास्तत्त्वानां भोगाः संसारिणो भोगस्थानानीत्यर्थः ॥ १११ ॥

अतश्च—

**तज्जदेहप्रविष्टा सा तेषां तासु फलावहा ।**

सूक्ष्मदेहात्मिका तत्त्वसंहतिराचारापेक्षया तासु भोगभूमिषु कर्मवशात् तत्तद्भुवनजदेहेषु प्रविष्टा सती पुरुषस्यैकदेशेन ज्ञानक्रियासामर्थ्यांशाभिव्यञ्जिका भवति । तदुक्तं तत्त्वसंग्रहे—"पर्यटति कर्मवशतो भुवनजदेहेष्वयं च सर्वेषु" ( श्लो० २५ ) इति । श्रीमन्मृगेन्द्रेऽपि—"इत्यातिवाहिकमिदं वपुरस्य जन्तोश्चित्सङ्गचिद्गहनगर्भविवर्ति लेशात् । नैतावताऽलमिति भौवनतत्त्वपङ्क्तिमाधारदेहविषयाऽभ्युदयाय वक्ष्ये ॥" ( वि० १२।३४ ) इति ।

तामेव भुवनसृष्टिं संक्षेपेण दर्शयति—

**निरयादिस्तु सत्यान्ता कालहाटकदेशिकैः ॥ ११२ ॥**
**आदिमध्यान्तसंरुद्धा भूतेषु स्थानपद्धतिः ।**

तत्र कालः कालाग्निः । हाटकः पातालाधिपतिः । देशिकः समस्तशास्त्रोपदेशकत्वाल्लोकाचार्यः सत्यलोकोर्ध्वस्थितस्य विष्णुलोकस्याप्युपरि वर्तते । रुद्रलोके वर्तमानोऽनन्तशिष्यः श्रीकण्ठस्तस्यैव ब्रह्माण्डान्तरधिकारात् तैः कालहाटकदेशिकैः स्वस्वभुवनवर्तिष्वादिमध्यान्तेष्वधिष्ठिता नरकपातालभूरादिलोकात्मिका भुवनपद्धतिः स्थूलेषु ब्रह्माण्डान्तर्वर्तिषु स्थिता ॥ ११२ ॥

ततश्च—

**शतरुद्रविभुश्चापि सह पञ्चभिरष्टकैः ॥ ११३ ॥**
**मात्रासंभूतभूतेषु प्रोक्तभूतविधातृषु ।**
**तन्मात्रा चित्तवर्गेषु**

तत्र शतरुद्राणां ब्रह्माण्डधारकाणामधिष्ठाता वीरभद्रः पृथिवीतत्त्वे प्रागुक्तस्थूलपृथिवीकारणभूते तन्मात्राऽजन्ये सूक्ष्मपृथिवीतत्त्वे स्थितः । तथा स्थूलजलादिकारणभूते तन्मात्राजन्ये एव सूक्ष्मजलादिभूतचतुष्टये । चित्तवर्गशब्देनान्तःकरणानामुपादानात् तन्मात्राद्यहङ्कारान्ते चाऽध्वनि गुह्यातिगुह्यगुह्यतरपवित्रस्थाण्वाख्यानि पञ्चाष्टकानि भुवनानां स्थितानि । तदुक्तं श्रीमन्नन्दिकेश्वरकारिकासु—"ब्रह्मा स्थूलानि गतः सूक्ष्मादीन्याधारदेहभोग्यार्थम् । रुद्रशतं क्षेत्रभुवां चत्वारिंशच्च सूक्ष्मभूतानि ॥ तन्मात्रा मनोऽहङ्कृतिबुद्धिर्देवा गुणांस्तु योगिवराः । वामाद्या गुणसारं क्रोधाः प्रकृतिं कलां तु मण्डलिनः ॥" इति ॥ ११३ ॥

अत एवाऽऽह—

**बुद्धौ च क्रमशो न्यसेत् ॥ ११४ ॥**
**पैशाचाद्यष्टकं विद्वान् गुणतत्त्वे कृतादिकम् ।**
**अप्राप्तगुणभावे तु विशुद्धे गुणमस्तके ॥ ११५ ॥**
**विकारे प्राकृते लीना वामादिस्थानमालिका ।**
**क्रोधेश्वर[ादि]रुद्राणां पुरपङ्क्तिः प्रधानगा ॥ ११६ ॥**

वामदेवादयस्त्रयोदश रुद्राः क्रोधेशादिभिरष्टभिः सह प्रधानाऽधिपैर्गुणमस्तकभुवनेषु स्थिताः, प्रकृतेः सूक्ष्मरूपत्वाद्भुवनाऽऽधारत्वाऽयोगादित्यागमविदः ॥ ११४–११६ ॥

तथा—

**मण्डलानि तु वामाष्टौ कलातत्त्वे स्थितानि तु ।**

रागविद्यासहिते कलातत्त्वेऽष्टाष्टक्रमेणाष्टौ भुवनानां मण्डलानि स्थितानि । तदुक्तं श्रीमन्मृगेन्द्रे—"रागविद्यागर्भे कलापदे । महापुरचतुष्षष्टिमण्डले मण्डलाधिपाः ॥" ( वि० १३।१५२ ) इति । कालनियत्योश्च भुवनद्वयं तत्रैवोक्तम्—"नियतौ यन्ता काले कलनशक्तिमान्" ( वि० १३।१५० ) इति । एष च भुवनाध्वा पद्धत्यादिषु बहुशो दृश्यत इति नात्र विस्तरेण प्रदर्शितः । तेषु चाऽवान्तरभुवनसंख्याभेदः केषुचित् केषाञ्चिदन्तर्भावादित्यविरोधः ।

इत्थं भुवनात्मिकामपि तत्त्वसृष्टिमुक्त्वा प्रोक्तस्य कलादिरूपस्य जगतः परमोपादानं मायां साधयति—

**जगद्बीजं महामाया जन्यशक्तिरचेतना ॥ ११७ ॥**
**तस्याः कलादिसंभूतिर्भोगिनां भोगभूतये ।**

महती चासावनेकस्रोतोरूपस्वकार्यव्याप्तेर्माया च, मात्यस्यां प्रलये सर्वमशुद्धं जगदिति माया । सा च जगद्बीजं जगतः कलादिरूपस्य प्रतिपुरुषं भेदेनाऽनेकत्वाद्भुवनाऽऽधारत्वाच्च कार्यरूपस्य सर्वस्य साक्षात् परम्परया चोपादानम् । अत एव जन्यशक्तिः सूक्ष्मरूपस्वकार्यशक्तिसमाहाराऽऽत्मिका, सत्कार्यवादाऽभ्युपगमेन सर्वकार्याणां शक्तिरूपेण तत्राऽवस्थानात् । उपादानत्वादेव मृदादिवदचेतना च । ततस्तस्याः कलादिभोगसाधनसंभूतिरित्युक्तम् ॥ ११७ ॥

शक्तिसमाहारात्मकतामेवाऽस्याः प्रकटयति—

**अनेकाभिर्विचित्राभिः शक्तिभिः शक्तिमत्यसौ ॥ ११८ ॥**
**विचित्राऽनन्तकार्याणां दर्शनात् संप्रतीयते ।**

विचित्राऽनन्तकार्योत्पत्तिदर्शनाद् विचित्रानन्तकार्यशक्तिसमाहारात्मिकाऽसौ ज्ञायते ॥ ११८ ॥

न त्वस्या एवाऽनेककार्यजनिकाऽनेकाः शक्तयः कल्प्याः, तस्याः स्वयं शक्तिरूपत्वाच्छक्तेश्च शक्त्यन्तरकल्पनाऽनुपपत्तेः, परमकारणत्वादेवाऽस्या नित्यत्वम्, अन्यथाऽनवस्थाप्रसङ्गादित्यभिप्रायेणाऽऽह—

**अचिद्वतामनेकत्वाद् विनाशित्वं सुनिश्चितम् ॥ ११९ ॥**
**नाऽनेका सा त्वतो नित्या माया यद्यप्यचेतना ।**

किञ्च—

**व्यापिनी पुरुषाऽनन्त्याद् भोगाय कुरुते यतः ॥ १२० ॥**
**सर्वकार्याणि सर्वत्र स्रोतोभिर्विश्वधामभिः ।**

तदुक्तं बृहस्पतिपादैः—"अपि सर्वसिद्धवाचः क्षीयेरन् दीर्घकालमुद्गीर्णाः । मायायामानन्त्यान्नोच्यते स्रोतसां संख्या ॥" इति । एषा च क्षीरदधिन्यायेन न सर्वात्मना परिणाममेति, किन्तु घृतकीटन्यायेनैकदेशेनेति मन्तव्यम् ॥ १२० ॥

**सर्गस्थितिलयास्तस्याः स्वात्मसंस्थाः प्रकीर्तिताः ।।१२१।।**
**स्वात्मसंस्थं विकारस्य तत्त्वादिभुवनाऽवधेः ।**

एवं परमोपादानत्वान्मायास्था एव जगतः सर्गादयः, भुवनादेश्च विकारस्य तत्त्वादिस्वरूपं स्वात्मसंस्थमिति तत्त्वभावभूतभुवनात्मकं च समस्तं जगद् विकारस्थमेव ज्ञेयम् । ननु शुद्धरूपमपि तत्त्वादिकं तदुपादानं च बिन्दुसंज्ञमागमेषु श्रूयते, सत्यम्, तत्प्राप्तेर्विद्येश्वरादिपदप्राप्तिरूपत्वेनाऽपरमुक्तित्वान्नाऽत्राऽस्य भोगसाधनतयोपादानमित्यविरोधः ।। १२१ ।।

अत्र च—

**सर्गस्थिती समाख्याते लयः सर्गविपर्ययात् ।। १२२ ।।**

प्रतितत्त्वमुत्पत्तिक्रमकथनेन व्यापारप्रदर्शनेन च सर्गस्थिती प्रोक्ते, लयस्तु सर्गप्रातिलोम्येन स्वस्वकारणेषूपसंहार इत्यर्थः ।। १२२ ।।

एतच्च—

**भवस्यानादिमत्त्वाच्च सर्गादिगणनाच्युतम् ।**

अनादिरयं संसार इत्यर्थः ।।

ननु भोगसाधनत्वादात्मनां युक्ते सर्गस्थिती, लयस्तु किमर्थमीश्वरेण क्रियते । अत्र वदामः—अनवरतमनन्तपुरुषभोगजननोपचितशक्तेर्मायायाः सुकुमारवनिताया इव स्वापेन सामर्थ्योपोद्बलनार्थमात्मनां विश्रमार्थं च कर्मपाकार्थं च संहार इत्यदोषः । तदुक्तं श्रीमन्मृगेन्द्रे—"तच्च सात्मकमाक्रम्य विश्रमायाऽवतिष्ठते । भविनां भवखिन्नानां सर्वभूतहितो यतः ।।''''स्वापेऽप्यास्ते बोधयन् बोधयोग्यान् रोध्यान् रुन्धन् पाचयन् कर्मिकर्म । मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन् पश्यन् सर्वं यद्यथा वस्तुजातम् ।।" ( वि० ४।१३-१५ ) इति । इत्थमात्मनः प्रतिपादितं ससाधनं भोगमुपसंहर्तुं तस्यैव मलात्मकं पाशमुपक्षेप्तुं चाह—

**पुंसां मायामयं भोग्यं मायोत्थैरेव साधनैः ।। १२३ ।।**
**यतो भोक्ता विशुद्धात्मा चेतनस्तन्न चेतनम् ।**

उक्तवत् सुखादिरूपं बुद्धिबोधात्मकं भोग्यं मायाकार्यमेव । न त्वात्मनि गुणत्वेन समवैति, चेतनत्वात्, तत्समवाये पुरुषस्य परिणामादिदोषप्रसङ्गाच्च । तस्य च चेतनः पुरुष एव भोक्तेत्युक्तम् । स च वक्ष्यमाणवदविशुद्धत्वादावृतज्ञानक्रियात्वान्मायोत्थैः कलादिभिस्तत्त्वैरुपबृंहित एव तद्भोक्तुं शक्नोति, कार्यकारणं विना किञ्चिज्ज्ञत्वादेरप्यदर्शनात् ।। १२३ ।।

अथ कुतोऽयमविशुद्धात्माऽत आह—

**विषयित्वमलच्छन्नसर्वज्ञानक्रियो यतः ।। १२४ ।।**

यतोऽयमात्मा शिववत् सर्वज्ञानक्रियायुक्तोऽपि किञ्चिद्विषये विज्ञानादौ कलादिकमपेक्षते। यतश्च मुक्तस्याऽभोक्तृत्वं सर्वविषयज्ञानादियुक्तत्वं श्रूयते, ततोऽयं विषयित्वाख्यभोक्तृत्वस्य हेतुत्वाद् विषयित्वाख्येन मलेनावृतोऽवसीयते। यच्छ्रयते—"भोक्तृत्वं मलतः प्रोक्तम्" इति। अत एवाऽयमविशुद्धः। तदुक्तं श्रीमत्स्वायंभुवे—"यद्यशुद्धिर्न पुंसोऽस्ति सक्तिर्भोगेषु किंकृता" (३३।४) इति ॥ १२४ ॥

अतश्च—

**बीजस्थकर्मरागेण मायामेषोऽनुधावति ।**

कर्मणः कृष्यादिवदात्मसंस्कारत्वाऽयोगात्। भवावस्थायां बुद्धिगतेन प्रलये नष्टबुद्धेरपि मायात्मनि जगद्बीजे प्रतिसंचारात् तत्स्थेन परिपाकवशाद् भोगजनकेन कर्मात्मना रागेण मार्गेण मायां भोगसाधनादिरूपेण परिणतामेष पुमाननुसरति ॥

अत्र परः—

**भवान्तरकृतं कर्म जात्यादिफलदं नृणाम् ॥ १२५ ॥**
**अशुद्धिः कल्पिता पुंसस्तस्मिन् सत्यतिरिच्यते ।**

अनादित्वेन बीजाङ्कुरन्यायेन कार्यशरीरबन्धस्यावस्थितेर्जात्यायुर्भोगप्रदानि कर्माण्येव स्वफलभोगार्थमात्मनः शरीरयोगं कुर्वन्तु, किं मलेन। भवताऽपि हि तं मलं कल्पयित्वा भोगवैचित्र्यान्यथानुपपत्त्या कर्माऽपि कल्प्यते, ततः कल्पनागौरवप्रसङ्गात् कर्मैव कल्प्यताम्। यदाहुः—"कल्प्यं पुनर्निरुणद्धि कल्पनाम्" इति ॥ १२५ ॥

अत्र परिहारः—

**जन्मादिजनिका शक्तिः कर्मणो न मलं विना ॥ १२६ ॥**
**अणुरज्ञानरहितः क्वचिज्जातो न दृश्यते ।**

अज्ञानहेतुना मलेन रहितस्य मुक्तात्मनो जन्मादर्शनात् कर्मानुष्ठानादर्शनाच्च मलयुक्तस्यैव कर्मार्जनं तद्भोगो वा उपयुज्यते ॥ १२६ ॥

यद्येवं मलस्यैव जन्मादिहेतुत्वमस्तु, किं कर्मणेति चोदयति—

**विषयित्वं हि तस्यैकमस्तु किं तेन कर्मणा ॥ १२७ ॥**
**यतो जन्मादिसंबन्धमनुसंप्राप्नुयाद् ध्रुवम् ।**

परिहरति—

**सन्ति केवलिनो ज्ञानग्रस्ताः कर्मविनाकृताः ॥ १२८ ॥**
**न च जन्मादिसंबन्धो द्वयं तेनेह कारणम् ।**

विज्ञानकेवलिनां मलावृतानामपि कर्मरहितानां जन्माद्यदर्शनाद् द्वयमपि मायायोगे हेतुरित्यर्थः ॥ १२८ ॥

ननु सृष्टेः प्राग् निष्कलत्वाच्चेतनत्वाच्चात्मनः शिववदज्ञत्वं न युज्यत इति पराशङ्कां निरस्यति—

**प्राक्सृष्टेर्निष्कलो जन्तुर्दृक्क्रियागुणवान् यतः ॥ १२९ ॥**
**ततश्चाज्ञानसम्बन्धो नायमित्यनृतं वचः ।**

यद्येवं शिववदेव कलासम्बन्धोऽप्यस्य न युज्यते, ततश्च कलासम्बन्धाऽन्यथाऽनुपपत्त्या तस्य मलोऽभ्युपगन्तव्य इत्यर्थः ॥ १२९ ॥

एतदेवाह—

**दृक्क्रिये सर्वविषये सर्वगत्वादणोर्मते ॥ १३० ॥**
**सर्वज्ञः सर्वकृत् तस्मात् सुतृप्तः कारणं विना ।**

न चैतदेवं किञ्चिज्ज्ञत्वादावपि कलाद्यपेक्षित्वादित्याह—

**कलादिव्यञ्जकाभावान्न व्यक्ते तस्य दृक्क्रिये ॥ १३१ ॥**

न चैतदनावरणस्य युज्यत इत्याह—

**नह्यनावरणं तेजो भानोर्व्यञ्जकमीक्षते ।**

अतश्च—

**अनाद्यनादिसम्बन्धो मलः साधारणोऽक्षयः ॥ १३२ ॥**

अनादिश्चासावात्मनामनादिसंबन्धश्चानाद्यावारकः सर्वपुरुषाणामेक एव । अत एव नित्यश्च मलोऽभ्युपगन्तव्यः ॥ १३२ ॥

यद्येवं मलस्य नित्यत्वात् कदाचिदप्यात्मभ्यो न निवृत्तिः, निवृत्तौ वा तस्यैकत्वादेकपुरुषमोक्षकाले सर्वमोक्षप्रसङ्गोऽत आह—

**प्रतिपुंनियतः स्वस्वकालव्यावृत्तशक्तिकः ।**

मलस्य प्रत्यात्मनियतानन्तशक्तियुक्तत्वादेकस्याः शक्तेः परिणामवशान्निरोधे कृते तस्यैव मोक्षो नान्यस्य । यच्छ्रूयते—"प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवत्" ( मृ० वि० ७।८ ) इति ॥

ननु प्राकृत एव विपर्ययरूपो महामोहाख्यो मलोऽस्तु, तस्यास्तत एव व्यञ्जकापेक्षा कर्मानुष्ठानं चोपपद्यते, अत आह—

**महामोहोद्भवात् पूर्वमणुरेष निरञ्जनः ॥ १३३ ॥**
**न शक्योज्झयितुं तेनासंवृतः शर्ववत् स्वयम् ।**

महामोहस्य कलादिसम्बन्धोत्तरकालभावित्वात् प्रथमतः सर्गारम्भे भवत्पक्षे निर्मलत्वेन शिववदनावृतः पुमांस्तेन प्राकृतमलेनोज्झयितुं न शक्यते । अतोऽनादिना मलेनात्मनोऽनादिसंबन्धोऽभ्युपगन्तव्यः ॥ १३३ ॥

अन्यथा तु—

**आदिमान् यदि सम्बन्ध इष्टः पुंमलयोर्बुधाः ॥ १३४ ॥**
**तस्यापि कारणं वाच्यमिति नास्ति व्यवस्थितिः ।**
**अथ निर्हेतुको योगः कलायोगोऽप्यहेतुकः ॥ १३५ ॥**
**अनिर्मोक्षश्च जन्तूनामीशाभावश्च जायते ।**

निर्हेतुकस्य पाशसंसर्गस्याभ्युपगमे शरीरादियोगस्याऽपि निर्हेतुकत्वान्मुक्तस्यापि पुनः संसारयोगादनिर्मोक्षः । शिवस्याऽपि पाशसंसर्गादनीश्वरत्वं प्रसज्यते । अतोऽनादिरेव मलसम्बन्धः पशोः संसारहेतुरभ्युपेयः ॥ १३४-१३५ ॥

एवं मलस्याऽसाधारणत्वे प्रतिपुरुषमनेकत्वेऽभ्युपगम्यमाने जडत्वे सत्यनेकत्वाद् घटादिवदनित्यत्वप्रसङ्गः, ततश्चानादित्वाभावात् प्रागुक्तोऽनवस्थानानिर्मोक्षादिदोषः स्यादित्याह—

**असामान्यो यदि भवेदचैतन्ये त्वनेकतः ॥ १३६ ॥**
**उत्पादवान् विनाशी च ततः पूर्वोक्तदोषभाक् ।**

अनादित्वादेव चास्य नान्तवत्त्वं तद्योगे वा सर्वानित्यत्वप्रसङ्ग इत्याह—

**अनाद्यनादिसम्बन्धो यदि चेष्टो विनश्वरः ॥ १३७ ॥**
**मायाशिवात्मवस्तूनामजानां नाश इष्यताम् ।**

इत्थं प्राक् प्रतिज्ञातं मलस्यानादित्वं साधारणत्वमक्षयत्वं च प्रसाध्यानन्तशक्तियुक्तत्वमपि साधयति—

**प्रतिपुंनियताश्चास्य शक्तयो गुणरोधिकाः ॥ १३८ ॥**

आत्मगुणस्य ज्ञानक्रियात्मनो रोधिकाः । एतच्च प्रागेव दर्शितम् ॥ १३८ ॥

परिदृश्यमानभोगवैचित्र्यान्यथाऽनुपपत्त्या तासां मलशक्तीनां परिणामकाले वैचित्र्यं सिद्धमित्याह—

**न कालनियतिस्तासां विनिवृत्त्यै निरोधतः ।**
**अन्यथा युगपन्मुक्तिः सर्वेषां चिद्वतां भवेत् ॥ १३९ ॥**
**न च सा दृश्यते तस्माज्ज्ञेयास्ताः सूक्ष्मलक्षणाः ।**

एवं चानाद्यावारकत्वान्मल एवाऽऽत्मनः सहजः पाशः । मायादयस्तु—"तद्भावभाविनो भावाः सर्वे मायात्मकाः पशोः" इत्यादिश्रीमत्स्वायम्भुवादिश्रुतेरागन्तुका एव ज्ञेयाः ॥ १३९ ॥

ननु श्रीमन्मतङ्गादौ तु—"मोहो मदश्च रागश्च विषादः शोष....." (वि० ६।१०३) इत्यादिना मोहादीनामपि मलहेतुत्वं सहजमलत्वं च श्रूयते । अत आह—

**वृत्तयो विषयित्वस्य मदाद्याः पञ्च नोचिताः ।। १४० ।।**
**निष्कलात्मनि तस्यैते नो दृष्टा जातुचिद् यतः ।**

यतो विज्ञानाकलप्रलयाकलयोः कलादिसम्बन्धरहिततया मले सत्यपि वक्ष्यमाण-मदादयो न दृश्यन्ते, किन्तु सकल एव, अतो न मलस्यैते ज्ञानक्रियावरणवद् वृत्तित्वेनेष्टाः। श्रीमन्मतङ्गादौ तु मलसद्भाव एव मायोपादानानामनात्मादावात्माभिमानादिरूपाणामेषां मदादीनामुत्पद्यमानत्वात् कलादियोगेऽपि निर्मलानां मायागर्भाधिकार्यादीनां तददर्शनाच्च तेन मलेन सहकारिणा जायन्त इति सहजमलहेतुत्वात् सहजशब्देनोच्यन्ते, न तु मलो-पादानतयेत्यविरोधः ।। १४० ।।

ननु मलोपादाना अप्येते प्रलयकेवलावस्थायामनभिव्यक्ताः पश्चात् कलादि-सम्बन्धादभिव्यज्यन्त इत्यस्य पक्षस्य को दोषः ? अत आह—

**भोगसाधनसम्बन्धाद् व्यज्यन्त इति नोचितम् ।। १४१ ।।**
**त्वया तु गुणवृत्तिभ्यो ये प्रोक्ता भिन्नलक्षणाः ।**
**भवता(न्तु) गुणवृत्तिभ्यो भेदेनैव मदादयः ।। १४२ ।।**

प्रोक्ता इति । न तेषां भोगसाधनसम्बन्धात् पश्चादभिव्यक्तिरुत्पद्यते । एतदुक्तं भवति—मदादीनां हि मलोपादानत्वेऽभ्युपगम्यमाने तस्य सर्वदैकरूपत्वादभिव्यक्त्यन-भिव्यक्तिभेदानुत्पत्तेस्तत्कार्यभूतज्ञानक्रियावरणवत् संहारावस्थायामप्युपलभ्येरन्, न चोपलभ्यन्ते । अपि तु भोगसाधनसम्बन्धोत्तरकालमन्तःकरणसंस्था एव पुंसामुपलभ्यन्ते, अतो मलेन सहकारिणा मायोद्भूतगुणोपादाना एव तेऽभ्युपगन्तव्या इति ।।१४१-१४२।।

अथैषां गुणात्मकत्वमेव दर्शयति—

**मदमोहावभिष्वङ्गः परितापभ्रमौ च यौ ।**
**तामसौ सात्त्विकश्चैव राजसौ च यथाक्रमम् ।। १४३ ।।**

एवं च—

**अन्तःकरणसंस्थानां गुणानां वृत्तयस्त्विमाः ।**

न चैतद्व्यतिरिक्ताः काश्चिन्मलस्य वृत्तयो मदादिसंज्ञाः कस्याञ्चिदवस्थाया-मात्मनि दृश्यन्ते । ततो न सन्त्येव ता इत्याह—

**आभ्यो भिन्ना न मूलस्य वृत्तयोऽतो न सन्ति ताः ।। १४४ ।।**

अतश्च—

**त्यक्त्वा निरोधिकाः शक्तीर्नान्यो धर्मोऽस्य विद्यते ।**
**कर्माशयसमेतस्य हेतुत्वं च भवेद् भवे ।। १४५ ।।**

केवलमलस्य ज्ञानक्रियावारकत्वं कर्मसंस्कारयुक्तस्य संसारहेतुत्वं च युक्तिसिद्धम् । नान्यत् कार्यान्तरमित्यर्थः ॥ १४५ ॥

इत्थं मलस्वरूपमपि प्रदर्श्योपसंहरति—

**पशुरित्थं समाख्यातो यत्सम्बन्धादणुः पशुः ।**

पशुशब्दो मलवाचकतया श्रीमद्रौरवादौ दृश्यते । तस्य च न तत्त्वान्तरता, अपि तु पशुतत्त्व एवान्तर्भावः, तेन विनाऽऽत्मनां पशुत्वाऽयोगात्, तेनानाद्यावृतत्वाच्च । किञ्च, विधौ सृष्टिकाले शिवस्य सृष्ट्यादिकरणपूर्वमात्मनां भोगभोजनात्मकः, मायायाश्च भोगसाधनकलाद्युत्पादनतत्पोषणात्मकः, पश्चात्मनां च भोग्यभोगरूपो व्यापारोऽस्मिन् प्रकरणे प्रोक्तः । एते चैषां व्यापारा आत्मावारकमलादेव हेतुभूताद् भवन्ति, मलसद्भाव एवाऽस्य सर्वस्य प्रवृत्तेरिति । अपि च, मदादयश्च क्लेशाः पुंसामत्रैव प्रदर्शिता इत्युपसंहरन् अधिकारभेदात् तेषां वृत्तिभेदानाह—

**प्रसुप्ता तत्त्वलीनानां तदरुद्धाश्च योगिनाम् ।**
**विचित्रोदाररूपाश्च क्लेशा विषयसङ्गिनाम् ॥ १४६ ॥**

**समाप्तेयं भोगकारिका ॥**

मायातत्त्वलीनानां प्रलयाकलानामेते क्लेशा गुणादीनामपि तत्त्वानां तत्रैवोपसंहारात् प्रसुप्ता अकिञ्चित्करा आसते । योगिनां त्वभिव्यक्ता अपि योगबलान्मध्ये निरुद्धव्यापारा भवन्ति । विषयसङ्गिनां तु सकलानां पशूनामुद्भूतविविधस्वव्यापारा भवन्ति । विच्छिन्नोदाररूपा इति पाठे परस्परमुद्भवाभिभवाभ्यां कदाचिद्विच्छिन्नरूपाः कदाचिच्चोदाररूपाश्च भवन्तीत्यर्थः । इत्थं प्राक् प्रतिज्ञातयोः ससाधनयोर्भोगमोक्षयोः ससाधनो भोगस्तावदेताभिः प्रदर्शित इत्यत्रैव भोगप्रकरणोपसंहारः । मोक्षस्तु ससाधनः प्रकरणान्तरे प्रदर्शयिष्यत इति शुभम् ॥ १४६ ॥

श्रीमत्खेटकनन्दनेन गुरुणा सिद्धान्तसिद्धः स्फुटं
संक्षेपादिति कारिकाभिरुदितो भोगः समं साधनैः ।
वाचस्तस्य समीक्ष्य वीततपसाऽघोरादिना शम्भुना
लेशाद् देशिककुञ्जरेण विवृतिस्तासामियं निर्मिता ॥

**इत्यघोरशिवाचार्यविरचिता भोगकारिकावृत्तिः सम्पूर्णा ॥**

•

# नादकारिका

## भट्ट-रामकण्ठ-प्रणीता

### अघोरशिवाचार्यकृतव्याख्यासहिता

**बुद्धयस्मितामनोभ्यो विद्यातो रागतः कलायाश्च ।**
**मायापुंशक्तिभ्यो नादोऽन्यो दृश्यते ध्वनिभ्योऽपि ।। १ ।।**

नादातीतं शिवं नत्वा नादज्ञानप्रसिद्धये ।
श्रीरामकण्ठरचितां व्याख्यास्ये नादकारिकाम् ॥

अस्मिता अहङ्कारः । ततश्च बुद्धयादीनां मायान्तानां तत्त्वानां स्वकार्यैरेव सिद्धेः कार्यान्तरहेतुत्वे च प्रमाणाभावात् पुरुषस्य तच्छक्तेश्चाविकारित्वेन वाक्समवायायोगाद् ध्वनीनां च स्थूलानामुत्पत्त्यपवर्गयोगित्वेन कारणान्तरापेक्षित्वाद् अपिशब्देन तदुद्भूतानां वर्णानां च क्रमभावित्वेनाभिधायकत्वानुपपत्तेस्तत्कारणत्वेन नादो दृश्यते, प्रमाणेन निश्चीयत इत्यर्थः ॥ १ ॥

तथाहि—

**श्रोत्रग्राह्या वर्णा उच्चरितध्वंसिनः क्रमस्थितयः ।**
**अपरस्परोपकारादविशिष्टा नार्थवाचका युक्ताः ।। २ ।।**

ननु पदान्येव तावत्प्रकृतिप्रत्ययविभागेनार्थप्रतीतिकारणानि भवन्तु, वाक्यमे[व] वा विशिष्टक्रियाकाराकान्वयं(रकान्वितं) तद्धेतुत्वेनास्तु, अत आह—

**न च वर्णव्यतिरिक्तं पदमन्यच्छ्रूयतेऽथ वाक्यं वा ।**

पदवाक्यैकदेशभूतानां वर्णानां क्षणविध्वंसित्वेन परस्परोपकारकत्वाभावस्योक्तत्वात्, तद्व्यतिरिक्तयोश्च पदवाक्ययोर्भेदेनादर्शनान्न तयोरप्यभिधायकत्वमिति प्रत्यक्षनिराकृतत्वेनानुमानेनापि न तयोः सद्भाव इत्याह—

**यच्चाक्षमिति निषिद्धं तत्सदिति निषिध्यतेऽन्यतो ज्ञातुम् ।।३।।**

एतदेवाशङ्कापूर्वकं प्रपञ्चयति—

**गौरिति नामादिपदं श्रोत्रग्राह्यं सदस्ति चेन्नैवम् ।**
**न गकारौकारविसर्जनीयबाह्यं यतोऽन्यदत्रास्ति ।। ४ ।।**

नामादीत्यादिग्रहणाद् रक्तेत्यादिविशेषणपदम्, गच्छतीत्यादिक्रियापदं च गृह्यते ॥ ४ ॥

ततश्च—

**तेषां युगपदभावात् परोपलम्भे न पूर्वयोर्भावः ।**
**प्राप्ताद्विसर्जनोयात् खुरकम्बललक्षणा न चिद्व्यक्तिः ॥ ५ ॥**

चिद्व्यक्तिरर्थसंविदुदयः। केवलाद् विसर्जनीयात् सास्नादिप्रतिपत्तौ 'अश्वः, पुरुषः' इत्यादावपि स्यादिति भावः ॥ ५ ॥

नन्वस्तु केवलाद् विसर्जनीयान्नार्थबुद्धिः, पूर्ववर्णजनितसंस्कारयुक्तात्तु भवेदेव, यतो वर्णानां क्षणविध्वंसेऽपि न तत्संस्कारनाशः, कालान्तरे स्मृतिदर्शनादित्याशङ्कते—

**अथ चेद् विसर्जनीयात् पूर्वाक्षरजातसंस्कृतिसहायात् ।**
**इष्टैव वाच्यबुद्धिरविशिष्टाद् या न संभवति ॥ ६ ॥**

परिहरति—

**नैतत् संस्कारा अपि यैर्बुद्धौ पूर्वमाहितास्तेषु ।**
**विज्ञानहेतवः स्युर्न ततोऽर्थे धीः प्रकल्प्यते येन ॥ ७ ॥**

संस्कारा हि यैरेव पूर्वानुभूतैरर्थैर्बुद्धावारोपिताः, तेष्वेव घटादिषु स्मृतिहेतवो दृष्टाः, नाननुभूतेषु घटादिषु। ततोऽत्रापि यैर्वर्णैस्ते बुद्धावाहितास्तेष्वेव ज्ञानहेतवो युक्ताः, नार्थ इति पदस्य वाक्यस्य वा नार्थप्रतिपादकत्वं संभवति। यदाहुः—"संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः। विज्ञानहेतवस्तत्र ततोऽर्थे धीर्न कल्प्यते ॥" इति। स्मर्यमाणानुभूयमानवर्णसमूहात्मकं पदमभिधायकमिति चेत्, तन्न, स्मर्यमाणानां प्रदीपानामर्थप्रकाशकत्वादर्शनात्।

ननूक्तवद्वर्णानामर्थप्रतिपादकत्वासंभवात् तदन्यथानुपपत्त्या तदभिव्यङ्ग्योऽन्य एवाविनिर्भक्तो मायूराण्डरसवदनेकवर्णावभासकः क्रम एव पदात्मा पदव्यतिरिक्तश्च वाक्यस्वभावः समस्तस्य जगतो युगपत्क्रमेण वाऽर्थप्रतीतिहेतुत्वाद् व्यापको नित्यश्च स्फोटोऽभ्युपगन्तव्यः, यतः स एव व्यवहर्तॄणामर्थं स्फुटयतीति वैयाकरणाः। तदेतन्नोपपद्यते, तथाहि—तत्र यत्तावदुक्तं वर्णव्यतिरिक्तः स्फोट इति, तदयुक्तम्, न वर्णव्यतिरेकेण तस्य स्फोटस्य तद्ग्राहकयोर्मध्ये स्थितिरुपपद्यते। यतः स हि वर्णेभ्यो भिन्नो वा स्यादभिन्नो वा? न तावद्भिन्नः, वर्णव्यतिरेकेण तस्योपलब्धिलक्षणप्राप्तस्यानुपलब्धेः, शशविषाणादेरिव। न चानुमानात् स्थितिरुपपद्यते, तस्य प्रत्यक्षनिराकृतत्वात्। न चोपलब्धिप्राप्तत्वं तस्यासिद्धमिति वक्तव्यम्, ज्ञापकत्वात्। कारको हीन्द्रियादिः शक्त्यैवाज्ञातोऽपि कार्यं जनाति करोति, संस्कारवद्बीजादिवच्च। ज्ञापकस्याक्षिनिकोचादेरिव ज्ञापकत्वस्यासंभवान्नानुमानादनवस्था। नाज्ञापकश्च स्फोटोऽभ्युपगन्तव्यः, अक्षिनिकोचादिवदग्रतः संबन्धस्याज्ञापकत्वादिति कथमसाविन्द्रियादिवदनुपलभ्यो विकल्पयितुं शक्यते। यदाऽभिन्नः, तदा वर्ण एव स्फोटः, न तु तेभ्यो भेदेनावस्थित इति हस्तः कर इतिवत् स्फोटो वर्ण इति समा श्रुतिः, एकार्थाभिधानात्। ततो न तद्भेदादत्रार्थभेदः। तेन चार्थबुद्धिरुपपद्यते। यदप्युक्तं वर्णव्यङ्ग्य इति, तदप्ययुक्तम्, स्फोटो

हि बहुभिर्वर्णैरभिव्यक्तोऽर्थप्रतीतिहेतुः स्यात्, एकैकेन वा ? यदि बहुभिरभिव्यङ्ग्यः, तदा तेषामुच्चरितध्वंसित्वेन विसर्जनीयकाले गकारौकाराभावान्न विसर्जनीयमात्रात् तदभिव्यक्तिरिति पूर्वोक्तो दोषः। अथ पूर्वसंस्कारसहितोऽन्त्यो वर्णस्तद्व्यञ्जक इष्यते, तत्रापि स एव दोष इति केन हेतुनाऽत्यन्ताप्रसिद्धः स्फोटः कल्प्यते। अथ द्वितीयः, गकारादिना गोगवयगगनादिस्फोटानां बहूनामभिव्यक्तितो विशेषाभावादनेकार्थप्रतिपत्तिप्रसङ्गः। किञ्च, विभुत्वे चास्यैकपुरुषोच्चारितैर्वर्णैरभिव्यक्तिमत्त्वे सति विशेषाभावाद् देशान्तरेऽपि प्रमातॄणामर्थप्रतिपत्तिः स्यात्, तथा कालान्तरेऽपि नित्यत्वेनाधेयाविशेषत्वात्। न च तथाप्युच्यते। ततो न विभुर्नित्यो वा कश्चिदर्थप्रतिपादको युक्तः, नितरामेव स्फोट इति ॥ ७ ॥

प्रकारान्तरेण पराभिप्रायमाह—

**तद्बुद्ध्यधिरोहपदं क्रमवृत्तस्य क्रमेण विज्ञानम्।**
**वाचकमिष्टमदुष्टं हेतुश्चेत् स्थूलशब्दजातस्य ॥ ८ ॥**

व्यक्तं हि तावत् खुरकम्बलादिलक्षणमर्थं बुद्ध्याऽध्यवस्य तदनुगुणं गौरित्यादिपदं चिन्तयैवानुसन्धाय ततः स्थूलशब्दं प्रयुङ्क्ते। ततश्च बुद्ध्यधिरोहितपदबुद्ध्याधिरूढगवादिपदसहकृतं विवक्षिततत्तद्गोगवयाद्यर्थक्रमेण तत्तदर्थाकारमुत्पद्यमानं तत्तत्स्थूलशब्दोच्चारणकारणं तत्तद्बुद्धिवृत्त्यात्मकमेव विज्ञानं क्रमेण वास्य गवादेरर्थस्यादुष्टमभिधायकमिष्यतामिति ॥ ८ ॥

एतदपि निराकरोति—

**अस्त्वित्थं वाचकता वाच्येभ्यो नैव भिद्यते येन।**
**तद्वस्तु निरवशेषमविशेषेणैव बुद्ध्युपारोहि ॥ ९ ॥**

इत्थं परामर्शज्ञानस्यान्तरस्य वाचकताऽस्तु। एवं सति वाच्यवाचकयोरभेदः। उभयोरपि सास्नादिरूपत्वेनैककारणत्वात् तत्सास्नादिरूपं वस्तु निरवशेषं बाह्याकारविशेषेण बुद्ध्युपारूढं यतः ॥ ९ ॥

अत्र भेदमाशङ्कते—

**वाचकतैव विशेषो वाच्याच्चेत् तद्विमर्शरूपत्वात्।**
**अस्य विमृश्या वाच्या भेदाभेदैरिदं च सत् किन्तु ॥ १० ॥**

अयमेवास्य बुद्ध्याकारस्य वाचकस्य वाच्याद्बाह्याकाराद्विशेषो यद्बाह्याकारपरामर्शरूपत्वाद्वाचकत्वम्। ततश्च वाचकैः परामर्शज्ञानभेदैर्गवादिलक्षणा बाह्याकारभेदा विमृश्यमाना वाच्या भवन्तीति विशेषः। अत्रोच्यते—इदं च सत् किन्त्विति ॥ १० ॥

**रूपरसगन्धशब्दाद्यर्था येनावमृश्यतां नीताः।**
**सोऽन्तःसंजल्पात्मा नादः सिद्धो न विषयभावेन ॥ ११ ॥**

सत्यमस्त्येवेदं वाच्याद् भिन्नमान्तरं विमर्शात्मकं विज्ञानम्। तत्तु नाकारण-मुत्पद्यते, कादाचित्कत्वात्। एतदुक्तं भवति—बुद्धिर्हि तावद्बाह्ये चक्षुरादिना विषयीकृत एवार्थेऽध्यवसायिनी दृष्टा, नाविषयीकृते, अतिप्रसङ्गात्। ततश्चान्तरे बुद्धिः केनापि विषयीकृत एवार्थे परामर्शं करोति, अन्यथा सर्वदा सर्वार्थपरामर्शप्रसङ्गात्। तस्माद् रूपरसादयोऽर्था येन वक्तृबुद्धेः परामृश्यतां नीताः, स एवात्र नादः। अन्तःसंजल्पात्मेति। आन्तरः संजल्पो बिन्द्वाकाराऽऽत्मा कार्यत्वेन विद्यते यस्य स तादृग्विधः। तस्यापि परामर्शज्ञानस्य कारणं वाचकत्वेन सिद्धो न तु विषयाकारतया परिणतः स्थूलशब्द इति। कथं पुनर्वक्तृगतो नादः प्रतिपत्तुर्वाच्यबुद्धिं जनयतीति चेत्, तदुच्चरितस्थूलशब्दाऽभिव्यक्तः प्रतिपत्तृगतो नादस्तस्याऽपि वाच्यबुद्धिं जनयतीति वक्ष्यति कारिकोपसंहारे॥ ११॥

**विषयीकुर्वन् सर्वान् शब्दार्थानेष वाचको नान्यः।**
**दृष्टं सदप्यसत् तद् यस्मादेतेन सदा परामृष्टम्॥ १२॥**

तदुक्तम्—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिह ज्ञानं सर्वं शब्देन जायते॥" ( वा० प० १।११५ ) इति। कथं पुनः श्रीमत्पराख्ये—"पूर्ववर्ण-जसंस्कारयुक्तोऽन्त्योऽर्णोऽभिधायकः" इत्युक्तम्, नादाभिव्यञ्जकत्वेनोपचारादित्य-दोषः॥ १२॥

इत्थं नादस्य वाचकत्वं प्रसाध्य पूर्वप्रतिज्ञातं बुद्ध्यादीनां तत्कारणत्वमाह—

**बुद्ध्याकारो नास्मान्न मनोऽहङ्कारयोः कृतिर्येन।**
**तत्कार्यशरीरेन्द्रियविकृतेः पृथगेवमव्यक्तम्॥ १३॥**

यदेतद्वाचकत्वं तदस्मादेवोक्तात् कारणान्न बुद्ध्याकार इत्युक्तम्। न च मनोऽ-हङ्कारयोः पृथग्भूतम्। एवमव्यक्तमपि न वाचकत्वेनेष्टमिति शेषः, तस्य गुणकारणत्वे-नैव सिद्धेः, कार्यान्तरहेतुत्वे च प्रमाणाभावादिति॥ १३॥

अयं च—

**अव्यक्तत्वान्नादः सूक्ष्मः शब्दस्तु वाचकत्वेन।**
**वाक्यपदे प्रविभिन्नः पदार्थबुद्धेरसङ्करो यस्मात्॥ १४॥**

यस्मात् प्रतिपत्तृषु पदार्थबुद्धेरसङ्करो दृश्यते, तस्मात् प्रतिपुरुषं तेषु वाक्येषु पदेषु च वाचकत्वेन भिन्नरूपोऽयं नादोऽव्यक्तत्वेन सूक्ष्मशब्दवाच्यो वाचकत्वेन स्थूल-शब्दवाच्य इति॥ १४॥

इत्थं नादस्वरूपमुक्त्वा तत्कारणभूतां महामायां प्रतिपादयितुमाह—

**संवेद्यते न तद्वच्चागोपालाङ्गनादिपशुवृन्दैः।**
**बालैर्भिन्ना नादा उत्पत्त्यपवर्गयोगिनस्तेन॥ १५॥**

इह हि एकपुरुषविमर्शकाले सर्वेषां तदुदयादर्शनात् परस्परभिन्नस्वभावैः पश्चात्मभिर्हेतुभूतैः प्रत्यवस्थाभिन्ना एव नादाः संवेद्यन्ते, पदार्थबुद्ध्यन्यथानुपपत्त्या

शास्त्रतश्चोपलभ्यन्ते। यदुक्तम्—"आगोपालाङ्गना बाला म्लेच्छाः प्राकृतभाषिणः। अन्तर्जलगताः सत्त्वास्तेऽपि नित्यं ब्रुवन्ति ते॥" इति। किमतः? इत्यत आह—उत्पत्त्यपवर्गेति। तेन कारणेन उत्पत्तिविनाशधर्मित्वं कार्यत्वमेषां सिद्धमित्यर्थः॥ १५॥ (स्वा. का. २१६-७)

**ततश्चैषां कार्यत्वेनोपादानकारणं वाच्यम्।**
**तत्सिद्धो नादः परः सुमङ्गला मालिनी महामाया॥ १६॥**
**समनाऽनाहतबिन्दुरघोषा वाग् ब्रह्मकुण्डलिनीतत्त्वम्।**
**विद्याख्यं तत्त्वमित्युक्तं तैस्तैस्तदागमेष्वित्थम्॥ १७॥**

पराभिप्रायमनूद्य दूषयति—

**सेयमवस्था कैश्चित् पदविद्भिर्वर्ण्यते क्रियाशक्तेः।**
**इह पुनरन्यैवोक्ता पुरुषासमवायिनी वाग् यस्मात्॥ १८॥**

यस्मात् प्रतिपुरुषस्य वाक्समवायाभावान्नादादिक्रमेण शब्दोत्पादकत्वं न युक्तम्, परिणामित्वप्रसङ्गात्; तस्मान्नैवेयमत्रोक्ता॥ १८॥

एतदेव प्रपञ्चयति—

**अविकार्यत्रात्मोक्तस्तच्छक्तिश्चाप्यतो न योग्यौ तौ।**
**बहुधा स्थातुं यद्वा चैतन्यविनाकृतौ विकारित्वात्॥ १९॥**
**तत्पुंशक्तेर्भिन्नो नादोपादानकारणत्वेन।**

तस्मात् प्रतिपुरुषात्तच्छक्तेश्च भिन्ना कुण्डलिनी नादकारणं सिद्धेति॥ १९॥

यद्येवं मायैव परिणामिनी नादोपादानकारणमिष्यताम्, अत आह—

**अचिदपि शुद्धत्वान्मायातोऽप्यन्या तदूर्ध्वगा कथिता॥ २०॥**

यदुक्तम्—"मायोपरि महामाया" (रौ० सं० ४।२८) इति॥ २०॥

आगमप्रमाणसिद्धा चेयं शुद्धाध्वोपादानभूता महामायेत्याह—

**शुद्धं विद्यातत्त्वं विद्येशानां च भोगदं भुवनम्।**
**अध्वन्युक्तं चान्यैः सदागमैः श्रेयसे च तद्धेतुः॥ २१॥**
**वाग्ब्रह्मणि निष्णातश्चिद्ब्रह्माप्नोति येन कथयन्ति।**

यदाहुः—"शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" (मै० उ० ६।२२) इति॥२१॥

किञ्च—

**सिद्धिर्मुक्तिश्च परा नादज्ञानक्रिया च सफलेति॥ २२॥**

कथयन्तीति पूर्वक्रियानुषङ्गः॥ २२॥

यद्येवं नादज्ञानादेव परमुक्तिसिद्धेः कथं दीक्षैव मोचिनीति श्रीमत्स्वायंभुवादावुक्तम्। ज्ञानस्यापि दीक्षाङ्गत्वेनैव मोक्षसाधनत्वान्न केवलस्येति वक्ष्यामः। अपि च, स्थूलस्य पाशरूपस्य मायीयस्य शब्दस्य शिवादिशुद्धवस्तुप्रतिपादकत्वासंभवात् शुद्धस्य मन्त्रतन्त्रात्मनः शब्दस्य कारणत्वेनाऽप्येषा सिद्धेत्याह—

**मन्त्रादिकारणत्वाद्**

ततश्चाङ्गारस्थानीयेष्वेषु शब्देष्वभिव्यक्ता अग्निस्थानीयाः सूक्ष्मा मन्त्रशब्दाः कार्यकरा भवन्तीत्युक्तं श्रीमन्मतङ्गादौ।

ततश्चायं तत्कार्यभूतः प्रागुक्तो नादः—

**विद्यारागादिकञ्चुकाद् भिन्नम्।**
**तत्कार्यमभिष्वङ्गाद् दृक्क्रिययोर्मीलनाच्च भिन्नं यत् ॥ २३ ॥**

रागविद्याकलानां स्वकार्यैरेव सिद्धेः कार्यान्तरहेतुत्वे प्रमाणाभावात्, अनेकतत्त्वपरिकल्पनाभावप्रसङ्गाच्च ॥ २३ ॥

**स महामायाजन्यो नादः परमार्थवाचको युक्तः।**
**येन स्थूलं शब्दं मन्त्रं तन्त्रात्मकं प्रवर्तते वापि ॥ २४ ॥**

स्थूलस्य तु तदभिव्यञ्जकत्वाद् वाचकत्वमित्युक्तम् ॥ २४ ॥

एतदेवोपसंहरन्नाह—

**सा प्रतिपुरुषं भिन्ना वाक्शक्तिर्वाचिका स्थितेति ततः।**
**वाचकजातं निर्मायान्तरतस्तद् व्यनक्ति बाह्योऽपि ॥ २५ ॥**
**स्थूलैः शब्दैर्व्यक्ताः सूक्ष्मा नादात्मकास्ततो ध्वनयः।**
**वाच्यविभिन्नां बुद्धिं कुर्वन्तो वर्धयन्ति जनयात्राम् ॥ २६ ॥**

अनेनैव च क्रमेण मन्त्राः शब्दा अपि शिवादेरर्थस्याभिधायका भवन्तीत्युक्तम् ॥ २५–२६ ॥

**इति नादसिद्धिमेनामकरोत् श्रीभट्टरामकण्ठोऽत्र।**
**नारायणकण्ठसुतः काश्मीरे वृत्तपञ्चविंशत्या ॥ २७ ॥**

श्रीमदघोरशिवाचार्यजन्ययाऽपरसंज्ञया ।
व्याख्याता नादसिद्धिश्च प्रार्थितेन गुरूत्तमैः ॥

●

# मोक्षकारिका

## सद्योज्योतिःशिवाचार्यप्रणीता

### भट्टरामकण्ठकृतव्याख्यासहिता

याभ्यां प्रकाशितं वर्त्म सिद्धान्ते सिद्धभावतः।
गुरूणामपि तौ वन्द्यौ सद्योज्योतिर्बृहस्पती ॥
भोगमोक्षप्रदं नत्वा भोगमोक्षाय शङ्करम्।
भोगमोक्षेषु संक्षेपाद् व्याख्यास्ये मोक्षकारिकाम् ॥

इह हि—"रुरुसिद्धान्तसंसिद्धौ भोगमोक्षौ ससाधनौ। वच्मि" ( भो० का० २ ) इति प्रतिज्ञायां पूर्वम्—"भोक्तुर्भोगश्चितेर्व्यक्तिः" ( भो० का० ७३ ) इत्यादिना भोगो भोक्तारश्च पशवोऽस्वतन्त्राः, तेषां च भोगसाधनं कार्यकरणादिरूपं क्षित्यादि-कलान्तं विश्वं विश्वोपादानकारणं च मायाख्यं प्रतिपादितम्, अधुना तु भोगसिद्धये भोक्तॄणां किं तत्स्वत एव प्रवर्तते, उत कर्तृप्रेरितमित्यत्र साधनान्तरं कर्तृलक्षणमुच्यते—

**अजातमलसंबन्धः सर्वज्ञः सर्वकृद् विभुः।**
**सकलो निष्कलोऽनन्तः स्वेच्छानन्तरकार्यकृत् ॥ १ ॥**
**निर्मुक्तातिशयैश्वर्यो मायां विक्षोभ्य शक्तिभिः।**
**भोगिनां भुक्तये विश्वं विचित्रं कुरुते शिवः ॥ २ ॥**

विश्वं मायोपादानत्वेन पूर्वोक्तं भोगसाधनमदृष्टकर्तृकम्। तस्मिन् विशिष्ट-कार्यत्वाद् विशिष्टज्ञानक्रियाकर्तृत्वं कुम्भकारादिजन्यवन्निश्चितमिति विश्वस्य सावयव-त्वान्नासिद्धः, नाप्यनैकान्तिकः, सर्वस्यादृष्टकर्तृकस्य वनकुसुमादेरपि पक्षीकृतत्वात्। अत एव न विरुद्धः, विपर्ययव्याप्त्यभावात्। न च त्रैरूप्याद्धेतुलक्षणं संभवतीत्युक्तमन्यत्र। नन्वज्ञेन कर्त्रा सह दृष्टान्ते सिद्धव्याप्तिकादस्माद्धेतोरज्ञ एव विश्वकर्ता सम्भवतीति इष्टव्याघातः ? न, येनासावप्यजातमलसंबन्ध एव। कुम्भकारस्यापि स्वकार्यनिष्पत्तौ मलेनाज्ञानेनानुत्पन्नसम्बन्धत्वात्। यदि हि तत्राज्ञानं भ्रान्तिर्वा भवेन्नैवासौ कुम्भं कुर्यात्, अपि त्विष्टकां घटादिकं विकलावयवं कार्यानुपयोगिनं कुम्भकारः कुर्यात्। तद्यथा सकलावयवं कुम्भं दृष्ट्वा कुम्भकारो बुद्धिसौष्ठवयुक्तोऽनुमीयते, न त्वज्ञो भ्रान्तो वा, तथैवेश्वरोऽपि स्वकार्याद् विश्वलक्षणादनुमीयमानोऽजातमलसम्बन्ध एवानुमीयत इति नेष्टविघातः कश्चित्।

ननु कुम्भकारस्य स्वकार्यादन्यत्राज्ञानमस्त्येव। भवतु, प्रकृतेऽस्य कुम्भविषये नास्तीत्यत्र दृष्टान्तता। नन्वेवमीश्वरस्य स्वकार्यादन्यत्राज्ञानप्रसङ्गः ? न, तत्कार्यभोग-

मोक्षसाधनविश्वव्यतिरेकेणान्यस्याभावात् । नन्वन्यन्नास्तीति कुतः, अस्तु तद्भोगसाधनं चेत्कार्यकरणादिवत् कार्यमेव । तदसाधने तु तस्मिन् निष्प्रयोजने तस्याज्ञानं शशविषाणादाविव भूषणमेव । तदाहुः—'हेयोपादेयतत्त्वस्य साभ्युपेयस्य वेदकः । यः प्रमाणमसाविष्टः न तु सर्वस्य वेदकः ॥" इति । अत एव विश्वव्यतिरेकेणान्यस्याभावात् सर्वज्ञः सर्वकर्ता च विश्वकृत् । कुम्भकारस्यापि स्वकार्ये सर्वज्ञतासर्वकर्तृतासिद्धेः । नहि तस्य तत्रांशेनाप्यज्ञत्वे शक्तिवैकल्ये वा कुम्भस्ततो भवेदित्युक्तम् । अत एव कुम्भकारवत् स्वकार्यव्यापकत्वाद् विभुः, कार्यस्य विभुत्वात् । कुम्भकारस्यापि हि स्वकार्यपृथुबुध्नोदरभोगेष्वव्याप्नुवतस्तत्र पर्वतादाविव कर्तृत्वाऽसिद्धेः ।

ननु कार्यसत्तावच्छरीरमपि विश्वकर्तुः प्राप्तम् ? न, कुम्भकारादीनामपि स्वदेहस्पन्दादिकार्यं न शरीरान्तरपूर्वकं दृष्टं यतः । ननु तदपीच्छाजन्यमेव ? सत्यम् । अत एव सर्वं कार्यजातं तमेव कारणत्वेन न व्यभिचरतीति विश्वकर्ताऽपीच्छानन्तरकार्यकृदनुमीयत इत्यदोषः । नन्विच्छापि मनोवृत्तिः, कथं विश्वकर्तुः सा संभवति । इच्छा न मनोवृत्तिरस्मदादीनामपि, किन्तु बुद्ध्यभिव्यङ्ग्या ज्ञानशक्तिरिव मनोभिव्यङ्ग्या क्रियाशक्तिरेवेत्युक्तमस्माभिर्मन्त्रवार्त्तिकटीकायाम्—"शाक्तस्य हि तन्मनसस्त्विच्छा ह्येषा क्रियाशक्तिः" इति । अतो भगवतस्त्वनावृतशक्तित्वान्न व्यञ्जकोपयोगः । नन्विच्छायाः शरीरान्तरनैरपेक्ष्येण तदधिष्ठितशरीरस्पन्दादिकर्तृत्वं दृष्टम्, न बाह्ये स्यान्मृदादिजन्ये घटादौ । सत्यम् । अत एव सर्वदाऽधिष्ठेयत्वेन विश्वं तस्य शरीरमिवानुमीयत इति । अत एव च कार्यदर्शनाज्ज्ञानक्रियेच्छाशक्तिसाकल्यमेवानुमीयते, न कलारागविद्यादिशरीरयोगः, व्यभिचारादिति ।

सकलो निष्कलश्च विश्वकर्तेत्यग्रे भविष्यति । किञ्च, अनन्तो ज्ञत्वादिशक्तियोगाद् आत्मवत् । साधितं चात्मनामनन्तत्वं विभुता च भोगप्रकरणे, इत्यतोऽपि विभुः । ननु घटपटादिकार्यबहुत्वं कर्तृबहुत्वाविनाभावसिद्धमित्यत्रापि क्षित्यादिकलान्तानि विश्वशब्दवाच्यानि बहूनि, कार्यत्वेन हि बहवो विश्वकर्तारोऽनुमेयाः ? सत्यम् । यदि ह्येषामेकभोगप्रयोजनता न स्यात् । प्रतिपादिता च—"कलोद्वलितचैतन्यो विद्यादर्शितगोचरः" ( स्वा० ३२।१० ) इत्यादौ । यच्च भिन्नमप्येकप्रयोजनं तदेकबुद्धिमत्कर्तृजन्यं प्रासादादि निश्चितमिति निर्मुक्तातिशयैश्वर्यः, तस्यैव समस्तविश्वकरणात्; स च शिवः परोपकारायैव प्रवृत्तेः सर्वत्र तद्धर्मयुक्तः प्रमाणसिद्ध इति ॥ १–२ ॥

अत्र सांख्यच्छायया परः—

**चित्रात् तन्तुगुणाच्चित्रः पटो दृष्टो न शङ्करात् ।**
**यथा तद्वज्जगच्चित्रं चित्राद्बीजान्न शङ्करात् ॥ ३ ॥**

न पटोपकारकं कुविन्दमपह्नुत्येदं युज्यते वक्तुम्, भूयो विरोधात् । किन्तु सत्यपि तस्मिन् विश्वकर्त्रा शिवेनास्य हेतोर्दृष्टान्ते व्याप्तिरसिद्धेत्यनैकान्तिकता । जगद्विधातुर्मायाख्यस्य गमकत्वमेव । न कार्यमुपादानकारणं व्यभिचरति यतः ॥ ३ ॥

नैष दोषः—

**कुविन्दबुद्धिकर्मभ्यां न विना पटकारणम् ।**
**दृष्टं तन्तुसमाख्यातमुपादानमचेतनम् ॥ ४ ॥**
**यद्वत् तद्वज्जगद्बीजमुपादानमचेतनम् ।**
**ज्ञानक्रिये महेशस्य परित्यज्य न कारणम् ॥ ५ ॥**

उपादानकारणमपि तन्त्वादिकं विशिष्टज्ञानक्रियायुक्तपटादिकर्तारं विना न स्वकार्यं कुर्वद् दृष्टमिति कार्यमात्रमुपादानकारणवत् कर्तृमात्रेण व्याप्तं सिद्धमेवेति विश्वस्याप्युपादानकारणवत्त्वेन प्रत्युत कार्यपूर्वत्ववत् कर्ता साध्यत इति नानैकान्तिकता ॥ ४–५ ॥

अधुना मीमांसकदृष्ट्या सिद्धसाधनम्—

**आहापरो जगच्चित्रं वैचित्र्यात् कर्मणो भवेत् ।**
**फलं च कर्मतः पुंसां किमत्रेश्वरकारिता ॥ ६ ॥**

कार्यत्वात् तत्र कर्तृमात्रमनुसन्धेयम् । भवद्भिश्च धर्माधर्मात्मकं कर्मैव कृष्यादिकर्मवत् कार्यजनकमङ्गीकृतमिति किमन्यदनुमीयते ॥ ६ ॥

**सत्यमेतत् तथापीदं कर्मादृष्टमचेतनम् ।**
**कृष्यादिवत् तु कर्तारं प्रज्ञावन्तमपेक्षते ॥ ७ ॥**

दृष्टमपि कृष्यादिकं कर्म न तु बुद्धिमत्कर्त्रा विना फलजनकं पुंभ्यो भोगानाहृत्य दातुं समर्थं दृष्टमिति धर्माधर्मात्मकमपि कर्मत्वात् स्वफलदानाय ज्ञानातिशययुक्तं प्रत्युत तमेव विश्वकर्तारमसिद्धं साधयतीति न सिद्धसाध्यता । तत्र दृष्टे सति नादृष्टकल्पना युक्तेति ॥ ७ ॥

**अपरे ब्रुवते कर्तृ बहुधा चेतनैर्युतम् ।**
**पुम्भिरेव भवेद् बीजं किं हरेणेति तन्नहि ॥ ८ ॥**

कायिकव्यापारादौ कृष्यादाविव बहुधा चेतनैर्दृष्टैरेव पुरुषैर्युक्तं जगद्बीजं सर्वं कलादिकार्यं बहुकर्तृतया करिष्यतीति दृष्टहान्यदृष्टपरिकल्पनाभ्यां न कर्त्रन्तरसिद्धिः । तन्नहीति तन्न युक्तमित्यर्थः ॥ ८ ॥

यस्मात् तयोः प्रकृतिपुरुषयोः संबन्धमात्रं वा पुंसां कलादिकार्यकरणहेतुः, विशिष्टो वा भोग्यभोक्तृलक्षणः संबन्धः ? तत्र—

**सामान्यो यदि संबन्ध उत्पत्तौ कारणं तयोः ।**
**ततः कलादिकार्यस्य नित्योत्पादः प्रसज्यते ॥ ९ ॥**

व्यापकत्वात् प्रकृतिपुरुषयोः कैवल्यावस्थायामपि संयुक्ततया संबन्धमात्रस्य भावात् । कलादिकार्यकरणोत्पादे सत्यनिर्मोक्षप्रसङ्गः ॥ ९ ॥

अथ द्वितीयः पक्षः—

**विशिष्टश्चेत् तयोर्योगो वक्तव्यं तस्य कारणम् ।**
**येन नाकस्मिकं कार्यं दृष्टं क्वचन किञ्चन ॥ १० ॥**

प्रकृतिर्हि न प्रकृतिस्वरूपतया भोग्या, नापि पुरुषः स्वरूपेण भोक्ता, मोक्षाभावप्रसङ्गात्। अपि तु कलादिकार्यद्वारेण, तत्संबन्धस्य हि कलादिजननात्। जन्यस्य संयोगात्मकस्य तयोर्भोग्यभोक्तृरूपस्य संबन्धविशेषस्य कर्ता वाच्यः। येन नाकर्तृकं कार्यं संभवतीत्युक्तम् ॥ १० ॥

ननु तयोरेवात्र कर्तृत्वम्, किमन्येन ? तन्न, यतः—

**पुरुषो न स्वतस्तावद् बीजं नो याति तं प्रति ।**

पुरुषस्याशक्ततया प्रकृतेः स्वतः कार्यकरणकलादिनिर्माणे सामर्थ्यादृष्टेः, प्रकृतेश्चादृष्टतया विशिष्टमेवंविधं कर्मनिमित्तं पुरुषाय कार्यकरणं स्यादिति ज्ञानाभावाद् भोग्यभोक्तृसंबन्धे न कर्तृकता, किन्तु संबन्धमात्र इति ॥

**तस्माद् योगे वियोगे वा महेशः कारणं तयोः ॥ ११ ॥**

तस्माद् भोगमोक्षसाधनदर्शनान्यथानुपपत्त्या सर्वज्ञः सर्वकर्ता परमेश्वर एव, नान्यः ॥ ११ ॥

तत्र लोकायतभूमिकया परः—

**स्वभावतो जगद्बीजं जगत्कर्तृ हरेण किम् ।**
**स्वभाव एव वक्तव्यो गत्वा दूरमपि त्वया ॥ १२ ॥**

परमेश्वरमपि कल्पयित्वा तस्य जगत्कर्तृत्वस्वभावो भवद्भिः कल्पनीयः। तद्वरं प्रकृतेरेवोभयवादिसिद्धाया जगत्कर्तृत्वस्वभावः कल्प्यताम्। एवं च न बह्वदृष्टं कल्पितं भविष्यतीति ॥ १२ ॥

तदयुक्ततरम्, यतस्तस्य प्रकृतिलक्षणस्य जगत्कर्तुः—

**स्वभावः प्रतिपत्तव्यः किंविशिष्टो जगत्कृतः ।**

ननु कोऽयं प्रश्नो जगत्कर्तृलक्षण एव स्वभावस्तस्य ? सत्यम्, किन्तु—

**व्यापारः परनुन्नस्य स्वतन्त्रस्याथवा बुधाः ॥ १३ ॥**

जगत्कारणात्मा तस्य स्वभावः किं बुद्धिमत्कर्तृप्रेरितस्य केवलस्य वा ? तत्र—

**स्वतन्त्रस्येति पक्षेऽस्मिन् न मानमिति साधितम् ।**

अचेतनस्य कर्तृत्वपक्षे न प्रमाणमस्तीति साधितं पूर्वमेव ॥

कथं साधितम्—

**स्वतन्त्रं कार्यकृद् यस्मान्नोपादानमचित् क्वचित् ।। १४ ।।**

अथ द्वितीयः, स च युक्त एव—

**प्रज्ञावच्छक्तिनुन्नस्य व्यापारो मानसाधितः ।**

प्रज्ञावतः क्रियाशक्त्या प्रेरितस्य जगत्करणे व्यापारः, तस्य प्रमाणसिद्धत्वादिष्यत एव ॥

ततश्च—

**प्रज्ञावान् प्रेरकस्तस्य यः स विज्ञेय ईश्वरः ।। १५ ।।**

यश्चेतनः स्वशक्त्या तत् प्रेरयति स एव ईश्वरः सिद्ध इति न स्वभाववादः। यद्येवं क्रियाशक्तिमात्रमेवात्र तत्प्रेरकमस्तु, किमीश्वरेण ? तस्यापि तया विना कर्तृत्वासिद्धेः। यदाहुः—

या त्वं कर्तुः क्रियाशक्तिरीश्वरस्य यया विना।
तस्यापि कर्तृता नैव चण्डि तस्यै नमोऽस्तु ते ॥ १५ ॥ इति।

**इच्छाशक्तिः पराशक्तिः प्रक्लृप्ता नान्य ईश्वरः ।**
**प्रवर्तते यदुद्रेकाद् दिवाकाले निशान्विते ।। १६ ।।**
**सुप्ता काल इहान्ते सा निर्व्यापाराज्जगन्निधौ ।**

यद्यस्मात् सैव शक्तिः प्रकृत्यधिकरणा प्रेरणोत्तरं सोद्रेकात् सामर्थ्यलक्षणान्मायातो जगत्करणाय प्रवर्तते, इति नेश्वरोऽन्यः ॥ १६ ॥

तदयुक्तम्—

**उद्रेके कारणं तस्य नान्यदस्ति महेश्वरात् ।। १७ ।।**

जडस्य स्वयं प्रवृत्तावप्रवृत्तौ वा सामर्थ्यं नास्तीत्युक्तम्, अतोऽन्यथानुपपत्त्या ज्ञानातिशययुक्तः परमेश्वर एवोद्रेके तस्याः कारणम् ॥ १७ ॥

ननु सैव सर्वज्ञा भविष्यति—

**सर्वज्ञा सैव चेन्नाम्नि विवादो न च वस्तुनि ।**

यद्येवं नाम्नि विवादः, न च नामभेदाद् वस्तुभेद इति ततो व्यतिरेकस्तस्याः प्रकल्पित एवास्तु। तर्हि सर्वज्ञत्वादिधर्मिका प्रकृतिरेवेश्वर इति वेदान्तविदः ॥

**परात्मनो महेशात्तु दृक्क्रियाशक्तिशालिनः ।। १८ ।।**
**चेतनाचेतनं विश्वं भोक्तृभोग्यविभागतः ।**
**उत्पत्स्यते ततोऽन्येन जगदीशेन किं फलम् ।। १९ ।।**
**भोक्ता चापि स एवैको वरमङ्गीकृतो विभुः ।**

भोक्तृभोग्यादिभेदभिन्नाच्चेतनाचेतनाद् विश्वलक्षणात् कार्यादनुमीयमानं सर्वज्ञानक्रियायुक्तं कार्यद्वारेण भोक्तृभोग्यादिस्वभावमेकमेवाद्वितीयं परमात्मसंज्ञमीश्वरलक्षणमुपादानमनुमेयमित्यद्वैतसिद्धेर्न भिन्नेश्वरकल्पना युक्तेति ॥ १८-१९ ॥

ननु चेतनानां नित्यत्वेन प्राग् भोगप्रकरणे प्रतिपादितत्वात् कार्यत्वमसिद्धम् ? न, अनेकान्वितत्वेन कार्यत्वसंभवात् । अचेतनानामिव चेतनानामपि चिदन्वयादुपादानकारणं चेतनं सिद्ध्यत्येव । तदप्यनुपपन्नम्, यतः—

**चिदचिद्विश्वसंभूतिरात्मनो यदि सोऽपि हि ॥ २० ॥**
**चिदचिज्जायते यस्मात् कार्यं कारणधर्मगम् ।**

परमात्मनः सकाशाद् यदि चेतनाचेतनं विश्वमुत्पद्यते, ततः सोऽपि परमात्मा चेतनाचेतनस्वभावो भवेत् । उपादानकारणस्वरूपानुगता एव कार्याणां मूर्तिविशेषा हेममृदादिजन्यघटादीनां सिद्धा यतः ॥ २० ॥

ततश्च—

**विरुद्धावेककालस्थौ धर्मावेकाश्रयं गतौ ॥ २१ ॥**
**इतरेतरनाशात् तौ कुरुतो लोपमात्मनः ।**

विरुद्धयोः परस्परोपमर्देनैवात्मलाभाद् घटतदभावयोरिव चेतनाचेतनयोरेकत्रैकस्मिन् काले न संभवः । अथ केनचिद् भागेन चेतनोऽसौ केनचिन्नेत्युच्यते, यद्येवं सभागत्वे सति घटादिवत् कार्यत्वात् परमकारणत्वायोगः ॥ २१ ॥

अपि च—

**उपादानत्वतो मृद्वत् परमात्मा न चेतनः ॥ २२ ॥**

उपादानकारणमचेतनं मृदादि निश्चितमिति परमात्मनोऽप्यचेतनत्वम्, उपादानकारणत्वात् । चेतनत्वे वा नोपादानकारणत्वमिति ॥ २२ ॥

किञ्च—

**तदुत्थाश्चापि भोक्तार उत्पाद्यत्वाद् घटादिवत् ।**

उपादानकारणादुत्पद्यमानं घटाद्यचेतनमेव सिद्धमिति परमात्मलक्षणादुपादानकारणादुत्पद्यमाना भोक्तार आत्मानोऽप्यचेतनाः प्रसज्यन्ते भवताम् । चेतनाश्चैते यथा स्वपरग्राहकत्वेन स्वसंवेदनसिद्धा इति न तत्रोत्पन्नाः, तत् परमात्मवन्नित्या इति । नन्वन्वयादेषामचेतनानामिव कार्यत्वमुक्तम्, तन्न युक्तम्, अनन्वयादिति । न चात्मन एवात्मा ग्राह्यो भवति, तत्र तस्य व्यापारविरोधात् । अपि तु ग्राहकत्वेनैव प्रत्यग्रूपतया सर्वदा भासत इत्युक्तमस्माभिः परमोक्षनिरासकारिकावृत्तौ विस्तरेण। तत्रैवावधार्यम् ॥

ततश्च—

**अचित्प्रसवधर्मी यत् परमात्मा मृदादिवत् ।। २३ ।।**
**प्रज्ञावत् क्षोभकापेक्षः स्वजन्यजननाय तत् ।**

यद्यस्मात् परमात्मन उपादानकारणत्वेनाचेतनत्वमुक्तम्, तत्तस्मादेव स्वकार्य-निष्पत्तये मृदादिवद् बुद्धिमत्कर्तृप्रेरितत्वमस्याभ्युपगन्तव्यम् ॥ २३ ॥

एवमद्वैतानुपपत्तिः—

**तस्माद् भोक्ता जगद्बीजं महेशश्चापि शक्तिमान् ।। २४ ।।**
**पृथक् पृथग् विनिश्चेयाः प्रोक्तदोषोपशान्तये ।**

तस्माद्भोक्तारोऽनुत्पन्ना एव, जगन्निधिश्च जडः, जगत्कर्ता सर्वज्ञत्वादिधर्मयुक्तो महेश्वरश्च परस्परं भिन्ना एव नित्या अभ्युपगन्तव्याः । तदुक्तं तत्त्वत्रयनिर्णये—"शम्भुः पुरुषो माया नित्यं विभु कर्तृशक्तियुक्तं च । सुप्तेऽपि विकृतिजाते त्रितयं जागर्ति तत्त्वानाम् ॥" ( श्लो० ३ ) इत्युपादानकारणादन्यः परमेश्वरः सिद्ध इति न दोषः कश्चित् ॥ २४ ॥

नन्वपरिणामिनी शक्तिः, तत्कथं शिवशक्तेर्ज्ञानक्रियाभेद उपपद्यते ? सोऽपि न वास्तव एव । तथा हि—

**सर्वज्ञानक्रियारूपा शक्तिरेकैव शूलिनः ।। २५ ।।**

यदि तु ज्ञानशक्तेरन्या क्रियाशक्तिः स्यात्, जडत्वाद्वामादिभेदपरिणामतश्चास्या मायाया इवेश्वरसमवायो न भवेत्, अपरिणामित्वात् तस्याः, इत्यकर्ता क्रियाशक्तिविकल-त्वादीश्वरः प्रसज्यते । न च कर्त्रा विना विश्वकरणमुपपद्यत इत्यवश्यं सर्वज्ञानक्रिया-शक्त्योरैक्यमभ्युपगन्तव्यम् । ननु ज्ञेयकार्ययोर्भेदात् कथं न शक्तिभेदः ? न, तयोरप्यभेदात् । नहि ज्ञेयत्वं कार्यतामतिवर्तते, वस्तुस्वभावत्वे हि तस्य सर्वेषां सर्वज्ञताप्रसङ्गः । न च कार्यत्वं ज्ञेयतामिति न वास्तवो ज्ञानक्रियाशक्त्योर्भेदः, अपि तु कल्पित एव ॥ २५ ॥

तथैव च क्रिया—

**त्रिधैव शक्तिर्वामाद्या गीता व्यापारभेदतः ।**

वामाद्यापि क्रियाशक्तिर्व्यापारभेदेनैव त्रिधा भिन्ना गीता न वस्तुतः—"वामा ज्येष्ठा च रौद्री च शक्तित्रयमतः परम्" इति । अन्यथा हि ज्ञेयभेदेन भेदात् प्रत्यर्थं प्रत्या-यकभेदकल्पनया प्रतिपरमाणु ज्ञानभेदप्रसङ्गेन तासां नैरात्म्यप्रसङ्गः । तद्यथैवानेकपदा-र्थावलोकनमेकयैव ज्ञानशक्त्याऽनुभवसिद्धं प्रकाशयितुं शक्यम्, एवमुद्युक्तरूपायाः क्रिया-शक्तेरनेककार्यकरणं सिद्धमबाधितमिति तद्भेदोऽपि व्यापारभेदात् कल्पितः ॥

व्यापाराणां तर्हि कथं भेदः ? इत्युच्यते—

**क्रियया मलिनान् पुंसो निरुणद्धि महेश्वरः ।। २६ ।।**

**अनादिमलरुद्धांस्तान् कर्मयुक्तान् नुदत्यतः ।**

क्रियाशक्त्या तावत् पूर्वमेवेश्वरोऽनादिमलयुक्तान् पशून् निरुणद्धि नियमयति, अतो नियमितांश्च कर्मविपाकानुसारेण प्रेरयति ॥ २६ ॥

ननु व्यापकत्वात् तेषां कुतः प्रेरणा ? सत्यम्, किन्तु—

**ततस्तेषां च नुन्नानां पत्या संजायते भृशम् ॥ २७ ॥**
**भोगसाधनसम्बन्धयोग्यता भोगलोलिका ।**

विज्ञानकेवलिवैलक्षण्येन तेषां कर्मानुसारेण तेषां कार्यकारणसंबन्धयोग्यतोत्पादनमेवेश्वरप्रेरणमुच्यते ॥ २७ ॥

ततस्तु—

**शुद्धाशुद्धाधिकारस्थे विद्येशेऽनन्त आत्मनि ॥ २८ ॥**
**अभिव्यक्तो जगद्बीजं विक्षोभ्य कुरुते जगत् ।**

शुद्धाशुद्धाधिकारिणं मन्त्रेशनायकमनन्तं प्रेर्यं कृत्वा मायातो जगत्करोति पतिः । यच्छ्रूयते—"विद्याराजाधिराजेशो जगद् भ्रामयतीच्छया" इति ॥ २८ ॥ (मै. वि. १.६)

तदनु च—

**जगतानेन संयोज्य तान् पुंसो लोलिकावतः ॥ २९ ॥**
**भोगार्थं साधनाकारां करोति स्थितिमीश्वरः ।**

कर्मानुरूपं कार्यकरणैस्तान् पशून् संयोज्य तेषां भोगार्थं साधनाकारां स्थितिं करोतीश्वरः ॥ २९ ॥

ततश्च—

**स्थित्यन्ते सोऽपि संसारे विश्रमार्थं प्रधावताम् ॥ ३० ॥**
**पशूनां प्रकृतीनां च क्षमत्वोत्पादनाय च ।**
**ततः सर्वोपसंहारं विधत्ते भगवानिति ॥ ३१ ॥**

स्थितिसंरक्षणादानभावलक्षणा व्यापारा भिन्नाः कथिताः ॥ ३०–३१ ॥

अनुग्रहमपि विधत्ते—

**मलस्वशक्तिरोधान्ते दीक्षाशक्त्यैव मुञ्चति ।**

वक्ष्यमाणवद् यदैव मलस्येश्वरशक्तेश्च रोधाधिकारो निवर्तते, तदा दीक्षयैव पशून् मोचयति ॥

**वामा ज्येष्ठा च रौद्री च स्वतोऽभिन्नापि सा त्रिधा ॥ ३२ ॥**

**रोधविश्लेषहरणैर्विभिन्ना कर्मभिः क्रिया ।**

अथ स्थितिसंरक्षणभावलक्षणानां व्यापाराणां संसाररोधफलत्वाद् रोधो वामा-व्यापारः, आदानरूपः संहारो ज्येष्ठायाः पाशहरणात्मकोऽनुग्रहो रौद्र्याः—इत्येतैः कर्मभि-रभिन्नापि स्वतः क्रियाशक्तिर्विभिन्ना कथ्यते, न परमार्थत इति "सर्वज्ञानक्रियारूपा शक्तिरेकैव शूलिनः" (मो० २५) इति न दोषः कश्चित् ॥ ३२ ॥

**इत्येवं देवदेवस्य सर्वकर्तृत्वमीरितम् ॥ ३३ ॥**
**एतेन सर्वकृत्त्वेन सर्वज्ञोऽवाप्यते पतिः ।**

ज्ञानं विना कुविन्दादीनां कर्तृत्वादृष्टेर्भगवतः सर्वकृत्त्वतः सर्वज्ञत्वसिद्धिरित्युक्तं प्राक् ॥ ३३ ॥

तथा हि—

**उपादाननिमित्तैस्तु फलेन च समन्वितम् ॥ ३४ ॥**
**यथा पटं विजानाति पटकारस्तथा भवः ।**
**उपादाननिमित्तैस्तु फलेन च समन्वितः ॥ ३५ ॥**
**सर्वकर्ताऽपि तत्सर्वं विजानाति यथा स्थितम् ।**

यथैव पटकारस्तन्तुभ्यो देवदत्ताय मूल्यसंसिद्धये तुरीवेमादिभिः पटं कुर्वाण-स्त्रिकालामलज्ञानयुक्तः स्वकार्ये सिद्धः, तथैव विश्वकर्ता मायातो विचित्रकर्मनिमित्तं पशूनां भोगमोक्षार्थं विश्वमुत्पादयन् स्वकार्ये त्रिकालामलज्ञानयुक्त एवाऽनुमीयत इति सर्वज्ञत्व-सिद्धः ॥ ३४–३५ ॥

**इत्थं सर्वार्थकारित्वाद् द्विरूपा शक्तिरात्मनि ॥ ३६ ॥**
**कलापिण्ड इवाभाति शक्तिः सा नित्यसंस्थिता ।**
**यया युक्तो महेशानः सर्वं वेत्ति करोति च ॥ ३७ ॥**
**कलावानिति तत्त्वज्ञैः सकलस्तेन गीयते ।**

उक्तवत् सर्वज्ञानक्रियारूपा सैव शक्तिर्नित्याऽनेकरूपेव लक्ष्यमाणा भगवतः शरीर-मुपचर्यत इति सकलः कथ्यते शिवः ॥ ३६–३७ ॥

स एव तु—

**न कलापिण्डसंबद्धः संबद्धोऽसौ यथा पशुः ॥ ३८ ॥**
**कदाचिदपि देवेशस्तस्माद् गीतस्तु निष्कलः ।**

पशुवत् कलाद्यात्मकशरीराभावान्निष्कलो भगवानित्युक्तं प्राक् ॥ ३८ ॥

अत्र परः—

**नन्वस्य निष्कलत्वे तु न ज्ञानं नापि कर्तृता ॥ ३९ ॥**

**कलाकलापयुक्तानां दृश्यते चिद्वतां यतः ।**

कलादियोग एव पशूनां ज्ञानादिकं दृष्टमिति कलाद्यभावादीश्वरस्य ज्ञानाद्यभावः ॥ ३९ ॥

नैष दोषः—

**चिद्व्यक्त्यर्थं कलायोगमपेक्षेते सुसंस्थिते ॥ ४० ॥**
**दृक्क्रिये मलसंरुद्धे नेश्वरे रोधवर्जनात् ।**

उक्तं हि भोगप्रकरणे—पशूनां ज्ञानक्रिये मलरुद्धत्वात् कलादिव्यञ्जकापेक्षे विषयेषु प्रवर्तेते इति । परमेश्वरस्य त्वनाद्यनावृतत्वान्न ते व्यञ्जकापेक्षे इति सर्वदा सर्वार्थे ॥४०॥

**अथेशस्यापि सापेक्षे**

अथाज्ञत्वात् पशुवदीश्वरस्यापि दृक्क्रिये कलादिव्यञ्जकापेक्षे ॥

यद्येवम्—

**तदाऽसौ जायते पशुः ॥ ४१ ॥**

कलादियोगाद् देवदत्तादिवदीश्वरः पशुः प्रसज्यते ॥ ४१ ॥

भवतु वा ? का नः क्षतिः—

**न चेश्वरं विना कार्यमतोऽन्यो वाच्य ईश्वरः ।**

ईश्वरं विना न विश्वलक्षणं कार्यमुत्पद्यत इति ततोऽन्य ईश्वरो वाच्य इत्यनवस्था ॥

**कलाः सृष्ट्वापि तद्युक्तः कार्यकृद् यद्यसौ ततः ॥ ४२ ॥**

अत एव कलादिस्वकार्यकरणानि सृष्ट्वा ततस्तैर्युक्तो भगवान् सर्वं कार्यं करोतीत्युच्यते ॥ ४२ ॥

यद्येवम्—

**दृक्क्रिये निष्कलस्येष्टे कलाभिः किं प्रयोजनम् ।**

यथैव कलादिभिरनपेक्षो निष्कल एव स्वात्मनः कार्यकरणानि, तथैव विश्वमपि करोतीति किं तस्य कलादिशरीरकल्पनयेत्येवमादिविस्तरेण नरेश्वरपरीक्षायां वर्णितमिति ॥

**तस्मादलं प्रसङ्गेन भोगमोक्षप्रसाधकः ॥ ४३ ॥**
**उक्तलक्ष्मा महेशान उपास्योऽयं मुमुक्षुभिः ।**

तत्सर्वज्ञत्वादिलक्षणः परमेश्वर एव पशुभ्यो मोक्षप्रद इति श्रेयोऽर्थिभिः सदैवाराध्यो नान्यः, इत्युक्तः ससाधनो भोगः ॥ ४३ ॥

अथ मोक्षः ससाधन उच्यते—

**मलादिपाशविच्छित्तिः सर्वज्ञानक्रियोद्भवः ।। ४४ ।।**
**मोक्षस्तत्कारणं शम्भुः स्वशक्तिः करणं प्रभोः ।**
**पश्वात्मा मोच्यमानत्वात् कर्मकारकमिष्यते ।। ४५ ।।**
**नित्यमुक्ततया कर्तुं मोक्षाख्या कर्मगाकृतिः ।**

प्राग् भोगप्रकरणे विज्ञानकेवलिनां मल एव, प्रलयकेवलिनां मलकर्मणी, सकलानां तु मलकर्ममायालक्षणाः पशूनां पाशाः प्रतिपादिताः। तेषु पाशानां यथासंभवं सर्वेषां विच्छित्तिः सर्वज्ञत्वसर्वकर्तृत्वाभिव्यक्तिश्चात्मनां मोक्षो नाऽन्येषामिवान्यतमपाश-विच्छित्तिः, अज्ञत्वम्, अकर्तृत्वम्, संक्रान्तिर्वेति वक्ष्यामः। न च तस्य मोक्षस्य "आत्मा ज्ञातव्यः" इत्यादाविवायं पशुः कर्ता, पशोरीश्वरसंस्कार्यत्वेन सर्वदा कर्मत्वात्। नापि प्रकृत्यादिकः पाशः, किन्तु ईश्वर एव। तस्य च करणं स्वशक्तिर्दीक्षाख्यैव। मुक्तिस्ता-वत्पाशविच्छित्तिः सर्वज्ञत्वाद्यभिव्यक्तिश्चेति मोच्यगत एव विशेषो मोक्षः, न सांख्यानामिव मोचकगतः, तस्य नित्यमुक्ततया मुक्त्यमुक्त्योरविशेषप्रसङ्गात्। यदाहुः—"संसरति भोग्यभावात् तद्विनिवृत्त्या तु मोक्षदा प्रकृतिः। स्वात्मन एव न पुंसो लोपोऽसौ न स्वयं वेद ॥" यत इत्येवं विशिष्टोऽविशिष्टो वा सर्वश्चात्र मोक्षः प्रतिज्ञातः, तस्य साधनमुत्तरं प्रकरणम् ॥ ४४–४५ ॥

तत्र तावत् पुरुषकर्तृक एव मोक्ष इति ज्ञानमोक्षवादिनः स्वयूथ्याः—

**अस्त्वात्मनीनो मोक्षो हि भोगवत् पुद्गलस्ततः ।। ४६ ।।**
**मोक्षकर्ता विवेकादिः साधनः स प्रसिद्ध्यति ।**

अस्त्वीशो विश्वकर्ता, पुरुषास्तु स्वकृतैर्धर्माधर्मैः शुभाशुभं भोगं भुञ्जते नेश्वरकृतैः। ननु तत्रापि परमेश्वरस्याधिष्ठातृत्वमस्त्येव। भवतु, न पुनः कर्तृतेत्येवं त एवाज्ञानमलसंबद्धा भ्रान्तितः संसारभाजः सन्तस्तत्प्रतिपक्षाभ्यासविविक्तज्ञानोदयादज्ञान-निवृत्तौ तेषां सर्वज्ञतादिरूपावाप्तितः स्वात्मकर्तृक एव मोक्षो नेश्वरकर्तृकः ॥ ४६ ॥

तदयुक्तम्—

**अविवे(को? का)ऽवसायोत्थमज्ञानं विनिवर्तते ।। ४७ ।।**
**विवेकज्ञानतो नान्यत् काचादिद्रव्यहेतुकम् ।**
**स्वकारणनिवृत्त्यैव तन्निवर्तेत नान्यथा ।। ४८ ।।**
**मलश्चाज्ञानहेतुः स्यादज्ञानत्वेऽस्य तुच्छता ।**
**अथात्मधर्मो भावः स्यात् तुच्छत्वे तन्निवर्तते ।। ४९ ।।**
**ज्ञानादिरफलः पुंसो धर्मत्वेन निवर्त्यते ।**
**निवर्त्यत्वे नात्मधर्मः(स्यात्?) तदनादिनिरोधकम् ।। ५० ।।**

**चैतन्यस्यात्मनस्तेन निवृत्तिर्दीक्षया ततः ।**
**महेशमलमायादिवशगोऽणुः स चात्मना ॥ ५० ॥**
**कथं तेभ्यस्तदायत्तमात्मानं मोचयिष्यति ।**
**अस्यात्ममोचने शक्तिर्विद्यते न यतः स्वयम् ॥ ५२ ॥**
**पाशानां वश्यतामेति तेनेशो मोक्षकृद् वशी ।**

युक्तं धर्माधर्मकर्तृत्वं पुंसाम्, कलादिभिरीषन्मलव्युदासेन तत्संबन्धाद् उत्तेजितदृक्क्रियत्वात् । मलादिनिवृत्तौ तु सत्यां तावद् ज्ञत्वमपि तदा येषां न समर्थं दृष्टम्, ईश्वरत्वं तेषां मुक्तौ भविष्यतीत्युच्यमानमतिसाहसम् । ननु प्रमाणसिद्धैव शुक्तिकारजतादिभ्रमेषु ज्ञानादज्ञाननिवृत्तिः । मलं चाज्ञानमिच्छन्ति चात्मनामनादिभवम्, तदयुक्तम्, अज्ञानत्वायोगात् तस्य । न ह्यज्ञानं मलः, अपि त्वज्ञानहेतुः । अज्ञानत्वे तु तस्य आत्मधर्मत्वं तुच्छता वा स्यात्, तुच्छत्वे तु तस्याऽकिञ्चित्करत्वात् तन्निवर्तको ज्ञानादिरफलः, आत्मधर्मत्वे तु तस्य नित्यत्व-व्यापकत्वादेरिव निवर्तयितुमशक्यत्वेनानिर्मोक्षः । निवर्त्यत्वे नात्मधर्मतेति वस्त्व-न्तरमेव । आत्मनोऽनाद्युपरोधहेतुत्वादज्ञानहेतुश्चक्षुष इव पटलादिर्मलो वाच्यः । न च द्रव्यस्याज्ञानहेतोः पटलादेरन्यस्य वा ज्ञानान्निवृत्तिर्दृष्टा, प्रतिपक्षत्वाभावात् । कथं तर्हि शुक्तिकारजतादौ ज्ञानान्निवृत्तिः ? उच्यते । द्विविधं ह्यज्ञानम्—प्रागनुभूतसादृश्यस्य बुद्ध्यविवेकाध्यवसायात्मकं शुक्तिकादौ रजतादिज्ञानम्, काचकामलादिद्रव्यजन्यद्विचन्द्रा-दिविषयं विकल्पज्ञानं च । तत्र पूर्वं नेदं रजतमिति विवेकाध्यवसायज्ञानान्निवर्तते । यत्पुनर्द्रव्यजन्यम्, तस्य स्वकारणद्रव्यनिवृत्त्यैव निवृत्तिः, न ज्ञानात् । प्रतिपादितं तु द्रव्यहेतुकमेवाऽज्ञानमात्मनाम् । नेतरत्, अबौद्धत्वात् तस्येति न ज्ञानात् तन्निवृत्तिसंभवः । पटलादेश्चक्षुर्वैद्यादिवदीश्वरादेव तन्निवृत्तिरितीश्वरकर्तृक एव मोक्षो नात्मकर्तृकः । तथा चोक्तं शाखान्तरे—"शिवादेवात्मनां मोक्षः" इति । श्रुतिरपि—"यमेवैष वृणुते तेन लभ्यः" ( कण्ठो० २।२३; मुण्डको० ३।२।३ ) इति । अत एव क्रियानिवर्त्यत्वाद् द्रव्यस्ये-श्वरक्रिययैव मोक्ष इत्युक्तम्—"दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि" इति, वक्ष्यामश्च ॥ ४७-५२ ॥

नन्वीश्वरस्य मोक्षकर्तृकत्वमपि कल्पयित्वा पाशानां निवर्तनस्वभावस्तदा कल्पनीयः, तेन विना तस्याप्यसिद्धेः । ततस्त एव तत्स्वभावान्निवर्तमानाः पुंसो मोक्ष-हेतवो भविष्यन्ति, किमीश्वरस्य कर्तृत्वकल्पनया ? तदयुक्तम्, यतः—

**न पुंसां मोचने शक्तिः पाशानामपि विद्यते ॥ ५३ ॥**
**रज्ज्वादिना स्वयं बद्ध्वा विमुञ्चद् दृश्यते यतः ।**

जीवस्य स्वतः प्रवृत्तौ निवृत्तौ वा सामर्थ्यं नास्तीत्युक्तम् । अतः पाशानामपि शिव एव तदाऽपि निवर्तकत्वात् पुंभ्यो मोक्षद इति दृष्टे सति नादृष्टकल्पनेति ॥ ५३ ॥

अत्र परः—

**ज्ञत्वकर्तृत्वयोर्व्यक्तिं पाशाः कुर्वन्त्यनेकधा ॥ ५४ ॥**

**मोक्षो व्यक्तिस्तयोरेव मोक्षोऽतः पाशकारितः ।**

दृष्टा हि पाशाः कार्यकरणलक्षणा एव भवावस्थायामात्मनामनेकप्रकारां ज्ञत्वकर्तृत्वयोर्व्यक्तिं कुर्वन्ति । मोक्षश्च ज्ञानक्रिययोर्व्यक्तिः । ततस्तामपि त एव दृष्टसामर्थ्याः करिष्यन्तीति किं तत्रेश्वरस्यादृष्टस्य कल्पनया ॥ ५४ ॥

तदयुक्तम्—

**स्वाकाररञ्जितां पाशाः पाशवृत्त्यनुरागिणीम् ॥ ५५ ॥**
**क्रमान्वितां विनाशार्थां व्याहतामल्पगोचराम् ।**
**तयोर्व्यक्तिं प्रकुर्वन्ति निःसंज्ञत्वाद् भवेरिताः ॥ ५६ ॥**
**शक्नुवन्ति न मोक्षाख्यां येनास्याः सा विलक्षणा ।**

यो हि यथाभूतव्यञ्जकशक्तियुक्तः प्रदीपादिर्व्यञ्जकः सिद्धः, सोऽप्यन्यत्राप्यदृष्टे विषये तथाभूतशक्तिरेव प्रतीयते । कार्यकरणादिलक्षणश्च व्यञ्जकः प्रोक्तवदीश्वरप्रेरितोऽपि शरीरादावात्मग्रहहेतुत्वात् स्वाकारेणानुरञ्जितां स्त्र्यादिविषयानुरागिणीं क्वचित् कदाचित् किञ्चिद्विषयां रागद्वेषादिभिश्च व्याहतां कार्यत्वाच्छरीरादीनां नाशे सति विनश्वरीं भविनां ज्ञानक्रिययोर्व्यक्तिं कुर्वन् दृष्ट इति तथाभूत एव विषये तस्य व्यञ्जकत्वं सिद्धयति । न ततोऽत्यन्तविलक्षणत्वाद् ज्ञानक्रिययोर्मुक्तावपि दीपस्येव ब्रह्माण्ड इति न पाशव्यङ्ग्यो मोक्ष इति तद्वैशिष्टयं मोक्षे ज्ञानक्रिययोरित्युच्यते ॥ ५५–५६ ॥

**पाशाभिभाविका शक्तिः सिद्धानां दृक्क्रियाभिधा ॥ ५७ ॥**
**तस्मान्न पाशजालोत्थं जायारागं भजत्यसौ ।**

सर्वपाशनिवृत्त्या सिद्धस्येश्वरवद् ज्ञानक्रियात्मिका शक्तिः पाशविध्वंसिकेति न पशोरिव पाशव्यङ्ग्या शरीरादावात्मग्रहानुरागं भजते ॥ ५७ ॥

किञ्च—

**न चोत्पन्नैर्विनष्टैर्वा पाशैः सा भिद्यते यतः ॥ ५८ ॥**
**ततस्तु पाशचेष्टाभिः शक्तिर्नैवाऽनुरुद्धयते ।**

नापि पशोरिव रागादिपाशचेष्टाभिरनुरुध्यमाना स्त्र्यादिविषयानुरागिणी सा सिद्धशक्तिः, पाशप्रलयेऽप्यविकृतेनैव स्वरूपेणेश्वरशक्तिवदवस्थानात् ॥ ५८ ॥

अपि च—

**शक्तिः सा सर्वविषया न तेनैवाऽल्पगोचरा ॥ ५९ ॥**
**ज्ञेयकृत्येषु युगपद् भावित्वान्न क्रमान्विता ।**

आवरणाभावाच्च सा सर्वदा सर्वत्र सर्वज्ञेयज्ञप्तिकरी सर्वकार्यकरी च, न पशुशक्तिवत् कदाचित् क्वचित् किञ्चिद्विषया ॥ ५९ ॥

**सा च व्यक्त्यन्तराभान्न व्यक्त्यन्तरबाधिता ।। ६० ।।**

नाऽपि विद्येश्वराणां शक्तिव्यक्तिरिव परमुक्तिलक्षणेन व्यक्त्यन्तरेण सा सिद्ध-शक्तिर्बाध्यते, शिवसमत्वेन तस्याः प्रकर्षान्तराभावात् ॥ ६० ॥

किञ्च—

**प्रवृत्ता सा न साम्येन ज्ञेये कृत्ये च बाधते ।**

न चापीश्वरेच्छया विद्येश्वरशक्तिवत् कार्ये प्रवर्तते निवर्तते वा, शिवसमत्वात् सिद्धशक्तेरीश्वरप्रेर्यत्वस्य सर्वथा निवृत्तेः स्वतः शक्तत्वात् ॥

**व्यञ्जयन्ति न तां पाशाः न च भूयोऽभिभूयते ।। ६१ ।।**
**शिवेच्छाप्लुष्टबीजैस्तैः शक्तिस्तेनाविनश्वरी ।**

येन न वक्ष्यमाणवत् पाशैः कार्यकरणैः पशुशक्तिवद् व्यज्यते, शिवशक्त्याभि-व्यक्तां तां प्रति दग्धबीजैश्च पाशैर्न पुनरभिभूयते, सिद्धशक्त्यभिव्यक्तिस्ततो न विनश्वरी पशुशक्तिव्यक्तिरिवेति प्रकारान्तरेण नश्वरतापरिहारः ॥ ६१ ॥

**व्यङ्ग्यव्यक्तिर्भवेत् तावद् यावद् व्यञ्जकसंनिधिः।। ६२ ।।**
**सिद्धशक्तावयं न्यायो विद्यते नेति चोच्यते ।**
**अभिव्यक्तिकरी शैवी शक्तिस्तत्सन्निधानताम् ।। ६३ ।।**
**धाता सततमित्यस्मादपि सैद्धी न पश्यति ।**

यदुक्तं प्राक् सिद्धानां सर्वथा ईश्वराधिष्ठानं निवर्तत इति ततो व्यञ्जकेनानधि-ष्ठितत्वाद् दीपेनानधिष्ठानाद् घटादेरिवाभिव्यक्तिर्निवर्तमाना विनाशिन्येव । नाऽयं दोषः । यतो न दीपवद् व्यङ्ग्यस्याऽऽवरणनिवृत्तिमनात्यन्तिकीं कुर्वन् परमेश्वरः शक्तिव्यञ्जक इष्टः, येनैष दोषः स्यात् । स त्वात्यन्तिकीमावरणनिवृत्तिं पटलानामिव चक्षुर्वैद्यः कुर्वन् सिद्धानामात्मसदृशीं सिद्धान्तशक्तिव्यक्तिकरीं सिद्धशिवसमवायाच्छैवीं दृक्क्रियाशक्ति-मभिव्यक्तितः सन्निधापयतीति कुतः परतस्तस्या व्यञ्जकापेक्षा, शिवशक्तेरिव स्वतः सर्वज्ञस्वरूपत्वादिति । न केवलं पाशैरव्यङ्ग्यत्वात्, अस्मादपि कारणान्न विनश्वरीति । अत एव न कार्यत्वेनानित्यत्वम्, मुक्तेर्व्यङ्ग्यत्वात् । पूर्वव्यवस्थिताया एव ज्ञानादिशक्ते-रावरणव्युदासेनाभिव्यक्तितः सर्वविषयता न स्वरूपप्रतिष्ठितिरेवेत्युक्तः सर्वविलक्षणो मोक्षः ॥ ६२–६३ ॥

**इत्थं विलक्षणायास्ते सिद्धशक्तेर्न पाशकाः ।। ६४ ।।**
**व्यक्तिं कर्तुं समर्थास्तु निवृत्तैस्तैर्यतो भवेत् ।**

उक्तं तावत् पाशव्यङ्ग्यायाः पशुशक्तितोऽत्यन्तविलक्षणत्वात् पाशाभावेऽपि भावाच्च मुक्तौ सिद्धशिवशक्तेर्न पाशव्यङ्ग्यत्वं सिद्ध्यतीति ईश्वर एव तद्व्यञ्जको मोक्षहेतुः ॥ ६४ ॥

ननु "योगश्चित्तवृत्तिनिरोधः" ( यो० सू० १।२ ) इति योगादिसंस्कृतमन्तःकरण-मेव मोक्षहेतुरात्मनाम्, नेश्वर इति सांख्याः, तदयुक्तम्—

**योगो ज्ञानं तपःपूर्वं भोगसाधनचेष्टितम् ।। ६५ ।।**
**प्रोक्तन्यायेन पाशत्वान्न तन्मोक्षस्य साधनम् ।**

चित्तस्योक्तवज्जडत्वाद्वायोरिव योगादिसंस्कृतेनैव स्वप्रवृत्तिरूपतया आत्मनो माया निवर्तयितव्या, नान्यथेति । विवेकाभावान्निवृत्तौ सर्वदैव निवर्तेत, न वा कदाचिदित्य-निर्मोक्षः सर्वदा वा मोक्ष एवात्मनो भवेत् । कश्चात्र योगादेरनुष्ठाता यस्य शास्त्रोपदेशः । न तावदात्मा, निष्क्रियो भवद्भिरसावभ्युपगतो यतः । नापि चित्तम्, जडत्वात् ॥ ६५ ॥

अपि च—

**सुतीव्रा अपि नोपायाः स्वात्मविच्छेदकारकाः ।। ६६ ।।**
**असिधारा सुतीक्ष्णापि न स्वात्मच्छेदिका यतः ।**

न च चित्तस्य स्ववृत्तिनिरोधार्थं योगाद्यनुष्ठानं स्वत एवोपपद्यते, स्वात्मनि क्रियाविरोधादिति । तस्मादपि प्रवृत्तिनिवृत्तिहेतुरीश्वर एव सर्वत्र मोक्षकारणमिति। नन्वीश्वरोऽपि कथं न सर्वेषां युगपन्मोक्षहेतुः ? अपेक्ष्याभावात् । न, मलपरिपाकापेक्ष्य-त्वात्, अन्यथा यथादृष्टनियमानुपपत्तेः । तदुक्तम्—"क्षीणे तस्मिन् यियासा स्यात् परं निःश्रेयसं प्रति" ( स्वा० ३२।१७ ) इति । मलस्तु तथास्वभावः कल्प्यमानो जडत्वात् कस्यचित् कदाचिच्च तथा परिणमन् नोपालम्भमर्हति । यदुक्तं तत्त्वत्रयनिर्णये—"विनि-वर्तते निरोधात् पुंबलतः परिणमन् मलः कालात् । परिणतिविशेषयोगात् स कदाचित् कस्यचित् कथञ्चिच्च ॥" ( श्लो० १२ ) इति ॥ ६६ ॥

यद्येवम्—

**रोधशक्त्यधिकारस्य काले याते स्वयं त्वणोः ।। ६७ ।।**
**निवृत्ते तु मले शेषः पाशव्रातो निवर्तते ।**
**तन्निवृत्तौ स्वयं शुद्धा दृक्क्रियाशक्तिरात्मनि ।। ६८ ।।**
**व्यज्यते सर्वविषया नैवाऽतो मोक्षकृद् भवः ।**

पुंसां ज्ञानादिबलाद् रोधशक्तेर्मलस्य परिपाकात् तद्रोधाधिकारकालोपक्षयतः स्वयमेव निवृत्ते तस्मिन्निमित्तेऽन्यपाशनिवृत्तौ ज्ञानक्रियाशक्तिस्तेषां शुद्धत्वात् स्वयमेव मुक्तौ व्यक्तिमेष्यतोति किमीश्वरस्य कर्तृत्वेन । अस्तु तर्हि स्वतन्त्र एव परमेश्वरो मोक्ष-हेतुः । ततो नैष दोषः, नाप्यतिप्रसङ्गः, स्वेच्छया नियमितत्वात् । यदाह विद्याधिपतिः— "स्वतन्त्रः शक्तिपातोऽसौ शैवः पशुविमोक्षकृत् । सापेक्षत्वे हि तस्य स्यादशक्तः परमे-श्वरः ॥" इति । न, तस्यासंभवात् ॥ ६७–६८ ॥

**सत्यां स्थितौ न संहारं संहारे वा न च स्थितिम् ।। ६९ ।।**
**भोगं च कर्महीनस्य कुरुते न सदेश्वरः ।**

स्वातन्त्र्ये हि कर्माद्यनपेक्षणादकस्मात् सदैव जगतः सृष्टिसंहारौ, कर्महीनस्यापि भोगम्, दुष्कृतैरपि मोक्षम्, मुक्तस्यापि संहारमीश्वरः कुर्यादित्युन्मत्तचेष्टावदसमञ्जसं जगद् भवेत्। ततश्च न कश्चिद्भोगाय मोक्षाय दुष्कृतपरिहाराय प्रवर्ततेति तदुपदेशशास्त्राणां सर्वेषामानर्थक्याल्लोकायत एवोपास्यो भवताम्। तस्मादसमञ्जसपरिहाराय कर्मादिपाकसापेक्षः सर्वकर्ताऽभ्युपगन्तव्यः। न च तदपेक्षित्वमस्वातन्त्र्यम्, अपि त्वीश्वरान्तरायत्तता। सा च तस्य परमेश्वरान्नास्तीति स एव स्वतन्त्रः। सत्यां स्थितौ न संहाराद्यकस्माद् भोगादिकं च कर्महीनादेर्न कदाचित् करोतीति सापेक्ष एव शक्तिपात इति।

यद्येवं कर्मसाम्यापेक्षो भविष्यतीति। न। यथा भोगं कर्महीनस्य कुरुते न सदेश्वरः, तथा मलपरिणतिहीनस्य न च मोक्षम्, मलपरिणत्यपेक्षित्वान्मोक्षस्य, अन्यथा मलकल्पनानर्थक्यात्। साधितं चात्मनां कर्मव्यतिरेकेण मलोऽस्तीति प्राग् भोगप्रकरणे—"मलापरिणतेः कर्मक्षयाच्च विज्ञानकेवलितैव तेषाम्" इति। तस्मादवश्यं मलपरिपाक एव शक्तिपाते कारणं वाच्यम्॥ ६९॥

ननु स च मलः परिपाकात् स्वयमेव निवर्तमानः पुंसां मोक्षकारणं भविष्यतीति नार्थस्तत्र शिवशक्तिनिपातकल्पनयेत्युक्तमेव, तदयुक्तम्, यतः—

**चेतनाचेतनाः सर्वे वश्यास्तस्येति निश्चितम्॥ ७०॥**
**प्रवृत्तौ वा निवृत्तौ वा तेषां हेतुरतो हि सः।**
**विदार्य शक्तिशूलेन पाशजालमणोः शिवः॥ ७१॥**
**सर्वज्ञानक्रियारूपं व्यनक्ति द्विविधं मलम्।**

जडस्य स्वतः प्रवृत्तौ निवृत्तौ वा सामर्थ्यं नास्तीत्युक्तम्। अतः परिपक्वोऽपि मलो द्रव्यत्वात् पटलादिवद् बुद्धिमत्कर्तृनिवर्त्य एवेति ईश्वर एव तन्निवृत्तिपूर्वं पुंसां सर्वज्ञत्वादिरूपं व्यञ्जयन् मोक्षहेतुर्नापर इति॥ ७०-७१॥

अधुना तु तेषामीश्वरः सर्वेषां किं साक्षान्मोक्षहेतुरुत केषाञ्चिद् व्यवधानेनेति रुरुसिद्धान्तसंसिद्धः क्रमोऽत्र कथ्यते—

**निष्कलान् सकलानष्टौ सर्गादाविच्छया पतिः॥ ७२॥**
**मन्त्रेश्वराननन्तादीननुगृह्णाति पुद्गलान्।**

सर्गारम्भ एवाष्टावणूनकलान् परिपक्वमलविच्छेदपूर्वकं सर्वज्ञानक्रियाभिव्यक्तिलक्षणेन मोक्षेणानुगृह्य साक्षाद् भगवाननन्तादिसंज्ञकान् विद्येश्वरान् करोतीत्यणुपक्ष एव विद्येश्वरादिविषयो न शक्तिशम्भुपक्षाविति बोद्धव्यम्॥ ७२॥

अतोऽनन्तरम्—

**कोटिसप्तकसंख्याकान् निष्कलान् सकलानणून्॥ ७३॥**
**सर्वज्ञानक्रियाव्यक्त्या मन्त्रानीशः करोत्यतः।**

तथाभूतानेवाणून् सप्तकोटिसंख्यायुक्तान् तथैव साक्षादनुगृह्य भगवान् मन्त्रान् विदधाति ॥ ७३ ॥

मन्त्रमन्त्रेश्वराणां मुक्तत्वात् किं शिवसमत्वमेव, नेत्याह—

**रुद्रशक्तेस्तु जन्यत्वात् प्रेर्यत्वाच्चाप्यधस्त्विदम् ॥ ७४ ॥**
**मन्त्रमन्त्रेश्वराख्यानमाख्यातं तत्त्वयोर्द्वयम् ।**

रुद्रस्य भगवतः शक्तिर्वामा ज्येष्ठा च रौद्री चेति । तस्याः शक्तेरधो विद्याविद्येश्वरलक्षणमेतत् तत्त्वयोर्द्वयं वेदितव्यम् । यतस्तयोत्पाद्य स्वाधिकारे प्रेर्यत इत्याख्यातं शास्त्रे—"शिवेच्छाविधिचोदितम्" इति । प्रेर्यत्वाच्चैषां सर्वज्ञत्वेऽप्यधिकारमलयोगतः परमेश्वरापेक्षया क्रियाशक्तिः क्रमेणांशेन न्यूनेति—"विद्याविद्येशत्वं चापरमुक्तिः परेह शिवसमता" ( श्लो० ५१ ) इति तत्त्वसंग्रहादावुक्तम् । अस्माच्च न्यूनत्वादेषां शक्तितत्त्वादधोभावः, न तु देशकृतः, व्यापकत्वादात्मनाम् ॥ ७४ ॥

अत एव—

**मायोर्ध्वं निष्कलत्वाद्यं मायोपर्यधिकारतः ॥ ७५ ॥**
**तदेव प्रक्रियाशास्त्रे दीक्षार्थं चिन्त्यते बुधैः ।**

व्यापकमेतत् तत्त्वद्वयं मायोपर्यधिकारतः कलादिकार्यकरणवर्जितत्वाच्चाध्वशास्त्रे मायोपरि चिन्त्यत्वेन पठ्यते ॥ ७५ ॥

तथैव—

**सर्वे चावरजाः प्रेर्याः प्रेरका ह्यग्रजाश्च ये ॥ ७६ ॥**
**पतयोऽपतयो मन्त्रा ऊर्ध्वं मन्त्रेश्वरा मताः ।**

मन्त्रपतित्वान्मन्त्रेभ्यः पूर्वमुत्पन्नत्वाच्चानन्तादिविद्येशानां तेभ्य ऊर्ध्वमुपरिभावो मन्तव्यः । तत्प्रेर्यत्वेन ततः क्रियाशक्तेर्न्यूनत्वं त्वधोभावान्मन्त्राणाम् ॥ ७६ ॥

ततोऽनन्तरम्—

**कलाः सृष्ट्वा महेशानस्ताभिः संयोज्य पुद्गलान् ॥ ७७ ॥**
**अनुगृह्णाति मन्त्रेशान् मायागर्भाधिकारिणः ।**

विद्येश्वराणामधिष्ठानेन मायातः कलादितत्त्वभुवनपिण्डभावसृष्टिं सर्वां कृत्वा ताभिः पुद्गलान् कर्मानुसारेण संयोज्य तेषां मध्यात् परिणतमलानणून् मायागर्भाधिकारिविद्येश्वरत्वेन साक्षाद् भगवाननुगृह्णाति ॥ ७७ ॥

किमभिधानान् किंसंख्यातान् तानित्याह—

**मण्डलाधिपतीनष्टौ क्रोधेशाद्यष्टकं तथा ॥ ७८ ॥**
**इच्छया शतरुद्रांश्च वीरभद्रपुरस्सरान् ।**

क्रोधेश आदौ यस्याष्टकस्य श्रीकण्ठसहितस्य । तथा तत्त्वसंग्रहे—"मण्डलिनः श्रीकण्ठाः क्रोधाद्याः" ( श्लो० ३० ) इत्युक्तम् । एवमष्टादशाधिकशतमेषां रुद्राणामनुगृह्णाति ॥ ७८ ॥

**अनुग्रहाय जन्तूनां मन्त्राणां हि प्रयोजकाः ॥ ७९ ॥**
**एते मन्त्रेश्वरास्तस्मान्न मन्त्रोर्ध्वव्यवस्थितेः ।**

इत्थं मन्त्रमन्त्रेश्वरयोः पश्चादुत्पत्तेर्मायागर्भाधिकारित्वादधोभावेऽप्येषामाचार्यादिवत् पश्वनुग्रहाय मन्त्रप्रयोजकत्वान्मन्त्रेश्वरत्वम् । न त्वनन्तादीनामिव मन्त्रेभ्य ऊर्ध्वं स्थितत्वात् ॥ ७९ ॥

किञ्च—

**अग्रजा निष्कला मन्त्रा एते चैतद्विलक्षणाः ॥ ८० ॥**
**मन्त्रतत्त्वादधस्तस्मान्मायागर्भाधिकारिणः ।**

मन्त्राणां निष्कलत्वेनोक्तत्वादेषां तु सकलत्वात् तेभ्योऽपि न्यूनशक्तित्वेनाधो मायागर्भ एवाधिकार इत्यधिकारभेदादेवं मन्त्रमन्त्रेश्वरवर्गाः परस्परं शक्तितो भिन्ना एव, न त्वावारकाः । यथा वार्त्तिककार आह—"परेण रूपेण निर्विशेषास्त्रयोऽप्यमी । महाल्पयोनियोगित्वाद् विशिष्यन्ते परस्परम् ॥" इति ॥ ८० ॥

कुत्रेषां वीरभद्रादीनामध्वनि स्थितिरित्युच्यते—

**मायागर्भाधिकारित्वात् सकलत्वाच्च शासने ॥ ८१ ॥**
**मायातत्त्वादधस्तस्माच्छिवशक्तिसमन्विताः ।**

यत्तेषां मायागर्भाधिकारः सकलत्वं चोक्तम्, ततो ब्रह्मादिवन्मायातत्त्वादधः कलादिभुवनेष्ववस्थितिः ॥ ८१ ॥

ननु सकलत्वादेषां कलादिसंकोचितदृक्क्रियत्वात् पशुवत् कथं मायागर्भाधिकारे शिवशक्तिसमन्वितत्वमिति ? उच्यते—

**कलायोगेऽपि नो वश्याः कलानां पशुसंघवत् ॥ ८२ ॥**
**वश्यास्ताः पशुभिः सार्धं तेषां ते तदुपर्यतः ।**
**यतस्तेषां कलादीनां क्रमेणोपर्यवस्थिताः ॥ ८३ ॥**

यतस्तेषां पशुभिः सार्धं ताः कलाः प्रेर्यत्वाद्वश्याः, तस्मान्न कलादियोगेऽपि कलावश्यत्वमेषामिति सर्वज्ञता मायागर्भाधिकारश्चाविरुद्ध इति ॥ ८२–८३ ॥

**मन्त्रैः सार्धं तदीशानां परेषामपरैः सह ।**
**आविर्भवत्यधीकारः स्वशक्तिव्यक्त्यनन्तरम् ॥ ८४ ॥**

मन्त्रेश्वराणां चानन्तादीनां परेषां क्रोधादीनामपरेषां वीरभद्रादीनां च यदैवेश्वरेण पाशविच्छेदपूर्वं ज्ञानक्रियाशक्तिरनुरूपाऽभिव्यञ्जिताऽऽसीत्, तदैवानुरूपमधिकारं करोति न कालान्तरं प्रतीक्षते ॥ ८४ ॥

मन्त्राणां तु—

**मायाबन्धविमोक्षाय कारणादात्मनो व्यधात् ।**
**मन्त्रकोटचोऽभवन् सप्त सप्तेति नियमः श्रुतेः ।। ८५ ।।**

कालान्तरेण तेषां कार्यकरणमिति भेदः, स तेषामधिकारः किं नित्य एव ? नेत्युच्यते—

**मन्त्राणां मन्त्रनाथानां कृतार्थानामपीदृशाम् ।**
**व्यापारपरतन्त्राणामधिकारस्तु सावधिः ।। ८६ ।।**

कृतार्थानां मुक्तानामप्येषां पशुवद् व्यापारपरतन्त्रत्वाद् वक्ष्यमाणाऽवध्यन्तोऽधिकारः ॥ ८६ ॥

अधुनाऽनन्तादीनामपि परस्परं प्रधानाप्रधानभावः कथ्यते—

**सूक्ष्मादिनायकोऽनन्तः स तद्युक्तः शिवेरितः ।**
**उत्पत्तिस्थितिसंहारसंरोधानुग्रहार्थकृत् ।। ८७ ।।**

यथा किलानन्तः शिवात् कलया क्रियाशक्त्या न्यूनः स्थित्यादीनि कर्माणि शिवाधिष्ठितः करोति, एवमनन्तात् सूक्ष्मः—"तेषामनन्तः[1] परमेश्वरः" (रौ० सं० २।१२) इति श्रुतेः । तथा सूक्ष्माच्छिवोत्तम इत्यादि सर्वेषां पूर्वपूर्वापेक्षया न्यूनत्वं बोद्धव्यम् ॥ ८७ ॥

अधुना मन्त्राणामधिकारकालः परस्परं वैलक्षण्यं चोच्यते—

**मन्त्राणां पूर्वमर्धं तु कृतात् सर्गादनन्तरम् ।**
**अधिकारस्य वैचित्र्यादनुगृह्य भवेरितम् ।। ८८ ।।**
**तत्कालमादृतान् पुंसः कारणानुग्रहेच्छया ।**
**कृत्वाधिकारमायाति शिवसायुज्यमच्युतम् ।। ८९ ।।**

सप्तकोटिसंख्यातानां मन्त्राणां पूर्वं प्रकृष्टमर्धमतीव परिपक्वमलत्वाज्जन्मव्याध्याद्युपहतं संसारमवलोक्य तत्संसर्गं पशुप्रयोज्यतां चात्मनः सोढुमक्षमा वयमितीश्वरं विज्ञाप्य तत्प्रेरणयैव विद्येश्वरनियोगमप्यनपेक्ष्य शिवशक्त्या समाहूतानणूंस्तत्कालमेव साक्षात् तत्तत्कर्तृतयैव तद्धिया च तत्करणतया चानुगृह्य विचित्रमधिकारं कृत्वा परां मुक्तिं शिवसमत्वं गतम् ॥ ८८–८९ ॥

द्वितीयार्धस्य का वार्तेत्युच्यते—

**शिवोऽवशिष्टमन्त्राणां परिवाराङ्गशम्बरान् ।**
**सिद्धिमुक्तिप्रसिद्धचर्थं मण्डलानि च सृष्टवान् ।। ९० ।।**

---

१. तेषामनन्तशक्तीनामनन्तः परमेश्वर इति तत्रत्यः पाठः ।

अथ शिष्टस्यार्धस्य प्रवृत्त्यर्थं परमेश्वरोऽणुपरिवारकमण्वन्तरं हृदयाद्यङ्गं शक्तियोगं च शम्बरांश्च तद्वाचकान् शब्दान् मण्डलानि च पूजास्थानानि नवनाभादीनि लोकानां हितार्थमकार्षीत् ॥ ९० ॥

अथैषां मन्त्राणां पूर्वेषामिव किमनुग्रहे कर्तृत्वमेव, नेत्युच्यते—

**ते मन्त्राः सहितास्तैस्तु परिवाराङ्गशम्बरैः ।**
**विमुञ्चन्तीतरान् नुन्ना देशिकस्थेन शम्भुना ।। ९१ ।।**

एतेषां परिवारादियुक्तानां दीक्षादावाचार्याधिकरणेश्वरप्रयोज्यत्वादनुग्रहकरणत्वं सदैव न कर्तृता ॥ ९१ ॥

**अधः स्वभुवनाच्चैषां मन्त्रेशा भोगमोक्षदाः ।**
**स्वं स्वं ददति जन्तूनामीशशक्तिप्रचोदिताः ।। ९२ ।।**

शेषास्त्वप्रधाना विद्येशा वीरभद्ररुद्रादयः । भुवनेभ्य ऊर्ध्वं शास्त्रविहितेभ्यो यज्जन्तूनां स्वभुवने च केषाञ्चिद् ब्रह्मविष्ण्वादीनामनुग्रहं च कुर्वन्तीति तत्कर्तारो नानन्तादिवद्भुवनसर्गादिकर्तारः ॥ ९२ ॥

मन्त्रमन्त्रेश्वराणामधिकारावधिः प्रतिज्ञात उच्यते—

**अमी रुद्रास्तु सूक्ष्माद्या मन्त्राश्च शिवतुल्यताम् ।**
**सानन्ताः स्वाधिकारान्ते यान्ति मुक्तिं हरेरणात् ।। ९३ ।।**

अत्र सूक्ष्मादीनां च मन्त्राणां च तदीशानामपि वीरभद्रादीनामनन्तोपरमकाल एव सर्वेषां युगपच्छिवसमता परा मुक्तिः । यच्छ्रयते—"अनन्तो परमे तेषां महतां चक्रवर्तिनाम् । विहितं सर्वकर्तृत्वकारणं परमं पदम् ॥" ( रौ० सू० २।१३ ) इति । अत एव न तु क्रमेण । यथा वार्त्तिककार आह—"अनन्तो परमे स्थाने तत्तु सूक्ष्मोऽधितिष्ठति । पदात्पदं विचरतो ह्येकैकस्य महात्मनः ॥ स्थाने शिखण्डिनस्त्वन्यं रुद्राणां कुरुते शिवः ॥" इति ॥ ९३ ॥

अथानन्तस्य कदोपरम इत्युच्यते—

**सृष्ट्यादिपञ्चकर्माणि कृत्वानन्तेश्वरस्ततः ।**
**पारतन्त्र्याद् विनिर्मुक्तः प्राप्नोति पतितुल्यताम् ।। ९४ ।।**

यदाऽनन्तेनैकस्मिन् मायासर्गे पञ्चकर्माणि मायासम्बन्धि सृष्ट्यादिपञ्चकर्म निर्वर्तितं भवति, तदा मायाकार्यस्याखिलस्योपसंहृतत्वात् कृतप्रयोजनोऽनन्तो महाप्रलयोपक्रम एव पतिसमत्वं परामुक्तिं गच्छतीति ॥ ९४ ॥

यद्येवमनन्तादीनामुपसंहृतत्वान्मायातः सर्गान्तराणि कथं भगवान् करोतीत्युच्यते—

**एवं सर्गेष्वतीतेषु भविष्यत्सु च शङ्करः ।**
**पुंसो मोचितवानन्यान् मोचयिष्यति चापरान् ।। ९५ ।।**

प्रतिसर्गं पूर्वानिवानन्तादीन् कृत्वा पुंसां भोगं निर्वर्त्य भगवान् मोक्षं करोतीत्यर्थः ॥ ९५ ॥

तदेवम्—

**आचार्यसंस्थितो देवो दीक्षाशक्त्यैव मुञ्चति ।**
**स्वशक्त्योपहृतान् पुंसो मन्त्रसाधनसाध्यया ॥ ९६ ॥**

परमेश एव आचार्यस्थो मन्त्रमन्त्रेशव्यतिरिक्तान् दीक्षयैव मन्त्रसाध्यया परिपक्वमलान् पुंसो मोचयतीत्युक्तम् ॥ ९६ ॥

न ज्ञानादिनेति पूर्वप्रतिज्ञातः सर्वोऽर्थो निर्णीतः। यद्येवं मायाञ्जनोत्तरकालं हृतानां कथं मोक्षः ? तेषामप्याचार्याऽधिकरणो भगवानेव दीक्षां करोति, प्रतिभुवनं गुरूणां सम्भवात् । तथाहि—

**मन्त्रेशा गुरवः पूर्वे रुद्रा देवा मुनीश्वराः ।**
**मन्त्रेशैः शासिता रुद्रा रुद्रैर्देवाः सुशासिताः ॥ ९७ ॥**
**देवैर्मुनीश्वराश्चात्र मुनिमर्त्या मुनीश्वरैः ।**
**मनुष्यैर्मानुषास्तद्वद् वर्णसंस्था द्विजोत्तमैः ॥ ९८ ॥**

रुद्राः श्रीकण्ठादयोऽत्र। एवं गुरूणां संभवात् तत्तत्कर्तृतयैव सर्वत्र दीक्षया मोक्षः ॥ ९७-९८ ॥

वर्णसंस्था द्विजोत्तमैरित्युक्तं साध्यते—

**दीक्षायां साधकत्वे च चतुर्णां वर्णिनामिह ।**
**अधिकारो गुरुत्वेन ब्राह्मणस्यैव कीर्तितः ॥ ९९ ॥**

साधकदीक्षादौ—"ब्राह्मणान्[1] क्षत्रियान् वैश्यान् शूद्रांश्चैव" इति श्रूयते। अतश्चतुर्णामप्यत्राधिकारः। गुरुत्वे तु—"अथाचार्यवरः श्रीमानग्रजन्मा सुपेशलः" ( स्वा० १५।१ ) इति श्रुतेर्ब्राह्मणस्यैव ॥ ९९ ॥

ब्राह्मणोऽपि न सर्वो गुरुः, किन्तु—

**शक्त्यधिष्ठेयनिष्पाद्यसहितं दीक्षितः शिवम् ।**
**यो वेत्त्येव नियुक्तः सन् गुरुणा गौरवे गुरुः ॥ १०० ॥**

यो दीक्षितः परमेश्वरस्यैता ज्ञानादयः शक्तयोऽनाश्रिताद्यं कालाग्निरुद्रभुवनान्तं सर्वं तत्त्वभुवनभूतभावाद्यमेतदधिष्ठेयमेतच्च निष्पाद्यं पशूनां भोगमोक्षावित्येवं परमेश्वरं संहिताभ्योऽवगत्य पदवाक्यप्रमाणैस्तद्विषयमिथ्याज्ञानव्युदासेन निश्चितं वेत्ति, तमेवा-

१. 'रौरवे' इति मतङ्गपारमेश्वरवृत्तौ ( क्रि० ५।९३ ) दृश्यते। मुद्रिते रौरवे नोपलभ्यत इति तत्रत्या टिप्पणी ( पृ० ११३, टि० ६ )।

त्मान्तरपरिग्रहाय दीक्षायामर्चाकरणोपयोगाय च भावयति, स ज्ञाननिष्ठो गुरुणा गुरुत्वे नियुक्तः सन् गुरुर्नान्यः। यदुक्तम्—"नाज्ञो भ्रान्तः ससन्देहो गुरुर्भावविवर्जितः। नातत्त्वविदनभ्यस्तकर्ममार्गोऽपि नो मतः॥" इति॥ १००॥

अथ दीक्षितैः किं बुद्ध्युपारूढः सर्वेश्वरो ज्ञातव्यस्तदनुपारूढो वा? तत्र—

**बुद्धिबोधप्रकाश्यत्वं शिवस्यान्यैः समीहितम्।**
**शैवमानमविन्दद्भिः पशुमानानुवासितैः॥ १०१॥**

बुद्ध्युपारूढा एवार्थाः सर्वदा पुरुषेण चेत्यन्ते, न तदनुपारूढाः, बुद्ध्यादीनामानर्थक्यप्रसङ्गात्। परमेश्वरोऽपि भिन्न एव तस्याश्चेत्यत इति बुद्ध्युपारूढ एव चेत्यो नान्यथा केवलः। तथाहि—धर्मादीश्वरप्रसादतः कस्यचिद् रजस्तमोमलं परिहृत्य निर्मलतरसत्त्ववृत्तिरेव बुद्धिर्भवति। तत्र परमेश्वरः प्रतिबिम्बवद् वर्तत इति तेनैव चेत्यो नान्येनेति केचित् सांख्यदृष्ट्यनुवासिताः, तन्न, अनैकान्तिकत्वात्॥ १०१॥

तथाहि—

**आत्माऽप्यविषयो यस्या भोक्ता भोग्यत्ववतः कथम्।**
**स्वप्रकाशमसौ देवं प्रकाशयति शङ्करम्॥ १०२॥**

नहि यो यश्चेत्यते स सर्वो बुद्ध्युपारूढ एव, बुद्धिभोक्तृत्वादेवात्मनस्तदनुपारूढस्यापि चेत्यताभावादिति व्याप्त्यसिद्धेः कथं वक्ष्यमाणवत् स्वप्रकाशस्येश्वरस्य बुद्ध्युपारोहः सिद्ध्येत्॥ १०२॥

ननु पुरुषो बुद्ध्युपारूढ एव चेत्यत इति सांख्याः, तथाहि—कपिलब्रह्मणोऽप्यप्रत्यक्षः पुरुष इति दर्पणस्थानीयायां बुद्धौ विषयिविषययोर्द्वयोरपि प्रतिबिम्बकमेलनं भोग इति बुद्ध्यध्यवसित एव सर्वश्चेत्यत इति, तदप्ययुक्तम्—

**सर्वदोत्पन्नमानोऽसौ पुरुषो नानुभूयते।**
**न सोऽस्ति कालो यत्रायमत्रस्थेनानुभूयते॥ १०३॥**

बुद्धिस्थेनापि पुरुषप्रतिबिम्बेन पुरुषो नावैतीति तत्प्रतिबिम्बकल्पनं निष्फलमेव॥ १०३॥

किञ्च—

**पूर्वापरत्वतो युक्तमात्मबोधस्य तस्य च।**
**उपलभ्योपलब्धृत्वं तदभावादिदं त्वसत्॥ १०४॥**

प्रतिबिम्बात्मकत्वादात्मनो विषयत्वं भोग्यता च, तद्विषयत्वाच्च बुद्धिबोधस्य भोक्तृत्वप्रसङ्गः। न चैतद्भवद्भिरभ्युपगन्तव्यमित्यसदेतत्—[1]"बुद्ध्यध्यवसितत्वात् पुरुषोऽपि चेत्यते" इति॥ १०४॥

१. पूर्वतनी ७८ पृष्ठस्था द्वितीया टिप्पणी द्रष्टव्या।

अपि च—

**परिणामी पुमान् भोग्यः प्राप्तस्तद्गोचरो यदि ।**
**विपरीता च बुद्धिः स्याद् विरोधश्चापि दर्शने ।। १०५ ।।**

इत्थं बुद्धिविषयत्वेन भोग्यत्वाद् विषयवत् पुंसः परिणामितया बुद्धेश्च भोक्तृत्वान्नित्यत्वं प्रसज्यते भवतामिति दर्शनविरोधः। तस्माद् भोक्तृभोगान्यथाऽनुपपत्त्या पुरुषो बुद्ध्यनुपारूढ एव स्वसंवेदनसिद्धोऽभ्युपगन्तव्यः। कथं तर्हि—"व्यक्ताव्यक्तज्ञसंबुद्धिः" ( भो० का० ६० ) इत्यादिना प्राग् भोगप्रकरणे सिद्ध्यादिबुद्धिबोधप्रकाश्यः पुमानुक्तः? न प्रकाश्यतया, किन्तु कारकत्वेनेत्यविरोधः। व्यक्ताव्यक्तविषये हि बुद्धिबोधे तत्प्रकाशकतयाऽत्यन्तविविक्तः पुरुषः स्वयमवभासत इत्युक्तम्—"तदा द्रष्टुः स्वरूपेऽवस्थानम्" ( यो० सू० १।३ ) इति ॥ १०५ ॥

अस्त्वेतत्, ईश्वरस्तु वेद्यत्वादादित्यादिवद् बुद्ध्युपारूढ एव वेद्यः। न, असंभवात्। तथाहि—

**अन्तःकरणवृत्तिर्या बोधाख्या सा महेश्वरम् ।**
**न प्रकाशयितुं शक्ता पाशत्वान्निगडादिवत् ।। १०६ ।।**

पाशत्वं हि श्रेयोदूरप्रतिरोधकत्वं बुद्ध्यादीनामिति कथं वा शिवात्मकपरश्रेयःप्रकाशकत्वं स्यात्। पाशत्वे वा परिमितत्वं बुद्धेरिति कथं तत्र दिक्कालाद्यपरिमितस्य परमेश्वरस्य खड्गादावभीशुमदादेरिव प्रतिबिम्ब उपपद्यते। तदेकदेशस्य तु तत्र प्रतिबिम्बो भ्रान्तिरेव, भगवतोऽनवयत्वेनैकदेशाभावादित्युक्तमस्माभिरन्यत्र—"बुद्धौ मितायां नेशस्य प्रतिबिम्बोऽमितत्वतः। खड्गेऽभीशुमतो यद्वत् तदंशस्य त्वसौ भ्रमः ॥" इति ॥ १०६ ॥

किञ्च—

**दाह्याभिभाव्यधर्माणः पाशास्तेऽतो न शूलिनः ।**
**दाहाभिभवयोः कर्तुः प्रकाशायाभिवाञ्छिताः ।। १०७ ।।**
**काष्ठैर्दाह्यैर्न दाहस्य कर्ता वह्निः प्रकाश्यते ।**
**नाभिभाव्याभिरुल्काभिर्दिनकृच्चाभिभावकः ।। १०८ ।।**

दाह्योऽभिभाव्यो वा काष्ठादिरग्न्यादेर्वा दाहाभिभवकर्तुः प्रतिबिम्बग्रहणेन न प्रकाशको दृष्टः। बुद्धिश्च भगवतश्चेत्याऽभिभाव्या चेति तस्य सा न प्रकाशिका ॥ १०७–१०८ ॥

ननु दर्पणादिभिर्दाह्यैरनैकान्तिकता ? अत्र भवतो मूलयुक्तेस्तत्र न दोषः। किञ्चागमविरोधश्चात्र पक्षे। तथाहि—

**विशुद्धेनात्मतत्त्वेन चैतन्याख्येन सूत्रकृत् ।**
**शिवशक्तिकले शुद्धे शिवो ध्येय इति ब्रुवन् ।। १०९ ।।**

**पाशागम्यो महेशान इति ख्यापयति स्म नः ।**

दीक्षितैर्ज्ञानशक्त्यैव निर्मलया शिवशक्त्या दीपितया शिवो ध्येय इति रौरवसूत्रकारोऽब्रवीत् । न बुद्धेर्ध्यातव्यो भगवानित्याह—[1]"सर्वाञ्जनविनिर्मुक्तं शिवशक्तिकलोत्थितम् । आत्मतत्त्वमिदं शुद्धं साधकानां प्रकीर्तितम् ॥ तत्स्थो लीनस्वतत्त्वेन तां कलां चिन्तयेद् बुधः" ( रौ० सू० ४।४२-४३ ) इति ॥ १०९ ॥

तदेवम्—

**न ध्येयो नापि च ज्ञेयस्तस्मादीशोऽणुबन्धनैः ॥ ११० ॥**

तस्माद् बुद्धयादिभिर्न ज्ञातुं नापि तदेकनिष्ठतया ध्यातुं शिवो दीक्षितैः शक्यते ॥ ११० ॥

कथं तर्हि शिवो ज्ञायत इत्युच्यते—

**शिवार्कशक्तिदीधित्या समर्थीकृतचिद्दृशा ।**
**शिवं शक्त्यादिभिः सार्धं पश्यत्यात्मा गतावृतिः ॥ १११ ॥**

यथाऽर्कोपकृतेन चक्षुषा लोकोऽर्कं पश्यति, एवं परमेश्वरानुग्रहान्निवृत्तावरणयोपचितसामर्थ्यया च ज्ञानशक्त्यैव तदनुगृहीतैर्भक्तैस्तत्त्वज्ञाननिष्ठैः परमेश्वरो दृश्यते । किं घटादिवत् कर्मतया ? न, द्रष्टृद्रष्टव्ययोर्द्वयोरपि व्यापकत्वेन तथा दर्शनासंभवात् ॥ १११ ॥

इत्थम्—

**पाशानाप्ये शिवे शब्दाद् योगसाधनचेष्टितात् ।**
**सकलाणोः शिवज्ञानं दृश्यते तत्कथं भवेत् ॥ ११२ ॥**

पाशागम्यत्वे भगवतः कथं शास्त्रात् प्रतिपत्तिर्दीक्षितात्मनां शब्दस्याकाशवायुहेतुत्वेन पाशत्वात् कथं ततस्तत्प्रतिपत्तिः ॥ ११२ ॥

अत्रोच्यते—

**मन्त्रतन्त्रात्मके शब्दे शिवो व्यक्तः कलासु च ।**
**समर्थयति चिच्चक्षुर्नातः किञ्चिद् विरुध्यते ॥ ११३ ॥**

सर्वत्र सर्वदाऽधिष्ठानाद् भगवान् सर्वैः सहित एवेति यथा कचिल्लिङ्गे मण्डले आचार्यादौ चानुग्राहकत्वेन विशेषसन्निधानादभिव्यक्त उच्यते । अत एव पूजानमस्कारादयस्तत्र क्रियमाणाः कर्तॄणां फलहेतवो भवन्ति नान्यत्र । तद्वत् स्थूलेऽपि पाशरूपे मन्त्रतन्त्रशब्दे तत्कलासु नादबिन्द्वाद्यासु भगवानभिव्यक्तश्चैतन्यं समर्थयन् स्वात्मानं पुंसां दर्शयतीत्यपूर्वमिदं मन्त्राणामभिधायकत्वं घटाद्यभिधायकेभ्य इत्युक्तमस्माभिर्मन्त्रवार्त्तिकटीकायाम् ॥ ११३ ॥

---

१. तत्स्थो लीनः, सर्वाञ्जन, आत्मतत्त्वमिति पङ्क्तिक्रमस्तत्र दृश्यते ।

तथाहि—

**व्यक्तः शिवोऽणुबन्धेषु बन्धकार्यविलक्षणात् ।**
**गम्यते कार्यतः ख्याताद् व्यक्तो देहे ग्रहो यथा ।। ११४ ।।**

यथाहि मनुष्याणां केषाञ्चिच्छरीरं देवताऽधिष्ठितमविसंवादि त्रिकालवस्तूपदेशाज्ज्ञायते, तथैव मन्त्रशब्दोच्चारणात् तल्लिप्यक्षरविन्यासाच्च शब्दमात्रासंभविनो वश्यादेर्विलक्षणस्य कार्यस्य दर्शनात् तत्रभवानभिव्यक्तः प्रतिमादाविव गम्यते ॥ ११४ ॥

अत्र—

**अणुबन्धेषु सर्वेषु स्वपरात्मप्रकाशकः ।**
**भवः प्रकाशशून्येषु व्यज्यते कथमुच्यते ।। ११५ ।।**

न जडे चिद्रूपस्याभिव्यक्तिरुपपद्यत इत्यर्थः ॥ ११५ ॥

नैष दोषः—

**दीपस्तैलादिके दाह्ये दाहको व्यज्यते यथा ।**
**स्वपरात्मप्रकाशोऽयं निष्प्रकाशेषु चिद्वताम् ।। ११६ ।।**

दीपस्योपलक्षणत्वाद् यथा जडेऽपि मनुष्यादिशरीरे स्वपरात्मप्रकाशको व्यापकश्चात्मा चिद्वतामप्येषां मनुष्यादीनामुपकाराय कर्मानुरूपमभिव्यज्यते, तथैव परमेश्वरः प्रतिमादिषु चित्रादिषु मन्त्रशब्देषु च पशूपकाराय विशेषसन्निधानोऽभिव्यज्यत इत्यदोषः ॥ ११६ ॥

दीक्षितानामित्थं ज्ञानादस्य पाशस्य नाशः, कदा शिवतुल्यत्वमित्युच्यते—

**प्राप्नुतः शिवतुल्यत्वं तन्वन्ते गुरुदीक्षितौ ।**

अनारब्धकार्याणामेव कर्मणां दीक्षया क्षयः, नारब्धकार्याणाम् । यच्छ्रूयते—"दीक्षिताः परमं शान्तं प्रविशन्ति तनुक्षये" इति । तेषां तु सद्योनिर्वाणदीक्षयैव क्षयः, न भोगात् ॥

तथैव—

**भोगान्ते साधकः सिद्धिं तथैव प्राप्नुयाद् ध्रुवम् ।। ११७ ।।**

यच्छ्रूयते—[1]"भुक्त्वा भोगान् सुचिरममरस्त्रीनिकायैरुपेताः स्रस्तोत्कण्ठाः शिवपदपरैश्वर्यभाजो भवन्ति" इति ॥ ११७ ॥

उक्तः ससाधनो मोक्ष इति । अधुना त्वेतन्निर्णये परमुक्तिनिरासः । तत्र महाव्रतः—

**सिद्धानां शिवतुल्यत्वे कारणानेकता भवेत् ।**

१. पूर्वतनी १२८ पृष्ठस्था टिप्पणी द्रष्टव्या ।

**तेषामतुल्यबुद्धित्वात् कार्यं नोत्पत्तुमर्हति ॥ ११८ ॥**

मुक्तानामपीश्वरवत् सर्वकर्तृत्वे नवमिदमस्तु पुराणमस्त्विति विभिन्नमतित्वात् सर्वकार्यानुत्पादप्रसङ्ग इति मुक्तानां सर्वज्ञतैव, सर्वकर्तृता च परमेश्वरस्यैवेत्यभ्युपगन्तव्यमिति ॥ ११८ ॥

नैष दोषः—

**रागद्वेषादियुक्तत्वादतुल्यज्ञानता नृणाम् ।**
**तेषामतुल्यबुद्धित्वात् कामभेदो न दुर्लभः ॥ ११९ ॥**

युक्त एव पशूनां रागादियोगेन पक्षग्रहादभिप्रायभेदः, सिद्धास्तु—

**रागादिदोषनिर्मुक्ताः सर्वगोचरबुद्धयः ।**
**सिद्धास्तेऽतो न कामैस्तु भेदवद्भिः समन्विताः ॥ १२० ॥**
**अविभिन्नाधिकारास्ते शिवेनोक्तास्तु सूरिभिः ।**
**तेनेह सर्वकार्याणामुत्पत्तिर्न विरुध्यते ॥ १२१ ॥**

यतस्ते सिद्धत्वादेव रागादिरहिता यथावत् सर्वविषयज्ञातारः शिवेन सहाऽविभिन्नाधिकाराः सर्वकर्तृत्वाच्च, ततस्तेषां पक्षग्रहासंभवान्नाभिप्रायभेद इति न कार्यानुत्पाददोषप्रसङ्गोऽत्र ॥ १२१ ॥

महाव्रतपक्षे त्वमुक्तिरेव, यतः—

**असर्वकर्तृभावेन सर्वज्ञो मुक्त इत्यसत् ।**
**न्यूनत्वान्न च सार्वज्ञमकर्तृत्वात् पशुर्यथा ॥ १२२ ॥**

परा परिपूर्णता हि मुक्तिः । असर्वज्ञभावश्च प्राप्तः । सर्वकर्तृत्वाभावात् पशुवद् भवेन्मुक्त इति ॥ १२२ ॥

**चिद्व्यक्त्या सर्वकर्तृत्वं सिद्धानामीश्वरो यथा ।**
**अन्यथा कर्तृता न स्यादीश्वरस्याऽपि सिद्धवत् ॥ १२३ ॥**

चिद्व्यक्त्या सर्वकर्तृत्वमस्त्येव । तथा सिद्धानां सर्वकर्तृत्वं यथा सिद्ध्यति, ईश्वरोऽपि सर्वज्ञत्वादस्य सर्वकर्तृताऽन्यथा न स्यादिति विश्वानुत्पादप्रसङ्गः ॥ १२३ ॥

अपि च—

**न कर्तृशक्तेश्चिद्व्यक्तिरेकनाशे सयुक्तिका ।**

सा शक्तिरेकैव ज्ञानक्रियेत्युक्तं प्राक् । न च तस्याश्चिदंशेन व्यक्तिः क्रियांशेनाव्यक्तिर्युज्यते, निरंशत्वात् । न च विद्येश्वरशक्तिव्यक्तिभिर्व्यभिचारः, सर्वदा तासां व्यक्त्यभावात् ॥

अथ सांख्यवत् पुरुषाणां कर्तृत्वं प्रागपि नास्तीत्युच्यते, तदप्ययुक्तम्—

**कर्तृत्वस्य न चाभावः साधितत्वात् ततस्त्वसौ ।। १२४ ।।**
**सर्वज्ञानक्रियाहीनो निष्कलः केवली पशुः ।**

कर्तृत्वं प्राग् भोगप्रकरणे साधितमिति तदनभिव्यक्तावेकत्वाच्छक्तेर्ज्ञत्वस्याप्यनभिव्यक्तिरिति सर्वज्ञानक्रियावैकल्येन पशुरेव भवेन्मुक्त इति ॥ १२४ ॥

अत्र पुनः परः—

**व्यज्यते कर्तृता सिद्धे सर्वत्र ज्ञानवन्न च ।। १२५ ।।**
**अस्तीशः सर्वकर्तेति संचिन्त्य करणीयकृत् ।**

सिद्धे यत्कर्तृत्वं तन्न ज्ञानवत् सर्वत्र सर्वकर्ताऽस्तीति किमधिकं मया कर्तव्यमिति संचिन्त्य सिद्धो न करणीयं करोतीति ॥ १२५ ॥

यद्येवम्—

**सिद्धे व्यक्ता पशौ नेति विशेषः कस्तयोर्यदि ।। १२६ ।।**
**सर्वकार्याणि नो कुर्यात् सिद्धस्था सर्वकर्तृता ।**

यदि व्यक्तमपि सिद्धस्य कर्तृत्वं न कार्यकरम्, तर्ह्यव्यक्तात् पशुकर्तृत्वात् तस्य को विशेषः ॥ १२६ ॥

तथाहि—

**प्रवृत्तिः सर्वनिष्पत्तौ व्यक्तिर्नान्या तु तद्गता ।। १२७ ।।**
**ज्ञानं सर्वप्रकाशाय प्रवृत्तं व्यक्तमुच्यते ।**

इयमेव त्वस्य कर्तृत्वस्य पशुविलक्षणा व्यक्तिः, या ज्ञानवत् तस्य सर्वप्रवृत्तिः ॥ १२७ ॥

तदेवम्—

**सर्वकृत्यप्रवृत्तौ वा नासावस्तीति वर्ण्यताम् ।। १२८ ।।**
**गृह्यतां दृङ्निरोधो वा दोषो वा पूर्वमोक्षगः ।**

व्यक्ता चेत् सिद्धस्य क्रियाशक्तिः सर्वकार्यक्षमैवाभ्युपगन्तव्या । अथ व्यक्ताऽपि कार्यं न करोति, यद्येवं प्रतिबिम्बगर्भाणुशक्तिवन्नास्त्येव सा तस्येति वाच्यम् । अथाव्यक्ता विद्यत इत्युच्यते, तर्ह्येकत्वाज्ज्ञानक्रिययोः शक्त्योर्दृङ्निरोधो ज्ञानस्याऽनभिव्यक्तिर्मोक्षो वाच्यः । अथाव्यक्तयापि तया ज्ञानशक्तिर्व्यक्तेष्यते, यद्येवमविद्यमानपूर्वो मोक्षो यस्य परमशिवस्य तस्मिन् सर्वज्ञत्वान्मुक्तवदकर्तृत्वदोषः प्रोक्तोऽभ्युपगन्तव्य इति पक्षाणां चतुष्टयादस्माद् भवद्भिरेको ग्राह्यः । न च प्रथमपक्षस्यात्र कश्चिद् दोष इति शिवसमत्वं सर्वज्ञत्वसर्वकर्तृत्वलक्षणतैव मुक्तिरभ्युपगन्तव्या ॥ १२८ ॥

पाशुपतास्तु मुक्तावीश्वरगुणानां संक्रान्तितः सिद्धानां शिवसमतामाचक्षीरन्, तदयुक्तम्—

**विमोक्षे गुणसंक्रान्तावीशोऽनीश्वरतां व्रजेत् ।। १२९ ।।**
**गुणखण्डस्य संक्रान्तौ गुणः सावयवो भवेत् ।**

सिद्ध एवेश्वरगुणानां संक्रान्ताविष्यमाणायामीश्वरः सर्वज्ञत्वादिगुणरहितः स्यात्, गुणानामनंशत्वादेकदेशेन गुणसंक्रान्त्यसंभवात् ॥ १२९ ॥

किञ्च—

**त्यक्त्वा स्वगुणिनं यान्ति न च गुण्यन्तरं गुणाः ।। १३० ।।**
**गच्छतां च व्यवस्थेयं पदार्थानां विरुध्यते ।**

यदि च स्वगुणित्यागेन गुण्यन्तरे गुणानां वृत्तिरिष्येत, तदा सर्वः सर्वगुणी स्यादिति दृष्टनियमानुपपत्तेर्मुक्तोऽमुक्तश्च मुक्तः प्रसज्यत इति गुणसंक्रान्त्यनुपपत्तेर्न तया शिवसमत्वमभ्युपगन्तव्यमिति ॥ १३० ॥

वेदान्तविदस्तु तल्लयात् तत्समत्वं मुक्तिं प्रतिपन्नाः, तदप्ययुक्तम्, यतः—

**प्रागुक्तदोषदुष्टात्मा परमात्मा यथा तथा ।। १३१ ।।**
**सिद्धस्तल्लयसंप्राप्तस्तदभिन्नो यतस्त्वसौ ।**

उपादानकारणत्वात् परमात्मनोऽचेतनत्वादिदोषदुष्टत्वं यत् प्राक् प्रतिपादितं तत्सिद्धस्याऽपि तदभेदात् प्रसज्यत इत्यद्वैतमेव मोक्षो भवताम् ॥ १३१ ॥

अपि च—

**एकत्वदर्शनं मुक्तेः साधनं स्वात्मबाधितम् ।। १३२ ।।**
**मोच्यमोचनकर्तॄणां नाभेदे सा यतो भवेत् ।**

एकमेवाद्वितीयं ब्रह्मैव सत्यम्, ततस्तज्ज्ञानमेव मुक्तेः साधनमितीदमुच्यमानं माता मे वन्ध्येतिवत् स्वोक्त्यैव बाधितम् । यत एकत्वे सति न साध्यसाधनभावः, साध्यसाधनभावे वाऽनेकत्वमिति ॥ १३२ ॥

किञ्च—

**भेदे सति प्रमाणानां प्रवृत्तिर्नान्यथा मता ।। १३३ ।।**
**क्लृप्तः किमिति विद्वद्भिरभेदो निष्प्रमाणकः ।**

ब्रह्मैव सत्यमिति येन प्रमाणेन सिद्धं भवताम्, तद् यद्यसत्यमेव, कथं तस्मात् स्वप्नदृष्टादिवत् सत्यब्रह्मसिद्धिः । अथ सत्यम्, तर्हि प्रमाणप्रमातृप्रमेयप्रमितिसत्यत्वादद्वैतमसत्यमिति कथं तत्प्राप्तिरपि मोक्षः ॥ १३३ ॥

सांख्यास्तु—

**मुक्त्वा योगफलं रम्यं भोगान् सांसारिकानपि ।। १३४ ।।**
**आचैतन्यं कथं चान्ये कैवल्यं मोक्षमूचिरे ।**

योगः सादाशिवो देहः, तल्लक्षणं फलं सर्वज्ञतादिरूपं मोक्षं परित्यज्य संसार-भोगांश्च नानाविधविषयसंवेदनफलानणिमादिसाध्यांस्त्यक्त्वा कैवल्यलोभेन प्रकृतिवियो-गादात्मनाशसमं ज्ञत्वमेव स्वेषां मोक्षं कल्पितवन्तः। न च तस्मिन् अपुरुषार्थभूते कस्यचित् प्रवृत्तिरुपपद्यते ॥ १३४ ॥

तथा हि—

**स्वचैतन्यविनाशाय सन्तः सन्तः कथं च ते ।। १३५ ।।**
**विवेकदर्शनाभ्यासप्रयासं कुर्वतेऽन्वहम् ।**

के हि पण्डिताः स्वात्मनो ज्ञाननाशाय प्रत्यहं ज्ञानयोगाभ्यासादिप्रयासं कुर्युः ॥ १३५ ॥

किञ्च—

**विवेको नाम वैधर्म्याद् गुणानां पुरुषस्य च ।। १३६ ।।**
**तत्र यद्दर्शनं तत्तु विचारे नोपपद्यते ।**

न च गुणपुरुषविषयं ज्ञानं विचारे क्रियमाणे सांख्यानामुपपद्यते ॥ १३६ ॥

तथाहि गुणा वा पुरुषविवेकं दर्शयन्ति स्वयमेव वा पुरुषः पश्यति ? तत्र—

**कर्तृप्रसवसंकीर्णधर्मका हि गुणा वयम् ।। १३७ ।।**
**त्वं नेति पुरुषस्यार्थं बुद्धिस्था दर्शयन्ति ते ।**

चिच्छक्तिरपरिणामिनी अप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता चेति बुद्धि-दर्शितविषयत्वेनैव पुरुषस्याभ्युपगमाद् बुद्ध्युपारूढैरेव गुणैर्वयं कर्तृत्वादिधर्मयुक्ताः परस्परं संकीर्णाः, त्वं तु नेति तस्य विवेको दर्शनीयः ॥ १३७ ॥

किमतः ? अतश्च—

**तथा दर्शितदर्शित्वे मिथ्यादर्शी पुमान् भवेत् ।। १३८ ।।**
**मिथ्यादर्शनसाध्यत्वं मोक्षस्येति सुदुर्घटम् ।**

एवं बुद्ध्युपारूढगुणदर्शित्वे पुरुषस्य बुद्धेः परिमितत्वेनापरिमितगुणविषयत्वा-संभवात्। यदुक्तम्—कपिलब्रह्मणोऽप्यप्रत्यक्षा गुणा इत्येकदेशेन तैर्बुद्धावुपारोहणीयम्। एकदेशेन तत्त्वप्रतिपत्तिरप्रतिपत्तिः। नीलगिरिरिति नीलोपाधौ हिमवति तत्प्रतिपत्ति-र्मिथ्यैव। न च मिथ्याज्ञानान्मोक्षः, अयुक्तत्वात् ॥ १३८ ॥

**कर्तृत्वादि गुणा ह्येते गुणा नाहमितीदृशी ।। १३९ ।।**
**दर्शने पुरुषस्येष्टे हता दर्शितदर्शिता ।**

बुद्धिप्रदर्शित एवार्थः पुरुषेण दृश्यत इति भवद्भिर्यदुक्तं तत्साक्षात् स्वात्मविविक्त-गुणद्रष्टृत्वे पुरुषस्य कल्प्यमाने व्याहतम् ॥ १३९ ॥

अथोच्यते—न साक्षात्पुरुषो गुणान् पश्यति, नापि ते बुद्ध्युपारोहेण तस्य स्वात्मानं दर्शयन्ति, प्रोक्तविरोधात् । अपि तु गुणपुरुषयोरन्यत्वमात्रं दर्शयन्ति । तदपि न, यतः—

**अन्ये गुणाः पुमानन्य इति नो दर्शयन्ति ते ।। १४० ।।**
**गुणेभ्यो न गुणा येन भिन्नाः सन्ति धियांनिधेः ।**
**न चाऽपि विषयस्तेषामणुरित्युदितं पुरा ।। १४१ ।।**

यदि हि न स्वात्मानं दर्शयन्ति, तर्हि गुणान्तराणामन्यत्वं दर्शयन्तीति प्राप्तम् । न च धियांनिधेर्बुद्धिनिधानाद् गुणलक्षणादन्ये गुणाः संभवन्ति । न चाप्यात्मा तेषां विषय इत्युक्तं प्राक्—"परिणामी पुमान् भोग्यः प्राप्तस्तद्गोचरो यदि" ( श्लो० १०५ ), इति कथमविषये तदन्यत्वं दर्शयेयुः ॥ १४०–१४१ ॥

**विवेकविषयं तस्माद् दर्शनं नोपपद्यते ।**

इत्थं विवेकदर्शनानुपपत्तेः कुतः कैवल्यावाप्तिर्मोक्ष इति सर्वज्ञतादिरूपस्तव मोक्षोऽभ्युपगन्तव्यः ॥

शाक्तादिदृष्टीनां का वार्तेत्युच्यते—

**यथोक्तपशुपाशेषु साध्यसाधनवर्जनात् ।। १४२ ।।**
**पाशात्मिकास्ततो हेया दृष्टयो वादिनां बुधैः ।**

यतो यथोक्ते पशुविषये पाशविषये च प्रमाणतः सिद्धे यत् साध्यं मुक्तिस्तद्विच्छेद-दर्शनं च साधनम्, तन्न साधयन्त्यविषयत्वात् । अतोऽन्यवादिदृष्टयोऽश्रेयःफलाः श्रेयोऽर्थिभिः परिहार्याः ॥ १४२ ॥

अत एव च—

**पशुपाशादिवैशिष्ट्यप्रकाशकमबाधितम् ।। १४३ ।।**
**शैवं तदधिकार्थत्वाद् विदुषः कस्य न प्रियम् ।**

नहि दर्शनान्तरैः पशुपाशाद्यदृष्टमेव, किन्तु यथाभूतं तथा विशिष्टं दृष्टमिति तद्वैशिष्ट्यप्रकाशकम् । अत एवागृहीतग्राहि प्रोक्तवत् प्रत्यक्षानुमानाभ्यां सुसंवादं शैवागमाख्यं प्रमाणं प्रत्यक्षादिवत् कस्य नाभिमतम् ॥ १४३ ॥

नन्वागमान्तराणामपि प्रमाणत्वात् तद्विरोधेऽस्य कथं प्रमाणतेति, अत्रोच्यते—

**पाशदृष्टिविरोधाय प्रवृत्तमपि मानताम् ।। १४४ ।।**

**न जहाति यतश्छेद्याः पाशास्तस्येह सर्वतः ।**

नानेन दृष्ट्यन्तराण्यपोद्यन्ते, किन्तु दृष्ट्या नैतदेवमिति पाशात्मकतदर्थबाधकत्वे-नैवास्योत्पत्तेस्तद्विरोधान्नेदं रजतं शुक्तिकैवेयमिति ज्ञानस्येव न प्रामाण्यं विहन्तुं क्षमम्, नापि दृष्ट्यन्तरैः सहास्य विरोधः, यतः—

**न च स्वगोचरे तासां बाधते तत्प्रमाणताम् ।। १४५ ।।**

न च तच्छैवाख्यं प्रमाणं दृष्ट्यन्तराणामसत्यार्थत्वं प्रतिपादयति, येन तैः सहास्य विरोधः स्यात् । अपि तु प्रत्यक्षादीनामिवाल्पार्थदर्शित्वेऽपि यथास्वं प्राप्यप्रापकत्वेन प्रामाण्यमेवेति । एतच्चोक्तमस्माभिः सर्वागमप्रामाण्ये ॥ १४५ ॥

अपि च—

**तासु वर्णाश्रमाचारानभ्यनुज्ञातवच्च तत् ।**

यदाहुः—"इति[१] वर्णाश्रमाचारान्मनसाऽपि न लङ्घयेत् ॥ यो यस्मिन्नाश्रमे तिष्ठन् दीक्षितः शिवशासने । स तस्मिन्नेव संतिष्ठन् शिवधर्मं च पालयेत् ॥" इति । अत एव युष्मद्दृष्ट्याऽप्यस्य न पाषण्डत्वम्, वेदाविरोधात् । वेदवित्परिग्रहश्च श्रूयते यतः । पुराणेतिहासादौ श्वेतोपमन्युप्रभृतीनां महर्षीणामत्रानुष्ठानम्, भारते च नरनारायणयो-रश्वत्थाम्नश्च । "आभ्यां लिङ्गेर्ऽचितो देवस्त्वयार्चायां युगे युगे" इति सुवर्णाक्षे च भगवतो परमेश्वराराधनात् सिद्धिः । "अपि चान्यत् प्रियतमो लोके कृष्ण भविष्यति । त्वन्मुखे च जगत्सर्वं भविष्यति न संशयः ॥" इति रामायणे । कार्तवीर्यादिः स्मृतिषु च प्रतिष्ठादिपूर्वो धर्मः—"पक्वेष्टकाचितं सम्यग् यः करोति शिवालयम्" इति । सूत्रे—"तत्र मोक्षं विनिर्दिशेत्" इति । दृश्यन्ते च पृथुकेश्वररामेश्वरादयः प्रतिष्ठापिताः । वेदेऽपि श्वेताश्वतरादिशाखास्वथर्वशिरःप्रभृतिषु च मन्त्रेषु शैवसंप्रत्ययः । ततो न विगानम्, नापि विच्छिन्नमूलता, न च कैश्चिदेव परिग्रहः, येन युष्मद्दृष्ट्याऽप्यप्रामाण्यं स्यात् ॥

किञ्च—

**न चान्येन प्रमाणेन संरुद्धस्तस्य गोचरः ।। १४६ ।।**
**श्रोत्रियैरप्यतो ग्राह्यं तत्फलाऽधिकसाधनम् ।**

न च प्रत्यक्षेण वाऽनुमानेन वाऽस्य बाध इत्युक्तं प्राग् भोगप्रकरणे, येनाग्निना सिञ्चेदित्यादेरिवाप्रामाण्यं स्यादिति सर्वमविरुद्धम् । परश्रेयोहेतुर्वेदविद्भिरन्यैश्च प्रमाण-मेतद् ग्राह्यम् ॥ १४६ ॥

---

१. पूर्वतनी १२९ पृष्ठस्था तृतीया टिप्पणी द्रष्टव्या ।

न च दृष्ट्यन्तरैरप्यस्य बाधः, यतः—

व्या/ **न ताभिरभिभाव्याभिः सामान्याभिश्च बाध्यते ॥ १४७ ॥**
**ताभ्यो विलक्षणत्वात्तु तया चाविषयत्वतः ।**

वेदादीनामपि रचना कर्तारं न व्यभिचरति। हिरण्यगर्भप्रभृतयः कर्तारोऽभियुक्तैः स्मर्यन्ते । गीतासु च—"वेदान्तकृद् वेदविदेव चाहम्" ( १५।१५ ) इति। तेषां च परस्परविरुद्धार्थशास्त्रोपदेशादसर्वज्ञत्वम्। यदाहुः—"सुगतो[1] यदि सर्वज्ञः कपिलो नेति का प्रमा। अथोभावपि सर्वज्ञौ मतिभेदस्तयोः कथम् ॥" इति। असर्वज्ञसामान्यकर्तृप्रणीतदृष्टयोऽप्यसर्वविषयाः सर्वज्ञप्रणीतशास्त्राभिभाव्यास्ताः कथं तदेवाभिभावकं सर्वज्ञप्रणीतत्वाद्वक्ष्यमाणवत्सर्वान्यागमार्थपरिच्छेदकत्वेन ताभ्यो विलक्षणं विषयीकृतं च बाध्यते । यथा तेन विषयीकृतास्तथा न ताभिस्तदिति ॥ १४७ ॥

**यथा मेयफले तासां तदनूद्य प्रकाशते ॥ १४८ ॥**
**स्वप्रमेयफलारूढं वैशिष्ट्यं न तथा कृताः ।**
**तस्य मेयफलं चोक्त्वा स्वप्रमेयफलाश्रितम् ॥ १४९ ॥**
**वैशिष्ट्यमवभासन्ते तस्मात् तासां न गोचरः ।**

यथाहि तच्छैवं तासां दृष्टीनां मेयफलविषयं वैशिष्ट्यं स्वप्रमेयफलारूढम्—"बुद्धितत्त्वे स्थिता बौद्धा गुणेषु त्वार्हताः स्थिताः" इत्याद्यनूद्य सर्वविषयत्वेन प्रकाशते, न तथा तत्फलविषयं ताभिः सर्वाभिर्गोचरीकर्तुमशक्यम्। अतः कथमविषये बाधकत्वं तासां स्यात् ॥ १४८–१४९ ॥

अत एव—

**अभ्यनुज्ञा निषेधो वा तेन तासु विनिश्चितम् ॥ १५० ॥**
**तत्तुल्यजातिदृग् व्याप्यो न शैवज्ञानगोचरः ।**

यतोऽसर्वज्ञप्रणीतत्वेन दुर्बलत्वं तासाम्, ततः शैवागमाविरोधेन स्वविषयानुष्ठानेऽभ्युपगम एव, "इति[2] वर्णाश्रमाचारान् मनसाऽपि न लङ्घयेत्" इति। तद्विरोधे तु निषेधः—"कुर्याद् ब्राह्मीं न वा कुर्याच्छैवीमेव नियोगतः" इति ॥ १५० ॥

न तु ताभिरसर्वज्ञप्रणीताभिस्तुल्यजन्मज्ञानं तेन व्याप्यो भवति कदाचिदपि शैवज्ञानगोचरोऽर्थः । न च कार्यत्वादनित्यत्वमस्य । यतः—

**अनादिकालसंसिद्धं तद्गुणत्वेऽपि शाङ्करे ॥ १५१ ॥**
**तच्च सम्यक् परिच्छेदि शाङ्करं ज्ञानमीरितम् ।**

१. पूर्वतनी १३५ पृष्ठस्था टिप्पणी द्रष्टव्या ।
२. पूर्वतनी १२९ पृष्ठस्था तृतीया टिप्पणी द्रष्टव्या ।

शब्दार्थरूपो ह्यागमः । तत्र तन्त्ररूपस्येश्वरकृतत्वेऽपि तदर्थस्य परमेश्वरसमवेतस्य सम्यग् ज्ञानादेर्गुणस्य नित्यत्वान्नित्यत्वम् । अत एव तत्प्रमाणम् ॥ १५१ ॥

अत एव—

**न चाविहतशक्तित्वात् पत्युर्बाधं तदश्नुते ॥ १५२ ॥**
**न तुल्यफलताऽप्यस्मात् कुतो निष्फलता भवेत् ।**

न तन्निष्फलम्, नापि दृष्ट्यन्तरैः समानफलं बाध्यमानफलं वा, किन्तूक्तमेव तत्प्रामाण्यं भगवतोऽप्रतिहतशक्तित्वेन सर्वोत्तमत्वात् ॥ १५२ ॥

अस्तु वा दृष्ट्यन्तरैः सह समानत्वम्, तथापि न पाक्षिकमुपादानम्, यतः—

**ग्राह्यं तुल्यफलत्वेऽपि विमुक्तिर्दीक्षयैव तत् ॥ १५३ ॥**
**सिद्धिदं तु यतः पुंसां साधनेन लघीयसा ।**

को ह्यभिप्रेतसाधनं लघुतरं परित्यज्य क्लेशहेतावतिविस्तीर्णे प्रवर्तते । तदुक्तम्—"अत्रैव मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संप्राप्तौ को विद्वान् यत्नमाचरेत् ॥" इति ॥ १५३ ॥

किञ्च—

**सिद्धिर्व्यापारनिर्मुक्ता मुक्तिरप्यतिशायिनी ॥ १५४ ॥**
**यत्र तत्को न गृह्णाति साधनं श्रुतिभूषणम् ।**

यस्मिन् शास्त्रे सर्वोत्कृष्टं फलं श्रूयते, तत्रान्यपरित्यागेन को न प्रवर्तत इति दृष्ट्यन्तरैस्तुल्यफलत्वेऽपि न विकल्पिता प्रवृत्तिरत्रेति ॥ १५४ ॥

ननु परमेश्वरप्रणीतं तदिति कुतस्तदुच्यते—

**शिवात् परम्परायातौ भोगमोक्षौ ससाधनौ ।**
**आत्रेयाय मुनीन्द्रेण रुरुणा संप्रकाशितौ ॥ १५५ ॥**

**मन्दबुद्धिप्रबोधाय करुणाविष्टधीः स्फुटम् ।**
**सद्योज्योतिस्तु संक्षेपात् तावेतौ परिबद्धवान् ॥ १५६ ॥**

**यं चानुशासयामास भगवानीशसंमतः ।**
**उग्रज्योतिर्गुरुः श्रीमान् सर्वविद्यासरित्पतिः ॥ १५७ ॥**

इति मोक्षकारिका समाप्ता ॥

गुर्वाम्नायतोऽविच्छिन्नस्मरणसन्ततेरेव पारमेश्वरत्वेनैतत् प्रतीयते सर्वश्रेयो-हेतुरिति ॥ १५५–१५७ ॥

इति मोक्षकारिकायां नारायणकण्ठसूनुना रचिता ।
संक्षेपाद् वृत्तिरियं शिष्यहिता भट्टरामकण्ठेन ॥

**इति श्रीनारायणकण्ठात्मजभट्टरामकण्ठकृत-मोक्षकारिकावृत्तिः समाप्ता ॥**



# परमोक्षनिरासकारिका

## सद्योज्योतिःशिवाचार्यप्रणीता

### भट्टरामकण्ठकृतव्याख्यासहिता

यां सांख्ययोगविद्वांसो गतिं मोहात् प्रपेदिरे ।
वेदान्तज्ञानविद्वांसो गतिमिच्छन्ति वैदिकीम् ॥
पाञ्चरात्ररता ये च ये च योगिमहेश्वराः ।
प्रमाणाग्नेयकर्तृत्वविशिखामलकारकाः ॥
प्रवदन्ति मलासिद्धा ये चान्ये मोक्षवादिनः ।

इति रौरवसूत्रम्

---

तदियता शिवहस्तस्य प्राधान्यं प्रतिपाद्याधुना दीक्षाफलस्य प्रमाणस्य तावद् व्यतिरेकेण समानासमानतन्त्रान्तरगीतानि फलानि दर्शयितुं यां सांख्ययोगविद्वांस इत्यादेः सार्धसूत्रद्वयस्य कारिकाभिरर्थमाह—

**सत्संस्कारस्य यस्येदमङ्गजातं निरूपितम् ।**
**तत्फलव्यतिरेकाय यदुक्तं फलवर्णनम् ॥ १ ॥**

यस्य शिवहस्तादीन्यङ्गानि दत्तपूर्वाणि, तस्य संस्कारस्यायोगान्ययोगव्यवच्छेदेनापवर्गकारणत्वतः सदिति विशेषितस्य दीक्षाख्यस्य यत्फलं वक्ष्यमाणमशेषबन्धनिवृत्तौ स्वगुणसर्वज्ञत्वाद्यभिव्यक्तिः, तद्भेदेन तन्त्रान्तरगीतानि फलानि वर्ण्यन्ते। फलभेदकथनप्रयोजनं च वक्ष्यत्युपसंहारे—"तत्साधनेषु" ( श्लो० ५९ ) इत्यादिना ॥ १ ॥

तत्र क्रमेण तानुद्दिशति—

**कैवल्यं सत्त्वसंभोगो विलयः परमात्मनि ।**
**अव्याकृतादिष्वर्वाक्त्वं लय एव विकारिषु ॥ २ ॥**

गुणत्रयलक्षणप्रकृतिसम्बन्धो ह्यकेवलताहेतुरात्मनः। स च न सम्बन्धमात्रम्, तयोर्व्यापकत्वादात्मनः कैवल्यावस्थायामपि तस्य भावात् तथात्वानुपपत्तेः। अपि तु भोक्तृभोग्यरूपोऽनादिस्तदविवेकप्रतिपत्त्यात्मकः, प्रत्ययाविवेकरूपत्वाद् भोक्तृभावस्य। यदाहुः—"प्रत्ययाविवेको भोगः" इति। प्रकृतिर्ह्यात्मानं भोग्यत्वेन समर्पयन्त्यपि पुंसस्तमःसामर्थ्योपार्जितक्लेशभूताविद्यास्मितादिशक्तियोगेन तथा समर्पयन्ती विदग्धवेश्यावन्न यथा तद्विकारशेषेषु तस्य हेयत्वबुद्धिरुपजायते, अन्यथा तदतिरिक्तबन्धासिद्धे-

भोगायोगात् संस्काराभावप्रसङ्गात् । स एव च संस्कारः कैवल्यप्रतिपक्षभूतः प्रोच्यते । यदा त्वात्मज्ञानाद् योगाद्वा तस्मात् पुंसः स्वरूपेण भास्वरेणानन्यरूषितेन विवेकः प्रकाशते, तदानीं तेनाविवेकस्य प्रतिपक्षतयैवापध्वंसितत्वात् तदात्मकस्यापि प्रसारस्य तं प्रत्यनुदयात् सर्वात्मना प्रकृतेर्भोग्यत्वनिवृत्तौ तस्य परं कैवल्यं मुक्तिरिति तच्छास्त्रवित्प्रवराः ।

फलान्तरमाह—सत्त्वसंभोग इत्यादिना । अनादिरेव प्रकृतिसंबन्धः । पुरुषो भोक्तृतया सर्वैरभ्युपगतः । न च तद्भोक्तृत्वमौपाधिकम्, तस्य तथात्वे हि तस्य न तत् स्यात्, अन्यकृतस्य धर्मस्य नित्यकर्मव्यतिकरायोगात्, व्यतिकरे वा नासौ भोक्तेति कस्य बन्धो मोक्षो वेति भोक्तृत्वं स्वभावात्मकमेष्टव्यम् । न चानादेर्नित्यस्वभावस्य विनाशो युक्तः, केवले पुरुषेऽपि तथाभावप्रसङ्गतो वैनाशिकत्वप्राप्तेः । तद्विनाशासंभवादेव च मुक्तावपि भोक्तृभोग्यसंबन्धः पुंप्रकृत्योरेष्टव्यः । केवलं चानादिकर्मदौरात्म्यतः प्राग् दुःखमोहान्तरितसुखलयरूपिका प्रकृतिस्तस्य भोग्याऽभूत् । यत्पुनस्तत्कारणभूतसर्वकर्मप्रत्यस्तत्वम्, यतो मुक्तौ शुद्धनिरन्तरानतिशयानवच्छिन्नसत्त्वात्मसुखरूपोऽसौ भोग्य इति तत्प्राप्ताः किल सत्त्वभुजः प्रोच्यन्त इति तदागमविदां पीठबन्धः ।

विलयः परमात्मनीति शास्त्रान्तरफलम् । "सर्वं खल्विदं ब्रह्म" ( छा० उ० ३।१४।१ ), "नेह नानास्ति किञ्चन" (कठो० ४।११; बृ० उ० ४।४।१९) इति श्रुतिलक्षणात् सिद्धार्थविषयलब्धप्रामाण्यादपौरुषेयतया तदन्यागमेभ्यः प्रबलतररूपादागमात् प्रतिपन्नस्य परमानन्दाद्यनेकतदागमगीतगुणस्वभावस्य प्रमाणान्तरागोचरानवच्छिन्नचिद्ब्रह्मणः सत्यतया तदन्येषां च भेदरूपाणामविद्यादिनिर्माणैकसारत्वेनासत्यतयाऽवगतिः । तत एव त आहुः—"आत्मा यतः प्रसिद्धं च कवयोऽस्य प्रचक्षते" इति । न चास्यावगमस्य भेदसत्ताप्रमाणभूतप्रत्यक्षादिबाधे अग्निना सिञ्चेदित्यादेरिवाप्रामाण्यमाशङ्कनीयम्, भेदस्येतरेतराभावप्रसिद्धिव्यपेक्षत्वेन वस्तुमात्रग्राहिप्रत्यक्षविषयत्वासिद्धेः, शशविषाणवदविद्यामात्रकल्पितत्वेनासत्यत्वात् । तदुक्तम्–"आहुर्विधातृ प्रत्यक्षम्" (ब्र०सि० २।१)इति । एवं च सति जीवात्मनामपि स्वतःप्रमाणसिद्धप्रोक्तसत्यभूतपरमात्मसारत्वेऽप्यविद्याकलुषितत्वेन भ्रान्तत्वात् प्रसुप्तपुरुषसाधारणानामिव स्वप्नानुभववृत्तीनां तात्त्विकप्रबोधानुदयतस्तद्रूपानुपज्ञातबोधकः संसाराभिधानभेदकप्रपञ्चः स्वरूपतोऽनिदम्प्रथमः । कदाचित्तु—"आत्मा ज्ञातव्यः" इत्यादिशास्त्रगीतक्रमेण प्रोद्बलतरज्ञानप्राप्तितस्तत्प्रतिपक्षभूतभ्रान्तिकारणप्रोन्मूलनेन तिरस्कृताखिलभ्रान्तिः परमात्मबोधः सुप्तप्रबुद्धस्येव स्वरूपमात्रप्रतिष्ठो जीवात्मनः पूर्वप्रवाहविलयरूपो भवतीति । सैव परा मुक्तिरिति केषाञ्चिद् ग्रहः ।

नन्वत्र वृत्तिकर्तुः परिणतिवेदान्तमतिरेवोद्देश्यतयाऽभिमता न मायावादमतिः । सैव "उपादानत्वसंसिद्धिः" ( श्लो० ४९ ) इति वक्ष्यमाणदूषणानुसारिणी । सत्यं तदनुसारिणी । किन्तु नैषा वेदान्तेष्वध्यात्मवित्प्रवरैर्मुख्यत्वेन गीयते । न चात्र श्रुतयोऽनुरूपाः । सैव च यथा दूषणानुसारिणी तथात्रैव वक्ष्यामः ।

अव्याकृतादिष्वित्यागमान्तरफलोद्देशः । "यत्र तिष्ठन्त्यणीयांसः क्षेत्रज्ञाः कर्मभिः सह ।....तदव्याकृतमुच्यते" । कुत्र तिष्ठन्ति ? अत्र केचिदाहुः—इह यथा मृदन्वितेषु

घटादिषु मृत्कार्यत्वदर्शनाद् भवद्भिः सुखाद्यन्वितेष्वपि कार्यकारणादिषु सुखादिरूप-प्रधानकारणत्वमिष्यते, तथैवात्मनां प्रधानस्य च भेदेऽप्येकसदन्वयसंभवादेककारणत्व-मिष्यताम् । अत्र वा तन्मा भूदिति विशेषाभावात् तेषां यत्कारणं सा परा प्रकृतिर्महा-विभूत्यभिधाना, जडा जडकारणत्वात् । सैव साक्षादीश्वरलक्षणेन चातुरात्म्येनानीश्वर-क्षेत्रज्ञात्मना जडात्मकाऽविद्यारूपेण च परिणमते । विद्या तु बुद्धिमनोभूता अविशेषात् तन्मात्रतया भूताविशेषाच्च भूततया भूतानीन्द्रियत्वेनेत्येवंक्रमेण सैव तथा तथा परिणमत इति परत्वं तस्याः । तदाहुः—भगवान् वासुदेवः परा प्रकृतिर्ज्यायसी विभूतिर्भूतिरेव च । स स्वयं भवति भूतो भावीत्येवमणीयस्तया अव्यापकव्यापकत्वेन तत्रैव कार्यत्वात् क्षेत्रज्ञास्तिष्ठन्तीति तत एवोपादानकारणाद् विकृतिधर्मकादविद्याकर्मानुबन्धेन जीवात्मनां सम्भवात् । तत्क्षयतः समुपशान्तकार्यभेदरूपे तस्मिन् परमकारणात्मनि तेषां विलयः परं श्रेय इति केषाञ्चिद् दुरभ्युपगमः । अव्याकृतादिष्वित्यादिग्रहणात् प्रकृतिलयवादिनोऽर्वाक्त्वतो येऽवस्थितास्त्वहङ्कारादिलयवादिनस्तौष्टिकाः । तदुक्तम्—"आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः । बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिहिताः ॥" ( सां० का० ५० ) इति ॥ २ ॥

**महागणो महेशस्य त्वकर्ता सर्ववेद्यवित् ।**
**कर्तृत्वेऽपि प्रयोज्यत्वं समत्वं तेजसांनिधेः ॥ ३ ॥**

फलान्तरं सालोक्यसामीप्यादिप्राप्तिः । यदुक्तं पौष्करे—"अन्याभिरिह दीक्षाभिर्न निर्वाणमवाप्यते । गाणपत्यपदं ताभिः" इति । एतदेव च योगिपदेन सूत्रकृता निर्दिष्टम् । अकर्ता सर्ववेद्यविदिति दर्शनान्तरफलम् । परमेश्वरे तावत् कर्मकर्तृत्वं तनुकरणभुवनादि-कार्यान्यथानुपपत्त्या प्रतिपादितम् । एतस्मिन्नवस्थितेऽधुना मुक्तपुरुषे कर्तृत्वसिद्धौ न कार्यान्यथानुपपत्तिर्भवति । अथ ईश्वरवन्मुक्तत्वेन कर्तृत्वसिद्धिः, तदयुक्तम्, ईश्वरस्य मुक्तत्वासिद्धेरदृष्टान्तत्वात् । बद्धो हि मुच्यत इति ईश्वरसिद्धयोरनेनांशेनात्यन्तवैसा-दृश्यम् । यथाह व्यासाक्षिण्यां तत्रभवानवधूतः—"परमशिवः सिद्धान् प्रत्युपरता-धिकारोऽप्यन्येष्वनुपरताधिकारः । सिद्धः पुनरेकान्तेन सर्वत एवोपरताधिकार इति भेदः" इति । न च प्रागपि पुंसः कर्तृत्वमित्याहुः, किन्तु प्रकृतेरेव तत् सांख्यपक्षवदिति मुक्तौ कर्तृत्वस्य प्रमाणाभावादकर्तृत्वमेव । ज्ञानं तु पुंसः स्वाभाविकं प्रागनुभवतः सिद्धम् । तत्तु मुक्तावावरणाभावेन सर्वविषयं भवतीत्यकर्ता सर्ववेद्यविन्मुक्त इति तदा-गमविदः । त एव हृदयप्रमाणादिग्रन्थकर्तृत्वेनात्र सूत्रकृता प्रमाणकर्तृत्वपदेनोपक्षिप्ताः ।

कर्तृत्वेऽपि प्रयोज्यत्वमित्यागमान्तरम् । अयमर्थः—ज्ञातृत्ववत् कर्तृत्वमपि पुंसः स्वभाव एव । न तु प्रकृतेः कर्तृत्वं युक्तम्, कारणत्वात् तस्याः । अन्यद्धि कारणत्वं स्वरूपा-न्यथाभावरूपं जडवस्तुषु स्वभावतयैव परिणामित्वाद्यव्यभिचारि क्षीरदध्यादिष्वध्यक्ष-सिद्धम् । अन्यच्च कर्तृत्वं हिताहितप्राप्तित्यागफललिप्सया सर्वान्यकारकप्रवृत्तिनिवृत्ति-कारणत्वेन स्वातन्त्र्यात्मकं शिवत्वाव्यभिचारि स्वसंवेदनसिद्धमिति वक्ष्यामो मन्त्र-वार्त्तिके । अनुमानेनाप्यात्मनां कर्तृत्वं साधितमेव तत्त्वसंग्रहादौ वृत्तिकृता । ननु कर्तृत्वे सत्यात्मनां स्पन्दात्मकत्वेन परिणामिता ? न, कर्तृत्वस्य स्पन्दात्मकत्वासिद्धेः । क्रिया हि

स्पन्दः। न च क्रियारूपत्वं कर्तुः कर्तृत्वम्, कर्त्रन्तरकल्पनायामनवस्थाप्रसङ्गात्। अपि तु तत्र हेतुतयैव, तत्सामर्थ्येनैव कार्यकरणस्पन्ददृष्टेरिति। जडव्यापकक्रियात्मकस्पन्दः कथं चैतन्यव्यापकत्वाव्यभिचारिणि कर्तरि भवेत्। न च स्पन्दात्मकतैव कारकत्वम्, अपि तु विशिष्टशक्तियोगः, अयस्कान्तादीनामिवेत्युक्तमस्माभिरन्यत्र। जडस्पन्दक्रियायां या शक्तिः सा कर्तृता चितो व्याप्ते स्पन्दरूपेण सिद्धाऽयस्कान्तवत् स्वत इति। तच्च कर्तृत्वं तेषामनाद्येवेश्वरप्रयोज्यतया सिद्धम्। अनादेश्च विनाशो न संभवतीति मुक्ताः शिवाः सर्वज्ञाः सर्वकर्तारः परमशिवेन प्रयोज्या एवेति तन्नीतिज्ञाः।

समत्वं तेजसांनिधेरिति दर्शनान्तरफलम्। आदित्याग्न्यादिसमता तत्तदागमेषु महोपनिषदादिषु श्रूयते यतः, आग्नेयकर्तृत्वेन चैते सूत्रकृता निर्दिष्टाः ॥ ३ ॥

**आधिक्यं परमेशानान्निर्मलत्वं च केवलम्।**
**सिद्ध एव हि कर्तृत्वमौदासीन्यं महेश्वरे ॥ ४ ॥**

फलान्तरम्—परमेशस्य लयाधिकाराभ्युपगमेनाधिकारादिबन्धयोगतः पशुत्वस्यानपायात्। यदाहुः—"अनुग्रहतिरोभावौ द्वौ पाशौ तु सदाशिवे" इति, "पशुराद्यः सदाशिवः" इति च। विनिवृत्तसमस्तबन्धनात् तिरस्कृतलयाद्यवस्थाधिकारात् सर्वथैवानुपाधेः सिद्धात्मनः प्रकृष्टतरो न्यूनभाव इति। अन्ये तु पातञ्जलमुक्तिरुपक्षिप्तेति कथयन्ति। तेषां पूर्वमेव कैवल्यपदेन सांख्यमुक्तिवत् साप्युपात्तेति पौनरुक्त्यमनिवार्यम्। न हि तयोर्मुक्तौ भेदः, प्रकृतिवियोगरूपत्वादुभयत्रापि तस्याः। अत एवाहुः—"एकं सांख्यं च योगं च" (भ० गी० ५।५) इति। किन्तूपायभेदः—एकत्र हि ज्ञानं तदुपायः, अपरत्र त्वभ्यास इत्यलं विस्तरेणेति। एतदेव चाधिक्यं सूत्रकृता महेश्वरपदेनोक्तम्। निर्मलत्वं च केवलमिति मलनिवृत्तिमात्रमेव मोक्षः, न तु सर्वज्ञत्वाद्यभिव्यक्तिरपि, प्रागनभिव्यक्ततत्सद्भावे प्रमाणाभावात्। सतो ह्यभिव्यक्तिरित्याशयः। सिद्ध एव हि कर्तृत्वमौदासीन्यं महेश्वर इति। यदाह सूत्रकृत्—"विशिखामलकारकाः" इति। परमेश्वरो हि पारार्थ्येन जगत्करणाय प्रवृत्तः। सर्वकर्तृत्वपदप्राप्तावस्थं स्वात्मतुल्यं सिद्धमवलोक्य तत्कालमेवात्मनः कर्तृत्वं विभिन्नमित्यनेककर्तृसंभवेन समस्तकृत्यानियमप्रसङ्गदोषतः प्रत्युत परार्थानिर्वाहकारणमेवावगम्य तदुपसंहृत्योदासीनः स्वात्मना भवति। सिद्धः पुनः परार्थनिर्वाहमनास्थयेश्वरेणोक्तमवबुध्य सर्वकर्त्रा च विना सर्वपरार्थसंपत्तिमाकलय्य करुणयैव सर्वकर्तृत्वपदमवलम्बत इति प्रवाहनित्येश्वरवादिनः ॥ ४ ॥

**सत्कार्यकरणोपेतस्तारकाभुवने स्थितिः।**
**ज्ञानकर्तृत्वयोर्नाशः सर्वनाशस्तथापरः ॥ ५ ॥**

अनादिरेव पुरुषः कार्यकरणैः प्रवाहतः संसरति संबद्धः। तत्रानादेर्विनाशायोगेन मुक्तौ कार्यकरणाभावे प्रमाणासंभवात् केवलं संसारपरिदृष्टकर्मनिबन्धनदुःखशरीरेन्द्रियनिवृत्तौ प्रकृष्टतरकार्यकरणलाभतस्तारकाभुवने नक्षत्रमार्गेऽवस्थानमात्मनां मोक्ष इति केषाञ्चिद् दुरभिसन्धिः। ज्ञानकर्तृत्वयोर्नाश इति। मुक्तौ बुद्धेरभावादिच्छाप्रयत्नयोरभावे कर्तृत्वनाशः, बुद्ध्यादीनां(नाम)भावश्च नवानामात्मगुणानां(नाम)भावात्।

यदाहुः—"बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माणां नवानामत्यन्तं विमोक्षोऽपवर्गः" इति। सर्वनाशस्तथापर इति ग्राहकैकरूपत्वाच्चैतन्यस्य ग्राहकत्वस्य च ग्राह्यापेक्षयाऽवस्थितेर्ग्राह्यस्य चाणुस्थूलादिविकल्पैः सर्वथा संभवाभावेनावस्तुरूपत्वात् तदपेक्षस्यापि ग्राहकत्वस्य भ्रान्तत्वे सति बाधज्ञानोदयमात्रेणैव ध्वंस इति प्रदीपनिर्वाणवादिन इति। अन्यैस्तु भूतेभ्य एव विज्ञानमुत्पद्यते, तान्येवानुविनश्यतीति शरीरविनाशादेव सर्वनाश इत्येवमयं पक्षोऽभ्युपगतो जाड्यादिति ॥ ५ ॥

एवं च तन्त्रान्तरप्रसिद्धं फलं प्रदर्श्योपसंहरति—

**स्वमतैर्वादिभिस्त्वेवं विमुक्तिः परिकल्पिता।**
**दृष्टा नैव हि मोहान्धैः सदेश्वरसमानता ॥ ६ ॥**

तैस्तैर्मोहान्धैरविद्याक्रान्तचिन्नयनैः सत्यभूतपरमेश्वरसमतालक्षणं पतिशास्त्रैकगम्यमुक्तिलक्षणं फलं न दृष्टम्। अतस्तैरेवंविधा मुक्तिः स्वकल्पनाभिः कल्पितेति ॥ ६ ॥

इदानीं समानतान्त्रिकान् प्रत्याह—

**समता च समुत्पत्तिसंक्रान्त्यावेशपक्षतः।**
**अभिव्यक्तिः परा गीता बुद्धिवाचामगोचरा ॥ ७ ॥**

सर्वज्ञत्वादिगुणाभिव्यक्तिरूपपरमेश्वरसमता परा प्रकृष्टा गीता। कुतः परेत्याह—समुत्पत्तिसंक्रान्तावेशपक्षत इति। पश्ववस्थायां सर्वज्ञत्वादिधर्मासत्त्वान्मुक्तौ च परमेश्वरसमत्वश्रुत्यन्यथानुपपत्त्या पश्वात्मन्यपूर्व एव तदा सर्वज्ञत्वादिगुणः परमेश्वरसम उत्पद्यत इत्युत्पत्तिसमतापक्षः कैश्चिदभ्युपगतः। तथा परैरपि पटादौ कस्तूरिकामोदवत्तत्र परमेश्वरगुणः संक्रामति मुक्ताविति समतासंक्रान्तिपक्षः प्रतिपन्नः। एतेन शिखासंक्रान्तिवादिनः पाशुपताः सूत्रकृता विशिखाकारकत्वेनोक्ताः। अन्यैस्तु तदा परमेश्वरगुणैः स्वाश्रयस्थैरेव सिद्धः समाविश्यते ग्रहैरिव पुरुष इत्यावेशपक्षः। एतेभ्य ईश्वरसमतापक्षान्तरेभ्य इयमभिव्यक्तिसमता वक्ष्यमाणा बुद्धिवाचामगोचरत्वात् परा ॥ ७ ॥

एवं तन्त्रान्तरफलानि निर्दिश्यार्थक्रमेण प्रतिक्षिपति—

**सत्त्वभुक् तारकावासो द्वयमेतद् विनश्वरम्।**
**भोक्ता भुवनवासी च दृष्टो लोके विनश्वरः ॥ ८ ॥**

सत्त्वभुक् तारकावासीत्येतद्द्वयमपि फलं विनश्वरम्, भोक्तुर्भुवनवासिनश्च देवदत्तादेर्विनाशो दृष्टः। ननु भोक्तृत्वं ज्ञातृत्वमेव पुरुषस्वभावोऽत्राकर्मफलं कथं विनश्यतीत्युक्तम्? यद्येवं सर्वज्ञ एव तदा पुरुषो भवेत्, न सत्त्वमात्रज्ञः, विशेषहेत्वभावादित्यस्मद्दर्शनमेव भवतु। नन्वस्त्वेवम्, भुवनवासिनस्तु प्रवाहानादिभिर्भुवनादिभिः संबन्धः कथं निवर्तते। अत एव प्रवाहानादित्वात् कर्मभिस्तत्तत्फलैर्वा कूटस्थनित्यस्वभावोऽनिवर्त्य इति परमार्थः ॥ ८ ॥

**गणेन्द्राग्निसमौ प्रेर्यावसम्पूर्णमनोरथौ ।**
**अकर्ता चाकृतार्थो हि तद्वन्नेशे समो यतः ॥ ९ ॥**

अत्र "महागणो महेशस्य, समत्वं तेजसांनिधेः" ( श्लो० ३ ) इत्येतयोः पक्षयोः पराकृतिः । गणेन्द्रसमस्य तावदुपरितनपदसद्भावेनैव तत्प्राप्तिकामनान्तरयोगतोऽसंपूर्णमनोरथतेति कथं मुक्तिः । एवमग्न्यादित्यसमत्वयोरपि द्रष्टव्यम् । अथास्मदाद्यप्रत्यक्षोऽन्य एव सर्वज्ञः सर्वकर्ता च वह्न्यादित्यादिरुच्यते, यद्येवं तत्समत्वं मुक्तिरित्यस्मद्दर्शनमेवेत्यदोषः । अकर्ता चेत्यनेन "अकर्ता सर्ववेद्यवित्, कर्तृत्वेऽपि प्रयोज्यत्वम्" ( श्लो० ३ ) इत्येतौ पक्षावपोद्येते । तद्वदिति । यद्वद् गणेन्द्राग्निसमावपरिपूर्णमनोरथावुक्तौ, तद्वदेतावपि परमेश्वरसमकर्तृकत्वपदाप्राप्तिहेतोस्तदभिलाषयोगादपरिपूर्णमनोरथत्वात् सर्वज्ञावप्यमुक्तौ । स्वरूपावाप्तिरेव हि मोक्षः । कर्तृत्वमपि ज्ञातृत्ववत् पुंसः स्वभाव एवेत्युक्तम्, अतस्तदनवाप्तौ कथं मुक्तिः । अस्त्वेवम्, मन्त्रेश्वरप्रयोज्यत्वमनाद्यात्मनां कथं कदा व्यावर्तते बन्धनिमित्तत्वात् कलादिवदिति तदनिवृत्तेस्त्वसावपि विद्येश्वरवत् प्रेर्यत्वादमुक्त एवेति ॥ ९ ॥

"आधिक्यं परमेशानात्" (श्लो० ४) इति पक्षमाभासयति—

**आधिक्ये साधनासत्त्वमसंस्था च द्विमार्गतः ।**
**प्रेर्यत्वं परमेशाने निर्निमित्तमथाऽऽपतेत् ॥ १० ॥**

साधनासत्त्वं प्रमाणाभावः । नहि सर्वज्ञत्वसर्वकर्तृत्वरूपनिर्मलप्रकृष्टतरस्वगुणव्यक्तिप्रतिलम्भतः कदाचिदात्मनामधिकावस्था प्रमाणैरुपपद्यते, यत्प्राप्तावीश्वराधिक्यं मुक्तौ वर्ण्यते । ननूक्तमीश्वरस्य लयाद्यवस्थासमावेशेन सिद्धं न्यूनत्वमिति । अथ कोऽयमवस्थासमावेशः ? यदि वस्त्वन्तरम्, तन्नेष्यते, एकत्वाद् देवतायाः । कथम् ? धर्मपरिणतिस्थाप्याचैतन्यदोषेण पूर्वं निषिद्धा निषेत्स्यते च । अथ विवर्तः, सोऽपि न, असत्यत्वात् । तद्रूपतास्य कुतः । केवलं क्रियाशक्तिः कर्तर्यव्यतिरेकेण कर्तर्येवावस्थिता शिवपदं समुद्दीपयन्ती लयादिपदवाच्यत्वोपाधिभावं तत्र प्रतिपद्यते । सैव यदा कार्यसंपादनप्रवृत्ताऽनवाप्तकार्यविकृतिस्तदा सदाशिवपदप्रकाशिका भोगादिशब्दवाच्यतायां कारणीभवति । यदा खल्ववाप्तकार्यग्रामा अधिकारपदप्रबोधिका, तदेश्वरादिपदप्रवृत्तौ हेतुतां भजतीति क्रियाशक्तेरेव तत्तत्कार्योपाधिभेदालम्बनमात्रेणैवात्र भेदव्यवहारः । न वस्तुभेदः, विवर्तपरिणामपक्षयोरत्यन्तासंभवादिति गुरवः सच्छास्त्रविवेकनिपुणाः । यदाहुः—"मूर्तिस्तद्वांश्चेति हि लेशादुक्तिश्च शक्तिशक्तिमतोः" ( त० सं० ५० ) । अत एव पञ्चस्रोतसोऽप्यस्य शास्त्रस्यैकत्वान्न देवताया भेदः, अपि तु सृष्टिस्थित्यादिपञ्चकृत्यभेदेनोपास्यमानस्य तदाकारमात्रस्यैव । अन्यथा कौलमहाव्रतादेरिवात्र शास्त्रभेदप्रसङ्गादेकत्वश्रुतिभिर्विरोधः । एवं च सिद्धस्य प्रोक्तलयाद्यवस्थानाभ्युपगमे कर्तृत्वादृष्टेः प्रत्युत ईश्वरान्न्यूनत्वमभिहितं स्यान्नाधिक्यम् ।

अथेश्वरस्यापि यत्परमेश्वरत्वं निरुपाधिज्योतीरूपा सर्वज्ञत्वादिशक्तिः । यदाहुः—"यया विना न सर्वज्ञः सोऽपि तस्यै नमोऽस्तु ते" इति, तत्प्रकृष्टतरं परमेश्वरस्थानात्

सिद्धप्राप्यमभ्युपगम्यत इति, तदयुक्तम्, शक्तिशक्तिमतोर्भेदासिद्धेर्व्यपदेशस्य भेदस्य कल्पितत्वात्। सर्वज्ञत्वादिशक्तेरिवेश्वरत्वस्यापि तद्रूपत्वान्नान्योन्यता युक्तेत्यभिन्नस्वभाव: शाब्दस्तु भेदो न बाध्यते। तेन च ततोऽर्थस्थिति:। शक्तेरपि यच्छक्तत्वं तस्यापि य: प्रकर्ष:, तस्यापि प्रकृष्टतरावस्था मुक्तिरित्येवं तरतमादिप्रतिपाद्यप्रकर्षभेदाव्यवस्थितेरनवस्थितिरेव मुक्तौ भवेत्। कल्पितव्यपदेशमात्रभेदस्य न कचिदप्यप्रसृति:। तस्मादीश्वरसमतैव मुक्तावभ्युपगन्तव्या, न त्वाधिक्यम्। अनुग्रहतिरोभावकर्तृत्वं कर्तृत्वविशेषात्मकत्वान्न पाशात्मकम्, अनौपाधिकत्वात्। यदपि पशुत्वमुक्तं भवता, तदाभिमानिकभेदकल्पनया शक्त्यन्तरप्रकाशप्रतिपादनफलं योगपीठसंस्थितायेति मन्त्रभाष्यप्रतिपादितभगवत्सदाशिवपीठभाववत् सकलशास्त्रपर्यालोचनयोपचारदृशा व्याख्येयम्, न तु पदमात्रार्थप्रतिपत्तौ ग्रहो बलवद्विधेय:। इत्यलमनुपासितगुरुभि: स्वकल्पनोत्थापितशास्त्रार्थशालिभि: सह विवादेन।

यद्वा पशुराद्य: सदाशिव इति संस्कार्यसदाशिवाभिप्रायेणानुपचारत एव। तथा हि—दीक्षायां विद्यातत्त्वादुद्धृतस्य क्रमेण मलक्षपणपूर्वं क्रियाशक्त्यात्मशिवत्वाभिव्यक्ति: स्थूलसूक्ष्मपरभेदेन क्रियमाणाऽनेकविद्येश्वरावस्थास्वरूपाभिव्यक्तिर्वस्तुतो भिन्ना भिन्नस्येश्वरसदाशिवशिवरूपस्य तत्त्वत्रयस्य प्राप्तिहेतुर्भवतीति तस्मिन् सदाशिवे प्रेर्यत्वानिवृत्ते: संस्कारमात्रविशेषत्वेन मलसद्भावात् पशुत्वमव्यावृत्तमेवेत्यनुपचारात् पशुशब्दप्रवृत्तेरिति। एतच्च वक्ष्यति वृत्तिकार:—दीक्षयान्ते हि क्व संभवन्तीत्यादिना। संस्कारके तु सादाशिवे परमार्थत: शिवाद् भेदासंभवेन तथात्वमित्युपचार: प्रोक्त:। दोषान्तरमप्यस्मिन् पक्ष इत्याह—असंस्था च द्विमार्गत इति। मार्गद्वयेनात्रानवस्थाप्रसङ्गश्च। तत्रैकेन मार्गेणाह—प्रेर्यत्वमिति। अथ तावत् परमेश्वरस्य कारणं विनैव सिद्धप्रेर्यत्वं परमेश्वरत्वमापततीति सिद्धस्यैव तदाधिक्येन तदा परमेश्वरत्वात्, अन्यथा तदाधिक्याभिधानं निष्फलमेव सिद्धस्य स्यात्, यतस्तस्यापि च सिद्धेश्वरस्य सिद्धान्तरप्राप्तावनीश्वरता, तस्य तस्यापीत्येवमनवस्थिति: परमेश्वरस्येत्यर्थ:॥ १०॥

द्वितीयेन मार्गेणाह—

**व्यर्था च भविनां चेयं निमित्तपरिकल्पना।**
**वैमल्यमात्रेण पशुर्न पति: किमसौ भवेत्॥ ११॥**

येयं मुमुक्षूणां भविनामीश्वरोऽहं स्यामिति निमित्तत्वेनेश्वरत्वेनात्मन: परिकल्पना सङ्कल्प: फलपर्यन्त:, सा व्यर्था विगतप्रयोजना अनवस्थिता भवेत्। न कश्चित् संसारमुक्त्यर्थं यतेतेति यावत्। अधुना "निर्मलत्वं च केवलम्" (श्लो० ४) इति पक्षं दूषयति—वैमल्यमात्रेणेति। पशो: किञ्चिज्ज्ञत्वात् पत्युश्च सर्वज्ञत्वादुभयविवेकेन निर्मलस्य निर्मलत्वेनाननुभूतज्ञानशक्तितया चाभ्युपगमात् किमसावपुरुषार्थरूपो मोक्ष: पाषाणप्रख्यो न किञ्चित्। अयमाशय:—वक्ष्यमाणवज्ज्ञातृस्वभावत्वादेवात्मनस्तदनभ्युपगमे तन्नाशदोष एव, यद्वक्ष्यति—"मूढानां ज्येष्ठमल्लास्ते येषां स्वात्मा विनश्यति" (श्लो० ५७) इति॥ ११॥

"सिद्ध एव हि कर्तृत्वम्" ( श्लो० ४ ) इत्यादिपक्षं प्रतिक्षिपति—

**किमित्यकारको देवः कारणानीकभीतितः ।**
**बहूनां युगपन्मुक्तेर्दुर्निवारा स्थितैव सा ।। १२ ।।**

कारकत्वं हि प्राक् सिद्धाद् भगवतोऽभूत् । तत्किमिति केन कारणेन पुरुषान्तरसिद्धौ नेष्यते । पूर्वपक्षवादी कारणमाह—कारणानीकभीतित इति । कारणानामनीकः समूहोऽनेकत्वम्, तस्माद्भयं ततः । तथाहि—सिद्धस्य तावत् तदानीं लब्धचरितार्थसर्वकर्तृत्वतो यदा कर्तृत्वं परमेश्वरस्यापि तदा कर्तृत्वं विभिन्नमित्यनेककर्तृसंभवेन नवमिदमस्तु पुराणमिदमस्त्विति सर्गनिर्माणादौ वैशसं स्यात्, तद्भीतेर्नेष्यते। एतत्सिद्धान्तवाद्याह—बहूनामिति । अचिन्त्यत्वात् कारणसामर्थ्यस्य यदा युगपद् बहवो मुच्यन्ते पुरुषाः, तदा तेषां प्रत्येकं चरितार्थसर्वकर्तृत्वयोगेन तुल्यतया कर्तृत्वादविकल्पः स्यात् । अन्यतरव्यवस्थायाश्चासंभवात् समुच्चयेन कर्तृत्वे स्थितैव सा सर्गनिर्माणादिवैशस्यदायिका कारणानेकत्वतो भीतिः । अथायं वादी लोभरागादिकारणत्वात् पुंसां मत्यन्यथाभावस्य तन्निश्चित्य मुक्तौ रागाद्यभावेनानेकसिद्धियोगेनापि मत्यन्यथाभावेन सर्गनिर्माणादिवैशसं परिहरिष्यति, तदस्मन्मतमेव प्रत्यवेक्ष्यतीत्याशयशेषः ॥ १२ ॥

इदानीं समानतान्त्रिकफलानि दूषयति—

**अथोत्पत्तावनित्यत्वमावेशेनास्वतन्त्रता ।**
**नोदाहरणसद्भावो गुणसंक्रान्तिसाधने ।। १३ ।।**

यैर्मुक्तावीश्वरसमता सर्वज्ञत्वादिगुणसाम्यमुत्पद्यते पुंस इतीष्यते, तन्मते उत्पत्तिमदनित्यत्वादनित्यत्वं मुक्तेरिति । आवेश इति ईश्वरगुणावेशान्मुक्तिः । साम्यपक्षेऽपि भूताविष्टस्येव पुंसो मुक्तावस्वातन्त्र्यमेवेश्वरसमतेति । संक्रान्तिसमतापक्षं पराकरोति—नोदाहरणसद्भाव इति । ईश्वरगुणा मुक्तौ संक्रमन्त इति गुणसंक्रान्तिर्नैषा भवतां न तावत् प्रत्यक्षसिद्धा, अतीन्द्रियत्वात् तेषाम् । अथानुमानादित्युच्यते, तदयुक्तम् । गुणसंक्रान्तिसाधनेऽनुमाने नोदाहरणस्य दृष्टान्तस्य सद्भावोऽस्ति यतः । न चादृष्टान्तमनुमानं प्रवर्तते, व्याप्त्यसंभवात् ॥ १३ ॥

अत्र संक्रान्तिवादी दृष्टान्तमाह—

**ननु स्वबोधसंक्रान्तौ दृष्टं शब्दोपदेशनम् ।**
**शास्त्रे विज्ञानसंक्रान्तिर्विहिता साधकं भवेत् ।। १४ ।।**

स्वबोधसंक्रान्तिनिमित्तं गुरूणां शिष्यस्य विषय उपदेशेन दृष्टः । शास्त्रेऽप्यस्मिन् स्वायम्भुवादावाचार्याभिषेके ज्ञानसंक्रान्तिः श्रूयते—"अद्य संक्रमितो योऽयमधिकारो मया त्वयि । स कर्तव्यस्त्वया तावद् यावत् संक्रमितोऽन्यतः ॥" (स्वा० २४।२१) इति । सा तु गुणसंक्रान्त्यनभ्युपगमे कथमुपपद्यत इति युष्मदागमप्रत्यक्षाभ्यामत्र दृष्टान्तः सिद्ध इति ॥ १४ ॥

सिद्धान्तवाद्याह—

**विज्ञानमुपदेशात्तु तादृगन्यत् प्रजायते ।**
**संक्रान्तिशब्दसादृश्ये तद्गुरोर्यन्न हीयते ।। १५ ।।**

उपदेशान्निमित्ताच्छिष्यबुद्धौ विज्ञानान्तरमन्यदेवात्यन्तसदृशत्वात् संक्रान्तमिवोत्पद्यते, न तु तस्यैव संक्रान्तिः । कुत इत्याह—तदिति । तज्ज्ञानं यद्यस्माद् गुरोर्न हीयते । संक्रान्तिपक्षे हि शिष्य एव ज्ञानस्य संक्रान्तेर्गुरावभावः स्यात् ॥ १५ ॥

शास्त्रेऽपि गुरुनियोगाद् गुरुवद् व्याख्यानादौ स्वातन्त्र्यमेव संक्रान्तिपदस्यार्थः । तथैवाचार्याभिषेकप्रकरणे गुरुणा स्वायम्भुवादौ प्रतिपादित इति नात्र संक्रान्तिः सिद्धेत्याह—

**गुरोर्नियोगतः शास्त्रे स्वातन्त्र्यं गुरुवद् भवेत् ।**
**संक्रान्तिवचनस्यार्थस्तत्रैव गुरुणोदितः ।। १६ ।।**

अथ कदाचिच्छ्रुतिस्मृतिसिद्धदृष्टान्तदार्ष्टान्तिकभ्रान्त्या संक्रान्तिवादी प्रत्यवतिष्ठेत, तदपि दृष्टान्तन्यायातिदेशेन निवर्तयितुमाह—

**तद्वत् साधुसमाक्रोशात् पापं पुण्यं प्रजायते ।**
**क्षीयते च स्वकं पुण्यं विपर्यस्तौ क्षमावति ।। १७ ।।**

तथा च स्मृतिः—"निन्दनाद् द्विजसाधूनां पापानामथ सेवनात् । पापं संक्रमते पुंसां स्वपुण्यमपयाति च ॥" इति । तथा–"क्षमावति त्वनाक्रोशात् पुण्यवद्भिः सह स्थितेः। पुण्यं संक्रमते पुंसां पापं याति ततोऽन्यतः ॥" इत्यादिदृष्टान्तः पूर्ववत् प्रतिक्षिप्तः ॥ १७ ॥

यतोऽत्राप्यपूर्वयोः पुण्यपापयोरुत्पत्तिरेव संक्रान्तिरित्युच्यते, न तु तयोरेव संक्रमः, पुण्यार्जनविधीनां सहस्थितिमात्रेणैव फलापहारतो वैयर्थ्यप्रसङ्गात्, प्रायश्चित्तोपदेशानर्थक्याच्चेत्याह—

**पापीयसां च संसर्गात् पापमन्यत् प्रजायते ।**
**तथा पुण्यवतां पुण्यं नान्यथा तदुदीरितम् ।। १८ ।।**

ननु प्रदीपो वर्त्यन्तरादौ दाह्ये संक्रमन् दृश्यत इति संक्रान्तिवादी दृष्टान्ताशङ्कां निवर्तयति—

**दीपान्तरसमुत्पत्तिः प्रदीपादिन्धनान्तरे ।**
**संक्रान्तिस्तस्य नैवेष्टा बुद्धवैशेषिकादिभिः ।। १९ ।।**

अत्रापि प्रदीपशिखामात्रादतिमहतो वह्नेर्वनदाहादावुत्पत्तिदर्शनादपूर्वोत्पत्तिरेव बौद्धाद्युपलक्षितसर्ववादिसिद्धा, न तु तस्य तावन्मात्रस्य तदेकदेशस्य वा संक्रान्तिरुपपद्यते । एतेन कस्तूरिकामोदादेः पटादौ संक्रान्तिभ्रमः पराकार्यः ॥ १९ ॥

संक्रान्तिवादी दृष्टान्तान्तरमाह—

**गोत्वादेर्ननु संक्रान्तिर्व्यक्त्यन्तरविसर्पिणी ।**
**सादृश्यं यस्य गोत्वादि तं प्रत्येतन्न शोभते ।। २० ।।**

तत्क्षणजातायां गोव्यक्तौ तत्सामान्यस्य तत्कालमेवोपलब्धेस्तत्क्षणात् प्रागनुपलब्धितस्तत्रासत्त्वाद् व्यक्त्यन्तरात् संक्रान्त्यनभ्युपगमे तत्संबन्धानुपपत्तेस्त्ववश्यं संक्रान्तिरेष्टव्येति सिद्धान्तवादी प्रतिक्षिपति सादृश्यं यस्येति । नास्माकं सामान्यसंक्रान्तिः सिद्धा, व्यक्तिव्यतिरिक्तसामान्यस्यानभ्युपगमात्. सांख्यवद् व्यक्तित्वेनैकावयसादृश्यस्य सामान्यरूपत्वात्, तत्क्षणजातगोपिण्डस्य संक्रान्त्याशङ्कासंभवात्, अत्र व्यक्तितः पिण्डान्तरस्य सादृश्यस्य जातत्वेन तथात्वाऽयोगात् ॥ २० ॥

सामान्यान्तरासत्त्यैव संसृतिरित्युक्तम्, तं प्रत्येतदुच्यमानं न शोभत इति व्यक्तिव्यतिरिक्तसामान्यवाद्यभिप्रायेणाह—

**स्वाश्रयव्यापकं भेदेऽप्याश्रये व्यज्यते हि तत् ।**
**विसर्पणं न यस्येष्टं तस्य संक्रमणं कुतः ।। २१ ।।**

सर्वगतसामान्यपक्षे संक्रान्त्याशङ्कासंभवादत्र व्यक्तिगतसामान्यमेवाश्रित्याह—भेदेऽपीति । तत्क्षणे जाते भिन्नेऽप्याश्रये व्यज्यते । तद्व्यक्तिव्यज्यत्वात् सामान्यस्य व्यक्तीनां च तद्व्यञ्जकैकस्वभावत्वान्न त्वन्यतस्तस्य संक्रान्तिः । हेत्वन्तरमाह—विसर्पणमिति ॥ २१ ॥

**अमूर्तस्य च संक्रान्तौ न लोको न परीक्षकः ।**

निष्क्रियत्वेनामूर्तत्वेन च सामान्यस्य तैरभ्युपगमात् कुतः संक्रमणयोग्यता ? नह्येतल्लोकसिद्धं विद्वत्सिद्धं वेति ॥

अधुना प्रदीपसामान्ययोः संक्रान्तिमभ्युपगम्याह—

**गुणत्वं न च सामान्ये न दीपे तद् वृथोदितम् ।। २२ ।।**

अयमर्थः—संक्रान्तिवादिना तत्सिद्ध्यर्थं गुणसंक्रान्तिदृष्टान्ताय प्रयतनीयम् । सामान्यस्य दीपस्य च संक्रान्तिसिद्धावपि तयोरगुणरूपत्वात् तत्रादृष्टान्ततेति तद्वर्णनमतिनिष्फलमेव ॥ २२ ॥

दृष्टान्तान्तरं प्रतिक्षिपति—

**केदारवारिसंक्रान्तिर्द्रव्यत्वादुपपद्यते ।**
**द्रव्य एव हि सा शक्तिरुक्ता सिद्धकृपाणवत् ।। २३ ।।**

केदाराभिधानस्य तीर्थपानीयस्य तदुपयोक्तृपुरुषसहभुजि पुरुषान्तरे द्रव्यत्वात् संक्रान्तिरभ्युगम्यत एव । निदर्शनमाह—सिद्धकृपाणवदिति । सिद्धखड्गो हि सिद्धादतिदूरदेशस्थितोऽपि तदभियोगात् तद्धस्तमेव संक्रामति, अचिन्त्या द्रव्यशक्तयो यत इत्यर्थः ।

अत एव चात्यद्भुतदृष्टान्तसिद्धशक्त्यनुमानतः संक्रान्तिसाधनान्न केदारवारि क्षेत्रपानीय-मत्र व्याख्येयम्, तत्संक्रान्तेः। प्रत्यक्षेण हि सिद्धेऽर्थे नानुमानं प्रवर्तत इति ॥ २३ ॥

तदियता संक्रान्तिवादिनो दृष्टान्तासंभवे प्रतिपादिते सम्प्रति संक्रान्तिवादी सिद्धान्तसिद्धमेव वस्तु दृष्टान्तीकृत्य प्रत्यवतिष्ठते—

**चितोऽचिद्वस्तुवृत्तित्वं गुणत्वे हि समीहितम् ।**
**नान्यथा वस्तुनः कृत्ये प्रवृत्तिरुपपद्यते ॥ २४ ॥**

चितेश्चेतनाशक्तेश्च गुणत्वेऽप्यचिद्वस्तुवृत्तित्वमभिमतं भवताम्। कुतः? इत्याह—नान्यथेति। अन्यथा तदविषयत्वे तस्य वस्तुनोऽचेतनस्य करणीयफलविषया प्रवृत्तिर्न घटते। एतदुक्तं भवति—कर्तरि कर्मण्यपि ज्ञानक्रिययोरवस्थितिरेष्टव्या, चिदनन्वित-स्याचितः प्रवृत्त्यशक्तेः। सर्ववस्तूनां च स्वात्ममात्रायामेवावस्थितेः परस्परसंसर्गाधिष्ठाना-संभवेन तत्र ज्ञेयत्वेऽपि कार्यत्वाद्यात्मको विशेषो न भवेदेव। दृश्यते च कुम्भकारादि-शक्त्याघ्रातस्य मृदादेरचेतनस्यापि कारणवस्तुनः प्रोक्तो विशेष इति तत्र चिच्छक्ते-रवस्थितिरवश्यमभ्युपगन्तव्या ॥ २४ ॥

ततः किमित्याह—

**इष्यतामिति सिद्धेऽपि परमेशगुणोदयः ।**
**प्रागसत्त्वादिदानीं तु महाविभवदर्शनात् ॥ २५ ॥**

अनयैव युक्त्या सिद्धेऽपीष्यतां परमेश्वरसंबन्धिनो गुणस्यावस्थितिः। न तु सिद्धस्य प्रागपि स्वतस्तादृशो गुणो दृश्यत इत्याह—प्रागसत्त्वादिति। प्राक् पश्ववस्थायां परिमितं ज्ञत्वकर्तृत्वादिगुणजातं तस्याभूत्, इदानीं तु सिद्धावस्थायां तदीश्वरसमयपरि-मितं श्रूयते। न च परिमितमेव तदपरिमितीभूतमिति युज्यते वक्तुम्, विरोधात्, परिणा-मिताप्रसक्तेश्च। न च तदानीमसतस्तस्योद्भवो युक्तः, अविनाशित्वेनास्योक्तत्वात्। तत्पारिशेष्यादीश्वरगुणस्यैव तथाभूतस्य तत्र तदा संक्रान्तिरिति पाशुपताः ॥ २५ ॥

इयत्परवचनमाशङ्क्य पराकरोति—

**वस्त्वन्तरे न वृत्तिस्तु केवलस्य गुणस्य हि ।**
**स्वगुणिन्यधिरूढस्य तस्य स्यादुपचारतः ॥ २६ ॥**

स्वगुणिनं परित्यज्य न केवलस्यास्य ज्ञानक्रियात्मनश्चिद्गुणस्य वस्त्वन्तरे ग्राह्यता-मापन्ने चिच्छून्ये स्थितिर्युज्यते वक्तुम्। तथात्वे हि तस्यापि ज्ञातृत्वं कर्तृता च स्यादिति सर्व एव चेतनाः स्युः, सर्वे सर्वेश्वराश्च, ईश्वरेण सर्वस्य संवेदनात्। किन्तु स्वगुणिस्थस्यैव तस्य तत्राश्रयान्तरे विकारवत्यवस्थितिं विनापि विकारहेतुत्वादवस्थानमुपचाराद् दृश्यते, न मुख्यतः। शक्तत्वमेव कारणत्वम्। शक्तता चान्वयव्यतिरेकाभ्यां कर्तुः कर्मणि सिद्धेति तत्र तच्छक्त्यवस्थितिकल्पनं निष्फलमेव। नापि कर्तृक्रिया कर्मस्था युज्यते, प्रोक्तन्यायविरोधात्। अपि तु तद्बलात् तत्रापि स्पन्दोद्भूतेस्तथात्वमुपचर्यत इति ॥ २६ ॥

दृष्टान्तमाह—

**यथोष्णतागुणो वह्नेरम्भस्युच्चैर्विजृम्भते ।**
**वह्निसंस्थस्तथेशानगुणस्तस्यैव जृम्भते ।। २७ ।।**

औष्ण्यं वह्नेर्विशेषगुणः । न जलस्य युक्तः, भूतानां साङ्कर्यप्रसङ्गात् । पृथिव्यादीनि हि परस्परं धृतिसंग्रहपाकादिहेतुभिर्विभिद्यन्त इति नोदकस्योष्णता गुणोऽग्निसंयोगात्परिगृहीतः, अपि तु वह्निसंस्थ इति । तत्रोदकेऽनुद्भूतरूपो वह्निरुपलभ्यमानः स्वगुणस्पर्शस्थित्या स्वकार्यं दाहादिकं करोति यथा, दार्ष्टान्तिकमाह—तथेति । तद्वत् परमेश्वरसंबन्ध्यपि गुणः स्वाश्रयस्थ एवाऽश्रयान्तरे नानाविकारकारित्वेन प्रभविष्यतीति न तत्रावस्थितिकल्पनायां हेतुरस्ति ॥ २७ ॥

**एवं चावेशपक्षो वा त्वधिष्ठातृत्वमेव वा ।**
**पक्षो हि गुणसंक्रान्तेरजातो हि मृतस्तथा ।। २८ ।।**

परमावेशपक्षोऽधिष्ठातृपक्षो वा यः "कर्तृत्वेऽपि प्रयोज्यत्वम्" ( श्लो० ३ ) इत्यत्रोद्दिष्टः, तयोर्न तथा, यथा संक्रान्तिपक्ष इत्याह—पक्षो हीति । उत्पन्न एव मृतः ॥ २८ ॥

कुतः ? इत्याह—

**शम्भुरेव हि तत्रापि सर्वं वेत्ति करोति च ।**
**स्वगुणेन न सिद्धस्तु परत्वेनास्य दर्शनात् ।। २९ ।।**

न केवलमावेशपक्ष एव यावत्, तत्रापि संक्रान्तिपक्षेऽपि स्वगुणेन सिद्धगतोऽपीश्वरः सर्वं वेत्ति सर्वं च विधत्ते, न तु सिद्धः । नहि पारक्येन परकर्मणाऽन्यो जानन् कुर्वन् वा दृष्टः ॥ २९ ॥

**तत्संपर्काच्च सिद्धोऽपि सर्वकृत् सर्वविद् यदि ।**
**अचिद्वतामपि प्राप्तं तर्हि सर्वार्थदर्शनम् ।। ३० ।।**

तत्संपर्कादिति पराशङ्का । शम्भुगुणसम्पर्कात् सिद्धोऽपि तथाभूतश्चेत् ? पराकरोति—अचिद्वतामपि । अचिद्वतामपि मायादीनामपि, ईश्वरज्ञेयत्वेन तत्संपर्कस्याविशेषाद् भवेत् तदिति तेषां सर्वज्ञत्वप्रसङ्गः ॥ ३० ॥

**प्रागसत्त्वमसिद्धं च दृष्टं ज्ञानक्रियाबलम् ।**
**उत्कृष्यमाणमुत्कर्षाद् व्यञ्जकस्थानतः स्फुटम् ।। ३१ ।।**

प्रागसत्त्वमिति परोपन्यस्तयुक्तिनिरासः । यदुक्तं प्राग्भवावस्थायामात्मनः सर्वज्ञत्वादिसामर्थ्यस्यासत्त्वमिति, तदसत्त्वमसिद्धम्, यतस्तेषां प्रागपि ज्ञानक्रियाबलं स्वव्यञ्जककार्यकरणादिस्थानतो दृष्टमिति यथैवात्मनो यत्र स्वव्यञ्जकं शरीरं तत्र

तत्रात्मप्रतिपत्तितो व्यापकत्वं प्रतीयते, तथैव तद्गुणानां सत्त्वं व्यापकत्वं च सिद्धमिति भावः। यथैव प्राक् सिद्धं तथैव व्यञ्जकस्यालोकादेर्विषयाभिव्यक्तिं निर्वर्तयतः, सिद्धाञ्जनादेर्बुद्धीन्द्रियशक्तिमुत्तेजयतः, शिल्पवेदनादेः कर्मेन्द्रियकौशलं कुर्वतः, योगाभ्यासादेश्चित्तं जयतो यथायथमुत्कर्षेण ज्ञत्वकर्तृत्वात्मकं स्वबलमुत्कृष्यमाणं दृष्टम् ॥ ३१ ॥

किमितीत्याह—

**मोक्षे हि व्यञ्जकं दृष्टं सर्वार्थं शाम्भवं बलम् ।**
**तत्समत्वमतस्तस्य भवत् केन निवार्यते ॥ ३२ ॥**

मुक्तावीश्वरलक्षणस्य व्यञ्जकस्योत्कृष्टतरस्य योगाद् व्यङ्ग्यस्यापि तथाभावसिद्धौ तस्येश्वरसमगुणाभिव्यक्तेरीश्वरसमत्वं भवत् केन निवारयितुं पार्यते। अभिव्यक्त्यनभिव्यक्ती चाऽऽवरणभावाभावकृते तस्य, न तु स्वरूपान्यथात्वकृते, परिणामित्वापादकेन पराहतत्वात् ॥ ३२ ॥

एवं स्वपक्षे दूषणमुद्धृत्य परस्य दोषान्तरमाह—

**आश्रयान्तरसंक्रान्तिः पूर्वाश्रयविवर्जनम् ।**
**विना नैव प्रसिद्धा स्यात् त्यागे पूर्वस्तु निर्गुणः ॥ ३३ ॥**

संक्रान्तिर्हि पूर्वाश्रयत्यागेनाश्रयान्तरे सूर्यादीनां दृष्टा। तद्वदत्रापि पूर्वाश्रयत्यागाभ्युपगमे स पूर्वः परः शिवः सर्वगुणरहितो भवेत् सिद्ध एव तद्गुणसंक्रान्तेरिति ॥

ननु स्वाश्रये भवतस्तत्र वाश्रयान्तरे संक्रान्तिः प्रदीपप्रकाशस्येव तस्य भविष्यतीत्याह—

**गच्छतस्तं परित्यज्य गीतं प्रसरणं हि तत् ।**
**ततश्चापरिणामित्वाद् दोषानीकं समापतेत् ॥ ३४ ॥**

प्रदीपप्रकाशस्य हि प्रदीपोत्पत्तौ कृतायां स्वविरुद्धतमोनिवर्तनेन तत्र तत्र देशे प्रसरणं मतम्, अम्भःप्रवाहस्येव परिणतिधर्मत्वाद्युज्यते। परमेश्वरगुणस्य च यद्रूपं परिणामि तदचेतनं मृदादि दृष्टमित्यचैतन्यादिवक्ष्यमाणदोषव्रातप्रसङ्गः ॥ ३४ ॥

**यथा कथञ्चित् संक्रान्तौ व्यवस्था द्रव्यवर्तिनी ।**
**सर्वमानप्रसिद्धा सा विरुद्धा गुणकारिता ॥ ३५ ॥**

अथवा पराहतयुक्तिकोऽपि संक्रान्तिवादी संक्रान्त्याक्रान्तापस्मारेण मुच्यत इति संक्रान्त्याग्रहादिच्छेदात्, एवमपि गुणकारिता गुणैश्वर्यादिप्रवर्तिता संक्रान्तिः सा विरुद्धा। द्रव्यसंक्रान्तिरत्र युज्यते। द्रव्याणां हि संक्रान्तिः प्रसिद्धा न गुणानां यतः। ततश्च द्रव्यत्वमीश्वरगुणानां प्रसज्यत इति यावत् ॥ ३५ ॥

**जातित्वे नैष दोषश्चेन्न ज्ञानादिगुणा हि सा ।**
**द्रव्यत्वे गौरवं क्लृप्ते ज्ञानाद्याश्रयतो भवेत् ॥ ३६ ॥**

अस्तु तर्हि सर्वज्ञत्वादीनां धर्माणां सिद्धेश्वरानेकगुणव्यक्तिगतत्वेन गुण-जातित्वम् । तस्मिन् सति तस्याः प्राप्तसिद्धभावे पुमन्तरेऽपि नवमालतीशौक्ल्यवत् संक्रान्तिर्भविष्यतीत्येवं संक्रान्तिसिद्धौ न दोषः कश्चिदिति परमाशङ्क्य निवर्तयति—न ज्ञानादिगुणा हि सा । न तेषां संक्रान्तिः सिद्धेति न किञ्चिदेतत् । मालत्यादिगुणानामपि तदोत्पत्तिरेव यतः । अथायं वादी सर्वज्ञत्वादिगुणाश्रयस्येश्वरद्रव्यैकदेशस्य संक्रान्ति-मिच्छेत्, तथाप्ययुक्तमित्याह—द्रव्यत्व इति । एवं द्रव्यत्वेऽभ्युपगम्यमाने ज्ञानाद्या-श्रयत्वेन या कल्पना तस्या गौरवं गरीयष्ट्वं प्रमाणमभ्युपगतं भवेत् । तथाहि—अनेकधाऽ-नेकद्रव्यसमूहरूपत्वमीश्वरस्य तस्य च द्रव्यस्य तत्तत्सिद्धप्राप्तौ ततः संक्रान्तिस्तस्य च ज्ञानाद्याश्रयत्वकल्पनमप्रमाणकमनन्तं कल्पितं स्यात् ॥ ३६ ॥

संक्रान्तिवादी सिद्धान्तवादिमोक्षे दोषमाह—

**नन्वेवं पौरुषो मोक्षस्त्वभिव्यक्तौ न शाम्भवः ।**
**नन्वेवं शाम्भवो मोक्षः संक्रान्तौ नहि पौरुषः ॥ ३७ ॥**

नन्वेवं यदि गुणास्त एव मुक्तौ पुंसो व्यज्यन्ते, तदा "आत्मा ज्ञातव्यः" इत्यादि-वत् पुरुषकर्तृक एव मोक्षो भवतामपि प्रसक्तः, न त्वीश्वरकर्तृकः, तच्छक्त्यसंस्पर्शेन तस्य तत्र कर्तृत्वायोगात् । संस्पर्शे हि संक्रान्तिरेव स्यात् । सिद्धान्तवादी तं प्रत्याह—नन्वेवं शाम्भव इति ॥ ३७ ॥

त्वत्पक्षेऽपि न कश्चिन्मुक्तः, परमेश्वरगुणस्य प्राक्स्थस्यैव तत्र संक्रान्तेरपुरुष-संबन्धितया मोक्षस्य । मत्पक्षे तु द्वयमपि युज्यत इत्याह—

**पौरुषः पुरुषाधारः शाम्भवः शम्भुनिर्मितः ।**
**द्वयं संपूजितं व्यक्तौ संक्रान्तावेव काविति ॥ ३८ ॥**

पुरुषे कर्मणि समवेतः, परमेश्वरकर्तृकश्चेति कर्तृकर्मलक्षणकारकद्वययोगतो भेदेन व्यपदिश्यते मोक्षः । ओदनस्य पाको देवदत्तस्य पाको वेतिवत् । न च संक्रान्ति विना कर्तृत्वं नोपपद्यत इति युक्तम् ॥ ३८ ॥

सिद्धान्तवाद्येव स्वपक्षे स्वसाध्यतामाह—

**व्यक्तिरेवेष्यतां सा हि प्रसिद्धा व्यञ्जकैः सह ।**
**तस्यामपूर्वं दृष्टं वा न किञ्चित् परिकल्प्यते ॥ ३९ ॥**

व्यक्तिर्ह्यात्मगुणानां व्यञ्जकैः सह सुसिद्धेत्युक्तम् । सैव मोक्षेऽपीष्यताम् । ममैव दृष्टान्तानुसारिणी कल्पना भवति । न च त्वत्पक्ष इव दृष्टान्तपर्येषणादिकमत्र प्रसज्यत इति ॥ ३९ ॥

संक्रान्तिवाद्याह—

**नेष्यते येन पूर्वत्र दृष्टोऽशुद्धो हि पुंगुणः ।**
**पुमानपि तथाभूतः प्रकृष्टः स किमीप्सितः ॥ ४० ॥**

सतो ह्यभिव्यक्तिस्तद्रूपप्रत्यभिज्ञया घटादेरिव दीपादिना। इह तु सिद्धावस्थातः पूर्वमशुद्धः किञ्चिद्विषयः पुंसां गुणः सिद्धः। मुक्तौ तद्विलक्षणो ह्यत्यन्तशुद्धः परमेश्वरसमः श्रूयत इति तयोर्भेदात् पूर्वं प्रत्यभिज्ञानासंभवतो मुक्तावभिव्यक्तिर्नेष्यतेऽस्माभिः। सिद्धान्तवाद्याह—पुमानपीति। भवद्दृष्ट्यापि पुमानशुद्धः, येनेदानीं हि परमेश्वरगुणसंक्रान्तिपात्रीभूतः॥ ४०॥

अत्र पराभिप्रायः—

**स चेच्छोधनसंसिद्धो गुणा नैवं किमीप्सिताः।**
**अणुस्तादृग्गुणोऽद्यापि कथं शुद्धः स सर्वथा॥ ४१॥**

अथाशुद्धोऽप्यसौ तदानीमीश्वरव्यापारेण दीक्षादिना शोधकेन शुद्धो भवद्भिरिष्यते, यद्येवं तद्गुणाः कथमेवं शुद्धाः सर्वविषया नेत्याह—गुणा इति। न च तद्गुणाः प्राग् न सन्तीत्युक्तम्। सतां तेषामज्ञानलक्षणावृतस्य तमस इव निवृत्त्या अभिव्यक्तौ सकलाकलनिवृत्तिकृते शुद्ध्यशुद्धी परगतत्वान्नाभेदबाधिके इति नाभिव्यक्तिमोक्षप्रतिक्षेपो युक्तः। न च संक्रान्तिपक्षे कदाचिदपि पुंसः शुद्धिरस्तीत्याह—अणुरिति। यादृग्गुण एव पूर्वं पश्ववस्थायामणुरात्माऽभूत् तादृगशुद्धस्वगुण एवाद्यापि। मोक्षे तद्गुणानामतिशयो भवद्भिरभ्युपगम्यत इति कथं शुद्धः सर्वथा ? नैवेत्यर्थः॥ ४१॥

तस्य तदात्मगुणानां शुद्ध्यनभ्युपगमेऽपीश्वरगुणसंक्रान्त्यधिकरणस्य द्रव्यमात्रस्यैव शुद्धिरस्माभिरिष्यत एवेत्यत्र सोपहासमाह—

**द्रव्यप्रिया भवन्तो वै ज्ञाता नैव गुणप्रियाः।**
**क्षणं वा वैदुषो येन न क्लृप्तः शाम्भवः पुमान्॥ ४२॥**

अयमत्र भावः—परमेश्वरगुणसंक्रान्तावप्यात्मदृष्टस्य द्रव्यस्य तदा किमशुद्धास्ते गुणाः सन्ति वा न वा ? न तावन्न सन्ति, ज्ञानक्रियानाशपक्षस्य निषेत्स्यमानत्वात्। सन्ति चेत्, किं पूर्ववदसर्वविषयाः सर्वविषया वा ? यद्यसर्वविषयास्तदाऽपि पशुरेवासावशुद्ध इत्युक्तम्। अथेश्वरगुणसंक्रान्तौ सर्वविषयाः, यद्येवमस्मद्दर्शनगुणशुद्धिरेवेति कथमात्मद्रव्यमात्रशुद्धिप्रियता गुणशुद्ध्यप्रियता च भवतामुपपद्यते। गुणपक्षपातश्च महतां युक्त इत्युपहासः। दोषान्तरं संक्रान्तिवादिनामाह—क्षणं वेति। विस्मृतं चैतद्भवतामीश्वरद्वैतानाश्रयणम्, येन शम्भुसंबन्धी तत्परिणतिः पुमान्न कल्पितः। मुक्तौ तावत् तद्गुणत्वेन तदद्वैतमभ्युपगतप्रायमिति भावः॥ ४२॥

तदियता संक्रान्तिपक्षप्रतिक्षेपं विधायाऽधुना सर्वनाशपक्षं तिरस्करोति—

**बालत्वे यौवने दृष्टान् वृद्धोऽर्थान् संस्मरेद् दृढम्।**
**जन्मप्रमाणयोरन्तः स्थैर्यं पुंसस्ततो भवेत्॥ ४३॥**

यतो बाल्याद्यवस्थानुभूत्या तान् संस्मर्तुं शक्तो दृष्टस्तदा स्मृतिदर्शनादात्मनः स्थैर्यमभ्युपगम्यते। यदि हि प्रतिक्षणमन्योन्यश्च द्रष्टाऽनुभवेत्, तदान्येनानुभूतेऽर्थे स्मृति-

रन्यस्य न भवेत्, चैत्रमैत्रयोरिव। दृश्यते चात्र कालान्तरानुभूतार्थस्मरणं कालान्तरे, इत्यतः स्थैर्यम्। नन्वनुभवस्मरणयोस्तावत् स्थिरात्मानुभववादिनापि त्वया भेदोऽभ्युपगतः। नहि तवापि स्मरणमेवानुभवः, सर्वचित्तवृत्तीनामभेदप्रसङ्गात्। भेदेऽपि तयोरतीतानुभववृत्तिकृतचित्तसंस्कारेणेदानीं वृद्धस्य स्मृतिस्तदनुभवविषया तदनुभूतार्थविषया वा भवताऽपीष्टैव, आत्मनि विकारित्वप्रसङ्गतः संस्कारानभ्युपगमात्। चैत्रमैत्रचित्तप्रवाहयोस्तु परस्परं संस्कारजननकारणत्वाभावादेकचित्तप्रवाहपतितस्यैवानुभवस्य संस्कारसाधनेन स्मृतेरुत्पत्तिस्त्वयाऽभ्युपगतेति कथमत्राभेदः प्रतिपद्यते।

अथ चित्तवृत्तिव्यतिरिक्तस्यात्मनोऽत्राभेदः साध्यते, तदयुक्तम्, चित्तवृत्तिव्यतिरेकेण तस्यानुपलम्भात्। एकमेवेदं संवेदनं हर्षविषादाद्यनेकरूपं दृश्यते यतः। अथासंवेदनस्यात्मनोऽनुमेयस्यात्र भेदः प्रतिपाद्यते, तदपि तेनादृश्येन सह कस्यचिदपि व्याप्त्यसिद्धेरयुक्ततरम्। न च कार्यान्यथानुपपत्त्याऽनुमीयते, तत्कार्यस्य स्मृत्यादेः प्रोक्तवदुपपत्तेः। कश्च तस्यानुमातेत्यपि वक्तव्यम्? न चित्तम्, अचेतनत्वेन तस्याभ्युपगमात्। अथाचेतनस्यापि तस्य तत्संपर्काच्चैतन्यमित्युच्यते, तदयुक्तम्, चेतनसंपर्काद्ध्यचेतनस्य चेतना भवतीति न चिद्रूपता। चिद्रूपत्वे तु स एवात्मा प्रकाशकत्वादिति किमनेन। न च तस्याप्यनुमितस्यात्मता युक्ता, प्रकाशवत् प्रकाश्ययोरात्मपररूपत्वात्। यो हि स्वयमाभासते स एवात्मा, यस्तु तेन प्रकाश्यते स एव तस्य प्रकाश्योऽपर इत्यसङ्करः। आत्मपरयोरिव रूपं न संकीर्यते, सर्वस्य परस्यापरस्य चात्मत्वात्। न च प्रकाशसिद्धौ प्रकाश्यसिद्धिरस्ति, येनात्मनः परोक्षत्वेऽपि न चित्तप्रकाशोऽभ्युपगम्यत इति। एवमायातमान्ध्यमशेषस्य जगतः। अथात्मनोऽसिद्धावपि चित्तप्रकाशोऽभ्युपगम्यते, तर्हि प्रकाशात्मिका चित्तवृत्तिरुदयव्ययवत्येवात्मत्वेनेष्यताम्, किं तद्व्यतिरिक्तस्यात्मनोऽत्यन्तासिद्धस्यात्र नित्यत्वसाधनेनेति।

सत्यमनुभवो न स्मरणम्, सत्यं चैकप्रवाहपतितादनुभवादिवृत्तिसामर्थ्याहिताच्चित्तसंस्कारात् स्मृतिसंभवः, न प्रवाहान्तरस्थात्। इदं च सत्यमेव यच्चित्तव्यतिरेकेणात्मनः स्वसाक्षिकस्याभावाभिधानम्। नह्यनुभवमपह्नुत्याननुभवव्यवस्थापकानां व्यवस्था युक्तिमती। स एव व्यवस्थापको यदपह्नवे च न किञ्चिन्नापह्नुतं नाम तत्। स एवानपह्नवनीयस्वभावो निरूप्यताम्। किं प्रतिक्षणं पूर्वः पूर्वः पूर्वोत्तरक्षणाभ्यां भिन्नः क्षणमात्ररूपावभासो ग्राहकः प्रकाशते, अथ सर्वदैव। भिन्न इति तत्रायं स्थिररूपः प्रकाशः सर्वदैव ग्राह्योपाधिभेदेऽप्यनास्वादितात्मभेदः कालत्रयेऽपि तिरस्कृतस्वप्रागभावप्रध्वंसाभावो नानाविधप्रमाणादनेकचित्तवृत्त्युदयव्ययसंवेदनेऽप्येकमपि तद्ग्राहकस्थैर्यवेदनो वृत्त्यन्तरेष्वप्यविलुप्तज्योतिः सुषुप्त्यादावप्यखण्डितस्वसंवित् सततमेव स्वप्रकाशत्वेन गम्यत्वादात्मपदप्रतिपाद्यः प्रतिपुरुषं स्वसंवेनसिद्ध इति। किमत्रान्येन साधनेन। तामेवात्मसंविदमभिन्नामनपायिनीं चाश्रित्य सर्वैः कालान्तरफलानि कर्माण्यारभ्यन्ते। क्षणिकत्वे तु तस्याः सर्वव्यवहारप्रत्यस्तमयं सर्वज्ञानानां क्षणमात्रवेदनोत्तरध्वंसतः क्षणान्तरे संभवाभावात् कः प्रवर्तेत, कुत्र किमर्थं वा? यतो नहि क्षणात्मवादिनो नाहं न ममेति पश्यतः प्रवृत्तिर्घटत इति निरीहं स्वरूपनिष्ठं प्रकाशमात्रं हेयोपादेयबुद्धिविकलं मिथ्याज्ञानविचारबोधाद्यनेकज्ञानशून्यं जगद् भवेत्। स्थिरग्राहकप्रकाशपूर्वत्वादेव-

मादेः सर्वस्येत्यनपह्नवनीयोऽयं प्रकाशो व्यवहारहेतुभूतः कालान्तरभाविफलप्रवृत्तिकारणं सर्वदैव स्यात् ।

सत्यं ग्राहकोऽप्ययं एकरूपः स्थिरग्राहकप्रकाशः सर्वव्यवहारसंपादनक्षमोऽनपह्नवनीय एव । स पुनर्न स्वसंवेद्यः, अपि तु ग्राहकक्षणप्रवाह एवानुभूयमाने तत्सादृश्यदर्शनभ्रान्तैर्विकल्पेनारोप्य प्रकाश्यः । ततः प्रवाहस्यैवैक्यमिति न पुनर्भ्रम एव, विषयवैलक्षण्येन कर्मतया तदैक्यस्य संवेदनात् । यदि ह्येतदारोपितं स्यात्, तदारोपिकाभिमतस्य स्वतः क्षणमात्रध्वंसित्वेनाप्रतिभासनात्, तत्प्रतिभासित्वे ह्यात्मत्वोपपत्तेः, आरोपस्य पूर्वापरपरामर्शरूपत्वेन स्थिरबोधनिवर्त्यत्वात् । न च क्षणात्मनोऽपि युगपत्पूर्वापरयुक्तदीर्घविषयत्वतः समारोपकत्वम्, अयोजनात्मकत्वेनाविकल्पकत्वादलातचक्रादिप्रतिभासवत् । अत एव युगपत् सर्वार्थविषयत्वेऽपि योगिज्ञानमविकल्पककल्पमित्युक्तम् । योजितविषयं तदिति चेत् सर्वेषां क्षणिकत्वेन योजनानुपपत्तेर्न किञ्चिदेतत् । अत एवानेकेषामपि क्रमभाविनां विकल्पक्षणानां नारोपकत्वमित्यारोपासंभवात् तदङ्गताविकल्पनात् । न च ग्राहकात्मन्येव वक्तुं शक्यते, येन स्वात्मन्यविकल्पको विकल्पः । अत एवास्याहंप्रत्ययविषयताऽपि न सम्भवति, अपि त्वहंप्रत्ययप्रकाशरूपतैव, तदापि तेन रूपेण स्थिरतयैवाहमवभासनात् । नहि कालत्रयेऽपि ग्राहकात्मनो ध्वंसः संवेद्यत इत्युक्तम् । यस्य हि प्रागभावः स उत्पन्नः, यस्य हि पुंस उत्पत्तिः स नष्टः ।

अहंप्रत्ययस्य पुनः पूर्वोत्तरयोः कोट्योर्नास्त्यभावः । संवित् प्रतिक्षणमुत्पन्ना निरूढा भवेदिति न शक्यते वक्तुम्, न वा स्वसंवेद्यः संविद्धर्मो भवतीति वक्ष्यामः । तत्स्थूलसूक्ष्मयोरिव स्थिरक्षणिकयोः परस्परविरुद्धरूपत्वाद् विद्युदादौ क्षणिकत्वं प्रमाणसिद्धं सदक्षणिकत्वं व्यावर्तयति । यथैवमत्र स्वात्मारोपासंभवेन स्थैर्यमवभासमानमसंशयं क्षणिकत्वं व्यवच्छिनत्तीति युक्तम् । न च स्वसंवेदनस्य बाधः संभवति, येन भ्रान्तता भवेदिति वक्ष्यामः । न च प्रमाणसिद्धस्य बाधकं विनाऽन्यथाभ्युपगमो मतिमावर्जयति विपश्चिताम् । स्थिरस्यार्थक्रियानुपपत्तिरेव बाधिकेति चेन्न, तदनुपपत्तेस्तत्र निषेत्स्यमानत्वेनाबाधकत्वात् । तदत्र स्वप्रकाशे स्वचित्तव्ययोदयसाक्षिणि स्थिररूपे ह्यात्मनि ग्राहकि स्वसंवेदनात् स्वकर्तृत्वं प्रोक्तवदात्मसंवित्तिप्रोद्धारफलं पराभिहिततदभावसाधनहेतुव्रातातिरश्चीनतया हेतूकृतम्, न तु स्मृतिः । सा ह्यतीतादनुभवाद् भिन्नैव । स्मर्ता तु न भिद्यते, तस्यैव पूर्वानुभवितृत्वेन तदा स्वसंवेदनादिति तदभेदात् तत्राभेदोपचारः, न वस्तुतोऽभेद इत्यलमतिसूक्ष्मानुभवविचारेण मुग्धमतितपस्विजनमनःखेदजनकेन ॥ ४३ ॥

एवं जन्ममरणयोर्मध्ये पुंसः स्थैर्यं प्रतिपाद्याधुना यैर्भूतेभ्य एव ज्ञानस्योत्पत्तिरित्युक्तं तान् प्रति जन्मनः पूर्वं तत्सत्तां साधयितुमाह—

**जन्मान्तरानुभूतेऽर्थे स्मृतिरन्यस्य संभवेत् ।**
**अशनाय भवेत् सा च स्तन्यं प्रत्युपसर्पणात् ।। ४४ ।।**

यदि हि शरीरेण सह चैतन्यमुत्पद्यते, तदा तदहर्जातस्य बालकस्य बुभुक्षितस्याशनाय भोजनार्थं स्तन्यं प्रति क्षीरप्राप्तये प्रवृत्तिर्निगरणात्मको व्यापारो न स्यात् ।

एतच्चोपलक्षणमन्येषां स्थानकरणाभिघातादीनाम्। यदाहुः—"आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्। स्थानानामभिघातश्च न विना[1] पूर्ववेदनाम्॥" (वा० प० १।११४) इति। दृश्यते च प्रवृत्तिः। सा जन्मान्तरपूर्विकां स्मृतिं तदा गमयति। ननु यथा जृम्भाद्युद्भवो बालस्य जातिधर्मतया वस्तुशक्तित एव भवति, एवमेतदपि भविष्यतीत्यसमञ्जसमेतत्। अवगमपूर्वकत्वादस्य सर्वस्य ह्यवगमं विना नोद्भवः। केशनखादेरिव तस्य जृम्भादेर्जातिधर्मता युक्ता। क्षीरनिगरणस्य त्विच्छाजन्यप्रयत्नविशेषसाध्यत्वेन दृष्टत्वान्न जातिधर्मता। क्षीरं हि तत्क्षणजातेनापि बालेनार्थितया स्तनात्पूर्वं प्रयत्नविशेषेणाकर्षणात्। आकृष्यते च तेन मुखमापूर्य न तद्वमति, अपि तु तृप्तिलक्षणफलावधि निगरन्नपि तथा तथा निगरन् दृश्यते। न च यथा यथा प्राणाख्यवायुरोधस्तस्य जायत इत्येवमादिहिताहितप्राप्तित्यागनिमित्तस्य प्रयत्नविशेषकार्यस्य दर्शनाद् बालानां हिताहितबुद्धिं ज्ञात्वाऽनुमितपूर्वानुभूतहिताहितस्मृतिसिद्धिः॥ ४४॥

अत्रैवाभ्युच्चयमाह—

**जातिस्मराश्च दृश्यन्ते कुर्वन्तः प्रत्ययं जनाः।**
**न चान्येनानुभूतेऽर्थे स्मृतिरन्यस्य संभवेत्॥ ४५॥**

भूतपूर्वजन्मस्मर्तारो जातिस्मराः प्रत्यक्षा एव। यदि नाम स्मृतिर्जन्मान्तरविषया दृष्टा वा अनुमिता वा, ततः किमित्याह—न चान्येनेति। अनुभवस्मरणयोरैकाधिकरण्यं पूर्वमेव प्रतिपादितमिति जन्मनः प्रागपि सत्तासिद्धिरनुभवितुः॥ ४५॥

ततोऽनेनापि सिद्धेन किमित्याह—

**एवं चानादिका पुंसामुन्नेया जन्मपद्धतिः।**
**अनादेर्वस्तुनो मानं विनाशित्वे न संभवेत्॥ ४६॥**

प्रतिजन्म पूर्वव्यतीतजन्मसंस्कारपूर्वकव्यवहारदर्शनाज्जन्मप्रतिबन्धः पुंसः सिद्ध इत्यनादित्वं तेषां सिद्ध्यति। न तु भूतेभ्य एवोत्पादित इति। ततश्चानादित्वात् सिद्धात् सर्वनाशपक्षनिषेध इत्याह—अनादेरित्यादि। विनाशित्वे विनाशित्वनिमित्तमनादेर्वस्तुनः प्रमाणं न संभवेत्। प्रमाणाभावेनात्र विनाशासंभवो लक्ष्यते। तेनानादेर्वस्तुनो विनाशित्वं न संभाव्यत इत्यर्थः। उत्पत्तिमतां ह्यनित्यत्वं सिद्धव्याप्तिकत्वात् सिद्ध्यति, नानुत्पत्तिमतां यतः। अनुत्पत्तिधर्मा चात्मेत्युक्तम्।

स्यादेतत्। अनादेरात्मनो विनाशित्वे प्रमाणमस्ति अर्थक्रियाकर्तृत्वम्। तथाहि—नित्यस्यार्थक्रियाकर्तृत्वं स्वभावः, तदभावत्वेऽवस्तुत्वप्रसङ्गात्। स च स्वभावस्तस्यैक एव, नानास्वभावत्वे हि तस्यापि नानात्वं स्वभावभेदलक्षणत्वात्। भावभेदस्यैकस्वभावत्वे च सर्वदैव स्वनिवृत्त्या सर्वार्थक्रियाकर्तृत्वस्वभावत्वादेकस्मिन्नपि क्षणे सर्वस्वकार्यकरणप्रसङ्गात् कार्ययौगपद्यं भवेत्, तत्स्वभावस्य तदाऽपि भावादिति क्रमेण कार्योत्पादा-

१. न विना शब्दभावनामिति तत्रत्यः पाठः।

भावः। न च क्रियाकालनियमो भवेत्। द्वितीयस्मिन्नपि क्षणे तत्स्वभावत्वे तथैव कुर्यात्। द्वितीयक्षणकृताश्चार्थक्रियाः पूर्वमेव कुर्यात्, पूर्वक्षणकृताश्च पुनर्द्वितीयस्मिन् क्षणे इत्याद्यनवस्थितेरेकस्वभावस्य युगपदपि कार्योत्पादानुपपत्तिरिति सा तत्रानुपपद्यमाना प्रकारान्तराभावाद्वस्तुधर्मत्वेन तत्प्रतिपक्षेषु क्षणमात्रध्वंसिष्वभावेषु विश्राम्यतीति क्षणिकत्वं भावानाम्। क्षणिकत्वे तु स पूर्वः पूर्वार्थक्रियाकर्ता ध्वस्तोऽन्यश्चापूर्वोऽपूर्वार्थक्रियाकर्ता समुत्पद्यत इति न क्रमेणानुभूयमानाया अर्थक्रियायाः कदाचिदनुपपत्तिरिति न दोषः। ततश्चात्मनोऽप्यर्थक्रियालक्षणत्वमेव विनाशित्वे प्रमाणमिति विनश्वर आत्मेति सिद्धम्।

तदेतदयुक्तम्, स्वात्मनो ग्राहकस्य स्थिरत्वेनैव संवेदनात्। न च तस्मिंश्च क्षणिके स्वभावनिवृत्त्यादेः क्षणविचारस्याप्यत्रासंभव इत्यप्ययुक्तमेव। न च भ्रान्तिघटितात् स्थैर्याद् भविष्यतीति वाच्यम्, स्वसंवित्तौ भ्रमाभावात्। ततश्च ग्राहकस्थैर्यावभासो विचारदर्शनान्यथानुपपत्तिलक्षणेन चैक्यानुमानेन स्वसंवादोऽर्थक्रियानुपपत्तिघटितस्य क्षणिकत्वस्य बाधकं प्रमाणम्। ननु स्थिरस्यार्थक्रिया नोपपद्यत इत्युक्तम्, तदप्ययुक्तम्, तस्य ह्येकस्वभावत्वेऽपि विशिष्टसहकारिसन्निधौ कार्यकरणैकस्वभावत्वात् तत्सन्निधान एव करोति न प्राक् तत्सन्निधानाभावादिति न क्रमेण कार्यानुपपत्तिः। अथ कुशूलस्थस्य बीजस्य क्षित्यादिसहकारिसन्निधावङ्कुरजनकस्वभावस्य सामर्थ्यं सत्यसति वा तज्जननं सामर्थ्ये सत्यसति च सहकारिणि तज्जननसामर्थ्ये वा सहकारिसन्निधौ कार्यकरणैकस्वभावत्वात् तत्सन्निधानेऽप्यसामर्थ्यमेकस्वभावत्वात् सहकारिभ्यः सामर्थ्यलाभे वा पूर्वमसमर्थः पश्चात्समर्थ इति स्वभावभेदाद् भेद एव तस्येति नैकता।

अत्रोच्यते—समर्थोऽप्यसौ तत्सन्निधान एव कार्यं करोति, तथा स्वभावत्वान्नान्यदा। ननु समर्थश्चेत् किमिति सन्निधानमपेक्षते? तथा स्वभावत्वादित्युक्तम्। स्वहेतुभिः स्वभावाद्वा स तथाभूतस्वभाव एव भावो भवति, यः समर्थोऽपि तथाविधसहकारिसन्निधौ कार्यं करोति, नान्यदेत्यत्रान्वयव्यतिरेकावेव स्थिरवस्तुनि विषये प्रमाणम्। न च स्वभावा भावानां पर्यनुयोगमर्हन्ति। नहि किमर्थं वह्निर्दहति न जलमित्यत्र पर्यनुयोगः शक्यते कर्तुम्। अथ सहकारिसन्निधौ जनकाद्भिन्नस्तस्य स्वभावो जननाभावादेवेत्युच्यते, तदाऽपि सहकारिसन्निधिकार्यकरणैकस्वभावत्वात् तत्सन्निधौ तु स एवेति न भेदः। नह्यस्मात् स्वभावात् कालत्रयेऽपि प्रच्यवते भावः। सहकार्यसन्निधानात्तु न तदा तत्कार्योद्भव इति तत्सन्निध्यसन्निधी परं भिद्येते, न तु वस्तुभेदः।

ननु यदि सहकारिगतौ सन्निध्यसन्निधी, तर्हि सहकारिणो भेदं कुरुतः, विरुद्धस्वभावत्वात्। न तत्राऽपि विरोधः, तस्याऽपि सन्निधायकः। तस्य सहकारिणि सन्निधिस्वभावत्वात् तस्याप्यन्यसहकारिसन्निधाविति नानियमः। स्वभावनियमत्वाद् भावानां वैचित्र्यस्येति सहकारिणामपि क्षित्यादीनां बीजादिकारणसन्निधौ तत्कार्यकरणस्त्वसौ तत्सदृश एव स्वभावः। येन तत्सन्निधान एव कार्यं कुर्वन्नान्यदेति सर्वेषां तत्कारकत्वस्वभावः परस्परसन्निधानापेक्ष इति सर्वे कारकाः सहकारिपदवाच्या नैकैकः। न च तेषां स्वभावभेदः। सर्वेषां च सामर्थ्येऽपि न कार्यानेकप्रसङ्गः। परस्परसन्निधौ च तदेककार्यनिवर्तनस्वभावत्वात् क्रमेण नानाभूतार्थक्रियाकरणेऽपि नानाभूततत्सहकारिसन्निधौ

नानाभूतानेककार्यकर्त्रेकत्वस्वभावत्वात् क्रमेण नानाभूतार्थक्रियाकरणेऽपि न स्वभावभेदः। यथैकस्यैव चैत्रस्य लवनपचनभोजनाद्यनेककार्यकर्तुश्च तत्तद्दात्रादिसहकारिसन्निधौ तल्लवनादिकार्यकर्तृस्वभावत्वात् क्रमेण लवनादिभेदेऽपि न स्वभावभेदः, तथाभूतस्वभावस्य तत्र क्रमेणैव भावात्।

प्रदीपस्य ह्येकस्यैव वर्तिदहनतैलक्षपणस्वज्ञापनाद्यनेककार्यनिर्वर्तकैकस्वभावोऽभ्युपगतो भवद्भिः। न तु कार्यभेदेन स्वभावभेदः। एकस्यैव विशिष्टस्वभावस्यानेककार्यनिर्वर्तनविरोधाभावात्। तद्वदत्राभ्युपगन्तव्यम्। तत्तत्सहकारिसन्निधौ तत्तदनेककार्यकरणस्वभावावियोगात् सर्वदैव स्थिरस्याऽपि भावस्य सहकारिसन्निधानस्य पूर्ववत् क्रमिकत्वात् क्रमेणानेककार्यनिर्वर्तनेऽपि न भेदस्वभावो भेदादिति स्थिरस्यार्थक्रियाकर्तृत्वं क्रमेण युज्यत इति नार्थक्रियासंभवस्यात्र बाधकत्वम्. तस्याः स्थिरेषु भावेषु संभवात्। यथा च क्षणिकस्यार्थक्रिया न संभवति, तथा विवेचितमस्माभिरागमविवेक इति तत एवावगन्तव्यम्।

तत्र बाधकाभावात् स्थैर्यं भावानां प्रत्यक्षसिद्धमबाधितमेव। तत्रैषां हेतुः प्रमाणेन सिद्धः। ते विनश्वरास्तदन्ये त्वविनश्वरा एवेत्यात्मनोऽर्थक्रियाकर्तृत्वेऽप्यविनाशः सिद्धः, हेत्वभावात्। एतेन ज्ञत्वविरोधोऽप्यात्मनः प्रागुक्तस्तत्तद्विषयसन्निधौ तत्तद्ग्राहकैकस्वभावत्वेन पूर्ववद् भावभेदाभावाद् घटग्रहणात् पूर्वं तु तत्स्वभावभ्रान्तधिया स्वभावभेदेन तद्विरोधभ्रमो भवेदित्येवं निरस्तः। ततश्च ग्राहकस्याविनाशित्वाद् ग्राह्यस्य च वस्तुनोऽभावान्न मुक्तौ तयोर्विनाशः, अपि तु सर्वज्ञत्वमेव युक्तम्। आवृतिस्वभावानां मलकर्ममायाख्यानामविद्यादीनां तदानीं निवृत्तत्वादनावृतस्य ग्राहकस्यावस्थितेः। यदाहुः—"प्रभास्वरमिदं चित्तं प्रकृत्यागन्तवो मलाः। तेषामभावे सर्वार्थं तज्ज्योतिरविनश्वरम्॥" इति॥ ४६॥

एवं सर्वनाशपक्षमाभास्येदानीं ज्ञानकर्तृत्वनाशपक्षं निरसितुमाह—

**न च ज्ञानक्रियानाशः सर्वागमविरोधतः।**
**सदीशे युक्तिबाधा च तयोर्नित्यत्वदर्शनात्॥ ४७॥**

"नहि द्रष्टुर्दृष्टेर्मन्तुर्मतेर्विपरिलोपो विद्यते" (बृ० उ० ४।३।२३) इति श्रुत्यागमनिरस्तोऽयं मुक्तौ ज्ञानक्रियानभ्युपगमपक्षः। न च सर्वागमविरुद्धं वस्त्वभ्युपगन्तुमुचितम्। यदाहुः—"एकस्य प्रतिभानं तु कृतकान्न विशिष्यते" इति। अथ सन्तमप्यर्थं निर्मला न पश्यन्तीति मुक्तौ युक्तिबलेन तद्विरुद्धमपि वस्त्वभ्युपगम्यत इति, तत्राह—सदीश इति। सच्चासौ प्रमाणसिद्धत्वादीश्वरश्च, तस्मिन् ज्ञानक्रिययोर्नित्यत्वदर्शनादुक्तानुमानेन बाधाऽस्य पक्षस्य। अयमर्थः—पदार्थसंग्रहवादिना तावदीश्वरस्य द्रव्यपदार्थ एव, तत्रापि चात्मपदार्थ एव संग्रहो वाच्यो नान्यत्र, अत्यन्तविलक्षणत्वेन तदयोगात्। तदनन्तर्भावे हि तस्य पदार्थान्तरत्वं द्रव्यान्तरत्वं वा भवेदिति पदार्थानां षट्संख्या द्रव्याणां वा नव संख्येत्यभ्युपगमविरोधः। अस्तु तदन्तर्भावः, किमतः? अतश्च विमत्यधिकरणभावापन्ना मुक्तात्मानः सर्वज्ञाः सर्वकर्तारश्च, आत्मत्वे सति धर्माधर्मशून्यत्वादीश्वरवदिति युक्त्याऽपि ज्ञानक्रियानाशपक्षः प्रतिक्षिप्तः। धर्माधर्मशून्यत्वं हि सर्वज्ञत्वसर्वकर्तृत्वाभ्यां

व्याप्तमीश्वरे सिद्धं सदात्मनां भवत् तत्तद्रूपतां तदा प्रतिपादयतीत्येवं सर्व एवेश्वरसमा मुक्ता भवन्तीति न मुक्तौ ज्ञानक्रियाकर्तृत्वनाशो युक्त इति ॥ ४७ ॥

इदानीम् "अव्याकृतादिषु" (श्लो० २) इत्यादिना पूर्वोद्दिष्टान् पक्षान् प्रतिक्षिपति—

**उपादानेषु लीनानां पुनरावर्तनं यतः।**
**यत्कारणाधिकारेऽतिविपर्यस्ता लयं गताः ॥ ४८ ॥**

भवतु जीवात्मनां कार्यत्वेन तदा तत्र परस्मिन्नकार्यात्मनि महाविभूत्यभिधाने घटादीनामिव मृदि लयो मोक्षः, किन्तु तस्मात् स्थानात् पुनः प्रलयोत्तरं सर्गारम्भ आवर्तनं परावृत्तिः संसारप्राप्तिस्तेषां भवेदित्यर्थः। हेतुमाह—यत इति। कारणस्याधिकारः पुनः कार्यात्मना परावृत्तियोग्यता, परिणतिधर्मत्वादेव तेन रूपेण तस्याधिक्रियमाणत्वात्। तस्मिन् तथाभूते यतो लीनास्ततः पुनरपि मुक्ता जीववत् परावृत्तौ परिवर्तन्त इति व्यर्थोऽत्र मुक्त्यर्थः प्रयासस्तल्लयवादिनामिति। स्यादेतत्। यद्यपि प्रलये तत्र सर्व एव जीवात्मानो बद्धा अबद्धाश्च लीनाः, तथाऽपि प्रतिसर्गमविद्यादिवासनायुक्तेन बद्धजीवात्मरूपेणैवासौ बद्धः परावर्तते न त्वबद्धेन, परावृत्तिहेतोरविद्यादेस्तत्राभावादिति। तदयुक्तम्, तस्यामवस्थायां विभागाभावादविभागावस्थैव कारणत्वम्। तत्राऽपि बद्धाबद्धयोर्विभागे विभागस्याविभागपूर्वकत्वात् तत्प्रकृत्यनुमानं स्फुटमेवेति ततो न परत्वं तस्याः प्रकृतेः, तत्प्रकृत्यन्तरसद्भावात्। प्रकृत्यन्तरे चाऽऽक्षेपप्रतिसमाधाने पूर्वोक्ते एवेत्यनवस्थानात्त्वविभागरूपा, अविभागरूपत्वेऽपि परमकारणस्य प्रागपि तथाभूतस्यैव च स्वरूपापरिमितत्वेन भावाद् जीवात्मलयेऽपि तस्याधिक्यासंभवात्, तत्र च जीवात्मनोऽनुपलम्भनात्। यदि परं स जीवात्मा प्रागुपलब्धोऽर्थक्रियाकर्ता स्वरूपेणानुपलभ्यमानो ध्वस्त एव भवेदित्यात्मनाश एव मुक्तौ प्रसक्तः। अयमपरोऽस्य दोषोऽस्तीति वक्ष्यति— "मूढानां ज्येष्ठमल्लास्ते येषां स्वात्मा विनश्यति" (श्लो० ५७) इति। न त्वेतावता प्रोक्तदोषासंभवोऽत्र।

स्यादेतत्। किं कुर्मः, प्रमाणवत्त्वादायातः प्रसङ्गः केन वार्यत इत्याह—विपर्यस्ता इति। न प्रमाणवदेव तत्, अपि तु विपर्यासो मिथ्याज्ञानमत्र मलः। तथाहि—नैकस्माद् बोधरूपादुपादानकारणाच्चेतनाचेतनविरुद्धकार्यद्वयोत्पत्तिर्युज्यते, विरुद्धयोरेकोपादानत्वायोगाद् भावाभावयोरिव। किञ्च, प्रत्ययाप्रत्ययान्वयित्वात् तद्विकाराणां परमकारणमपि चेतनाचेतनात्मकं स्यात्, न चैतन्मातुर्वन्ध्यात्वमिव ब्रह्मणापि शक्यमवस्थापयितुम्। अथ कश्चिद्भागस्तस्य चेतनः कश्चिन्नेत्युच्यते। यद्येवं सभागत्वेन घटवत् कार्यत्वसिद्धौ पूर्वोक्तदोषतादवस्थ्यम्। किञ्च, जीवात्मनां कार्यत्वसिद्धौ तत्कारणं परा प्रकृतिः सिद्ध्यतीति। तेषां च चेतनत्वान्न कार्यत्वम्। यच्चोक्तमन्वयात् कार्यत्वमिति, तदप्ययुक्तम्, सिद्धत्वादात्मनां समन्वयस्य। समन्वयो हि ग्राह्यस्य कर्मतामापन्नस्य ग्रहीतुं युज्यते। न चात्मा स्वात्मन एव ग्राह्यो भवति, तत्र तस्य व्यापारविरोधात्। स हि ग्राहकत्वेन प्रत्यग्रूपतया सर्वदा प्रतिभासत इत्युक्तं प्राक्।

स्यादेतत् । ग्राह्यसमन्वयो ग्राह्यापन्नस्यैव गृह्यते । यस्तु ग्राहकसमन्वयो ग्राहकरूपेणैव तस्मिन्नात्मनि भासमाने भासत इति । तदुत्तरं ग्राहकान्वयो ह्यनेकग्राहक-प्रकाशपूर्वकः । न चैकात्मस्वभावग्राहकस्वसंवेदने ग्राहकान्तरसंवेदनमस्ति, तस्य ततोऽन्यत्वेन घटादिवत् परत्वात् । नह्यात्मानः स्वयं वेदनमात्राः परस्परं कीर्त्यन्ते, सर्वज्ञत्वस्य सर्वदा प्रसङ्गादिति । प्रत्येकं स्वात्मसवेदने कस्य कुत्रान्वयः । यद्येवं सर्व एवात्मानः सर्वज्ञस्य ग्राह्यत्वमनतिक्रान्ताः, तत्सर्व एव तेष्वग्राह्येष्वन्वयं ग्रहीष्यन्तीति । तदयुक्तम्, सर्वज्ञात्मनैव व्यभिचारात् । सोऽपि हि स्वसंवेदनेन परमात्मभ्योऽभेदे नैतद् ग्रहीतृतया भासते । न चागृहीतस्यान्वयः संभवतीत्युक्तम्, न च तस्य सर्वज्ञत्वाद् विपरीतग्रहण-मुपपद्यते ।

तद्यथा—तेनात्मान्तरेभ्यः स्वात्मात्यन्तानन्वितरूपोऽसंभवाद् भ्रमेण स्वानुभवेन गृहीतः, तथैव परमात्मनः परस्परं भिन्नाः समन्वयविषयभावमतिक्रम्य वर्तमानास्तेन साक्षात्क्रियन्त इत्यदोषः । अत एव नानुमेयः, न मातुरनुमातृतया वैसादृश्येन भासनात् स्वात्मवत् परात्मनामपीत्यन्तविसदृशतयैवानुमानात् । यद्येवमसन्नात्माऽश्वविषाणवत् सत्तयाऽनन्वितत्वादिति नेह सत्तान्वयात् सत्त्वमात्मनाम्, अपि तु स्वरूपसत्त्वात् सत्तावत् परमकारणवद्वा । तस्यापि हि न सत्तायोगात् सत्त्वं भवद्भिरेष्टव्यम्, कार्यत्वप्रसङ्गात् । अपि तु स्वरूपं सत्त्वमेवेति नाश्वविषाणतुल्यता । कथं तस्यान्वयाभावे सर्वेषामनात्मनां च सदित्येकपदव्यक्तिरात्मपदप्राप्तिः । अपि चात्मनां कथं सापि विचार्यतामिति चेत्तर्हि सत्तान्वयप्रदाने को ग्रहो युक्तिविदग्धस्य । न चैकान्वयनिबन्धनैव सर्वत्रैकपदप्रवृत्तिः, वृक्षादिशब्दानामनेकरूपात्मकेऽप्यभिधेये प्रयोगदृष्टेः । पाचकादिशब्दानां योगबलेन प्रवृत्तिरित्येवमत्रापि संभवाददोषः । यद्वा उक्तवदन्वयासंभवेऽप्यात्मनां सादृश्यनिबन्धनै-वैकपदप्रवृत्तिः, घटानामिव घटशब्दस्य । तथा सन्निवेशविशेषात्मनो घटशब्दवाच्यत्वात् तस्य घटान्तरेऽप्यविशेषात् ।

नन्वस्ति घटानां घटत्वेनान्वयः । यद्येवं घटत्वादुत्पत्तिस्तदन्वयाद् घटानां प्रसज्यते । तेन च घटानां न घटत्वादुत्पत्तिः, अपि तु मृदः । तस्मादन्यत् सादृश्यम्, अन्योऽन्वयः । सादृश्यं हि सामान्यमिहोच्यते तदेकपदाभिलभ्यत्वे हेतुः । यथाऽयमपि घटोऽयमपीति । तच्च न तदवयवे भवति । यन्न कण्ठे बुध्ने वा घटबुद्धिः, नापि तत्कार्ये कर्परादौ तद्दृष्टम्, कर्पराणां वैसादृश्येनैव घटविषयत्वात् । यस्य त्वर्थस्य कार्यं प्रत्यवयवं च सिद्धसदृशतरेऽपि वस्तुनि तेन रूपेण सर्वत्रैवानुवृत्तिः सोऽन्वय उच्यते । स एव च एककारणत्वकल्पने भवति । तथा दृष्टत्वाद् घटशरावादिषु हि विसदृशतरेष्वपि तदवयवेषु च कण्ठादिषु तत्कार्येषु च कर्परादिषु सर्वत्र मृदन्वयदृष्टेर्मृत्कार्यत्वाविनाभावसिद्धिरिति भेदः । सादृश्यसमन्वययोस्तदन्यत्रान्वयाभावेऽपि सादृश्यनिबन्धनैकपदप्रवृत्तिर्घटत इत्य-दोषः । अत एव तत्र वृत्तिकार आह—"शिवश्चात्मनः समानजातीयः" इति, "सादृश्य-मेव चेतनानामिह स्थितिः" इति ।

ननु सादृश्यमप्यग्राह्यात्मनोऽस्य नैव ग्रहीतुं शक्यम् ? सत्यम्, आत्मपदाभिधेयत्व-वददूरविप्रकर्षेण व्यवहारार्थं वैसादृश्यपरिचारमात्रेण कथञ्चिदत्रोपचर्यते, न वस्तुतः । यदाहुः—"नेति नेतीत्यात्मगतिः" । इति सर्वमनवद्यम् । इत्थं चेतनोपादानात्मकपरम-

कारणसंभवेऽपि मुक्तिं तत्प्राप्तिरूपां प्रति पुनः पुनरावृत्तिदोष उक्तः। अनेनैवान्येऽपि प्राणाहङ्कारादिलयवादिनः पूर्वोद्दिष्टाः प्रतिक्षिप्ताः—उपादानेषु लीनानां पुनरावर्तनं यत इति ॥ ४८ ॥

इदानीं "विलयः परमात्मनि" (श्लो० २) इति पक्षं प्रतिक्षिपति—

**उपादानत्वसंसिद्धिर्वेदान्ते परमात्मनः।**
**उपादाने प्रलीनस्य ध्रुवं प्राग्वन्निवर्तनम् ॥ ४९ ॥**

समस्तजगदुपादानकारणत्वं परमात्मनो वेदान्तागमेषु प्रसिद्धमेव। तस्मिन्नुपादाने लीनानामुपविष्टानामपि प्राग्वदवश्यं तत्स्वभावान्निवृत्तिः पुनः परावृत्तिरित्यर्थः। ननु पूर्वोपन्यस्तवेदान्तदृशाऽस्य समस्तस्य भेदात्मनो जगतो विद्याविलसितत्वेनाऽसत्यतया कार्यत्वासंभवेन कथं ब्रह्मणस्तदुपादानकारणत्वमत्र दोषहेतुत्वेन गृह्यत इत्युच्यते। कथमसत्यता तस्य जगतः? किं लक्षणं वा सत्यमुच्यते? अत्राहुः—बोधरूपत्वमेव सत्यलक्षणम्। तदभावाद् घटादेरसत्यता। बोधास्ते न बोद्धयात्मका यत इति। यदाहुः—परेण वेदनं यस्य न संविद्यत एव, वैचित्र्यमात्रेण सदसद्व्यवस्था सतां समुचिता, वैपरीत्यस्याऽपि संभवात्। असत्त्वे तु कारणं सन्नबाधकं वक्तव्यम्। बाधकमन्तरेण सर्वभावानां सत्त्वमनुभवसिद्धं प्रेक्षावतां न त्यक्तुमुचितं यतः।

स्यादेतत्। परविज्ञेयानां सर्वथा परमाणुरूपतया स्थूलाद्यात्मकतयाऽपि विचारयितुमशक्यत्वादवस्तुत्वेन स्वप्नवदविद्यारूपत्वं स्वनिरूपणाक्षमत्वं वाऽविद्यायाः स्वरूपम्, स्वानरूपणक्षमत्वमेव विद्यायाः स्वरूपं यतः। बोधात्मवस्तुनस्तु तदेकस्वभावतया तद्व्यवस्थापकत्वेन स्वतः सिद्धेर्न तथात्वमिदमसत्त्वकारणं सत्ताबाधकमिति।

तत्र विचारः—पुरुषप्रतिभात्मजन्मकः प्रमाणविशेषः। यदि च पुरुषप्रमाणमविद्याऽपस्माराक्रान्ततया प्रतिभावैकल्येन भावस्वभावनिरूपणासामर्थ्ययुक्तम्, किमेतावता भावैरपराद्धम्, येन तेनाभावा असन्तः कथिताः। नह्येष स्थाणोरपराधो यदेनमन्धो न पश्यतीति, पुरुषापराधस्तु भवति। विचारयितुमशक्यत्वेन च भावानां तद्विषयः संशयो युक्तः, तत्साधकबाधकप्रमाणाभावेन तस्य न्यायप्राप्तत्वात्। न त्वसत्तानिश्चय इति भावस्वभावविचारेण प्रवृत्तेः साधु तद्विचारः कृतः। संशयस्यैव गोपालाङ्गनाबालस्थविरस्थस्येत्थं सिद्धान्तितत्वात्। न च विचारयितुं शक्यत्वमेव भावानाम्, पूर्वं ज्ञानकाण्ड एव विस्तरेण विचारितत्वादिति नातोऽपि तेषामसत्यत्वम्।

ननूक्तं प्राक्, ब्रह्मैव सत्यम्, असत्यास्तु भेदा इति। सिद्धार्थप्रतिपादकत्वेनापि श्रुतेः प्रमाणत्वात् श्रुततः सदसद्व्यवस्थेति। यद्येवं प्रमाणत्वादत्र श्रुतिवाक्यानामपि सत्यत्वे ब्रह्मैव सत्यमित्यद्वैतविरोधः, प्रमाणप्रमेयादिसत्तानिबन्धनत्वादद्वैतस्य। अथैतान्यपि श्रुतिवाक्यान्यसत्यान्येवेष्यन्ते, यद्येवमप्रमाणत्वादित्थमेषां ब्रह्मसत्यत्वसिद्धौ भेदासत्यत्वे च प्रमाणान्तरं वक्तव्यम्। नह्यसत्यं प्रमाणं वन्ध्यासुतज्ञानमिव भवति यतः। प्रमाणान्तरे चाक्षेपप्रतिसमाधाने पूर्वोक्ते एवेत्यनवस्थितेर्न सत्याद्वैतसिद्धिः। परमार्थतो भेदोऽस्त्येवेति कथमित्थमद्वैतस्वभावान्येव तानीति कस्य क्व प्रमाणानि, द्वैतनिबन्धनत्वात्

प्रमाणप्रमेयव्यवस्थितेः। सत्यमेतत्परमार्थतोऽयमविद्यारूप एव प्रमाणादिव्यवहार इति चेत्। ननु स एवायं विचार्यते। प्रमाणानामसत्यत्वादेषोऽपि निश्चयो भवतोऽप्रमा। एतच्च यदवगतं तदसत्यमेव द्विचन्द्रादिवदिति। ब्रह्मणोऽप्यसत्यत्वात् सर्वाभावो वेदार्थः साधु निरूपितः प्रज्ञाशालिभिः।

नन्वविद्यारूपाण्यपि श्रुतिवाक्यानि विद्योपायभूतान्येवेति, इदं मुग्धश्रोत्रियप्रतारकमुच्यते। प्रमाणानामसत्यत्वे सर्वमेतन्मनोराज्यतुल्यम्। सत्यत्वे वा द्वैतपक्ष एव प्रकाशते। तदभेदे हि सर्वमेवेदं ब्रह्मेति कस्तत्र कस्य किं कुर्यादित्यसङ्गतम्। बिम्बस्य न तत्र भ्रान्तिः सम्भवति। भ्रान्तमपि स्वप्नादिविज्ञानं सर्वमालम्बते भ्रान्तं न स्वात्मनि। आलम्बनं च बहिस्थितमन्यथा प्रतीयमानं भ्रमविषयतामापादयति। यत्पुनर्बोधैकस्वभावं वस्तु तद्यथैव चकास्ति तथैव ततः स्वसंवेद्यस्य तत्स्वभावत्वायोगात्। तत्स्वभावत्वे वा स्वसंवेद्यमेवेति स्वसंवेदने भ्रान्त्यसंभवादात्मभेदः प्रत्येकं परात्मानुमातृतया स्वसंवेदनेन सिद्धः सत्य एव। श्रुतिरप्याह—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" (कठो० ५।१५; श्वे० उ० ६।१४; मु० उ० २।२।१०) इति।

नन्वितरेतराभावसिद्ध्यपेक्षत्वाद् भेदस्य भावविषयत्वाच्च प्रत्यक्षस्य कथं भेदः प्रत्यक्षः? तदुक्तम्—"आहुर्विधातृ प्रत्यक्षम्" ( ब्र० सि० २।१ ) इति। नेतरेतराभावसिद्ध्यपेक्षा भेदैक्यम्, तर्हि सिद्धे भेदे तदितरेतराभावप्रतिपत्तिः, सर्वैक्ये हि न कस्यचित् कुतश्चिदभाव इति घटार्थी पटदर्शनात् किमिति निवर्तते। प्रमाणाप्रमाणतदविभागश्च न स्यात्, सत्तामात्राव्यभिचारात्। सर्वज्ञानानामप्रत्यक्षसिद्धो भेद एवेति कथमसत्यत्वं पाठमात्रेण साध्यते। भवतु सत्यम्। तथाऽपि ब्रह्मोपादानं ह्येतदिति श्रुतितस्तदुपादानं ब्रह्म भविष्यतीति। तर्ह्येतदेवात्रोक्तं वृत्तिकृता—"किमर्थमाक्षेपः? उपादानेषु लीनानां पुनरावर्तनम्" इति। अत्र चोक्तो दोष इत्याह—उपादानेति॥ ४९॥

ननु च "आनन्दं ब्रह्मणो रूपम्" इति श्रूयते, तेन च रूपेण ब्रह्मणः परावृत्त्ययोगात्। स्थूलरूपपरावर्तनेऽपि न तल्लीनानां भविष्यति परावृत्तिदोष इत्याह—

**विज्ञानमात्रमानन्दं वस्तु सत्यं न तत्र हि।**
**नैवंविधमुपादानं दृष्टं तन्त्वादि सूरयः॥ ५०॥**

हे सूरयः पण्डिताः! तत्र ब्रह्मणि विज्ञानं परमार्थतो नास्ति, पटाद्युपादानानां तन्त्वादीनामिवोपादानकारणत्वात्॥ ५०॥

कथं तर्ह्येताः श्रुतय इत्याह—

**भुवनत्वे निविष्टस्य तत्स्थितस्योपपद्यते।**
**गुणतस्तत्र संस्थानां भोगिनां मुख्यलक्षणम्॥ ५१॥**

तद्विज्ञानरूपत्वं तस्य ब्रह्मणो भुवननिमित्तं भोगदातृतया परिणतस्य गुणत उपचारतः कथ्यते न मुख्यतः, भुवनस्थभोक्तृविज्ञानयोगात्। मञ्चाः क्रोशन्तीतिवद्

विज्ञानं ब्रह्मणो रूपमित्युपचारेण श्रुतयो व्याख्येया इत्यर्थः। यदाहुः—तत्रेति। तत्र भुवनस्थितानां भोगिनामात्मनामेतन्मुख्यरूपं न ब्रह्मण इति ॥ ५१ ॥

तर्हि तथाभूतभुवनप्राप्तिरूपोऽस्माकं मोक्षो भविष्यतीत्याह—

**भुवनस्य विनाशित्वं दृष्टत्वात् तद्विनाशने।**
**तद्भोक्तृणामपि भवेत् तेनैषा न ध्रुवा गतिः ॥ ५२ ॥**

भुवनविनाशाद् दृष्टो भोक्तृविनाश इति सोऽप्यध्रुवो मोक्षः ॥ ५२ ॥

तदियता परमात्मलयपक्षं प्रतिक्षिप्याधुना कैवल्यमोक्षं प्रतिक्षिपति—

**गुणतत्त्वोर्ध्वभोग्यस्य कर्मणोऽनुपलब्धितः।**
**कैवल्यमपि सांख्यानां नैव युक्तमसंक्षयात् ॥ ५३ ॥**

सांख्यानां मुक्तौ कर्मक्षयतो भोक्तृत्वनिवृत्त्यात्मकं यत् कैवल्यं तदयुक्तम्। कुतः? इत्यत्राह—असंक्षयादिति। गुणतत्त्वोर्ध्वभोग्यस्य कर्मण इति संबन्धः। यद्यपि गुणभोक्तृत्वं निवृत्तं सांख्यमुक्तानाम्, तथापि गुणतत्त्वादुपरि सांख्यापरिदृष्टरागविद्यादितत्त्वविषयाणि कर्माण्यक्षीणानीति तद्भोक्तृत्वमनिवृत्तमेव यतः। कथं तेषां कर्मणां तदा न क्षय इत्याह—अनुपलब्धित इति। उपलब्धिर्भोगः। यदुक्तम्—"भोगोऽस्य वेदना पुंसः" इति। तदभावोऽनुपलब्धिः। ततः क्रमेणोपर्युपरि स्थिततत्त्वविषयाणि कर्माणि भोक्तव्यानीति। न तावत् तैस्तानि भुक्तानि यत इत्यर्थः।

ननु "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" (भ० गी० ४।३७) इति सांख्यज्ञानात् कथमक्षीणानि तान्युच्यन्ते, गुणपुरुषान्तरख्यातिमात्रफलं सांख्यज्ञानमिति तदुपरि कर्मक्षयस्य कः प्रसङ्गः। ननु गुणनिवृत्त्यैव बुद्ध्यादिकरणानामपि निवृत्तेः कथं तेषां करणैर्विनोपभोगः। न तु गुणप्रवृत्तिः करणसंबन्धहेतुरात्मनाम्, अपि तु समत्वे सति कर्माणि। यदुक्तम्—"कर्मतश्च शरीराणि विषयाः कारणानि च" (स्वा० ३२।१३) इति। कर्माणि चोक्तानि तावत् तेषां सन्तीति कारणानामप्यनिवृत्तेः। तत्र भोक्तृत्वे शङ्का—केवलतैवेति। किं तर्हि सांख्यज्ञानात् तेषां निवृत्तम्? किमन्यन्निवर्त्यतां गुणभोक्तृत्वनिवृत्तिरेवेति ॥ ५३ ॥

अत्र सांख्यविशेषदृष्ट्या परः सर्वकर्मक्षयं तेषां भोगेन दर्शयति—

**कर्मैकं जन्मकृत् सर्वं नोपादानलयश्रुतेः।**
**इन्द्रत्वादिफलं वेदेऽप्युच्यते तत् पृथक् पृथक् ॥ ५४ ॥**

इह जन्मप्रयाणमध्ये यत्कृतं शुभाशुभकर्मजातं तत्सर्वं प्रधानोपसर्जनभावेनावस्थितं प्रयाणाभिव्यक्तं युगपदेव समुच्छ्रितमेकमेव जन्म करोति। न तु जन्मान्तरे फलदानायावशिष्टं भवति प्रतिपालयति। क्रियारूपत्वात् कर्मण आरब्धकार्यस्यानुपपत्तिरित्येकभविककर्मवादिनः। ततश्च प्रकृतजन्मनैव तेषां प्राक्तनसर्वकर्मक्षयोऽनुमितोऽभिनवकर्मक्षयश्च ज्ञानादिना जातः। तदुद्भूतो गुणतत्त्वोर्ध्वभोग्यकर्मसन्ततिः। एतन्निराकरोति—नेति। नैष

नियमः, किन्तु कानिचित् कर्माणि द्वितीयादिजन्मकर्तृण्यपि सन्ति । कुत इत्याह—उपादान इति । उपादाने प्रकृतौ कर्मणां लयः संस्काररूपेणावस्थानं श्रूयते यतः । प्रकृतौ कर्मसंस्कारस्थितः सर्व इति । ततस्तु तत्पाककालमासाद्य पुनर्भोगाय प्रवर्तत इति । न केवलमिहैव कर्म श्रूयते, यावद्वेदेऽपीत्याह—इन्द्रत्वादिफलमिति । "वाजपेयेन स्वाराज्यकामो यजेत" ( आप० श्रौ० १८।१।१ ) इति स्वाराज्यमिन्द्रत्वं तत्फलं कर्म, आदिग्रहणात् स्वर्गादिफलं निषिद्धब्रह्महत्यादि नरकफलं च श्रूयते । तत् पृथक् पृथगिति । जन्म करोतीति संबन्धः, परस्परविरुद्धफलानां युगपदेकजन्मकरणासंभवात् । न च नाशोऽस्ति कर्मण इत्यवश्यं जन्मान्तरफलदानाय तानि प्रतिपादयन्तीत्यभ्युपगन्तव्यमित्यसंभव एवैकभविककर्मवादस्य । तदुक्तम्—"फलति यदि न सर्वं तत् कदाचित् तदैव ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते" ( श्लो० वा०, चित्रा० २६ ) इति ।

नन्वेतावताऽऽरब्धकार्यं कर्मैव न संभवतीत्युक्तम्, कोऽन्यथा एतदाह, किन्तु सर्वेण धर्माधर्मात्मकेन पुरुषकर्मणा स्वफलानुग्राहिणा प्रकृतिसंस्कार एव कार्यः, तथा दृष्टत्वात् कृष्यादेरपि पुरुषव्यापारस्य । स तु तेनाप्यारब्ध एव । संस्कारस्त्वसौ स्वपरिपाकापेक्षः प्रतिबन्धकतीव्रकर्मफलभोगक्षयापेक्षया क्वचिद् विशिष्टभुवनभोगक्षयापेक्षया विरुद्धकर्मफलसहकारिसहायः केवलो वा कस्मिंश्चिज्जन्मनि कदाचित् तत्फलं निक्षेपमिव पुरुषाय दास्यतीत्यसर्वज्ञैः कर्मविपाकवैचित्र्यं नावधारयितुं शक्यत इति जन्मान्तरफलदकर्मसंभवादुक्तवदेव केवलितैव सांख्यमुक्तानामिति ॥ ५४ ॥

ननु युष्मदागमेऽपि केवलित्वमात्मनः श्रूयते, कथमित्याह—

**अङ्गुष्ठमात्रभुवने कैवल्यं संभवेत् पशोः ।**
**विज्ञानयोगसंन्यासैर्भोगाद्वा कर्मणः क्षयात् ॥ ५५ ॥**

अङ्गुष्ठमात्रादिसंज्ञकनिवासस्थाने कलाभुवने विज्ञानेन मायापुरुषविवेकविषयेण, योगेन प्रत्याहाराद्यङ्गोपकृतेन चित्तजयात्मना, मायाविवेकफलेन संन्यासेन वा कर्मणः सर्वमीश्वरायैतदितीश्वरार्पितसर्वकर्मणस्तत्फलविषयेण भोगेनैव वा सर्वकर्मक्षयात् सर्वथा भोक्तृत्वनिवृत्तिनिमित्तं कैवल्यं संभवति तत्रैव, न तु भवदुक्ताविति ॥ ५५ ॥

ननु तदेव कैवल्यमस्माकं मोक्षो भविष्यतीत्याह—

**जातं मुक्त्यर्थमात्मायमित्थमात्मलयः फलम् ।**
**उपादाने लयस्यैव दृक्क्रियागुणसंक्षयात् ॥ ५६ ॥**

यत्तदपि कैवल्यं मुक्तिरिष्टा, तदपि हि मलसद्भावादात्मनः प्रत्युत अकलावस्थावत् किञ्चिज्ज्ञत्वकर्तृत्वयोरप्यभावात् फलमात्मनाश एव भवतामपि गुणोपादानाव्यक्तलयो मोक्षो यतः ॥ ५६ ॥

एवं सांख्यपक्षमप्याभास्योपसंहर्तुं सर्वान् प्रत्याह—

**मूढानां ज्येष्ठमल्लास्ते येषां स्वात्माऽपि नश्यति ।**
**ज्ञातॄणां पण्डितंमन्याः शिखासंक्रान्तिवादिनः ॥ ५७ ॥**

त एते सर्ववादिनो मूढप्रधानाः श्रेयोऽर्थिभिर्दूरतरं परिहार्याः, येषामश्रेयस्येवात्मनाशे तत्सदृशे वा परश्रेयोबुद्धिः, अपुरुषार्थभूतः सर्वेषां मोक्ष इत्यर्थः। तथाहि—"ज्ञातुर्ज्ञेयस्य[1] वा ज्ञप्तेरभावात् सर्ववादिनाम्। आत्मनाशसमो मोक्षो ज्ञत्वव्यक्तौ परत्र तु ॥" इति। ननु संक्रान्तिवादिनां नात्मनाशो विमुक्तावित्याह—ज्ञातृणां पण्डितंमन्या इति। शिखा शक्तिः, तत्संक्रान्तिवादिनो मुक्तावपण्डिता एव, यतो नास्मात् प्रसङ्गान्मुच्यत इत्युक्तम्—"शम्भुरेव हि तत्रापि सर्वं वेत्ति करोति च" (श्लो० २९) इति ॥ ५७ ॥

यद्येवं सर्वेषामेव मोक्षशास्त्राणां मुक्तवद् बाधितत्वात् परस्परविरोधाच्च किं प्रामाण्यम्? एवं नेत्याह—

**वस्तुन्यूनत्वमन्येषां रागादूर्ध्वमभाषणात्।**
**तेन मायानतीतत्वाज्ज्ञातारः सद्मसु स्थिताः ॥ ५८ ॥**

नहि सर्वेण प्रमाणेन सर्वार्थेन भवितव्यमित्यल्पार्थप्रकाशकत्वेन प्रत्यक्षादिवदेवान्यान्यपि प्रमाणान्येव। कथं स्वल्पार्थदर्शित्वमेषामित्याह—रागादूर्ध्वमभाषणादिति। रागविद्यादितत्त्वजातं च तदूर्ध्वप्रक्रियया गुणादिभ्यस्तदूर्ध्वं चितः। ऊर्ध्वशब्दसमानार्थोऽयमूर्ध्वशब्दः। तस्य रागादूर्ध्वं समस्ततत्त्वजातस्यानुक्तेर्न्यूनदर्शित्वं तेषाम्। यद्येवमागमान्तरैः किं प्राप्यत इत्याह—तेन मायानतीतत्वादिति। येन रागादूर्ध्वं तैर्न दृष्टं तेन मायातत्त्वादधस्ते ज्ञातारो दर्शनान्तरमुक्तास्तत्त्वभुवनस्कन्धेषु लीनाः। कस्य कस्मिन् लय इति चेत्, तदेतद् दर्शितमागमप्रामाण्योपन्यासे ॥ ५८ ॥

स्वेन ज्ञानकाण्डे उपसंहर्तुमाह—

**इत्येवं वादिगीतानि फलान्युक्तानि लेशतः।**
**तत्साधनेषु शिष्याणामप्रवृत्तिफलं प्रति ॥ ५९ ॥**

इति सद्योज्योतिःशिवाचार्यकृता परमोक्षनिरासकारिका
समाप्ता ॥

सर्ववादिसिद्धानि फलानि मुक्तिलक्षणान्येव संक्षेपेणोक्तानि। किमर्थं प्रत्युक्तमिति चेदेतदुक्तम्। फलसाधनं शास्त्रमनवधार्य निकृष्टफले प्रवर्तन्त इति श्रेयोऽर्थिभिरेवाऽयोगव्यवच्छेदेनात्रैव प्रवर्तनीयम्। अस्माद्धि पररूपं निःश्रेयसं संपाद्यत इति।

---

१. मतङ्गपारमेश्वरवृत्तौ (वि० ५।६०-६१) "अस्माभिरन्यत्र" इत्युक्त्वोद्धृतमेतद्वचनं शिवयोगसारे (पृ० ३३) तदुक्तं मन्त्रवार्त्तिकटीकायामित्येवं स्मर्यत इति तत्रस्था (पृ० १२५) १९ संख्याका टिप्पणी द्रष्टव्या।

एतद्रौरववृत्तिकृन्मतधिया दीक्षाक्रमात् कारिकाः
सर्वान्यागममोक्षदूषणगता गाम्भीर्यतो नैव याः ।
स्वल्पज्ञैरवगाहिताः किल यतस्तद्रामकण्ठस्त्विमं
तन्नारायणकण्ठसूनुरकरोदासां विवेकं स्फुटम् ॥

**इति श्रीमद्भट्टनारायणकण्ठात्मजश्रीभट्टरामकण्ठविरचिता**
**परमोक्षनिरासकारिकावृत्तिः समाप्ता ॥**

●

# अष्टप्रकरणे श्लोकार्धानुक्रमणी

——

# अष्टप्रकरणे सटीके स्मृतानि ग्रन्थग्रन्थकारमतमतान्तराणि



१. श्वेताश्वतरोपनिषदिहारणपदेन स्मृता ।

१. ईश्वरगीता-भगवद्गीताभ्यां भिन्ना।

——

# संकेत-सूची

| | |
|---|---|
| अ व. | अभियुक्तवचनम् |
| अ. शि. | अघोरशिवाचार्यः |
| अ. शिखो. | अथर्वशिखोषनिषत् |
| अ. शिर. | अथर्वशिर उपनिषद् |
| अ. सि. | अध्वसिद्धिः |
| आ. | आगमः |
| आ. का. | आर्याकारः |
| आ श्रौ. | आपस्तम्बश्रौतसूत्रम् |
| ई. उ. | ईशावास्योपनिषत् |
| ई गी. | ईश्वरगीता |
| ऋ. | ऋग्वेदः |
| ऐ. उ. | ऐतरेयोपनिषत् |
| क. उ. | कठोपनिषत् |
| कि. | किरणागमः |
| कि. वि. | किरणागमविद्यापादः |
| कु. भ | कुमारिलभट्टः |
| कू. पु. | कूर्मपुराणम् |
| के उ. | केनोपनिषत् |
| गी. | गीता |
| गु. प. | गुरुदेवपद्धतिः |
| गु. प क्रि. | गुरुदेवपद्धतिक्रियापादः |
| च. ज्ञा. | चन्द्रज्ञानम् |
| छा. उ. | छान्दोग्योपनिषत् |
| त. त्र. नि. | तत्त्वत्रयनिर्णयः |
| त. सं. | तत्त्वसंग्रहः |
| तै. आ. | तैत्तिरीयारण्यकम् |
| तै. उ. | तैत्तिरीयोपनिषत् |
| तै. सं | तैत्तिरीयसंहिता |
| दी. | दीक्षोत्तरागमः |
| दे. म. क. | देवीमन्त्रकल्पः |
| धा. | धातुपाठः |
| न. का. | नन्दिकेश्वरकारिका |
| प्र. सा. | प्रपञ्चसारः |
| ना. का. | नादकारिका |
| ना. पु. | नारदीयमहापुराणम् |
| नि. | निरुक्तम् |
| न्या. बि. | न्यायबिन्दुः |
| न्या. भा. | न्यायभाष्यम् |
| न्या. म. | न्यायमञ्जरी |
| न्या. वि. | न्यायविदः |
| न्या. सू. | न्यायसूत्रम् |
| प. मो. का. | परमोक्षनिरासकारिका |
| प. सं. | पराख्यसंहिता |
| प. सा. | परमार्थसारः |
| पु. | पुराणम् |
| पौ. | पौष्करागमः |
| प्र. प. | प्रकरणपञ्चिका |
| प्र. भा. | प्रशस्तपादभाष्यम् |
| प्र. म. | प्रयोगमञ्जरी |
| प्र. वा. | प्रमाणवार्त्तिकम् |
| प्र सा | प्रपञ्चसारः |
| बृ. उ | बृहदारण्यकोपनिषत् |
| बृ. वा. | बृहदारण्यकवार्त्तिकम् |
| बृ. पा. | बृहस्पतिपादः |
| बृं | बृंहणी |
| ब्र. सि. | ब्रह्मसिद्धिः |
| ब्र. सू. | ब्रह्मसूत्रम् |
| भ. | भट्टपादः |
| भ. गी. | भगवद्गीता |
| भ. स्तो | भक्तिस्तोत्रम् |
| भा. | भार्गवागमः |
| भु क. | भुवनेश्वरीकल्पः |
| भू. त. | भूततन्त्रम् |
| भो. का. | भोगकारिका |
| भो. प्र. | भोगप्रकरणम् |

| | |
|---|---|
| म. ना. उ. | महानारायणोपनिषत् |
| म. पा | मतङ्गपारमेश्वरम् |
| म. पा. क्रि. | मतङ्गपारमेश्वरक्रियापादः |
| म. पा. यो. | मतङ्गपारमेश्वरयोगपादः |
| म. पा. वि. | मतङ्गपारमेश्वरविद्यापादः |
| म. भा. | महाभारतम् |
| म. भा. अ. | महाभारत-अनुशासनपर्व |
| म. भा. उ. | महाभारत-उद्योगपर्व |
| म. वा. टी. | मन्त्रवार्त्तिकटीका |
| म. स्मृ. | मनुस्मृतिः |
| मु. उ. | मुण्डकोपनिषत् |
| मृ. क्रि. | मृगेन्द्रागमक्रियापादः |
| मृ. वि. | मृगेन्द्रागमविद्यापादः |
| मै. उ. | मैत्रायण्युपनिषत् |
| मो. का. | मोक्षकारिका |
| यो सू. | योगसूत्रम् |
| रा. | रामायणम् |
| रा. क. | रामकण्ठः |
| रौ. | रौरवागमः |
| रौ. वि. | रौरवागमविद्यापादः |
| रौ. सू. | रौरवसूत्रम् |
| लि. पु. | लिङ्गपुराणम् |
| लि. सू. | लिङ्गसूक्तिः |
| लिङ्गो. | लिङ्गोद्भवः |
| वा. का. | वार्त्तिककारः |
| वा. प. | वाक्यपदीयम् |
| वा. सं. | वाजसनेयसंहिता |
| वि. | विद्याधिपतिः |
| वि. पु. | विष्णुपुराणम् |
| वृ. का. | वृत्तिकारः |
| व्या. | व्यासाक्षिणी |
| श. ब्रा. | शतपथब्राह्मणम् |
| शा. भा. | शाबरभाष्यम् |
| शि. ध. | शिवधर्मः |
| शि. धर्मो | शिवधर्मोत्तरम् |
| शि. पु. | शिवपुराणम् |
| शि. पु वा. | शिवपुराणवायवीयसंहिता |
| शि. सू. | शिवसूत्रम् |
| शि. सू वा. | शिवसूत्रवार्त्तिकम् |
| शै र. | शैवरहस्यम् |
| श्लो. वा. | श्लोकवार्त्तिकम् |
| श्लो.वा.चि. | श्लोकवार्त्तिकचित्राक्षेपपरिहारः |
| श्लो.वा नि. | श्लोकवार्त्तिकनिराकारवादः |
| श्लो. वा. प्र. | श्लोकवार्त्तिकप्रत्यक्षप्रकरणम् |
| श्वे. उ. | श्वेताश्वतरोपनिषत् |
| ष. सा. | षट्साहस्रिका |
| स. ज्ञा. | सर्वज्ञानोत्तरम् |
| सा. का. | सार्धत्रिशतिकालोत्तरम् |
| सां. का. | सांख्यकारिका |
| सां. सू. | सांख्यसूत्रम् |
| सि. आ. | सिद्धान्तागमः |
| सि. हृ. | सिद्धान्तहृदयम् |
| सु. | सुवर्णाक्षः |
| सू. स्वा. | सूक्ष्मस्वायम्भुवम् |
| स्फो. सि. | स्फोटसिद्धिः |
| स्वा. | स्वायम्भुवागमः |

——

# अष्टप्रकरणटीकोद्धृतवचनानां श्लोकार्धानुक्रमणी



---

★ तारकाङ्कितपृष्ठेषु वचनपरिचयो द्रष्टव्यः ।

१. सा. का. ६९ पृष्ठस्था ११ संख्याका टिप्पणी द्रष्टव्या । शाबरभाष्येऽप्युपलभ्यते ।

१. आकरो नोपलभ्यत इति म. पा. वि. ४४ पृष्ठस्था सप्तमी टिप्पणी ।

१. इदमर्धं तदुक्तं योगसंग्रह इति योगसारे ४९ तमे पृष्ठे द्रष्टव्यमिति म. पा. वि. ७१ पृष्ठस्था २० टिप्पणी ।

२. पाणिनीयशिक्षायां (वृद्धपाठे) आपिशालिशिक्षायां च दृश्यत इति सा. का. ९ पृष्ठस्था २० टिप्पणी ।

३. म. पा. वि. ६,७,४३,२५५ पृष्ठेषु एतत्सम्बद्धां टिप्पणीं पश्यत ।

४. आकरो नोपलभ्यत इति सा. का. १४९ पृ. ७ टिप्पणी ।

१. म. पा. वि. रामकण्ठवृत्तौ वारद्वयं ( पृ. १५०, १५७ ) वचनमेतदुद्धृतं बौद्धमतसमालोचनावसरे । तन्त्रालोकविवेकेऽपि ( ३।१०० ) द्रष्टव्यम् ।

१. म. पा. वि. ३३६ पृष्ठस्था ७ टिप्पणी द्रष्टव्या ।

१. आकरो नोपलभ्यत इति म. पा. वि. १७२ पृ., २ टि ।

२. शतपथब्राह्मणादिग्रन्थेषु वेदमन्त्रोद्धरणावसरे एतदनुकारं वाक्यं प्रयुज्यते ।

१. तन्त्रालोकविवेके वारद्वयं (१।२३; ३।३०) श्लोकोऽयमुद्धृतो विज्ञानवादप्रसङ्गे ।
२. आकरो नोपलभ्यत इति म. पा. वि. ३५८ पृ., ५ टि. ।

१. लौकिकन्यायसाहस्री (पृ. १९७) द्रष्टव्येति म पा. वि. १४१ पृ., ३ टि ।
२. आकरो नोपलभ्यत इति म. पा. वि. ११६ पृ., १ टि. ।
३. आकरो नोपलभ्यत इति म. पा. वि. ५७९ पृ., ८ टि. ।

१. आकरो नोपलभ्यत इति म. पा. वि. १० पृ., १६ टि. ।

२. पाठभेदेन सह वचनमेतदुपलभ्यते प्रशस्तपादभाष्ये कालप्रकरणे ।

१. आकरो नोपलभ्यत इति म. पा. वि. ४४ पृ., ७ टि. ।

२. अत्रैव ३४७ पृष्ठस्था २ टिप्पणी द्रष्टव्या ।

---

१. आकरो नोपलभ्यत इति म. पा. वि. १७२ पृ., २ टि. ।
२. आकरो नोपलभ्यत इति म. पा. वि. ३९६ पृ., ८ टि. ।

१. तन्त्रालोकविवेके (३।२८२) ब्रह्मवादिवचनत्वेनोद्धृतम् ।

१. आकरो नोपलभ्यत इति म. पा वि. ३६१ पृ., ७ टि. ।

१. म. पा. वि., पृ ४२ वचनमेतद् दृश्यते ।

२. अत्रैव ३४४ पृष्ठस्था टिप्पणी द्रष्टव्या ।

३. तन्त्रालोकविवेके (३।२८२) ब्रह्मवादिवचनत्वेनोद्धृतम् ।

१. आकरो नोपलभ्यत इति प. मा. वि. ११६ पृ., १ टि. ।

●

१. अत्रैव ३४२ पृ., २ टि. द्रष्टव्या ।

# विशेषशब्दार्थसूचिका

**अकलः**—अकलोऽपि द्विविधः। तत्र प्रलयेन कलादेरुपसंहृतत्वान्मलकर्मयुक्तः प्रलयाकलः, विज्ञानयोगादिना कर्मक्षयेण केवलमलमात्रयुक्तो विज्ञानकेवलः १३९

**अचित्**—अचितां बिन्दुमायातत्कार्याणाम् ११५

**अजम्**—अजं नित्यनिर्मलत्वात्। शरीरादियोगात्मनाऽपि जन्मना रहितम्। अनेन चास्य नित्यत्वं सिद्धम्। अस्य हि जगत्कर्तुरनित्यत्वे जन्मादियोगित्वे वाऽचेतनत्वमनवस्थानं च स्यात् ११५

**अज्ञानम्**—अज्ञानं ज्ञानविपर्ययः, असम्यग् ज्ञानमिति यावत्। तत् त्रिविधम्—विपर्ययो विकल्पो निद्रा चेति ८८; परमेश्वरतत्त्वानावेदकमज्ञानम् ८८; द्विविधं ह्यज्ञानम्—प्रागनुभूतसादृश्यस्य बुद्ध्यविवेकाध्यवसायात्मकं शुक्तिकादौ रजतादिज्ञानम्। काचकामलादिद्रव्यजन्यद्विचन्द्रादिविषयं विकल्पज्ञानं च। तत्र पूर्वं नेदं रजतमिति विवेकाध्यवसायज्ञानान्निवर्तते। यत्पुनर्द्रव्यजन्यम्, तस्य स्वकारणद्रव्यनिवृत्त्यैव निवृत्तिः, न ज्ञानात् २५६

**अणिमा**—अणुत्वम् अणिमा परमाणुवदवस्थानम् ८०

**अणुः**—पशवो ह्यणवः १३; किञ्चित्कर्तृत्वादिनाऽणुत्वम्, न परमाणुवदवस्थानात् १६; अणवश्चात्मानः प्रेर्याः। अनेन च पशुत्वयोगिनां विज्ञानकलादिभेदभिन्नानां बद्धानां पशुपदार्थत्वमुच्यते २३; अणूनां संसार्यात्मनाम् ५६, १२६; सांसिद्धिका वैनयिका प्राकृताश्च (गुणाः) भवन्त्यणोः २१६; महामोहोद्भवात् पूर्वमणुरेष निरञ्जनः २३५

**अधर्मः**—अधर्मोऽनभ्युदयानिःश्रेयसहेतुः ८८

**अध्वपञ्चकम्**—मलादिजाः षडध्वानस्तत्त्वाद्यास्ते च पञ्चधा। निवृत्त्यादिविभागेन तदुक्तं ह्यध्वपञ्चकम्॥ १७; अध्वपञ्चकं पाश इति केचित् पठन्ति....अध्वनां षण्णां तत्त्ववर्णमन्त्रभुवनपदकलानां पञ्चकमध्वपञ्चकम् १७

**अध्वव्याप्तिः**—अथाध्वनां क्रमादेषां व्याप्तिः सम्यग् निगद्यते १७-२०; त्यक्त्वैकमेकं सम्प्राप्य कलादिष्वजरामरम्। पदमासाद्यते पुंभिरतोऽध्वानः कलादयः॥ १६४; अन्यस्यान्यत्र सद्भावः सर्वदाऽव्यभिचारिणी। व्याप्तिराप्तपदार्थात्मलाभस्थितिनिबन्धनम्॥ १६८

**अनन्तः**—अनन्तस्य सर्वोत्कृष्टत्वम् १३०-१३१; अनन्तः परमेश्वरः १३०, १५३; प्रोक्तोऽनन्तोऽसिते प्रभुः १५६; विद्याशरीरो भगवाननन्तः क्षोभकः १५७, १६०; अनन्तः परिणामस्य कर्ता न वृत्तेः १६०; अनन्तो मायायाः क्षोभकः १७४; अनन्तं प्रेर्य विद्याराजाधिराजेशो जगत् कुरुते २५२; सूक्ष्मादिनायकोऽनन्तः पञ्चकृत्यकारी २६३; अनन्तः पतितुल्यतां प्राप्नोति २६४; **विद्येशशब्दोऽपि द्रष्टव्यः**।

**अनन्ताद्यष्टकम्**—अनन्तसूक्ष्मौ शिवतमेकनेत्रैकरुद्रकाः। त्रिमूर्तिपूर्वः श्रीकण्ठः शिखण्डी च ततोऽष्टमः॥ एते विद्येश्वरास्त्वष्टौ ५३

**अनादिमुक्तः**—अनादिमुक्तः स्वभावसिद्धनित्यनिर्मलनिरतिशयार्थज्ञानक्रियाशक्तियुक्त इत्यर्थः २५

**अनाहतबिन्दुः**—अनाहतबिन्दुरिति शुद्धाध्वयोनेर्महामायायाः संज्ञा। तस्याश्च नादबिन्द्वादिक्रमेण शब्दोत्पत्तिरिति १७८

**अनुग्रहः**–अनुग्रहोऽपवर्गः ११; अनुग्रहकरणं मोक्षादि २५, २५२; अनुग्रहः पाशतिरोधानेनात्मनां परापरमोक्षदानम् २६; सुखदुःखादीनामनुग्रहरूपत्वम् ५६; चिदनुग्रहस्त्वयं किल यन्मोक्षः शिवसमानतारूपः। सोऽनादित्वात् कर्मण इह भोगमृते न याति संसिद्धिम्॥ ५७; पाशहरणात्मकोऽनुग्रहो रौद्र्याः (व्यापारः) २५३

**अनुमानम्**—लिङ्गादुपजायमानं लिङ्गिविज्ञानमनुमानम् १५; तत् त्रिविधम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं चेति ८३; तत्पुनर्द्विविधम्—स्वार्थं परार्थं च ८३; अनुमानप्रमाणसाधनम् १०८, २१८

**अनुरागः**—अनुरागश्चात्र सुखाध्यवसायाकारबुद्धिवृत्तिनिष्ठतया तत्संवित्तिस्तदनुभव एव, न तु प्रतिबिम्बात्मताऽऽत्मनः, परिणामिताप्रसङ्गात् २०४

**अनैश्वर्यम्**—अणिमादिप्रादुर्भावविरोधी बुद्धिधर्मोऽनैश्वर्यम् ८८

**अन्तःकरणम्**—अन्तःकरणशब्देन मनोबुद्ध्यहङ्कारवाचिनाऽन्यान्यपि पुंसो भोगक्रियायामन्तरङ्गानि कलाकालनियतिविद्यारागप्रकृतिगुणाख्यानि सप्त तत्त्वान्युपलक्ष्यन्ते ३१; अन्तःकरणं त्रेधा बुद्धिरहङ्कारचेतसी चेति ९४; अन्तःकरणं बुद्ध्यहङ्कारमनोरूपम्।...अन्तःकरणस्य प्राणादिवृत्त्या शरीरधारणलक्षणं कार्यम् ९५; इच्छासंरम्भबोधवृत्त्यन्यत्। अन्तःकरणं त्रिविधं चित्ताहङ्कारबुद्धिनिर्वाच्यम् ११७; इच्छासंरम्भबोधाख्या नोक्तैः सिद्ध्यन्ति साधनैः। तत्सिद्धौ करणान्यन्तर्मनोऽहङ्कारबुद्धयः॥ २०९; अन्येऽन्तःकरणं प्राणमिच्छन्ति व्यक्तचेतनम् २१०; क्लृप्तिर्मतिः स्मृतिश्चेति जाता भिन्नार्थवाचकाः। इच्छासंरम्भबोधाख्यास्तेनान्तःकरणं त्रिधा॥ २१४; मोहमदादयोऽन्तःकरणसंस्थानां गुणानां वृत्तयः २३७

**अन्वयः**—एकजातिसमावेशोऽन्वयः समानरूपत्वम्, ऐकात्म्यमिति यावत् १०२; इयं गौरियं गौरित्याद्यनुवृत्तिप्रत्ययहेतुरन्वयः। स चास्मिन् शैवे शास्त्रे व्यक्तिव्यतिरिक्तजात्यनभ्युपगमेऽपि कथञ्चित् सादृश्यमात्रेणोच्यते १०२

**अपरमुक्तिः**—मायोत्तीर्णत्वाद् मलरहितत्वाच्च विद्याविद्येश्वरपदप्राप्तेरपरमुक्तित्वम् २४

**अपवर्गः**—सुखस्यैव मुख्यपुरुषार्थत्वेनानन्दरूपताऽपवर्गस्याश्रयणीया ८; शरीराद्युपाधिविरहाज्जीवात्मनः शिवस्वभावस्य घटाकाशस्य तदुपाधिघटविनाशे परमाकाश इव परमेश्वरे शिवे लयोऽपवर्गः ११; द्विविधमिह शिवज्ञानमपवर्गकारणम्—इतरव्यावृत्त्या, स्वरूपतश्चेति १२; महत्सौख्यनामकोऽपवर्गः १५; शुद्धचित्तसन्तानोत्पत्तिरपवर्ग इति सौगताः....वैभाषिकसौत्रान्तिकज्ञानाद्वैतवादिनो बौद्धाः १०९-११०; शुद्धचित्तसन्ततेरपि विनाशोऽपवर्ग इति शून्यवादिनः ११०

**अपानः** (वायुः)—अपनयनमधःप्रापणं मलादेरपानस्य (व्यापारः) २११

**अपूर्वः**—कर्मणो धर्माधर्मात्मनोऽनुष्ठानरूपस्य तत्क्षणमेव नाशात् तज्जन्योऽपूर्वाख्यः संस्कारः कालान्तरफलश्रुत्यन्यथानुपपत्त्या कल्प्यते ११८

**अभावः**—अभावो न प्रत्यक्षानुमानागमेभ्यः प्रमाणान्तरम् ८७

**अमलः**—मुक्तस्त्वमल एव।....अथात्मा विमलो बद्धः पुनर्मुक्तश्च दीक्षया। विज्ञेयः स त्रिधावस्थः केवलः सकलोऽमलः॥ १३९

**अर्णः**—अर्णश्च वर्ण आकाशवायुप्रभवः श्रोत्रग्राह्यः स्थूलशब्दः।....स्थूलं शब्द इति प्रोक्तम् १५२

**अर्थपञ्चकम्**—अर्थपञ्चकं पाशः १३; अर्थानां मलकर्मसूक्ष्मस्थूलमायापाशानुग्राहक-शिवशक्तीनां पञ्चकमर्थपञ्चकम् १६; मलं कर्म च माया च मायोत्थमखिलं जगत्। तिरोधानकरी शक्तिरर्थपञ्चकमुच्यते॥ १६; अर्थपञ्चकमित्यनेन मलरोधशक्तिकर्ममायाबिन्दवः प्रोच्यन्ते २३

**अर्थापत्तिः**—अर्थापत्तेरनुमानेऽन्तर्भावः ८६-८७

**अलिङ्गं तत्त्वम्**—शिवो देवः शिवा देवी शिवं ज्योतिरिति त्रिधा। अलिङ्गमपि तत्तत्त्वं लिङ्गभेदेन कथ्यते॥ १०

**अवकाशः**—अवकाशः स्थानप्रदानं व्योम्नो व्यापारः ९७; अवकाशदानमाकाशस्य व्यापारः १००; अवकाशस्य आस्पदस्य दानमाकाशवृत्तिः ११६, २०५

**अवतारः**—अवतरणं चात्रोद्योगावस्थापरित्यागेन प्रवृत्तत्वम् १९५

**अवस्थात्रयम्**—अधिकारी च भोगी च लयी स्यादुपचारतः १३२, १५३, १८०; तत्राक्षुब्धे भवेद् भोगो बिन्दावानन्दरूपिणि। क्षुब्धेऽधिकारो देवस्य लयोऽति-क्रान्तबिन्दुकः॥ १७९, १९२-१९६; एषोऽर्थश्च **श्रीमन्मतङ्गे** विस्तरेण दर्शितः १९३

**अविवेकः**—अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मप्रतिपत्तिरूपः पुंसामविवेकः १८९

**अवैराग्यम्**—अवैराग्यं दृष्टानुश्रविकविषयरागः ८८

**अव्यक्तम्**—अव्यक्तं मायातः ४४; पुरुषस्य हि भोगार्थं कलैव तस्मात् प्रसूयतेऽव्यक्तम्। अनभिव्यक्तगुणत्वादव्यपदेश्यं तदव्यक्तम्॥ ८०; पुरुषस्य सुखाद्यनुभवाय माया-तत्त्वादेवाव्यक्तमुत्पद्यते।... अनभिव्यक्तसत्त्वादिगुणवत्त्वादिदं तत्त्वमव्यक्तमित्यु-च्यते। ८०; **सांख्या**भ्युपगतप्रकृतिवन्नित्यमेवेदमस्तु। तन्न, प्रकृतेश्च प्रतिपुरुषं भेदेन जडत्वे त्वनेकत्वात् कार्यत्वं सिद्धम् ८०; प्राधानिकं तत्त्वं कलातत्त्वात् ११९; पृथगेवमव्यक्तम्। अव्यक्तान्नादः सूक्ष्मः २४२

**अव्याकृतम्**—यत्र तिष्ठन्त्यणीयांसः क्षेत्रज्ञाः कर्मभिः सह।....तदव्याकृतमुच्यते॥ २८०

**अशक्तिः**—इन्द्रियवैकल्यात् तदुपलक्षितशरीरवैकल्याद्वा क्लैब्यबाधिर्यादिरूपं यदसाम-र्थ्यम्, सेयमशक्तिस्तामसाद् वर्गाद् राजसेनेषत्संपृक्ताद् भवति २१७

**अशुद्धम्**—अशुद्धम् अव्यक्तादिपृथिव्यन्तम् ४५; अव्यक्तप्रभृतीनां गुणैश्च सुखदुःखमोह-रूपतयाऽन्वयोऽशुद्धतत्त्वरूपेण १०१; अव्यक्तादीनां बाह्यतया चित्सम्बन्धरहितानां सुखदुःखमोहरूपत्वेन गुणैरन्वयः, तेन तेषां केवलाशुद्धत्वमिति १०२; अशुद्धयोस्तु तत्त्वभुवनाध्वनोर्मायोत्पन्नत्वात् १६८

**अस्मिता**—अस्मिताऽहङ्कारः २३९

**अहङ्कारः**—बुद्धितत्त्वादहङ्कारस्य, अहङ्कारान्मनोबुद्धीन्द्रियकर्मेन्द्रियतन्मात्राणामुद्भवः ४५; स्यात् त्रिविधोऽहङ्कारो जीवनसंरम्भगर्वरूपोऽयम्। संभेदादस्य सतो विषयो व्यवहार्यतामेति ॥ ८९; तत्र जीवामीत्याकारो जीवनाऽहङ्कारः। अहं करोमीति संरम्भाहङ्कारः। प्रबलोऽस्मि रूपवानित्यादि गर्वाहङ्कारः। ८९; आत्मा तावन्निर्गुणो निष्क्रियश्चिन्मात्र उदासीनस्वभावः। तस्मादसौ न शृणोति, न पश्यति, न च करोतीत्ययमहङ्कारः श्रोत्रादिकृतश्रवणादिकं वागादिकृतवचनादिकं बुद्धिकृताध्यवसायादिकं चित्तकृतसंशयादिकं चाहं शृणोमीत्यादिभिरहं वच्मीत्यादिभिरहमध्यवस्यामीत्यादिभिश्च वृत्तिभिरात्मनि साक्षिणि संबध्नाति। तेनाहङ्काराख्यं तत्त्वमभ्युपगन्तव्यम्। ८९-९०; आहङ्कारिको हि प्रयत्नात्मकः संरम्भः।....संरम्भोऽहङ्कृतेर्वृत्तिः। प्राणादिवायुप्रवृत्तिहेतुत्वेन जीवनमपि तद्धेतुकमेव।....संरम्भाद्यस्य चेष्टन्ते शारीराः पञ्च वायवः।....तथा गर्वोऽपि ग्राह्याध्यवसायाद् बुद्धिकार्याद् भिन्नोऽहमिति ग्राहकाध्यवसायोऽपि तत्कार्यमेव। अत एतैस्त्रिभिरहङ्कारसिद्धिः ९०; सात्त्विकराजसतामसभेदेन स जायते पुनस्त्रेधा। स च वैकारिकतैजसभूतादिनामभिः समुच्छ्वसिति ॥ ९०; **केचिद्वै**परीत्यमिच्छन्ति, स च तैजसवैकारिकभूतादिकेति ग्रन्थपाठश्च इत्याहुः ९०; तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि। भूतादेस्तन्मात्राण्येषां सर्गक्रमोऽयमेतस्मात् ॥ ९०; तैजसादहङ्काराद् राजसाच्चलस्वभावं मन उत्पद्यते, वैकारिकात् सात्त्विकात् प्रकाशलाघवोपेतमिन्द्रियदशकम्। भूतादेस्तामसात् तमोबहुलानां तन्मात्राणामुद्भव इति। तैजसात् सात्त्विकात् स्वच्छं लघूत्पद्यते मन **इत्यन्ये**। सात्त्विकसहकृताद् वैकारिकाद् राजसाद् बुद्धीन्द्रियाणामुत्पत्तिः, ज्ञानसाधनत्वात्। तामससहकृताद् वैकारिकात् कर्मेन्द्रियाणामिति। **सांख्याः** सात्त्विकादेवाहङ्कारादेकादशेन्द्रियाणाम्, तामसात् तन्मात्राणामुत्पत्तिं मन्यन्ते। ९१; तैजसादहङ्कारान्मनोबुद्धीन्द्रियाणि जायन्ते, वैकारिकात् कर्मेन्द्रियाणि, भूतादेरपि तन्मात्राणीत्यर्थः। न च तैजसतो मन एव वैकारिकादुभयरूपाणीन्द्रियाणीति व्याख्येयम्। ९२; उत्पत्तिरहङ्काराच्चित्तबहिष्करणभूतयोनीनाम्। ११७; तत्र मनसो बुद्धीन्द्रियाणां च सात्त्विकात् तैजसाख्यादहङ्कारस्कन्धादुत्पत्तिः, कर्मन्द्रियाणां तु राजसाद् वैकारिकाख्यात्, भूतयोनीनां च तन्मात्राणां तामसाद् भूतादिसंज्ञादेवं त्रिविधादहङ्कारादेषामुत्पत्तिः। ११८; बुद्धीन्द्रियद्वारेण तैजसेनाहङ्कारेणात्मनो ज्ञानशक्तिरुन्मील्यते। वैकारिकेणाऽपि कर्मेन्द्रियद्वारेण क्रियाशक्तिरुन्मील्यते ११९; महतोऽहङ्कारस्य (उत्पत्तिः) ११९; जीवनाय शरीरधारणार्थं प्रणयनापनयनादिपञ्चकर्मकृतस्तत्तद्वृत्तिभेदेन प्राणापानादिसंज्ञाभाजो वायोः प्रवर्तकः संरम्भात्मको यः प्रयत्नः, सोऽहङ्कारवृत्तिरित्यहङ्कारसिद्धिः २११; अहङ्कारवृत्त्यात्मकप्रत्ययोऽर्थप्रत्ययादन्यः २११; बुद्धीन्द्रियकर्मेन्द्रियतन्मात्रवर्गाणां मनःसहितानामहङ्कारादेवोत्पत्तिः २१२

**आकाशः**—आकाशमत्र परमं भूतम्। तच्छब्दगुणम्, शब्दतन्मात्रादुत्पन्नत्वात्।....तस्य वर्णमनिर्देश्यं शुद्धस्फटिकसन्निभमिति। **अपरे** चन्द्रमण्डलाकारं मण्डलमिति ९८;

**आत्मोपकारः**—शुद्धात्मा····आत्मनः परेषां च उपकारार्थं तमेव (शिवमेव) विविधैर्यज्ञैर्यजति।··· तत्राचार्या विद्येश्वरादयश्चाधिकारक्षयादात्मोपकारार्थं भोगमोक्षदानादिपरोपकाराय च यजन्ति, साधकः पुत्रको वाऽऽत्मन एव भोगमोक्षार्थमिति भेदः १२६-१२७

**आदानम्**—आदानरूपः संहारो ज्येष्ठायाः (व्यापारः) २५३

**आनन्दः**—सततैकरूपनित्यनिरतिशयात्मस्वभावसुखमानन्दशब्दवाच्यम् ६; प्रीत्यानन्दशब्दयोर्भिन्नार्थत्वात् ६; आनन्दविप्रलब्धानामानन्दोपहिता चितिः १५०

**इच्छा**—इच्छाद्याः शिवशक्तयः ४८-४९; इच्छाशब्देन संकल्पाख्यमवधानमेकाग्रतापरपर्यायमुच्यते ११८; इच्छाशब्देन एकाग्रतापरपर्यायोऽवधानात्मकः संकल्पो विवक्षितः। स मनसो वृत्तिः २०९; इच्छा न मनोवृत्तिरस्मदादीनामपि, किन्तु बुद्धयभिव्यङ्ग्या ज्ञानशक्तिरिव मनोऽभिव्यङ्ग्या क्रियाशक्तिरेवेत्युक्तम**स्माभिर्मन्त्रवार्त्तिकटीकायाम्**—शाक्तस्य हि तन्मनसस्त्विच्छा ह्येषा क्रियाशक्तिः २४६; इच्छाशक्तिः पराशक्तिः प्रक्लृप्ता नान्य ईश्वरः २४९

**इन्द्रियम्**—अतीन्द्रियाणामिन्द्रस्यात्मनश्चिह्नत्वेनेन्द्रियशब्दवाच्यानां सद्भावः सिद्धः ९४; इन्द्रियाणां **वैशेषिका**दिभिरभिमतस्य भौतिकत्वस्य निरासः ९४, ११९

**ईशित्वम्**—ईशित्वमीशभावो भूतभौतिकानां प्रभवादिहेतुत्वम् ८८

**ईश्वरः**—ईश्वरवादो **मृगेन्द्रवृत्तिदीपिकाया**मुक्तः ७; जगत्कर्तृत्वानुमानेनेश्वरसिद्धिः ५८-६८; ईश्वरशरीरसंबद्धानि विविधानि मतानि ६५; सर्वज्ञत्वादिधर्मिका प्रकृतिरेवेश्वर इति **वेदान्तविदः** २४९; भोक्तृभोग्यादिभेदभिन्नाच्चेतनाचेतनाद् विलक्षणात् कार्यादनुमीयमानं सर्वज्ञानक्रियायुक्तं कार्यद्वारेण भोक्तृभोग्यादिस्वभावमेकमेवाद्वितीयं परमात्मसंज्ञमीश्वरलक्षणमुपादानमनुमेयम् २५०;

**ईश्वरतत्त्वम्**—शुद्धेषु पञ्चतत्त्वेषु चतुर्थम् ४४; न्यग्भवति यत्र शक्तिर्ज्ञानाख्योद्रिक्ततां क्रिया भजते। ईश्वरतत्त्वं तदिह प्रोक्तं सर्वार्थकर्तृ सदा॥·····ज्ञानेच्छे न्यक्समे शक्ती क्रियाधिक्यं यदाश्नुते। तदासावीश्वराख्यां तु लभते परमेश्वरः॥ ५१; विद्येशा अनन्तादय ईश्वरतत्त्वे वर्तन्ते····एते विद्येश्वरास्त्वष्टावीश्वरे सम्प्रकीर्तिताः ५३; विद्येशानामनन्तादीनामीश्वरतत्त्वेऽन्तर्भावः ५३; मन्त्रेश्वरतत्त्वनिरूपणम् १३०-१३१; क्रियाशक्त्याधिक्ये ईश्वरतत्त्वम् १७०

**उदानः** (वायुः)—उन्नयनमान्तरस्य ध्वनेर्वर्णताप्रापणमुदानस्य व्यापारः २११

**उद्युक्तः**—स तया रमते नित्यं समुद्युक्तः सदाशिवः। पञ्चमन्त्रतनुः श्रीमान् देवः सकलनिष्कलः॥ १९३

**उपमानम्** (प्रमाणम्)—उपमा उपमानम् ८६; उपमानस्यागमानुमानयोरन्तर्भावः ८६

**एकः**—एक इति, अद्वितीय इत्यर्थः २; प्रधान इति वा ३; एकः अद्वितीयः ६

**ऐतिह्यम्**—अनिर्दिष्टप्रवक्तृकं प्रवादमात्रमिति होचुर्वृद्धा इत्यैतिह्यम्, यथेह वृक्षे यक्षः प्रतिवसतीत्यादि। इदं न प्रमाणान्तरम् ८७

**ऐश्वर्यम्**—अविघातकरणमैश्वर्यम्। तदष्टविधम्—अणिमा महिमा चैव लघिमा गरिमा तथा। ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च॥ ८८

**गरिमा**—गुरुत्वं गरिमा, अन्यैरचाल्यत्वेनावस्थानम् ८८

**गुणतत्त्वम्**—सत्त्वगुणस्य सुखात्मकत्वप्रतिषेधः ६; अव्यक्ताद् गुणतत्त्वं प्रख्याव्यापार-नियमरूपमिह। सत्त्वं रजस्तमोऽपि च सुखदुःखे मोह इत्यपि च॥ ८१; सत्त्वरज-स्तमोनामकं च सुखदुःखमोहस्वरूपकं च **गुणतत्त्वम्** ८१; प्रकाशप्रवृत्तिनियमाख्यै-स्त्रिभिः कार्यैरेतत् सिद्धम् ८१; एषां च सर्वेषां तत्त्वानां विस्तरेण साधनं **श्रीमन्म-तङ्गादौ** द्रष्टव्यम् ८१; गुणैश्च सुखदुःखमोहरूपतया १०१; महतश्च गुणत्रयाज्जन्म। सत्त्वं रजस्तमश्च प्रख्याव्यापारनियमरूपाश्च॥ ११९; स्थैर्यधैर्यादयोऽपि सत्त्वस्य वृत्तयः, क्रौर्यशौर्यादयोऽपि रजसः, तमसस्त्वरतिमान्द्यादयोऽपीत्युक्तं **मतङ्गादौ** ११९; त्रय एव गुणास्त्विह येषां संभूतिरव्यक्तात्। अविभागो हि गुणानामाधारे क्ष्मादिभाग-वदवश्यम्॥ ११९; सत्त्वं रजस्तमश्चेति कारणानि धियो गुणाः। प्रख्याव्यापार-नियमैः पुंयोगं ते वितेनिरे॥ २२४-२२५; एते च परस्परावियोगादेकमेव तत्त्वम्। ····त्रयो गुणास्तथाप्येकं तत्त्वं तदवियोगः।····एते च प्राधान्यात् प्रदर्शिताः, अन्येषामपि स्थैर्यधैर्यादीनां शौर्यक्रौर्यादीनामरतिमान्द्यादीनां गुणकार्याणामागमेषु श्रवणात् २२५; गुणा एव प्रधानाख्यया नित्यत्वेन स्थिता इति **सांख्यमतनिरसनम्** २२५; उपादानं गुणानां यत् प्रकृतिः साऽभिधीयते २२५; मदमोहावभिष्वङ्गः परितापभ्रमौ च यौ। तामसौ सात्त्विकश्चैव राजसौ च यथाक्रमम्॥ अन्तःकरण-संस्थानां गुणानां वृत्तयस्त्विमाः॥ २३७

**गुणाः**—सांसिद्धिका वैनयिकाः प्राकृताश्च गुणा अणोः प्रादुर्भवन्ति २१६; एषां फलभेद-निरूपणम् २१६

**गुरुः** ( आचार्यः )—दीक्षायां साधकत्वे च चतुर्णां वर्णिनामिह। अधिकारो गुरुत्वेन ब्राह्मणस्यैव कीर्तितः॥ शक्त्यधिष्ठेयनिष्पाद्यसहितं दीक्षितः शिवम्। यो वेत्त्येव नियुक्तः सन् गुरुणा गौरवे गुरुः॥ २६५; नाज्ञो भ्रान्तः ससन्देहो गुरुर्भावविवर्जितः। नातत्त्वविदनभ्यस्तकर्ममार्गोऽपि नो मतः॥ २६६; गुरुदीक्षितौ शिवतुल्यत्वं प्राप्नुतः २६९

**चित्**—चिच्छब्देनात्र ज्ञानक्रिये लक्ष्येते ६; चिद्रूपा शक्तिः ८; चिदचिदित्यादिषु प्रयुक्त-श्चिच्छब्दो बद्धजीवपरः ४९,५५,५७; चितां बद्धात्मनाम् ११५; स्वसंवेद्या चिदव्यया १९२; चिच्छक्तिरपरिणामिनी अप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता चेति २७३

**चिद्घनः**—चिद्घन इति चैतन्यघनः, चैतन्यसारः, चिन्मात्र इति यावत् २; चिच्छब्दे-नात्र ज्ञानक्रिये लक्ष्येते····चिदेव घनं देहो यस्य स चिद्घनः ६

**चेष्टा**—चेष्टाऽभिनयः, तस्य च न प्रमाणान्तरत्वम् ८७

**चैतन्यम्**—चैतन्यं दृक्क्रियारूपम् ६, ८, १२४, १३८, १३९, २३०; दृक्क्रियात्मकमेव च स्वरूपं चैतन्यस्य १३८

**जलम्**—स्वतो द्रवा आपः शब्दस्पर्शरूपरसगुणाः। स्फटिकवर्णं चैतत् ९९; संग्रहोऽ-वष्टम्भोऽम्भसां व्यापारः १००

**जीवन्मुक्तः**—न हृष्यत्युपकारेण नापकारेण कुप्यति। यः समः सर्वभूतेषु जीवन्मुक्तः स उच्यते॥ २००; स पुनाति दृशा वाचा····२०१

चेति। नित्यनैमित्तिकाभ्यां प्रत्यवायपरिहारः, काम्यात् स्वर्गादिप्राप्तिः। अधर्मान्नरकादिगमनमिति। ३७; धर्माधर्माख्ययोः साम्ये मानुष्यं लभते पुमान् ३८

**धारणम्**—धारणं सम्भरणं पृथिव्या व्यापारः ९८; धारणं भूमेः ( व्यापारः ) १००; धृतिर्धारणं भूमेर्वृत्तिः २०५

**धीकर्म**—धीकर्मशब्देन बुद्धेरध्यवसिततया ग्राह्याणि पृथिव्याद्याकाशान्तानि पञ्च भूतानि तत्कारणादीनि च शब्दादीनि पञ्च तन्मात्राण्युच्यन्ते ३१; धीः विषयाध्यवसायरूपिणी बुद्धिः। विषयेषु शब्दादिष्वध्यवसायो निश्चयो रूपं वृत्तिर्यस्याः सा तथोक्ता। चकाराद् धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यात्मनाऽष्टविधवृत्तिमत्त्वं बुद्धेः सूचितम् ८१

**नमस्कारः**—नमस्कारः कायिको वाचिको मानसो वा धर्मविशेषः १

**नागः** (वायुः)—उद्गारे नाग इत्युक्तः २११

**नादः**—सकलो बिन्दुरक्षरबिन्द्वात्मको नादश्च स्थूलध्वनिरूपः। द्वौ च सदाशिवतत्त्वान्तर्भूतौ ५३; तत्र नादो नामाभिधेयबुद्धिहेतुर्बिन्दोः प्रथमप्रसररूपः सूक्ष्मो नादश्चिन्तया रहितत्वेन श्रीमत्कालोत्तराद्युक्तः १५२; चिन्तया रहितं यत्तु तत्परं परिकीर्तितम् १५२; असावपि ( नादोऽपि ) बिन्दोरनाहतादेष कारणं शुद्धवर्त्मनः १७८; बुद्ध्यस्मितामनोभ्यो विद्यातो रागतः कलायाश्च। मायापुंशक्तिभ्यो नादोऽन्यो दृश्यते ध्वनिभ्योऽपि॥ २३९; रूपरसगन्धशब्दाद्यर्था येनावमृश्यतां नीताः। सोऽन्तःसंजल्पात्मा नादः सिद्धो न विषयभावेन॥ २४१; अव्यक्तत्वान्नादः सूक्ष्मः शब्दः २४२; नादा उत्पत्त्यपवर्गयोगिनस्तेन २४२; नादकारणं महामाया २४२; विद्यारागादिकञ्चुकाद् भिन्नो महामायाजन्यो नादो मन्त्रतन्त्रादीनां कारणम् २४४

**नित्यः**—नित्य इति, अविनाशीत्यर्थः।....कालत्रयव्याप्यत्वं वा नित्यत्वं तद्राहित्यं वा ४; नित्य आद्यन्तरहितः ६

**निद्रा**—जाग्रत्स्वप्नप्रत्ययाभावावहेतुतमःप्रकर्षमवलम्ब्य या बुद्धिवृत्तिरुद्भवति सा निद्रा ८८; अभावप्रत्ययालम्बना निद्रा ८८

**नियतिः**—नियतिर्नियमनरूपा मायातः साऽप्यनन्तरं भवति। नियमयति येन निखिलं तेनेयं नियतिरित्युक्ता॥ ७४; नियामयति यस्माद् वै तस्मान्नियतिरुच्यते ७४; कालनियतिसहिता कला त्ववनिपर्यन्तं व्यापारं विदधाति ७५; नियामकत्वेन नियतिः सिद्धा १२४; कृष्यादिवत् कर्मफलानां राजनियमाभावे दस्युभिरपहारदर्शनाद् ज्योतिष्टोमादिकर्मफलानामपि भोक्तृप्रतिनियामकेन केनापि भाव्यमिति तन्नियामकत्वेन नियतिः सिद्धा २२८; कर्मण ईश्वरशक्तेर्वा न नियामकत्वम् २२८

**नियमः**—नियमो नियमनं वृत्तिस्तमसः, गुरुत्वात् ८१

**निर्वाणम्**—अपक्षयलक्षणविनाशप्रतिषेधो निर्वाणम् ७

**निर्विकल्पकम्**—तत्र नामजात्युल्लेखशून्यं प्रत्यक्षज्ञानं निर्विकल्पकम्, यथा प्रथमाक्षसन्निपातजं वस्तुमात्रावभासकं विज्ञानम्। तदुक्तम्—अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥ ८२-८३, ११८; निर्विकल्प-

**प्रधानम्**—प्रधानं लिङ्गमाख्यातम् २४; प्रधानतो विंशतिर्भवेत् त्र्यधिका ४५

**प्रभुत्वम्**—कर्तृकरणादिसकलकारकार्थवाहित्वरूपाप्रतिहतैश्वर्यं प्रभुत्वम् ।....करणादि विना सकलकार्यजनकत्वं वा ।....निष्क्रियकर्तृत्वं वा ४; प्रभुः प्रभवनशीलः ६

**प्रमाणम्**—सम्यगनुभवः प्रमाणम् । ....अनुभूतिः प्रमाणं सा स्मृतेरन्या ८२; सम्यक्-पदेनात्र विकल्पविपर्ययादिव्युदासः क्रियते । अनुभवपदेन स्मरणं व्युदस्तम् । तद् द्विविधम्—तत्त्वावेदकम्, अतत्त्वावेदकं चेति । तत्रात्मानात्मविवेकज्ञानं तत्त्वा-वेदकम् ।....अनात्मविषयं प्रमाणज्ञानमतत्त्वावेदकम् ।....तदेतत् प्रत्यक्षमेवेति **चार्वाका** इत्यादिना नानामतनिरूपणम् ८२; अनधिगतार्थगन्तृ प्रमाणम् १३५, १४९, २१९

**प्रलयाकलः** (पशुः)—मलकर्मयुतो द्वितीयः स्यात् २६; मलकर्मयुतो मलकर्मात्मकपाशद्वय-संबद्धो द्वितीयः प्रलयकेवलः २७; द्वितीयस्तु प्रलयकेवलाख्यो वर्गः, प्रलये कलादे-रुपसंहाराद् मलकर्मयुक्तो भवति २७; प्रकर्षेण लयं गतं कलादिधरान्ततत्त्वात्मकं शरीरं येषां ते प्रलयाकलाः । प्रलयावस्थायां मलकर्ममात्रपाशसंबद्धा आत्मान इति यावत् । तेषु येषां मलश्च कर्म च मलकर्मणी पक्वे परिपाकं गते ते मोक्षं व्रजन्ति, अन्ये संसरन्ति । कांश्चन (पक्वमलान्) महेश्वरो भुवनपतित्वं वितरति । अन्ये पुर्यष्टकदेहयुता निखिलासु योनिषु चरन्ति २९-३२; चतुर्धा प्रलयाकलाः ३२; महाप्रलये तु कलाद्युपसंहारान्मलकर्मयुक्तः प्रलयाकलः १२६; अपरमन्त्रेश्वरत्वेऽ-शुद्धाध्ववर्तित्वादपक्वमलानां प्रलयाकलानामेव १२७; प्रलयेन कलादेरुपसंहृतत्वा-न्मलकर्मयुक्तः प्रलयाकलः १३९; ....प्रलयाकलस्य तु कर्मभिश्च १४१; प्रलयाद्युप-संहृतकलादयो मलकर्मयुक्ताः प्रलयाकलाः १५२; मायातत्त्वलीनानां प्रलयाकलाना-मेते क्लेशा गुणादीनामपि तत्त्वानां तत्रैवोपसंहारात् प्रसुप्ता अकिञ्चित्करा आसते २३८

**प्रवृत्तः**—प्रवृत्तिमानयं देवः सकलः सर्वपावनः १९५

**प्राकाम्यम्**—प्राकाम्यमिच्छानभिघातः, भूमौ चोन्मज्जति निमज्जति यथोदक इति । सत्यसंकल्पतेत्यपरे । यथाऽस्य संकल्पो भवति, तथैव भूतानि भवन्तीति । अस्म-दादीनां निश्चयाः पदार्थानुरूपाः, योगिनां तु निश्चयानुविधायिनः ८८

**प्राकृतः** (गुणः) – प्राकृतो (गुणः) देहसंयोगे व्यक्तः स्वप्नादिबोधवत् २१६

**प्राणः** (वायुः)—प्राणः शरीरस्थोऽन्तःकरणसामान्यवृत्तिरूपः ९८; **अन्येऽ**न्तःकरणं प्राणमिच्छन्ति व्यक्तचेतनम् २१०; प्राणादयः शारीराः पञ्च दश वा वायवः २११; प्रणयनं सूक्ष्मदेहस्योर्ध्वाधोनयनं प्राणस्य व्यापारः २११

**प्राप्तिः**—प्राप्तिः प्रापणम्, येनाङ्गुल्यग्रेण स्पृशति चन्द्रमसम् ८८

**प्रीतिः**—विषयेन्द्रियसंयोगजन्यानित्यसातिशयसुखं प्रीतिशब्देनोच्यते । ....**अन्ये** तु सत्त्व-गुणे निर्मले पुण्यहेतुना विषयेन्द्रियसम्प्रयोगेण परिणते नित्यसुखमेव प्रतिबिम्बितं प्रीतिशब्देनोपदिष्टम् ।....सत्त्वगुणस्य न सुखात्मता, सुखप्रतिबिम्बाश्रयतया सुखरूप-त्वाभिधानमिति मन्यन्ते ६

**बद्धः** (आत्मा)—शिवगुणवद् गुणजातं पुंसामपि सर्वसंगतं किञ्च। एकेन हि सर्वेषां मलेन तदनादिसंरुद्धम् ॥ तेनानीशा ह्यज्ञा निर्व्यापारा विना बलव्यक्तिम्। न च शक्तास्ते स्वबलं विमलं सर्वार्थगं कर्तुम् ॥ १३९

**बन्धः**—बन्धमोक्षौ न वस्तुत इत्यद्वैतग्रहाविष्टाः १८४; बन्धस्तयोर्मतः।....तयोर्बन्धो नियामकः।....मायाख्येन बन्धेन भाव्यम्।....**सांख्य**च्छाययाऽविवेक एव नियामकोऽस्तु, किं मलाख्येनाप्रसिद्धेन बन्धेन पुरुषस्य कल्पितेन।....तेन बन्धोऽस्ति १९०-१९१

**बाह्यकरणम्**—बुद्धीन्द्रियकर्मन्द्रियभेदाद् बाह्यं पुनर्भवेद् दशधा ९५; बाह्यं करणं दशविधम्—पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणीति ९५

**बिन्दुः**—बिन्दोर्महामायात्मनः परमुक्त्यपेक्षया पाशत्वेऽपि तद्योगस्य विद्येश्वरादिपदप्राप्तिहेतुत्वेनापरमुक्तित्वादत्र पाशत्वेनानुपादानम् ३५; नादो बिन्दुः सकलौ सादाख्यं तत्त्वमाश्रितौ ५३; लयादिभेदः प्रागुक्तो यदुपाधौ शिवस्य तु। स बिन्दुरिति मन्तव्यः सैव कुण्डलिनी मता ॥ ५५; जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते। स बिन्दुः परनादाख्यो नादबिन्द्वर्णकारणम् ॥ १५२; बिन्दुश्च तत्कार्यं मयूराण्डरसबिन्दुवदव्यपदेश्यः परामर्शज्ञानरूपोऽक्षरबिन्दुस्तत्रैव सूक्ष्मत्वेनोक्तः १५२; न माया नेश्वरो नाणुर्न शक्तिः शुद्धवर्त्मनः। उपादानमतो बिन्दुः परिशेषेण लभ्यते ॥ १५५; बिन्दुसिद्धिप्रकारः १५५-१५९; अत्रात्मनां चिच्छक्तिर्येन नादात्मना परिणतेनाभिधेयबुद्धिबीजेन संपृक्ता मायेयसविकल्पार्थावलोकने प्रवर्तते, यस्य च प्रत्यात्मनियतैर्नादाख्यैर्विचित्रैर्वृत्तिभेदैरुपहिता विचित्रैव प्रकाशते, स बिन्दुः।....नादाख्यं यत्परं बीजम् १५८; तं चानश्वरत्वेनापराकाशमातिशायिकं परमव्योमाख्य**मागमज्ञाः** प्राहुः १५९; शब्दतत्त्वमघोषा वाग् ब्रह्म कुण्डलिनी ध्रुवम् ॥ विद्याशक्तिः परा नादो महामायेति देशिकैः ॥ बिन्दुरेवं समाख्यातो व्योमानाहतमित्यपि ॥ १६१; बिन्दोश्चतस्रो वृत्तयः १६१-१६४; कलास्ता बिन्दुवृत्तयः १६४; कलाध्वा बिन्दुमाश्रितः १६४; बिन्दुः शक्त्याऽभिव्याप्तः १६७; बिन्दुरात्मनि नादादिषडध्वं निष्पादयति। तत्र तत्त्वभुवनाध्वानौ शुद्धरूपावेव; अशुद्धयोस्तु तयोर्मायोत्पन्नत्वम् १६८; **केचिदा**चक्षते बिन्दुः समवैति शिवे १६९; अतोऽयं बिन्दुः शिवसमवायिन्या ज्ञानशक्तेर्नात्यन्तं पृथग्भूतोऽपि तत्समवेता क्रियाशक्तिरेवेति **केचिन्मन्यन्ते** १७०; शब्दराशिश्च बिन्दूत्थो बिन्दुर्नादादसावपि। बिन्दोरनाहतादेष कारणं शुद्धवर्त्मनः ॥ १७८; अनाहतबिन्दुरिति शुद्धाध्वयोनेर्महामायायाः संज्ञा। तस्याश्च नादबिन्द्वादिक्रमेण शब्दोत्पत्तिरिति १७८; बिन्दोर्मायाप्रधानयोर्विशेषः १७९; बिन्दुः शान्तिः कला विद्या प्रतिष्ठा सनिवृत्तिका। भोगस्थानानि पञ्चैषां बिन्दुसंज्ञा शिवेरिता ॥ कलानामविभागोऽयं पञ्चानां बिन्दुसंज्ञितः। १९४; बिन्दुः प्रलीनकार्योऽसौ....बिन्दुरेव प्रवर्तते २००

**बीजम्**—जगदेकबीजं शम्भुः १; एकं प्रधानं बीजं कारणम्, मूलकारणमिति यावत्। अथवा जगतामेकः कर्ता च बीजमुपादानं चेति जगदेकबीजम्, निमित्तोपादानभूत इति यावत् ५; जगतो निमित्तकर्ता....निमित्तकारणं त्वीशः ७

त्मको बुद्धिधर्मो **मतङ्गादौ** विस्तरेण दर्शितः, प्रकाशितश्**चास्माभिर्मृगेन्द्रवृत्तिदीपिकायाम्** २१८; अन्तःकरणवृत्तिर्या बोधाख्या सा महेश्वरम्। न प्रकाशयितुं शक्ता २६७; बोधरूपत्वमेव सत्यलक्षणम्।....बोधास्ते न बोद्ध्यात्मका यतः ३०१

**भावसर्गः**—कार्याणां स्वसाधारणकारणेषु सत्त्वं भावसर्गः।....प्रातिस्विकेषु हेतुषु तत्तत्त्वात्मकस्य सूक्ष्मस्य कार्यस्यावस्थानं भावः **सत्कार्यवादिमते**॥ १०२; ते च भावाः सिद्ध्यादिप्रत्ययभेदेन शतत्रयसंख्या भवन्तीत्युक्त**मन्यत्र** ११८; धर्मादीनां भावानामात्मगुणत्वनिरसनम् २१५; भावसर्गः प्रत्ययसर्गश्च २१५-२१८; इह हि बुद्धौ वासनात्वेन स्थिता धर्मादयोऽष्टौ भावा उच्यन्ते।....भावयन्ति यतो लिङ्गं तेन भावाः प्रकीर्तिताः २१७

**भुक्तिः**—भुक्तिं सुखदुःखानुभवरूपाम् ५६; भुक्त्यै कुरुते तनुकरणभुवननिष्पत्तिम् ५८

**भुवनानि**—भुवनशब्देन चतुर्विंशत्यधिकशतद्वयलोका उच्यन्ते ५८; भुवनसृष्टिः २३१-२३२; एष च भुवनाध्वा **पद्धत्यादिषु** बहुशो दृश्यते....। तेषु चावान्तरभुवनसंख्याभेदः केषुचित् केषाञ्चिदन्तर्भावश्च २३२

**भूतानि**—तन्मात्रेभ्यः खपवनतेजोऽम्भःक्ष्मेति पञ्च भूतानि ९५; भूतानि पञ्च तेभ्यो भवन्ति तान्येकगुणवृद्ध्या ९६; **अपरे** केवलेभ्यस्तन्मात्रेभ्यः केवलानि भूतानीत्याहुः। **अन्ये** तु शब्दतन्मात्रादाकाशस्पर्शतन्मात्रावुत्पद्येते, स्पर्शतन्मात्राद् वायुरूपतन्मात्रौ, रूपतन्मात्रात् तेजोरसतन्मात्रौ, रसतन्मात्राद् जलगन्धतन्मात्रौ, गन्धतन्मात्रात् केवला पृथिवीति।....**परे** शब्दतन्मात्रादाकाशः, तद्द्वयसहितात् स्पर्शतन्मात्राद् वायुः, तत्त्रयसहिताद् रूपतन्मात्राद् तेजः, तच्चतुष्कसहिताद् रसतन्मात्रादापः, तत्पञ्चकसहिताद् गन्धतन्मात्रात् पृथिवीत्याहुः। **अपरे** शब्दतन्मात्रादाकाशः, तस्मात् स्पर्शतन्मात्रम्, तस्माद् वायुः, तस्माद् रूपतन्मात्रम्, तस्मात् तेजः, तस्माद् रसतन्मात्रम्, तस्मादापः, ताभ्यो गन्धतन्मात्रम्, तस्मात् पृथिवीति ब्रुवत इति ९६-९७; शब्दैकगुणमाकाशम्। शब्दस्पर्शगुणो वायुः। शब्दस्पर्शरूपगुणोऽग्निः। शब्दस्पर्शरूपरसगुणमम्भः। शब्दादिगन्धान्तपञ्चका पृथिवी ९७; आकाशविशेषगुणः शब्द इति **वैशेषिकादिमतनिरसनम्** ९७; अवकाशव्यूहनपाचनसंग्रहधारणं क्रमादेषाम्। व्यापारो भूतानां व्योमादीनां समुद्दिष्टः॥ ९७; क्षितिजलशिखिपवनाम्बरभूतान्येषां क्रमेण वृत्तानि। धारणसंग्रहपाका व्यूहो दानं च तदवकाशस्य॥ ११६; क्ष्माजलाग्निमरुद्व्योम्नां गुणवृत्त्यक्षभूमिताः। स्वमात्रापूरपुष्टानां गमयन्ति तदङ्गताम्॥ करणाधारदेहत्वे धृतिसंग्रहपक्तयः। व्यूहोऽवकाशदानं च वृत्तयो वसुधादिषु॥ २०४-२०५; भूतानां गुणाः २०५-२०६; इत्थं यथोक्तगन्धादिव्रातोपेता धरादयः। अभिप्रसिद्धा लोकस्य २०६

**भोगः**—भोगस्तु सुखदुःखसंवेदनात्मकः ५७; भुज्यन्ते एभिरिति भोगा भोगसाधनानि गुणादीनि तत्त्वानि ८०; भोग्ये भोगो भोक्तुश्चिद्व्यक्तिर्भोग्यनिर्भासा १२१; भोगोऽस्य वेदना पुंसः सुखदुःखादिलक्षणा १२१, २०४, २१५, २२१, ३०३; इति भोगः समाख्यातः सदाशिवपदं महत् १७३; शिवस्य भोगः पालनात्मकः।...न तु शिवस्य परमानन्दः सुखातिशयो भोगश्च सुखसंवेदनरूपो व्याख्येयः, निर्मलत्वेन शिवस्यो-

शम्भुर्मन्त्रानकरोत् १३१; अनुग्रहाय लोकस्य शिवो मन्त्र इति श्रुतिः। या त्वनुग्राहिका शक्तिः सा मन्त्रत्वमिहागता ॥ १९२; मननात् सर्वभावानां त्राणात् संसारसागरात्। मन्त्ररूपा हि तच्छक्तिर्मननत्राणरूपिणी ॥ १९३; कोटिसप्तकसंख्याकान् निष्कलान् सकलानणून्। सर्वज्ञानक्रियाव्यक्त्या मन्त्रानीशः करोत्यतः ॥ २६०; निष्कलाः सकलाश्च मन्त्राः २६२; मन्त्राणामधिकारः सावधिः २६३-२६४; शिवोऽवशिष्टमन्त्राणां परिवाराङ्गशम्बरान्। सिद्धिमुक्तिप्रसिद्ध्यर्थं मण्डलानि च सृष्टवान् ॥ २६३; मन्त्राणामपूर्वमभिधायकत्वम् २६८; प्रतिमादिषु चित्रादिष्विव भगवान् मन्त्रेषु मातृकासु चाभिव्यज्यते २६९

**मन्त्रेश्वराः**—शतमष्टादश तेषां कुरुते स्वयमेव मन्त्रेशान् २९; तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्च वीरेशः। श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाभ्यधिकम् ॥ शतमष्टादश मन्त्रेश्वराः। तत्राष्टौ मण्डलिनः, क्रोधाद्या अष्टौ, वीरेशः, श्रीकण्ठः, शतरुद्राश्चेति अष्टादशोत्तरशतसंख्याका एते ३२, १२७; शतमष्टादश तेष्वपि मन्त्राणामीशितारः स्युः ॥ शतरुद्राः क्रोधादिकमष्टकमङ्गुष्ठमात्रपूर्वमपि। वीरेशश्रीकण्ठौ मन्त्रेशत्वेन वर्तन्ते ॥....तत्र मण्डलिनोऽष्टौ कलामस्तकवासिनो गहनेशादयः, क्रोधादयश्च गुणमस्तकस्था अष्टावेव। वीरेशो वीरभद्रः शतरुद्राधिष्ठाता। श्रीकण्ठो गुणतत्त्वनिलयोऽधस्तनभुवनादेश्च कर्ता। शतरुद्रास्तु ब्रह्माण्डधारका इति ३२; मण्डलिनः श्रीकण्ठः क्रोधाद्याः शतभवाः सवीरेशाः। एते कलादियोगात् प्रकटीकृतदृक्क्रियाः परेशेन ॥ १२७; विद्येश्वराणां तु परापराणामाचार्यवत् तत्कर्तृत्वम् १२८; मन्त्रादिसर्गपूर्वं त्वष्टौ देवेन दारितावरणाः। अणवः कृतसर्वार्थज्ञानव्यापारसामर्थ्याः ॥ तेऽनन्तेशप्रमुखाः पतिभावात् प्रेरयन्ति मन्त्रादीन्। सर्गस्थितिलयमुक्तीः कुर्वन्ति हरेच्छया नुन्नाः ॥ मन्त्रेशतत्त्वमेतत् १३०-१३१; विद्याविद्येशानां सामान्यविशेषधर्मविच्छम्भुः १३१; मन्त्रेश्वरा मन्त्रमहेश्वरा उच्यन्ते १३१; चतुर्विंशतिराख्याता मन्त्राणामीश्वराः पराः। आणवाः शाम्भवाः शाक्तास्तथान्या मन्त्रकोटयः ॥ अण्डस्याधारका ह्येवं वीरभद्रपुरस्सराः। १३२; निष्कलान् सकलानष्टौ सर्गादाविच्छया पतिः। मन्त्रेश्वराननन्तादीननुगृह्णाति पुद्गलान् ॥ २६० ; मन्त्रमन्त्रेश्वराख्यानमाख्यातं तत्त्वयोर्द्वयम् २६१; पतयोऽपतयो मन्त्रा ऊर्ध्वं मन्त्रेश्वरा मताः २६१; अनुगृह्णाति मन्त्रेशान् मायागर्भाधिकारिणः ॥ मण्डलाधिपतीनष्टौ क्रोधेशाद्यष्टकं तथा ॥ इच्छया शतरुद्रांश्च वीरभद्रपुरस्सरान्। २६१; क्रोधेश आदौ यस्याष्टकस्य श्रीकण्ठसहितस्य २६२; अनुग्रहाय जन्तूनां मन्त्राणां हि प्रयोजकाः। एते मन्त्रश्वरास्तस्मान्न मन्त्रोर्ध्वव्यवस्थितेः ॥ २६२; परेण रूपेण निर्विशेषास्त्रयोऽप्यमी। महाल्पयानियोगित्वाद् विशिष्यन्ते परस्परम् ॥ २६२; मन्त्रैः सार्धं तदीशानां परेषामपरैः सह। आविर्भवत्यधीकारः स्वशक्तिव्यक्त्यनन्तरम् ॥ मन्त्रेश्वराणां चानन्तादीनां परेषां क्रोधादीनामपरेषां वीरभद्रादीनां च....२६२; मन्त्रेशा गुरवः पूर्वे....मन्त्रेशैः शासिता रुद्राः २६५

**मलः** (पाशः)—सहजमनादि मलं स्यात् पाशेषु त्रिष्वपि प्रधानतमम् १७; मलस्य द्रव्यत्वाच्चक्षुषः पटलादेरिव दीक्षाख्येनैवेश्वरव्यापारेण निवृत्तिः ३४, १२६, १३९,

१८८, १८९; तत्रापि मलः प्रथमः पाशः, तत्पूर्वकत्वात् कर्मादीनाम् । स तु ज्ञान-प्रागभाव **इत्येके**। **परे** तिमिरसदृशो जडात्मको भावरूपो ज्ञाननिवर्त्य इति । **गुरवस्तु** अविद्यासंस्कारात्मक इत्याहुः ।··· मलोऽज्ञानं पशुत्वं च तिरस्कारकरस्तमः । अविद्या ह्याकृतिर्मूर्च्छा पर्यायास्तस्य वाचकाः ॥ ३४; तत्र मलः पुंसोऽनादि कृत्वा ज्ञानक्रियावारकः ३५; एको ह्यनेकशक्तिर्दृक्क्रिययोश्छादको मलः पुंसाम् । तुष-कम्बुकवज्ज्ञेयस्ताम्राश्रितकालिमावद् वा ॥ ३५; मलस्यैकत्वे मतद्वयम् ३५; मल-श्चिच्छादको नैजो विशुद्धिः शिवता स्वतः ३६; कुरुते चितामनुग्रहमनादिमलरुद्ध-शक्तीनाम् ५५; कला मलं नृणामेकतस्तु कलयित्वा । व्यञ्जयति कर्तृशक्तिम् ७५; मलस्य न तत्त्वान्तरत्वम्, अपि तु पशुतत्त्व एवान्तर्भावः १२६; अत एव शुद्धविद्या-संयोजनात् पूर्वं मायोर्ध्वस्थान एव मलविच्छित्तिर्दीक्षायां कार्येति **गुरवः** १२८; मलश्चायमेक एवानेकात्मावारकानेकशक्तियुक्तो नित्यो व्यापकश्च।···तदेकं सर्वभूताना मनादि निबिडं महत् । प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवत् ॥ १२८, १४५; एकेन हि सर्वेषां मलेन तदनादिसंरुद्धम् १३९; मायाविकारयोगे कर्मयुतः कारणं मलो भविनाम् । मलशक्तयो विभिन्नाः प्रत्यात्मानं च तद्गुणावरिकाः ॥ विनिवर्तंते निरोधात् पुंबलतः परिणमन् मलः कालात् । परिणतिविशेषयोगात् स कदाचित् कस्यचित् कथञ्चित् ॥ १४०; मलविचारोऽ**स्माभिर्मृगेन्द्रवृत्तिदीपिकायां** विस्तरेण दर्शितः १४१, १४५; मायेयकार्माणवमलान्वयैः १५६; मलः कर्म च माया च विशुद्ध-मनुमीयते । मायैव कारणं शुद्धाशुद्धयोर्मलकर्मणोः ॥ १७८; शुद्धोऽधिकारमलः १७८; बिन्दोर्विवेके सहसा छिद्यते मलकम्बुकः १७९; मलस्य तच्छक्तीनां च निरूपणम् २३४-२३८; महामोहाख्याद्विपर्ययान्मलस्य भिन्नत्वम् २३५; विज्ञानाकलप्रलयाकलयोः कलादिसम्बन्धरहिततया मले सत्यपि वक्ष्यमाणमदादयो न दृश्यन्ते, किन्तु सकल एव, अतो न मलस्यैते (मोहमदादयः) ज्ञानक्रियावरणवद् वृत्तित्वेनेष्टाः २३७; नह्यज्ञानं मलः, अपि त्वज्ञानहेतुः (मलमज्ञानमिच्छन्तीति मतस्य खण्डनम्) २५६; विपर्ययो मिथ्याज्ञानमत्र मलः २९९

**मल(परि)पाकः**—परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन । योजयति परे तत्त्वे ३३; मलपरिपाकादिभेदश्चा**स्माभिर्मृगेन्द्रवृत्तिदीपिकायां** विस्तरेणोक्तः १४१, २०१; मलपरिपाकविषयकविचारसरणिः १४१-१४५; २५९-२६०

**महान्** (बुद्धितत्त्वम्)—महतश्च गुणत्रयाज्जन्म ११९; रविवत् प्रकाशरूपो यदि नाम महांस्तथापि कर्मत्वात् । करणान्तरसापेक्षः शक्तो ग्राहयितुमात्मानम् ॥ १२१, २२६

**महामाया** (कुण्डलिनी)—मायोपरि महामाया ४५, १३१, १३८, २४३; विद्यादितत्त्वानां विचित्रभुवनादिसंनिवेशादिमत्त्वेन श्रुतेः कार्यत्वाव्यभिचारात् तत्तत्त्ववासिनां च शरीरादियोगात् तत्कारणं महामायात्मकं सिद्धमिति । यदुक्तम्—उपादानं शरीराणां विद्याविद्येश्वरात्मनामिति । किञ्च, नादादिद्वारेण मन्त्रतन्त्राद्युत्पाद-कत्वमप्यस्याः श्रूयते—शक्तेर्नादो भवेद् बिन्दुरक्षरं मातृका तत इत्यादि । इत्थं बिन्द्वात्मकं शिवतत्त्वम् (एव महामाया) ४५; महामायासिद्धिर्विस्तरेण **मृगेन्द्रवृत्ति-दीपिकायां** दर्शिता ४८; शुद्धविद्यादेस्तु शक्तौ महामायाख्यायाम्···परमात्मनीति

विभ्वी ह्यचेतना चैका । सर्गस्थितिविलयानामाधारः कारणं च सा जगतः ॥ १२५; अत्र **मतान्तर**समालोचनम् १२५; शम्भुः पुरुषो माया नित्यं विभु कर्तृशक्तियुक्तं च । सुप्तेऽपि विकृतिजाते त्रितयं जागर्ति तत्त्वानाम् ॥ शिवपुरुषावतिसंख्यौ प्रसवविहीनौ चिता समेतौ च । एकं प्रसवित्वयुतं मायातत्त्वं चिता विहीनं च ॥ १३८; मायाशब्देन च तन्त्रोच्चारितेन मायामहायायारूपं शुद्धाशुद्धं जगदुपादानमुच्यते १३८; मायातत्त्वं तु शुद्धमशुद्धं वा परमोपादानत्वादेकम् १३८; पृथिव्यादितत्त्वानां परम्परयोपादानं मायाख्यं नित्यं परमकारणम् ।""मायातत्त्वं जगद्बीजमविनाश्यव्ययात्मकम् ।"" उत्पत्तिनाशी मायेयधर्मावाह महेश्वरः १५४; माया""क्षोभितानन्तनाथेन कलादिक्षितिपर्यन्तं तत्त्वजातं सूते १५५-१५६; माया कलादीनामुपादानम् १७४; अवस्थामपरे बिन्दोर्मायामाहुः १७४; मलः कर्म च माया च विशुद्धमनुमीयते । मायैव कारणं शुद्धाशुद्धयोर्मलकर्मणोः ॥ अशुद्धयोरशुद्धैव मायाऽतो द्विविधा मता ॥ १७८; एषा च क्षीरदधिन्यायेन न सर्वात्मना परिणाममेति, किन्तु घृतकीटन्यायेनैकदेशेनेति मन्तव्यम् २३२; मायास्वरूपविवेचनम् २३२-२३४; समस्तमशुद्धं जगन्मायासंस्थम् २३३; मायायाश्च भोगसाधनकलाद्युत्पादनतत्पोषणात्मकः (व्यापारः) २३८; (शिवजीवयोरपि व्यापारावत्र वर्णितौ) ।

**मायीयः** (पाशः)—मायीयो मायाजन्यः सूक्ष्मस्थूलात्मकशरीरादिरूपः । स तृतीयः (पाशः) ३४; मायेयस्तु कलादिरागन्तुकः पाशः, कर्मसद्भाव एव तस्य सद्भावात्, तदभावेऽपि प्रलयकेवलिनो मलकर्मयोगाच्च ३५

**मुक्तः** (आत्मा)—क्लेशमुक्तः प्रसन्नात्मा मुक्त इत्यभिधीयते ११; मुक्तात्मानोऽपि शिवाः २३; मुक्तात्मानः सम्प्राप्तशिवसाम्याः २४; मन्त्रादयः परमुक्त्यर्हत्वान्मुक्तसंज्ञाभाज इत्यर्थः १३४; मुक्ते तदैश्वर्योत्पत्तिरिति **प्रवाहेश्वरवादिनः** १३४; मुक्तेषु शिवाज्जातं माहात्म्यमनादिमध्यान्तम् १३५; मुक्तस्त्वमल एव १३९

**मुक्तिः**—विद्याविद्येश्वरप्राप्तेरपरमुक्तित्वम् २४; मुक्तिं नित्यानन्दानुभवलक्षणाम् ५६; विद्याविद्येशत्वं चापरमुक्तिः परेह शिवसमता १३४; सा च शिवसाम्यरूपा मुक्तिर्न गोत्वादिजातिवदेका, अपि तु भिन्नैव प्रतिपुरुषगता, सादृश्यव्यतिरेकेण जातेरसंभवात् १३४; **नैयायिका**द्युपगतसंविदभावोऽप्ययुक्तः १३४; मुक्तिश्चात्र **दर्शनान्तरमोक्षः**, परमुक्तेर्दीक्षाफलत्वेन **मोक्षकारिकासु** वक्ष्यमाणत्वात् २१६;""मुक्तिशब्दाभिधेयेति **सांख्याः** २२१; नादज्ञानादेव परमुक्तिसिद्धेः कथं दीक्षैव मोचिनीति **श्रीमत्स्वायम्भुवादावुक्तम्** २४४; मुक्तिस्तावत् पाशविच्छित्तिः सर्वज्ञत्वाद्यभिव्यक्तिश्च २५५

**मूर्तिः**—आसनं मूर्तिरावाह्यमेतत् त्रितयमध्वनि । व्याप्यव्यापकभावेन ज्ञात्वा यजनमारभेत् ॥""मूर्तिः शक्त्यन्तगोचरा ११३; अधिकारावस्थायां कार्यभेदादष्टत्रिंशत्कलाभेदभिन्ना शक्तिरेवास्य मूर्तिः १३३; मूर्तिमधिष्ठाय हरः ।""ध्येयाकाराभिव्यक्तां शक्तिरूपां मूर्तिमधिष्ठाय १३३; तद्गोचरा परा मूर्तिरपरा कार्यगोचरा १९४; सैव मूर्तिः क्रियाभेदात् सादाख्या तनुः १९४

**मोक्षः**—सुखचिदात्मको मोक्षः ८; मोक्षः शिवसमानतारूपः ।""सायुज्यलक्षण इति यावत् । ""मोक्षोऽनुग्रहः । ""सर्वार्थदृक्क्रियात्मकशिवत्वव्यक्त्या शिवसाम्यरूपस्य

**वामा** (शक्तिः)—स्थितिसंरक्षण(ा)भावलक्षणानां व्यापाराणां संसाररोधफलत्वाद् रोधो वामाव्यापारः २५३

**वायुः**—व्यूहनं विविधवहनं वायोर्व्यापारः पुञ्जीकरणं वा ९७; व्यूहो वायोर्वृत्तिः ९८; नीरूपस्पर्शवान् वायुः। स शब्दस्पर्शगुणः। आकाशाद् वायुरित्यागमबलात् परमाणोरुत्पत्तिर्बाधिता। स त्रिविधः—शरीरं प्राणो विषयश्चेति।.....अस्याञ्जननिभं वर्णम्। वृत्तं षड्बिन्दुमण्डलम् ९८; व्यूहनमवयवघटनं वायोर्व्यापारः १००; स्पर्शशब्दधृतिकम्पलिङ्गो वायुः ११६; व्यूहोऽवयवसंघट्टनं वायोर्वृत्तिः ११६

**विकल्पः**—शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ८८, १०८; तद्यथा—शशविषाणादिशब्दश्रवणानन्तरं तदर्थविषयज्ञानमिति ८८

**विकृतिः**—विकृतेः परतो माया १२५; येन यद् व्याप्यते वस्तु परिणामितया स्वयम्। सा तस्य विकृतिः प्रोक्ता हेम्नस्तु मकुटो यथा॥ १६९; बिन्दुना व्याप्यते योऽसौ षड्विधोऽध्वा कलादिकः। सा तस्य विकृतिः १६९

**विज्ञानाकलः** (पशुः)—पशवस्त्रिविधा ज्ञेया विज्ञानप्रलयकेवलौ सकलः। मलयुक्तस्तत्राद्यः २६-२७; द्विधा भवेदाद्यः। आद्यः समाप्तकलुषोऽसमाप्तकलुषो द्वितीयः स्यात्॥ आद्याननुगृह्य शिवो विद्येशत्वे नियोजयत्यष्टौ। मन्त्रांश्च करोत्यपरान् ते चोक्ताः कोटयः सप्त॥ २८-२९; अनन्त-सूक्ष्म-शिवोत्तम-एकनेत्र-एकरुद्र-त्रिमूर्ति-श्रीकण्ठ-शिखण्डिसंज्ञान् पञ्चकृत्याधिकारिणः शुद्धाध्वाधिष्ठातॄनीश्वरतत्त्वनिवासिनश्च करोतीत्यर्थः। अपरांस्तु सप्तकोटिसंख्यातान् मन्त्राननुग्रहकरणभूतान् विद्यातत्त्वनिवासिनश्च करोतीत्यर्थः २९; ये त्वत्रात्यन्तमलपाकवन्तोऽधिकारानपेक्षास्तान् परे पदे योजयति। ये त्वपक्वमलास्तेषां मलपाकान्तं विज्ञानकलत्वमेवेत्युक्तं **श्रीमद्रौरवादौ** २९; तेष्वाद्या द्विविधाः पक्वकल्मषाः॥ अपक्वकल्मषाश्चेति, अत्राद्याननुगृह्य तु। विद्येश्वरान् करोत्यष्टावीशोऽन्यान् मनुदेवताः॥ ३२; विज्ञानाकलसंज्ञान् समाप्तकलुषान् करोति विद्येशान्। अष्टावनुगृह्य शिवो मन्त्रानपि सप्तकोटिभिदान्॥ ३२; विज्ञानयोगादिना कर्मणो विनाशात् केवलमलयुक्तो विज्ञानाकलः १२६, १३९, १५२; अत्र च विज्ञानकेवलानष्टौ बोधयामास पुद्गलानिति **श्रुतेः** शुद्धाध्ववर्तित्वाच्च विज्ञानाकलानां मध्यात् परिपक्वमलानामेव तत्पाकतारतम्यवशाद् विद्येश्वरत्वे मन्त्रेश्वरत्वे च नियोगः १२७, १३०-१३१; (मलो) विज्ञानाकलस्य केवल एवाज्ञत्वाक्रियत्वव्याघातभाक्त्वादिभिः स्वकार्यात्मकैः पाशैः संरोधकृत् १४१; उत्तीर्णमायाम्बुधयो भग्नकर्ममहार्गलाः। अप्राप्तशिवधामानस्त्रिधा विज्ञानकेवलाः॥ विद्या विद्याधिपतयो पशुपूर्वाः सदाशिवाः॥ १५२-१५३; तत्त्वेषु तेषु विज्ञानकेवलानां महात्मनाम्। भुवनानि विचित्राणि स्वभावललिताः प्रियाः॥ १७०; विज्ञानकेवलिनोऽपि लयावस्थाभाजः, भोगावस्थाभाजः, अधिकारावस्थाभाजश्च १९६; विज्ञानकेवलिनां मलावृतानामपि कर्मरहितानां जन्माद्यदर्शनात् २३४;

**विद्या** (कला)—निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च पञ्चमी। शान्त्यतीता कला एता याभिर्व्याप्तोऽध्वपञ्चकम्॥ १६४; विद्याकलायां पञ्चाध्वव्याप्तिः १६६-१६७; तत्प्रलीनाणुसंघस्य संकल्पोऽशेषगोचरः। सर्वार्थद्योतको येन तेन विद्येति गीयते॥

१६७; बिन्दुः शान्तिकला विद्या प्रतिष्ठा सनिवृत्तिका। भोगस्थानानि पञ्चैषां बिन्दुसंज्ञा शिवेरिता॥ १९४

**विद्यातत्त्वम्** (अशुद्धम्)—उद्‌बुद्धकर्तृशक्तेः पुंसो विषयप्रदर्शननिमित्तम्। विद्यातत्त्वं सूते प्रकाशरूपं कलैवैषा॥ ७६; **अन्ये** तु मायात एव विद्योत्पत्तिं ब्रुवते। तदुक्तं **शैवरहस्ये**—सुखदुःखमोहवपुषो भोग्या या व्यञ्जिका च सा बुद्धेः। मायात एव विद्या प्रकाशरूपा समुद्भवति॥ ७६; कलातत्त्वाद् रागविद्ये द्वे तत्त्वे सम्बभूवतुः। अव्यक्तं चेति **रौरवे** ७६;आवरणं भित्त्वैषा ज्ञानाख्यायाः स्वकर्मणा शक्तेः। दर्शयति विषय-जातं करणं सेहात्मनः परमम्॥ ७६; बुद्धिर्यदास्य भोग्या सुखादिरूपा तदा भवेत् करणम्। विद्यैवम्, करणं स्याद् विषयग्रहणे पुनर्बुद्धिः॥ ७७; अशुद्धं बुद्धितत्त्वं वेदयतीत्यशुद्धविद्या, अशुद्धा चासौ विद्येति वा, मलादिनाऽशुद्धस्य क्षेत्रज्ञस्य विद्येति वा। तस्याः सिद्धिः शुद्धविद्यातः ७७; विद्येयं सर्वभावानामशुद्धार्थप्रदायिका।··· तस्या वर्णमिन्द्रगोपनिभम् ७८; करणेन येन भोग्यं करोति पुरुषः प्रचोद्य महदादीन्। भोग्ये भोगं च पुनः सा विद्या तत्परं करणम्॥ १२०; विद्यातत्त्वसिद्धिप्रकारः १२१; ततश्चाध्यवसायस्मृतिप्रतिभाप्रत्ययभेदभिन्ना बुद्धिरपि यया वेद्यते सा विद्या १२१; विद्या ज्ञानातिरिक्तयोः १७०; करणं न विना कर्तुः कृतिः कर्मणि दृश्यते। अतोऽस्ति करणं विद्या बुद्धिबोधविवेचिनी॥ २२६; **मतान्तरनिरसनम्**॥ २२६-२२७

**विद्यातत्त्वम्** (शुद्धविद्या)—न्यग्भवति कर्तृशक्तिर्ज्ञानाख्योद्रेकमश्नुते यत्र। तत्तत्त्वं विद्याख्यं प्रकाशकं ज्ञानरूपत्वात्॥ ५२; उद्रिच्यते ज्ञानशक्तिः क्रियेच्छे न्यक्समे यदा। तदासौ शुद्धविद्याख्यः सर्वविद्यानिधिः शिवः॥···पद्मरागसमानवर्णा ५२; मन्त्रा विद्याश्च विद्याख्ये ५३; मन्त्रा विद्याश्च विद्यायां बीजभूता भवन्ति हि ५३; मन्त्राणां सप्तकोटिसंख्याकानां वाचिकशब्दानां च व्योमव्याप्यादीनां विद्यानां च कामिकाद्यष्टाविंशतितन्त्राणां विद्यातत्त्वेऽन्तर्भावः ५३; शुद्धविद्यायाः (सिद्धिः) शिवा-व्यतिरिक्तया स्वयम्प्रकाशया परमशक्त्येति **शैवसिद्धान्तः**।···शिवसद्भावकुशला विद्याऽन्या शुद्धगोचरा ७७-७८; विद्याविद्येशानां सामान्यविशेषधर्मविच्छम्भुः। मन्त्रानकरोत् १३१; अणुशक्तिशम्भुपक्षा विद्याविद्येश्वरेषु १३२; विद्याविद्येशत्वं चापरमुक्तिः १३४; तत्र विद्याभुजः पूर्वं मन्त्रा विद्याश्च नामतः। विद्येश्वरनियोज्या-स्ते संख्यया सप्तकोटयः॥ १५२; विद्या ज्ञानातिरिक्तयोः १७०; शुद्धं विद्यातत्त्वं विद्येशानां च भोगदं भुवनम् २४३

**विद्येशाः**—विद्येशाः पुनरैशे ५३; विद्येशा अनन्तादय ईश्वरतत्त्वे वर्तन्ते। तदुक्तं **सिद्धान्तागमे**—अनन्तसूक्ष्मौ शिवतमैकनेत्रैकरुद्रकाः। त्रिमूर्तिपूर्वः श्रीकण्ठः शिखण्डी च ततोऽष्टमः॥ एते विद्येश्वरीस्त्वष्टावीश्वरे संप्रकीर्तिताः। ५३; मध्याः प्रशान्तकलुषा विद्येशाः शिवतेजसः। अधिकारमलोपेतास्तत्त्वमैशं समाश्रिताः॥ शिवार्ककरसम्पर्क-विकासात्मीयशक्तयः। अष्टावनन्तपूर्वास्ते यथापूर्वं गुणाधिकाः॥ १५३; नैवं विद्येश्वरो विद्येशेऽनन्त आत्मनि। अभिव्यक्तो जगद्बीजं विक्षोभ्य कुरुते जगत्॥ २५२; विद्या-राजाधिराजेशो जगद् भ्रामयतीच्छया २५२

**विपर्ययः**—विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठं शुक्तिकादौ रजतादिज्ञानम् ८८; अयथार्थ-ग्रहणरूपो विपर्ययस्तमोमोहमहामोहतामिस्रान्धतामिस्रलक्षणो जायते।···मतिरन्या विपर्ययः २१७; ननु प्राकृत एव विपर्ययरूपो महामोहाख्यो मलोऽस्तु २३५

**विरोधः**—विरोधोऽपि न प्रमाणान्तरम् ८७

**विवर्तः**—अप्रच्युतस्वभावस्य वस्तुनोऽन्यथाभावो विवर्तः ४३

**विशेषः**—ततश्च सूक्ष्मत्वादविशिष्टगुणमात्ररूपात् तन्मात्रवर्गाद् भूतवर्गस्य स्थूलत्वाद् विशिष्टगुणयोगित्वं विशेषः ११७

**विश्वम्**—क्षित्यादिकलान्तानि विश्वशब्दवाच्यानि २४६; भोक्तृभोग्यादिभेदभिन्नं चेतनाचेतनात्मकं विश्वम् २५०

**वीतरागः**—भोग्यविशेषे रागे नहि कश्चिद् वीतरागः स्यात्॥ यदुपहितेऽभिष्वङ्गो महति पुनस्तदुपधौ स नो दृष्टः। तस्मान्नो वाच्यमिदं सविशेषो नास्ति वीतराग इति॥ १२०

**वीरेशः** (वीरभद्रः)—वीरेशो वीरभद्रः शतरुद्राधिष्ठाता १८, ३२, १२७; शतरुद्राणां ब्रह्माण्डधारकाणामधिष्ठाता वीरभद्रः २३१; शतरुद्रांश्च वीरभद्रपुरस्सरान् २६१; एते मन्त्रेश्वराः···मन्त्रप्रयोजकत्वान्मन्त्रेश्वरत्वम् २६२; वीरभद्रादीनां मायागर्भाधिकारित्वात् सकलाच्च ब्रह्मादिवन्मायातत्त्वादधः कलादिभुवनेष्ववस्थितिः २६२; कलायोगेऽपि नो वश्याः कलानां पशुसंघवत्।····कलादीनां क्रमेणोपर्यवस्थिताः २६२; शेषास्त्वप्रधाना विद्येशा वीरभद्ररुद्रादयः।···सूक्ष्मादीनां च मन्त्राणां च तदीशानामपि वीरभद्रादीनामनन्तोपरमकाल एव सर्वेषां युगपच्छिवसमता परा मुक्तिः २६४

**वृत्तिः**—उपादानं हि परिणामेन वा कार्यमुत्पादयति, यथा क्षीरस्य दधिभावः; वृत्तिरूपेण वा, यथा पटस्य गृहादिभावः। शिवादीनामेषां तु वृत्तिपरिणामौ न भवतः, अविकारित्वात्, विकारित्वे जडत्वानित्यत्वादिदोषप्रसङ्गात्। अस्य चात्रैव प्रपञ्चो भविष्यति। प्रोक्तं **चास्माभिस्तत्त्वप्रकाशवृत्तौ** १५७; वृत्तिपरिणामयोर्भेदप्रदर्शनं परमतनिरसनं च १६०-१६१

**वैखरी**—तत्र सा वैखरी श्रोत्रग्राह्या याऽर्थस्य वाचिका॥ स्थानेषु विधृते वायौ कृतवर्णपरिग्रहा। प्रयोक्तॄणामियं प्रायः प्राणवृत्तिनिबन्धना॥ १६२; वैखरी श्रोत्रजे बोधे····लक्ष्यते १६३

**वैनयिकः** (गुणः)—सांसिद्धिका वैनयिकाः प्राकृताश्च (गुणाः) भवन्त्यणोः।····लोकधीगुरुशास्त्रेभ्यो भाति वैनयिको गुणः। समर्जितो वैनयिको मनोवाक्तनुचेष्टया॥ २१६

**वैराग्यम्**—ऐहिकामुष्मिकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्, न रागाभावः। तदैहिकामुष्मिकविषयाणामनित्यत्वसातिशयत्वादिदोषदर्शनादुपजायत इति ८८

**व्यानः** (वायुः)—विनमनमङ्गानां व्यानस्य (व्यापारः) २११

**व्यापारः**—गुणतत्त्वं प्रख्याव्यापारनियमरूपम्।····व्यापारः क्रिया रजसो वृत्तिः, चलत्वात् ८१

**व्यापी**—व्यापोऽस्यास्तीति व्यापी, सर्वगत इत्यर्थः। अगत्वा सर्वमूर्तसंयोगित्वं सर्वगतत्वम्। अगमनं च सर्वत्र सद्भावात्। ....अथवा व्यापित्वं सर्वस्वरूपत्वमेकत्वे हेतुतयोक्तम् ३; व्यापी सर्वगतः, न तु **क्षपणका**दीनामिव शरीरपरिमितः ६

**व्याप्तिः**—अन्यस्यान्यत्र सद्भावः सर्वदाऽव्यभिचारिणी। व्याप्तिः....अन्यस्य आकाशादेः, अन्यत्र कुड्यादावस्तित्वं सर्वकालमव्यभिचारिणी व्याप्तिः। सा च आप्तस्य पदार्थस्य आत्मलाभनिबन्धनमुत्पत्तिनिबन्धनं स्थितिनिबन्धनं च भवति।....द्विधा सा संनिधावेका १६८

**व्यूहनम्**—व्यूहनं विविधवहनं वायोर्व्यापारः, पुञ्जीकरणं वा ९७; व्यूहनमवयवघटनं वायोः १००; व्यूहोऽवयवसंघट्टनम् ११६, २०५; व्यूहोऽपि वायुकार्याणामुपलक्षणम् ११६

**शक्तः**—तत्र शक्तो भवेदाद्यो निष्कलः शिवसंज्ञितः १९२

**शक्तिः** (शक्तितत्त्वम्)—शक्तो यया स शम्भुर्भुक्तौ मुक्तौ च (सा शक्तिः) ८; सिसृक्षोराद्य उन्मेषः शक्तिसाम्यात्मकोऽस्य यः। तदुपाधिः शिवः शक्तितत्त्वमित्यभिधीयते॥ १०; शिवशक्तेः पतिपदार्थे पाशपदार्थे च संग्रहः। परमार्थतः पतिपदार्थ एव शक्तेरन्तर्भावः। पाशत्वं तु तस्याः पाशधर्मानुवर्तनेनोपचारात्। तदुक्तम्—तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा। धर्मानुवर्तनादेव पाश इत्युपचर्यते॥ २३; द्विविधा हि परमेश्वरस्य शक्तिः बन्धकरीमोचिका चेति ३३;पुरुषतिरोधायिका विभोः शक्तिः पाशत्वेनाभिहिता ४४;चिदनुग्रहहेतोरस्य सिसृक्षोर्य आद्य उन्मेषः। तच्छक्तितत्त्वमभिहितमविभागापन्नमस्यैव॥४९; अनुमानेन शक्तिसद्भावसिद्धिः ४९-५०; सेयं परा शक्तिः परमेश्वरादभिन्ना, तस्या विकारा इच्छाद्याः शक्तयस्तदभिन्ना इति ५०; सिसृक्षोः परमेश्वरस्य चिदचिद्विषयो योऽनुग्रहः, तद्धेतोस्तत्साधनरूपस्य अस्य बिन्दोर्य आद्य उन्मेषः प्रथमः परिणामः शान्त्यादिभुवनात्मको नादात्मकश्च, तच्छक्तितत्त्वमुच्यते ५०; शक्तय इहास्य करणम् ....पराशक्तिविकारा इच्छायाः शक्तयः परमेश्वरस्य करणं हस्तादिस्थानीयम्।....शक्तिकरणसद्भावसिद्धिः ६८; मायां विक्षोभ्यः शक्तिभिः स्वाभिः ७२; मायायाः परतोऽध्वा शुद्धः शक्तौ निलीयते सकलः। परमात्मनि सापि शिवे तिष्ठत्यविभागमापन्ना॥१०५; शक्तेर्नादो भवेद् बिन्दुरक्षरं मातृका ततः १३१; शक्तिर्मूर्तिस्तस्य हि सा चैका....यस्माच्छिवस्य निर्मलत्वेन परमार्थत्वेन बैन्दवादिदेहायोगाच्छक्तिरेव देहकार्यं कुर्वाणोपचारेण मूर्तिरुच्यते १३२; मूर्तिमधिष्ठाय हरः पुरुषाणां परहितैकदृक् शम्भुः। कुरुते च भुक्तिमुक्ती १३३; बिन्दुः शक्त्या शिवेनैषा नान्येन व्याप्यते शिवः १६७; समवेता शिवे बिन्दुरिति तत्राभिधीयते १७०; शक्तिरीशस्य बिन्दोः क्षोभाय वर्तते १७९; शक्तेः प्रेरणाद् घृतकीटन्यायेनैकदेशेन बिन्दुर्विकरोति, न तु क्षीरदधिन्यायेन सर्वात्मना १७९; एकैव खलु चिच्छक्तिः शिवस्य समवायिनी। त्रिविधोपाधिसंभेदाल्लयभोगाधिकारिणी॥ १८०; शक्तिलक्षणम् १८०-१८२; शक्तेरेकदेशेन सर्वात्मना वा परिणामो नास्ति १८२; संविदद्वयवादनिरासः १८२-१८८; शक्तिसंज्ञिता संविदाश्रयते शश्वच्छिवं परमकारणम् १९२; तद्गोचरा परा मूर्तिरपरा कार्यगोचरा १९४; सर्वज्ञानक्रियारूपा शक्तिरेका हि शूलिनः

१९५,२५१ ; कार्योपाधिवशाच्छक्तिसंज्ञा स्यादपि चिद्घने । न तु शक्तिः परापेक्षा वस्तुतोऽस्तीति **केचन** ॥१९८; शिवस्य कर्तुः शक्तिः करणम् १९८; नह्येष भगवान् शक्त्या स्वात्मनोऽत्यन्तभिन्नया । कदाचित् कुरुते किञ्चिन्नापि जानाति किञ्चन ॥ १९९; शक्तेर्न स्वतन्त्रा स्थितिः २००; त्रिधैव शक्तिर्वामाद्या गीता व्यापारभेदतः २५१; वामा ज्येष्ठा च रौद्री च शक्तित्रयमतः परम् २५१; रुद्रस्य भगवतः शक्तिर्वामा ज्येष्ठा च रौद्री चेति । तस्याः शक्तेरधो विद्याविद्येश्वरलक्षणमेतत् तत्त्वयोर्द्वयं वेदितव्यम् ।''' विद्याविद्येशत्वं चापरमुक्तिः''''अस्माच्च न्यूनत्वादेषां शक्तितत्त्वादधोभावः, न तु देशकृतः २६१

**शक्तिपातः**—शक्तिपातेन योजयति परे तत्त्वे ३३; यस्याः शक्तेः पातः, तस्या एव दीक्षया निरोधः १२८; शक्तिपातचिह्नानि १४१-१४२, १४९-१५०; शक्तिपातहेतुर्मलपाकः १४४; शक्तिपातो मलपरिपाकाविनाभूतः १४९; परस्परविरोधेन निवारितविपाकयोः । कर्मणोः संनिपातेन शैवी शक्तिः पतत्यसौ ॥ २०१; स्वतन्त्रः शक्तिपातः २५९; सापेक्षः शक्तिपातः २६०

**शङ्करः**—नास्य ज्ञानं **नैयायिका**दीनामिव मनःसंयोगाद्यपेक्षम्, अपि तु ज्ञानं स्वभाव एव ११५; शं सुखमप्रेर्यतारूपं सर्वज्ञत्वसर्वकर्तृत्वात्मकं स्वसाम्यमात्मनां करोतीति शङ्करः ११५; शङ्करः पुंसो मोचितवान् मोचयिष्यति च २६४; आचार्यसंस्थितो देवो दीक्षाशक्त्यैव मुञ्चति । स्वशक्त्योपहृतान् पुंसो मन्त्रसाधनसाध्यया ॥ २६५

**शतरुद्राः**—शतभवाः शतरुद्रा ब्रह्माण्डधारकाः १२७

**शब्दः**—**वैशेषिका**दिभिराकाशविशेषगुणः शब्द इष्यते, तन्न ९७,११६,२०६; भेर्याद्याश्रयेष्वपि शब्दा उपलभ्यन्त इत्यादिविस्तरेणोक्त**मस्माभिर्मृगेन्द्रवृत्तिदीपिकायाम्** ११६; स्थूलः सूक्ष्मः परश्चेति त्रिविधः शब्दः १५२, २४२; तदानीं चाशुद्धाध्वनोऽनुत्पत्तेः स्थूलाकाशाभिव्यङ्ग्यत्वं न शब्दस्योपपद्यत इति शिवक्षुभितबिन्दुजन्य एव शब्दोऽभ्युपगन्तव्यः । तस्य च वैखर्याद्याश्चतस्रो वृत्तयः १५७-१६४; अनुविद्धमिव ज्ञानं सर्वं शब्देन जायते १६४; आकाशैकगुणत्वं शब्दस्य विस्तरेणा**स्माभिर्मृगेन्द्रवृत्तिदीपिकायां** प्रतिक्षिप्तम् २०६; न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते २४२; स्थूलस्य पाशरूपस्य मायीयस्य शब्दस्य शिवादिशुद्धवस्तुप्रतिपादकत्वासंभवात् शुद्धस्य मन्त्रतन्त्रात्मनः शब्दस्य कारणत्वेन महामायासिद्धिः ।''''ततश्चाङ्गारस्थानीयेष्वेषु शब्देष्वभिव्यक्ता अग्निस्थानीयाः सूक्ष्मा मन्त्राः कर्मकरा भवन्तीति **मतङ्गादौ** द्रष्टव्यम् २४४

**शम्भुः**—सर्वानुग्राहकः शम्भुः १; शं सुखं तस्मिन् भवतीति शम्भुः,स्वयमानन्दरूप इत्यर्थः ६; ज्ञानक्रियास्वभावं शाम्भवं तेजः ७; शक्त्या युक्तः शम्भुः शक्तः ८; शम्भुः परमेश्वरः ७, ५६; कर्माण्यवेक्ष्य शम्भुर्मायां विक्षोभ्य शक्तिभिः स्वाभिः । प्रतिपुरुषं भोगार्थं वपूंषि करणानि चाधत्ते ॥ ७२; शम्भुः पशूनखिलान् मोचयति १०७; विद्याविद्येशानां सामान्यविशेषधर्मविच्छम्भुः । मन्त्रानकरोद् यस्मादर्थविदभिधानकृद् दृष्टः ॥ १३१; अथ शम्भुरेक एव हि योगीव भवेदनेकमूर्तिस्थः १३२; शम्भुरेव

भुक्तिमुक्ती कुरुते १३३; शम्भुरेव तत्त्वविदा आराध्यः १३५; शं सुखमप्रेर्यंतारूपं भावयतीति शम्भुः। शम्भुशब्देन समवेतशक्त्यविनाभूतः शिवः कथ्यते १३८

**शरीरम्**—शरीरं च स्थावरजङ्गमात्मना द्विविधम्। स्थावरं तृणादिवृक्षान्तम्। जङ्गमं चतुर्विधम्—जरायुजमण्डजं स्वेदजमयोनिजं चेति। मनुष्यमृगाणां जरायुजम्। पक्षिसरीसृपाणामण्डजम्। यूकामत्कुणपतङ्गादीनां स्वेदजम्। भुवनेशदेवर्षीणामयोनिजं चेति

**शान्तः**—सर्वव्यापाररहितः····मुक्त इति वा ४; शान्तो रागद्वेषादिरहितः ७; शान्तिभुवनाधिष्ठानेन (महामाया) शक्तिरपि शान्तिसंज्ञा, शिवश्च शान्तसंज्ञः १९५; पञ्चस्रोतोमुखः शान्तः १९५

**शान्तिकला**—शान्तिकलायां पञ्चाध्वव्याप्तिः १६७; तत्प्रलीनाणुसंघस्य द्वेषरागाद्यभावतः। सङ्कल्पस्य प्रशान्तत्वाच्छान्तिरेषा निगद्यते॥ १६७; पञ्चकलास्वेका १९४

**शान्त्यतीतकला** शान्त्यतीतं परं तत्त्वमविनाश्यव्ययात्मकम् ४७; शान्त्यतीता च पञ्चाध्वगर्भिणी परमा कला। चिन्तनीया महाकाशस्वरूपा मूर्धपङ्कजे॥ १६७; शान्त्यतीता कला परबिन्दुरूपा १९४

**शिवः** (शिवतत्त्वम्)— शिवस्य लयावस्था ८; अधिकारावस्था १०; शिवशब्देनात्र जात्येकवचनेन शिवत्वयोगिनां मन्त्रमन्त्रेश्वरमन्त्रमहेश्वर-मुक्तात्मशक्तिशिवानां सवाचकानां शिवत्वप्राप्तिसाधनेन दीक्षादिनोपायकलापेन सह पतिपदार्थे संग्रहः कृतः २२-२३; मुक्तात्मानोऽपि शिवाः किन्त्वेते यत्प्रसादतो मुक्ताः। सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः॥ २३; मुक्तात्मानः···विद्येश्वरादयश्च शिवा एव, पशुत्वाख्येन मलेन विरहात् २४; शुद्धानि पञ्चतत्त्वान्याद्यं तेषु स्मरन्ति शिवतत्त्वम् ४४; शिवतत्त्वं बिन्द्वात्मकमाद्यं प्रधानमुपादानं स्मरन्ति **पूर्वाचार्याः** ४५, ४७; व्यापकमेकं नित्यं कारणमखिलस्य तत्त्वजातस्य। ज्ञानक्रियास्वभावं शिवतत्त्वं जगदु**राचार्याः** ४६-४७; एवंभूतमुपादानरूपं महामायाख्यं शिवतत्त्वमाचार्या जगदुः ४८; सर्वानुग्राहकं शिवतत्त्वम् ४८; नादो बिन्दुः सकलौ शिवाख्यं (सादाख्यं) तत्त्वमाश्रितौ ५३; तत्त्वं वस्तुत एकं शिवसंज्ञं चित्रशक्तिशतखचितम्। शक्तिव्यापृतिभेदात् तस्यैते कल्पिता भेदाः॥ ५४; चिदचिदनुग्रहहेतो रूपाण्येतानि स प्रभुः कृत्वा। कुरुते चितामनुग्रहमनादिमलरुद्धशक्तीनाम्॥ ५५; भुक्तिं मुक्तिमणूनां स्वव्यापारे समर्थताधानम्। जडवर्गस्य विधत्ते सर्वानुग्राहकः शम्भुः॥ ५६; परमात्मनि सापि शिवे तिष्ठत्यविभागमापन्ना १०५; एष (शिवः) बिन्दुः १०५; शिवशब्देन शान्तिकलामस्तकस्थं शान्त्यतीतभुवनमुच्यते १०५; शिवशब्देन समवेतशक्तियुक्तः शिवो मुक्तात्मानश्च (उच्यन्ते) १०६, एकः शिवोऽविकारी तच्छक्तिश्च १३२; शिवतत्त्वं परं ह्येकम् १३२; अधिकारी च भोगी च लयी स्यादुपचारतः १३२, १८०; शिवशक्ती····भिन्ने इव भवतः १३३,१९६; शिव एव सर्वानुग्राहकः १३३; सकलो निष्कलः सकलनिष्कलश्च शम्भुः ७, १३३, १९२-१९५; शिवपुरुषयोः साधर्म्यम् १३८; मायातो वैधर्म्यम् १३८; परमशिवस्य मुक्तात्मनां विद्येशादीनां च वैधर्म्यम् १३८; शिवस्य सकलादिक ईशादिको लयादिकश्च भेद औपचारिकः १३९; कर्तृभूतः शिवः करणभूतया समवायिन्या शक्त्या

बिन्दुमधितिष्ठति १६८; द्वे शक्ती समवायिन्यौ शिवे ज्ञानक्रियात्मिके। आद्या तु संविद् विज्ञानं क्रिया कुण्डलिनी परा॥ १६९; ज्ञानशक्त्या विजानाति क्रियया कुरुते जगत्। क्रिया हि फलदा पुंसां न ज्ञानं स्यात् फलप्रदम्॥ १६९; शिवः कर्ता शुद्धाध्वनो मतः १७०; एक एव शिवो नैकशक्तिमान् १७२; तत्राक्षुब्धे भवेद् भोगो बिन्दावानन्दरूपिणि। क्षुब्धेऽधिकारो देवस्य लयोऽतिक्रान्तबिन्दुकः॥ १७९, १९२-१९६; शिवः सदाशिवोऽधीशो लयभोगाधिकारवान् १८०; न ते विश्वस्य कर्तारः कर्ताऽस्य शिव एव यत् १९२; स तया जडमाक्रम्य सृजत्यवति हन्ति च। तिरोदधाति भगवाननुगृह्णाति चात्मनः॥ कृत्येषु तेषु कर्ताऽसौ त्रिविधः पञ्चसूच्यते। शक्तिमानाहितोद्योगः प्रवृत्तश्चेति देशिकैः १९२; शिवस्य ध्येयाकारः १९५; तयोर्भेदोऽधुनोच्यते।...परानपेक्षं रूपं यद्विज्ञानं शिवसंज्ञितम्। तस्य शक्तिं परापेक्षं रूपमाहुर्विपश्चितः॥....न तु शक्तिः परापेक्षा वस्तुतोऽस्तीति केचन। ....अनन्यापि विभिन्नाऽतः शम्भोः सा समवायिनी १९६-१९९; शिवशक्तिसमीरितो बिन्दुरेव प्रवर्तते २००; बन्धमोक्षकरः शिवः २००; सृष्टिकाले शिवस्य सृष्ट्यादिकरणपूर्वमात्मनां भोगभोजनात्मकः (व्यापारः) २३८; सकलो निष्कलश्च शिवः २४५, २५३-२५४; भोगिनां भुक्तये विश्वं विचित्रं कुरुते शिवः २४५; **सांख्यमीमांसकादिमतनिरासपूर्वकमीश्वरसिद्धिः** २४६-२४९; इत्येवं देवदेवस्य सर्वकर्तृत्वमीरितम् २५३; दृक्क्रिये निष्कलस्येष्टे कलायाः किं प्रयोजनमिति विषयो **नरेश्वरपरीक्षायां** विस्तरेण वर्णितः २५४; शिवस्य न बुद्धिबोधप्रकाश्यत्वम् २६६-२६८; शिवं शक्त्यादिभिः सार्धं पश्यत्यात्मा गतावृतिः। ...मन्त्रतन्त्रात्मके शब्दे शिवो व्यक्तः कलासु च २६८; ईश्वरसिद्धयोर्भेदः २८१; शिवाश्चात्मनः समानजातीयः ३००

**शिवसाम्यम्**—शिवसाम्यरूपं परमं पदम् ३३

**शुद्धतत्त्वानि**—शुद्धानि पञ्चतत्त्वानि ४४; अत्राद्यं पञ्चकं शिवस्वरूपत्वाच्छुद्धम ४५; नादो बिन्दुः सकलौ सादाख्यं तत्त्वमाश्रितौ कथितौ। विद्येशाः पुनरैशे मन्त्रा विद्याश्च विद्याख्ये॥ पञ्चानामप्येषां नहि क्रमोऽस्तीह कालरहितत्वात्। व्यापारवशादेषां विहिता खलु कल्पना शास्त्रे॥ तत्त्वं वस्तुत एकं शिवसंज्ञं चित्रशक्तिशतखचितम्। शक्तिव्यापृतिभेदात् तस्यैते कल्पिता भेदाः॥ ५३-५४; शुद्धाध्वन्यपि शुद्धकालसद्भावः ५४; सेयमार्याऽशास्त्रज्ञैः प्रक्षिप्तेत्यघोरशिवाचार्यः ५४; चिदचिदनुग्रहहेतो रूपाण्येतानि सः प्रभुः कृत्वा। कुरुते चितामनुग्रहम् ५५; एभिरीशोऽनुगृह्णाति ५५; पञ्चानामाद्यानां चिद्रूपतयाऽन्वयः १०१, तेन कारणेन तेषां शुद्धत्वम् १०२; शुद्धतत्त्वलयप्रकारः १०५; शुद्धविद्यादेर्महामायायां लयः १०५; दीक्षाज्ञानादिशब्दवाच्यया शिवशक्त्याऽपनीतमलादिपाशजालोऽत एव प्रकाशितसर्वार्थज्ञानक्रियोऽणुरात्मा शुद्धाध्वसंज्ञो भवति।...आत्मतत्त्वमिदं शुद्धम् १२६; पश्यति शिवं स्वशक्त्या ध्यायति चासौ शिवेद्धया दृष्ट्या। यजते शम्भुं मन्त्रैरुपकारायात्मनः परेषां च॥ १२६; शुद्धाध्वनि विज्ञानाकलादीनां लयप्रकारः १२६-१३५; विद्येश्वरसदाशिवादिशुद्धतत्त्वभेदस्तत्कारणभूतपरबिन्दुमिद्धिप्रकारश्च **मतङ्गादौ** विस्तरेणोक्तः, साधितश्च **रत्नत्रयोल्लेखिन्यामस्माभिः** १३१; तत्त्वभुवनाध्वानौ शुद्धरूपावेव १६८

**शुद्धाशुद्धतत्त्वानि**—मध्यमं सप्तकं शुद्धाशुद्धम् ४५; माया कालो नियतिः कला च विद्याऽभिलाषकृत् पुरुषः। क्लृप्तानि सप्तधैवं शुद्धाशुद्धानि तत्त्वानि॥ ४५; परेषां तु। मायाद्यानां द्वेधा सप्तानां कीर्तितः शैवे॥ १०१; मायाकालनियतिकला-विद्यारागपुरुषाणां सप्तानां द्वेधा चिदचिद्रूपतयाऽन्वयः।....तेन सप्तानां मायादीनां शुद्धाशुद्धत्वम् १०२

**शुद्धिः**—बन्धकत्वनिवृत्तिलक्षणा शुद्धिः १७६

**शुभम्**—शुभशब्देनात्रोपस्थेन्द्रियव्यापार आह्लाद उच्यते २१७

**शेषवत्**—त्रिविधं लिङ्गम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं चेति।....कार्येण कारणा-नुमानं शेषवत्। तद्यथा—नदपूरणेनोपरिष्टाद् वृष्टयनुमानम्।....व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्। तदेव शेषवदनुमानम्। शिष्यत इति शेषः, स विषय-तयाऽस्त्यस्यानुमानस्येति शेषवदिति। तदुक्तम्—प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणे सम्प्रत्ययः, तच्छेषवदनुमानमिति ८३

**शैवागमाः**—शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात् त्रितयम् १३; कामिकादिवातु-लान्तानामष्टाविंशतिसंहितानां नामानि १४; शैवागमानां प्रामाण्यम् २७४-२७७; सर्वागमप्रामाण्यमुक्तं रामकण्ठेन सर्वागमप्रामाण्ये २७५; दृष्टयन्तरेभ्यः शैवागमानां वैशिष्ट्यम् २७६; सिद्धिर्व्यापारनिर्मुक्ता मुक्तिरप्यतिशायिनी २७७

**श्रीकण्ठः**—श्रीकण्ठो गुणतत्त्वनिलयोऽधस्तनभुवनादेश्च कर्ता मन्त्रेशः ३२, १२७

**षडध्वानः**—तत्त्ववर्णमन्त्रभुवनपदकलात्मकाः षडध्वानः १७; षडध्वव्याप्तिः १७-२२, ११२-११३, १६४-१६९; आसनं मूर्तिरावाह्यमेतत् त्रितयमध्वनि। व्याप्यव्यापक-भावेन ज्ञात्वा यजनमारभेत्॥ आसनं शुद्धविद्यान्तं मूर्तिः शक्त्यन्तगोचरा। आवाह्यं शिवतत्त्वं स्यादेतच्छैवानुशासनम्॥ ११३

**षड्विधलिङ्गम्**—आदिमध्यान्तसङ्गानमभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥ २

**सकलः** (पशुः)—मलमायाकर्मयुतः सकलः २६, २८, ३२, १५२; सकलस्तु बन्धत्रययुक्तः। तत्र च मायायाः साक्षात् सम्बन्धाभावान्मायाशब्देन तत्कार्यभूताः कलादयः कथ्यन्ते। तद्युक्तत्वादेव चास्य सकलत्वम् २८; शेषा भवन्ति सकलाः २९; शेषाः शिष्टास्ते सकला भवन्ति।....पुर्यष्टकदेहयुतास्त एव निखिलासु योनिषु देवमनुष्यतिर्यगादिषु व्रजन्ति चरन्तीत्यर्थः ३०; अन्ये त्वपक्वमलाः पुर्यष्टकदेहयुताः सन्तः कर्मवशेन तद्भोगार्थं निखिलासु योनिषु भुवनजशरीरात्मिकासु व्रजन्तीति....व्याचक्षते ३०-३१; अष्टधा सकलः ३२; परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन। योजयति परे तत्त्वे स दीक्षयाऽऽचार्यमूर्तिस्थः॥ ३३; अत्र यदा कूटस्थनित्येन मलेन प्रवाहनित्येन च कर्मणाऽनादिसम्बद्धस्य मोक्षदित्सायां शम्भुर्मलपरिपाकार्थं कर्मभोजनाय मायी-येन कलादिना सम्बन्धं करोति, तदासावात्मा सकल इत्युच्यते १२६; बन्धत्रय-युक्तः कलादियोगे, विज्ञानादिना कर्मक्षयेऽपि संस्कारवशात् किञ्चित्कालमवस्थितश्चेति द्विविधः सकलः १३९; सकलस्यापि तदनुगुणैः साधारणासाधारणरूपैस्तद्भुवना-दिभिश्च रोधं करोति १४१; विषयसङ्गिनां तु सकलानां पशूनामुद्भूतविविधव्यापारा

भवन्ति। विच्छिन्नोदाररूपा इति पाठे परस्परमुद्भवाभिभवाभ्यां कदाचिद् विच्छिन्नरूपाः कदाचिच्चोदाररूपाश्च भवन्तीत्यर्थः २३८

**सकलः** (शिवः)—शाम्भवं तेजोरूपं मन्त्रात्मकं विग्रहम्, तत्प्राप्त्युपायभूतं सकलमिति यावत् ७; सकलं च महेश्वरम्। सर्गप्रतिष्ठासंहारलीलार्थं लिङ्गरूपिणम्॥····पञ्चमन्त्रतनुः श्रीमान् सकलः परिपठ्यते। २४; नादो बिन्दुः सकलौ सादाख्यं तत्त्वमाश्रितौ ५३; अधिकारावस्थायां कार्यभेदादष्टत्रिंशत्कलाभेदभिन्ना शक्तिरेवास्य मूर्तिः। तद्योगादेव चासौ सकलः प्रोच्यते १३३; पञ्चस्रोतोमुखः शान्तः प्रभुः शक्तिशिराः शिवः।····प्रवृत्तिमानयं देवः सकलः सर्वपावनः॥ १९५; सकलो निष्कलोऽनन्तः २४५; कलावानिति तत्त्वज्ञैः सकलस्तेन गीयते २५३

**सकलनिष्कलः** (शिवः)—सकलनिष्कलात्मकं तेजो ज्योतिर्लिङ्गम् ७; अत्र शास्त्रे भोगमोक्षसिद्ध्यर्थं ज्ञेयतया च सकलनिष्कलाख्यं शक्तिशक्तिमत्संज्ञं वा तत्त्वद्वयमुक्तम् १३३; पञ्चमन्त्रतनुः श्रीमान् देवः सकलनिष्कलः १९३

**सङ्कल्पः**—सङ्कल्पोऽनिर्धारितविशेषरूपः, संशयरूप इति यावत् ९२; सङ्कल्पोऽवधानमेकाग्रता ९३; इच्छाशब्देनैकाग्रतापरपर्यायोऽवधानात्मकः सङ्कल्पो विवक्षितः २०९; स मनसो वृत्तिः २०९

**सङ्ग्रहः** सङ्ग्रहः संश्लेषणमपां व्यापारः क्लेदनं वा ९७-९८; अवष्टम्भोऽम्भसः १००; सङ्ग्रहोऽवष्टम्भः ११६, २०५

**सततोदितः**—सततोदितः प्रभुः शान्तः १; सततं सर्वदा उदयः प्रकाशो यस्यासौ तथोक्तः। अनुदितानस्तमितप्रकाशः, स्वयंप्रकाश इत्यर्थः ४; सततोदितो नित्यमुक्तः ६; सततोदितस्य स्वयंप्रकाशचैतन्यात्मकस्य परिपूर्णस्य निर्व्यापारस्योदासीनस्यापि साक्षिणः परमेश्वरस्य २५; सेयं क्रियात्मिका शक्तिरीश्वरी सर्वदोदिता १७७

**सत्कार्यवादः**—सत्कार्यवाददृशा महाप्रलये कलादिकार्याणि सूक्ष्मरूपेण मायायामवस्थितानि १२५; एष च सत्कार्यवादोऽ**स्माभिर्मृगेन्द्रवृत्तिदीपिकायां** विस्तरेण साधितः १२५,१५५; सत्कार्यवाददृष्ट्या····मायैव कलादिकार्यद्वारेण परिणमते १५४; सत्कार्यवादाभ्युपगमेन सर्वकार्याणां शक्तिरूपेण तत्र (महामायायाम्) अवस्थानात् २३२

**सदाशिवः**—ज्ञानक्रियाख्यशक्त्योरपकर्षोत्कर्षयोरभावेन। यः प्रसरस्तं प्राहुः सदाशिवाख्यं बुधास्तत्त्वम्॥ ५०; ज्ञानक्रियाख्ये न्यक्तुल्ये शक्तीच्छोद्रेकमश्नुते। यदा सदाशिवाख्यस्तु तदासौ शिव उच्यते॥····सदाशिवाख्यं विमलं शुद्धस्फटिकसंनिभम्। ५१; बिन्दोर्यो द्वितीयः प्रसरः परिणामः शक्तितत्त्वव्यवधानेन जायते, तत् सदाशिवतत्त्वम् ५१; नादो बिन्दुः सकलौ सादाख्यं तत्त्वमाश्रितौ कथितौ ५३; विद्येश्वरविद्यामन्त्राणां सदाशिवे वृत्ति**मन्ये** मन्यन्ते ५३; (नादो बिन्दुश्च) **केचित्** सदाशिवं तत्त्वमाश्रितावित्याहुः ५३; परबिन्दोः शिवतत्त्वत्वेन तत्कार्यस्य सूक्ष्मनादस्य शक्तितत्त्वान्तर्भावेन सकलो बिन्दुरक्षरबिन्द्वात्मको नादश्च स्थूलध्वनिरूपः, द्वौ च सदाशिवतत्त्वान्तर्भूतौ ज्ञेयौ ५३; परे सदाशिवसमाः पतिकृत्याधिकारिणः।····सदाशिवश्चात्राधिकारावस्थः शिव एव। तस्य चाधिकारादयोऽवस्था औपचारिका इत्युक्तम्—अधिकारी च भोगी च लयी स्यादुपचारतः। संस्कार्यसदाशिवादीनां तु भेदो

नियतः सूक्ष्मदेहोऽस्तीत्युक्तम् (१२५, २०५), आगमेषु च श्रूयते २०७, २२९; सूक्ष्मदेहस्याविभुत्वम् २२९-२३०; सूक्ष्ममातिवाहिकं शरीरमेव तेषु तेषु भुवनेषु पर्यटति २३०

**सूक्ष्मा वाक्**—स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी १६२; तामेव वाणीं सूक्ष्माख्यामाहुरात्मविदो जनाः १६३; यदा वृत्तिरशेषेण विलीना चित्तसंश्रया। तदा सूक्ष्मा विशुद्धेव चिदाभात्यविवेकतः॥ १६३-१६४

**सृष्टिः**—पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहृतितिरोभावाः। तद्वदनुग्रहकरणम् २५; तत्र शिवस्य साक्षात् सृष्टिर्बिन्द्वात्मकादुपादानाच्छुद्धतत्त्वभुवनाद्युत्पादपूर्वकं तद्भुवनवासिनां विद्याविद्येश्वराणां च बैन्दवशरीरयोजनम्, नादादिक्रमेण विद्योत्पादनं च। अनन्तादिद्वारा तु मायाद्युपादानादशुद्धतत्त्वभुवनाद्युत्पादनपूर्वकं पशुसंघानां सूक्ष्मेण तात्त्विकशरीरेण स्वकर्मानुगुणभौवनशरीरेण च योजनम्, मन्त्रेश्वराणामधिकारनिबन्धनशरीरोत्पादनं च २६; तनुकरणशब्देनासाधारणी सूक्ष्मशरीरसृष्टिरुच्यते। भुवननिष्पत्तिशब्देन साधारणी भुवनाद्यात्मिका, साधारणासाधारणी च भुवनजशरीरात्मिका सृष्टिरुच्यते ६८; पुनस्तत्प्रवर्तते पूर्ववत् सृष्टौ १०६; कर्मविपाचनहेतोः पशुदयया पुनरपीह परमेशः। सृष्टिं विधाय तेषां कर्म विपाचयति देहभृताम्॥ १०७

**स्थितिः**—स्थितिः पालनम् २५; स्थितिः स्वशक्त्या निरुद्धस्य सर्वस्य जगतः स्वविषयेऽवस्थापनम् २६; भोगार्थं साधनाकारां करोति स्थितिमीश्वरः २५२

**स्फोटः**—वर्णाभिव्यङ्ग्योऽन्य एवाविनिर्भक्तो मायूराण्डरसवदनेकवर्णावभासकः क्रम एव पदात्मा पदव्यतिरिक्तश्च वाक्यस्वभावः समस्तस्य जगतो युगपत् क्रमेण वाऽर्थप्रतीतिहेतुत्वाद् व्यापको नित्यश्च स्फोटोऽभ्युपगन्तव्यः, यतः स एव व्यवहर्तॄणामर्थं स्फुटयतीति **वैयाकरणाः** २४०

**स्मृतिः**—अनुभूतविषयाऽसम्प्रमोषः स्मृतिः ८२; स्मृतिः पूर्वानुभवसंस्कारमात्रजं ज्ञानमुच्यते ८२; बोधो वृत्तिर्मतिर्मता। क्लृप्तिर्मतिः स्मृतिश्चेति जाता भिन्नार्थवाचकाः॥ २१४

**स्वभावः**—स्वभावतो जगद्बीजं जगत्कर्तृ हरेण किम्। स्वभाव एव वक्तव्यो गत्वा दूरमपि त्वया॥ २४८

**हरः**—शम्भुरेव पाशान् पशुभ्यो हरति, तांश्च भोगार्थं मोक्षार्थं वा हरतीति हरः कथ्यते। यदुक्तम्—हरति पशुभ्यः पाशान् पुंसोऽप्यूर्ध्वं पदं ततस्तु हर इति १३३

—

